चक्षुरिव । तथापीत इव दृश्यते । शीतेनाव्यथयन्निव । रुरुदक्ष इव दृश्यते(१०) । (११)ह्लादयते ज्वलतश्चैव । शाम्यतश्चास्य चक्षुषी । या वै प्रजा भ्रꣳश्यन्ते । संव-

---

इव दृश्यते''(१०) इति । अयं वर्षर्तुः 'अदुःखः' स्वयं दुःखरहितोपि, 'दुःखचक्षुरिव', 'दृश्यते' । तस्मिन् काले प्राणिनां चक्षुरोगोत्पत्तेः । तस्मिन् काले, प्राणिनां कामिलादिरोगोपेतत्वात् । अयमृतुः स्वयमपि 'तथा' 'पीत इव' प्राणिद्वारा तद्रोगवानिव 'दृश्यते' । कामिलरोगग्रस्तस्य पीतत्वावभासात् । किञ्च 'शीतेन' वृष्ट्या, वायुना च, अदिने यच्छीतं तेन 'शीतेन', अयमृतुः 'अव्यथयन्निव' पीडामप्राप्नुवन्निव, 'दृश्यते' । सत्यपि तदा शीते प्रावरणाग्निसेवादिना शान्तस्य शीतस्य प्राणिभिः परिह्रियमाणत्वान्नास्ति व्यथा । किञ्च 'रुरुदक्ष इव' रुरवो मृगविशेषाः तैर्दक्षः समृद्ध इव, अयमृतुः, 'दृश्यते' । अरण्येषु तृणसमृद्ध्या तस्मिन्नृतौ पुष्टानां मृगयूथानां बहुलमुपलम्भात् ॥

अथैकादशमाह । (११)"ह्लादयते ज्वलतश्चैव • संवत्सरात् ता भ्रꣳश्यन्ते''(११) इति । अयं वर्षर्त्तुः सर्वान् प्राणिनः 'ह्लादयते' सन्तोषयते । अहो सुवृष्टो देवः सम्पत्स्यन्तेऽस्माकं शस्यानि इत्येवं सर्वस्य लोकस्य परितोषः । तस्मिन्नृतौ बीजवापमकृत्वा 'भ्रंश्यन्ते', ताः 'प्रजाः', न केवलं तस्मादृतोरेव भ्रष्टाः किन्तु कृत्स्नादपि 'संवत्सरात्', भ्रष्टाः । आगामिवर्षपर्यन्तमन्नस्य दुर्लभत्वात् । 'याः' तु प्रजाः, तस्मिन्नृतौ क्षेत्रेषु बीजावापं कृत्वा प्रतिष्ठिता

त्सराणा धं॑श्यन्ते[११] । [१२]याः प्रति॑तिष्ठन्ति । संव-त्सरे ताः प्रति॑तिष्ठन्ति । वर्षाभ्य इत्यर्थः[१२] ॥ ४ ॥

शृणोत्यन्यान्सर्वा॒मेव षट् च॑ ॥ अनु॰ ३ ॥

---

भवन्ति ताः प्रजा अन्नस्य सुलभत्वात् समृद्धा दृश्यन्ते । 'अस्य' एवंविधस्य वर्षर्तोः, 'चक्षुषी', 'ज्वलतश्चैव', 'शाम्यतश्च', अनेन हि ऋतुना दृष्टाः पदार्थाः शक्तिविशेषलाभेनोज्ज्वलत्वं भजन्ते । अत-स्तदीये चक्षुषी सर्वान् पदार्थान् उज्ज्वलयतः । तथा तस्मिन्नृतौ सर्वे पदार्थाः शान्ता उपद्रवरहिता भवन्ति । अतस्तदीये च-क्षुषी सर्वान् पदार्थानुपशमयतः । ईदृशेन लक्षणेन वर्षर्तुरव-गन्तव्य इत्यर्थः । तैरेतैरेकादशभिर्मन्त्रैरिष्टका उपधेयाः ॥

अथ ब्राह्मणमुच्यते । [१२]"याः प्रतितिष्ठन्ति ॰ वर्षाभ्य इत्यर्थः"[१२] इति । याः काश्चित् प्रजाः तस्मिन्नृतौ क्षेत्रेषु बी-जावापमकृत्वा भ्रंश्यन्ते ताः प्रजाः न केवलं तस्मादृतोरेव भ्रष्टाः किन्तु कृत्स्नादपि संवत्सराद्भ्रष्टाः । आगामिवर्षर्तुपर्यन्त-मन्नस्य दुर्लभत्वात् । 'याः' तु प्रजाः, तस्मिन्नृतौ क्षेत्रेषु बीजावापं कृत्वा प्रतिष्ठिता भवन्ति 'ताः' प्रजाः, अन्नस्य सुलभत्वात् कृत्स्नेपि 'संवत्सरे', प्रतिष्ठिता भवन्ति । यद्यपि ता भ्रश्यन्तमित्येतस्मिन् पूर्ववाक्ये भ्रंशस्यापादानवाचकं पञ्चम्यन्तं पदं किमपि नास्ति, तथापि वर्षर्तुप्रकरणबलेन तस्माभादर्षाभ्यो भ्रंश्यन्ते 'इति', तस्य वाक्यस्य 'अर्थः', सम्पद्यते ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजु-रारण्यके प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ * ॥

## चतुर्थोऽनुवाकः।

(१)अक्षिदुःखोत्थितस्यैव। विप्रसन्ने कनीनिके। आङ्क्ते चाद्गणं नास्ति। ऋभूणान्तन्निबोधत(१)। (२)कनकाभानि वासांसि। अहतानि निबोधत। अन्नमश्नीत

---

कल्पः। अक्षिदुःखोत्थितस्यैवेतिषड्भिर्हेम व स्वतपस इति चेति। अथ प्रथममाह। (१)"अक्षिदुःखोत्थितस्यैव ० ऋभूणान्तन्निबोधत"(१) इति। अत्र शरदृतुर्वर्ण्यते। 'अक्षिदुःखं' नेत्ररोगः, तस्य हि 'कनीनिके' अक्षिमध्यवर्त्तिन्यौ तारके, 'विप्रसन्ने' नेत्रमलस्यापगतत्वाद्विशेषेण प्रसन्ने भवतः। वर्षर्त्तौ उत्पन्ना नेत्रपीडा शाम्यति यथा कनीनिके प्रसन्ने एवं सर्वं जगदपि मेघपङ्कादिमालिन्याभावात् प्रसन्नं भवति ततः 'अक्षिदुःखोत्थितस्यैव', इत्ययम् 'एव' कारः उपमार्थः। किञ्च अक्षिरोगाभावात् सर्वो जन 'आङ्क्ते च' अञ्जनेन चक्षुषी संस्करोत्यपि, तस्मिन् ऋतौ 'अद्गणं' दृष्टिविरोधि नीहारादिकं 'नास्ति', 'तत्' सर्वं, ऋतुदेवानां 'ऋभूणां', सामर्थ्यमिति 'निबोधत'॥

अथ द्वितीयमाह। (२)"कनकाभानि वासांसि ० अहं वो जीवनप्रदः" (२)इति। तेषामृभूणां देवानां 'वासांसि' वस्त्राणि, 'कनकाभानि' सुवर्णसदृशानि, 'अहतानि', नूतनत्वात् न क्वापि तेषु छिद्रं दृश्यते, हे बुभुत्सवः एवं 'निबोधत'। किञ्च शरत्काले वाच एतादृश्यः प्रवर्त्तन्ते, हे जनाः 'अन्नमश्नीत' अस्मि-

मृज्मीत। अहं वो जीवनप्रदः(२)। (३)एता वाचः प्रयुज्यन्ते। शरद्यत्रोपदृश्यते ॥ १ ॥

अभिधून्वन्तोऽभिघ्नन्त इव। वातवन्तो मरुद्गणाः(३)। (४)अमुतो जेतुमिषुमुखमिव। सन्नद्धाः सह ददृशे ह।

---

ऋतौ शरीरपुष्टिहेतुत्वाद्भक्ष्यं भोज्यं च पुष्कलं भक्षयत। ततो 'मृज्मीत' लेपान् शोधयत। 'अहं' शरदाख्य ऋतुः, 'वः' युष्माकं, 'जीवनप्रदः' सुखभोजनेन युक्तं जीवनं प्रयच्छामि॥

अथ तृतीयमाह। (३)"एता वाचः प्रऽयुज्यन्ते ० वातवन्तो मरुद्गणाः"(३) इति। 'यत्र' यदा, 'शरदाख्यः' ऋतुः, 'उपदृश्यते', तदानीमन्नमश्नोतेति 'एता वाचः', प्राणिभिः 'प्रयुज्यन्ते', अनेन लक्षणेन शरदाख्यमृतुं जानीयादित्यर्थः। अथ हेमन्त ऋतुर्वर्ण्यते। तस्मिन्नृतौ 'मरुद्गणाः' देवविशेषसङ्घाः, 'अभिधून्वन्तः' सर्वतः कम्पयन्तः, 'अभिघ्नन्तः' आभिमुख्येन हननं कुर्वन्तः, 'इव', 'वातवन्तः' तीव्रेण वायुना युक्ताः, भवन्ति॥

अथ चतुर्थमाह। (४)"अमुतो जेतुमिषुमुखमिव ० विशिखासः कपर्दिनः"(४) इति। 'अमुतः' वायुलोकात्, आगताः वायवः,'इषुमुखं' योद्धृभिः शत्रुभिः प्रेरितं बाणाग्रं,'जेतुमिव', 'सन्नद्धाः' कवचादियुतः, 'सह ददृशे ह' सङ्घीभूता दृश्यन्त एव, हेमन्तेऽतिप्रबला वायवो युद्धार्थं सन्नद्धा इव सर्वतः प्रचरन्ति। अत एव प्राणिनोपि युद्धार्थिन इव शीतवातोपद्रव-

अपध्वस्तैर्वस्तिवर्णैरिव। विशिखासः कपर्दिनः(४)।
(५)अक्रुद्धस्य योत्स्यमानस्य। क्रुद्धस्येव लोहिनी। हे-
मतश्चक्षुषी विद्यात्। अक्ष्णयोः क्षिपणोरिव(५)॥ २॥
(६)दुर्भिक्षं देवलोकेषु। मनूनामुदकं गृहे। एता
वाचः प्रवदन्तीः। वैद्युतो यान्ति शैशिरीः(६)। (७)ता

---

परिहाराय कञ्चुकाद्यावृता दृश्यन्ते। 'अपध्वस्तैः' तिरस्कृतैर्मलि-नैः, 'वस्तिवर्णैरिव' वस्त्राकारैः कवचैरिव युक्ताः, 'विशिखासः', विविधशिखायुक्ताः, 'कपर्दिनः' केशबन्धयुक्ताश्च, प्राणिनो दृश्य-न्ते। रजकैर्धौतानां घटितानां लिप्तानां वस्त्राणां अतिशैत्येन परित्यज्य नूतनाः स्थूलतन्तवो मलिनाश्च पटाः द्वित्रिगुणाः प्राश्यन्ते, उष्णीषादिभिश्च शिरांसि वेष्ट्यन्त इत्यर्थः॥

अथ पञ्चममाह। (५)"अक्रुद्धस्य योत्स्यमानस्य • अक्ष्ण-योः क्षिपणोरिवेति"(५) इति। 'अक्रुद्धस्य' क्रोधरहितस्यैव 'हे-मतः' हेमन्तर्त्तोः, 'चक्षुषी', 'लोहिनी' रक्ताकारे, 'विद्यात्'। तत्र दृष्टान्तः। 'क्रुद्धस्य' क्रोधाविष्टस्य, परान् हन्तुं पुरुषं प्रेर-यतः अक्षिणी रक्ते तद्वत्। न चात्र क्रुद्धस्य 'योत्स्यमानस्य', इत्य-नेन पुनरुक्तिः, उभयोरेकवाक्यत्वाङ्गीकारात्। क्रोधाविष्टपुरुष-साम्यं वक्तुं एक 'इव'कारः। अक्षिसाम्यं वक्तुमपर 'इव'कारः॥

अथ षष्ठमाह। (६)"दुर्भिक्षं देवलोकेषु • वैद्युतो यान्ति शैशिरीरिति"(६) इति। पूर्वत्र यथा वाताभिघातादिकं हेम-

अग्निः पवमाना अन्वैक्षत । इह जीविकामपरिपश्यन्। तस्यैषा भवति(७) । (८)इहेह वः स्वतपसः । मरुतः-

---

न्तस्य लक्षणमुक्तं । एवमत्र शिशिरस्य लक्षणमुच्यते । 'देवलोकेषु' अन्तरिक्षभागेषु, 'उदकं', 'दुर्भिक्षं' भिक्षितुमपि दुर्लभं, तस्मिन्नृतौ वृष्टेरभावात् । 'मनूनां' मनुष्याणां, 'गृहे', कूपादिसद्भावात् 'उदकं', अल्पं विद्यते । तस्मादुदकार्थिभिर्गृहेषु गत्वा जलं याच्यं न तु मार्गेषु । तदस्मिन् 'एताः' एवंरूपाः, 'वाचः', 'प्रवदन्तीः' उच्चारयन्त्यः प्रजाः, 'शैशिरीः' शिशिरर्त्तौ विद्यमानाः, 'वैद्युतः' विद्युत्सम्बन्धिन्यः, विद्युदुपलक्षितसन्तापयुक्ताः, 'यान्ति' मार्गे गच्छन्ति, तदिदं शिशिरर्त्तोर्लक्षणं । एभिः षड्भिर्मन्त्रैरिष्टका उपदध्यात् ॥

अतःपरं ब्राह्मणमुच्यते । (७)"ता अग्निः पवमाना • तस्यैषा भवति"(७) इति । 'अग्निः', देवः 'इह', लोके प्राणिनां 'जीविकां' जीवनहेतुमुदकम्, 'अपरिपश्यन्', 'पवमानाः' शोधयन्तीः, निरुदकत्वं प्रकाशयन्तीः, मार्गे गच्छन्तीः, 'ताः' प्रजाः, 'अन्वैक्षत' अनुसृत्यैवं विचारितवान्, एताः प्रजा एवं वदन्ति इह चोदकं न पश्यामः किं वा प्राणिनां भविष्यतीतिचिन्तितवानित्यर्थः ।

'तस्य' अग्निविचारस्य, प्रतिपादिका 'एषा', ऋग्विद्यते ॥

तामृचमाह । (८)"इहेह व स्वतपसः • शर्म सप्रथा आवृणे" (८) इति । 'स्वतपसः' स्वायत्ततपसः, सन्तापोदकयोः स्वतन्त्रा इत्यर्थः, 'सूर्यत्वचः' सूर्यसमानदीप्तयः, तादृशा वै

हृयत्वचः । शर्म सप्रथा आवृणे(८) ॥ ३ ॥
इश्यंत इवावृणे ॥ अनु० ४ ॥

---

पञ्चमोऽनुवाकः ।

(१)अतिताम्राणि वासांसि । अष्टिर्वज्रिशतघ्नि च ।

---

'मरुतः', 'वः' युष्मत्सकाशात्, सप्रथाः' विस्तारयुक्तं, 'शर्म' सुखकारणमुदकं, 'इहेह' एतेषु सर्वेषु जलरहितप्रदेशेषु, 'आवृणे' प्राणिजीवनार्थं अहमग्निः सर्वतः प्रार्थये, अनेनापि मन्त्रेण काञ्चिदिष्टकामुपदध्यात् ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ * ॥

---

अथ पञ्चमोऽनुवाकः ।

कल्पः । अतिताम्राणीति चतस्रो मरुन्तीस्तान्याप्रवर्ग्यवदाद्यन्तयोः शान्तिं कृत्वेति यथा प्रवर्ग्यस्यादौ नमो वाच इति शान्तिः पठ्यते अन्ते शं नो वात इति शान्तिः पठ्यते, एवमत्रापि चतसृणामिष्टकानामादावन्ते च तच्छान्तिद्वयं पठेत् । इष्टका अपि पूर्वेष्टकावत् अन्या आपो न भवन्ति किन्तु मरन्तिका कुम्भकास्तत्रा आपस्तास्वतस्रभिरुपदध्यात् । तत्र प्रथमामाह । (१)"अतितामाणि वासांसि ० अग्निजिह्वा असस्रत"(१) इति ।

विश्वेदेवा विप्रहरन्ति। अग्निजिह्वा असंश्चत[१]। [१]नैव देवो न मर्त्यः। न राजा वरुणो विभुः। नाग्निर्नेन्द्रो न पवमानः। मातृक्कचन विद्यते[१]। [१]दिव्यस्यैका धनुरार्त्निः। पृथिव्यामपरा श्रिता॥ १॥

तस्येन्द्रो वम्रिरूपेण। धनुर्ज्यामच्छिनत् स्वयं[१]।

---

यथा पूर्वत्र वसन्ताद्यृतुसहभाविनां वसुरुद्रादीनां धाराग्रुक्लवस्त्रादीनि एवमत्रापि शिशिरर्तुसहभाविनां विश्वेषां देवानां 'अतितामाणि', वस्त्राणि आयुधानि च ऋष्ट्यादीनि ते च 'विश्वेदेवाः', तैर्ऋष्टिवज्रिशतघ्निनामकैरायुधविशेषैर्विविधं शत्रून् 'प्रहरन्ति', ततः 'अग्निजिह्वाः' अरुणकेतुकाग्निरूपजिह्वायुक्ताः, 'असंश्चत' जयनिमित्तेनोत्साहेनात्युचं शब्दं कृतवन्तः॥

अथ द्वितीयामाह। [१]"नैव देवो न मर्त्यः • मातृक्कचन विद्यते"[१] इति। यदास्फोटनं विश्वेदेवैः कृतं। तदत्र स्पष्टीक्रियते। 'क्कचन' कश्चन, कोपि देवः, 'मातृक्' मादृक् मत्सदृशः, 'न विद्यते'। एवं न मर्त्य इत्यादिष्वपि योज्यं। सोयं विश्वैर्देवैरुद्घोषितः शब्दः॥

अथ तृतीयामाह। [१]"दिव्यस्यैका धनुरार्त्निः • मच्छिनत् स्वयम्"[१] इति। 'अस्य' विश्वेदेवजिह्वारूपस्यारुणकेतुकस्याग्नेः, 'एका धनुरार्त्निः' धनुष ऊर्ध्वकोटिः। 'दिवि',

(४)तदिन्द्रधनुरित्यज्यं। अभ्रवर्णेषु चक्षते। एतदेव शंयोर्बार्हस्पत्यस्य। एतद्रुद्रस्य धनुः(४)। (५)रुद्रस्य त्वेव-धनुरार्त्निः। शिर उत्पिपेष। स प्रवर्ग्यो भवत्। तस्माद्यः स प्रवर्ग्येण यज्ञेन यजते। रुद्रस्य स शिरः प्रति-

---

'श्रिता', 'अपरा' तु अधस्तनी कोटिः, 'पृथिव्यामाश्रिता'। वम्रयः पिपीलिकासमाना जन्तवः। यदीयवमनात् मृत्तिका द्रवीक्रियते। 'इन्द्रः' यथोक्तधनुर्दर्शनेन भीतः सन् 'वम्रिरूपेण', अधःकोटिसमीपे स्थाने स्थित्वा 'तस्य' अरुणकेतुकस्याग्नेः, धनुष्यवस्थितां 'ज्यां', 'स्वयं' 'अवाच्छिनत्'॥

अथ चतुर्थीमाह। (४)"तदिन्द्रधनुरित्यज्यं • एतद्रुद्रस्य धनुरिति"(४) इति। यस्य धनुषो ज्याच्छिन्ना 'तत्' तदेतत्, अभिज्ञाः 'अभ्रवर्णेषु' मेघस्थितप्रकाशेषु, दृष्ट्वा इन्द्रेणच्छिन्नत्वात् ज्यारहितं 'इन्द्रधनुः', इत्याचक्षते। योयं बृहस्पतिपुत्रः 'शंयुः', तस्यापि 'एतदेव', 'धनुः', अनेनैव धनुषाऽसौ स्वकार्यं सम्पादयति। 'एतद्रुद्रस्य धनुः', तस्मादिदमुत्कृष्टं रुद्रो नामाचारुणकेतुकोऽग्निः। रुद्रो वा एष यदग्निरिति श्रुतेः। एताभिस्तु-उष्णोदकरूपास्ततस्तु उपधेयाः॥

अथ ब्राह्मणं। (५)"रुद्रस्य त्वेव धनुरार्त्निः • एवं वेद"(५) इति। यदेतत् उच्छिन्नज्याकं 'धनुः', तस्येन्द्रवशं पुराणं धनुष्टम्

दधाति। नैनꣳरुद्र आरुको भवति। य एवं वेद (५)

॥ २ ॥

श्रितायजतेचीर्णि च ॥ ५ ॥

---

इत्येतावदेव न, किन्तु ज्यायां छिन्नायामुत्पतन्ती धनुष ऊर्ध्वा कोटिर्यस्य रुद्रस्य गलमवष्टभ्य पूर्वमवस्थिता तस्य 'रुद्रस्य', 'शिरः', छिन्दन्ती ऊर्ध्वं नीत्वाऽधःपतन्ती 'पिपेष' तच्छिरश्चूर्णीचकार। 'स' च पिष्टार्द्धशिरोभागः, 'प्रवर्ग्य'रूपेणाविर्बभौ। यस्माद्रुद्रस्य शिर एव प्रवर्ग्यः 'तस्मात्', प्रवर्ग्यसहितेन 'यज्ञेन', यः 'यजते', 'सः' अयं, 'रुद्रस्य', तत् 'शिरः', 'प्रतिदधाति' पुनः समादधाति। 'यः' पुमान् 'एवं' शिरःसमाधानप्रकारं, 'वेद', तम् 'एनं', 'रुद्रः', 'आरुको न भवति', तस्य हिंसां न करोतीत्यर्थः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके पञ्चमोऽनुवाकः॥ ५ ॥

षष्ठोऽनुवाकः।

(१)अत्यूर्ध्वाक्षोऽतिरश्चात्। शिशिरः प्रदृश्यते। नैव रूपं न वासांसि। न चक्षुः प्रतिदृश्यते(१)। (२)अन्योन्यं

---

कल्पः। अत्यूर्ध्वाक्ष इति चोदृतुमण्डलान्येव दृष्ट इति चेति ऋतुमण्डलसंबन्धस्य मन्त्रगणत्वादुपधेयानामिष्टकानामपि तदेव नाम। तत्र प्रथमामृचमाह। (१)"अत्यूर्ध्वाक्षो-तिरश्चात् ० न चक्षुः प्रतिदृश्यते"(१) इति। योऽयं 'शिशिरः', ऋतुः सोऽयं प्राणिषु प्रकर्षेण 'दृश्यते'। कीदृशः शिशिरः, 'अत्यूर्ध्वाक्षः', तस्मिन्नृतौ यदा शीतबाहुल्यं भवति तदानीं कम्पमानाः प्राणिनो हस्ताभ्यां उर आच्छादयन्तो मुखेन शीत्कारं कुर्वन्तो द्वे भ्रुवावत्यूर्द्ध्वमुन्नमयन्ति, तदिदं तस्यर्त्तोरत्यूर्ध्वाक्षत्वं। शीतपीडितत्वादेव दक्षिणतो वामतो वा तिर्यङ् न पश्यति। तदिदम् 'अतिरश्चात्', इत्युच्यते। यत्तु शरीरस्य 'रूपं',तदपि शीतवेलायां प्राणिभिः 'नैव','दृश्यते'। 'वासांसि', अपि नैव दृश्यन्ते 'चक्षुः', अपि दर्पणादौ 'न प्रतिदृश्यते'। रूपवस्त्रादिषु नात्यन्तमादरः किन्तु शीतपरिहारमेवान्विच्छन्तीत्यर्थः॥

अथ द्वितीयामाह। (२)"अन्योन्यं तु न हिंस्रातः ० सूर्यस्योदयनं प्रति"(२) इति। यौ परस्परमत्यन्तद्वेषिणौ युद्धार्थमुद्युक्तौ तावपि शिशिरर्त्तौ 'अन्योन्यन्तु', 'न हिंस्रातः' शीत-

तु न हिꣳस्सातः। सतस्तद्देवलक्षणं। लोहितोऽक्ष्णि शार शीर्ष्णि। सूर्यस्योदयनं प्रति[२]। [१]त्वङ्करोषि न्यञ्ज-लिकां। त्वङ्करोषि नि जानुकां॥ १॥

---

निवारणाय प्रावरण एव प्रयत्नयुक्तौ सन्तौ परस्परं हिंसा-मपि न कुरुतः, यदेतदीदृशं प्राणिनां वर्त्तनं 'तत्' 'एतत्' 'सतः' वर्त्तमानस्य, शिशिरर्त्तोः 'लक्षणं' देवेन सूर्येण सम्पादितं चिह्नं अनेन लक्षणेन शिशिरत्वं विद्यात्। किञ्च तस्यर्त्तो-रभिमानिदेवताविग्रहे 'अक्ष्णि' चक्षुषि, 'लोहितः', वर्णः भवति 'शीर्ष्णि', शिरसि, 'शार' सारिमायाः, शुक्लिमायाः, यो वर्णः स वर्णो भवति। कस्मिन् काले अयं वर्णविशेष इति उच्यते। 'सूर्यस्योदयनं प्रति' सूर्योदयवेलायां। अत्र सर्वेषोच्यमानेषु काललक्षणेषु यथा प्रजा सुसम्भवति तत्र प्रजाद्वारेण कालं लक्षयति। यत्तु प्रजासु न सम्भवति तत् साक्षादेव काला-भिमानिदेवतायां द्रष्टव्यं॥

अथ तृतीयामाह। [१]"त्वङ्करोषि न्यञ्जलिकां ॰ अमी वा-चमुपासतामिति"[१] इति। हे शिशिरर्त्तो 'त्वं', 'अञ्जलिकां' हस्ताग्रवर्त्तिनमञ्जलिं, 'निकरोषि' न्यग्भूतङ्करोषि, तथा 'जानुकां' जानुप्रदेशमपि, 'त्वं', 'निकरोषि' न्यग्भूतं करोषि। सर्वे प्राणिनः शीतबाहुल्यादग्निसेवार्थं हस्तौ न्यग्भूतौ कुर्वन्ति। उदरादिदेहावयवतापनाय व्यवधानभूते जानुनी अपि भूमि-

नि जानुका मे न्यञ्जलिका। अमी वाचमुपासतामिति[१]। [४]तस्मै सर्वे ऋतवो नमन्ते। मर्यादाकरत्वात् प्रपुरोधां। ब्राह्मण आप्नोति। य एवं वेद। स खलु

---

धर्मिणो यथाभवतस्तथा न्यग्भूते कुर्वन्ति । स्वयमेवं कुर्वन्तो बुद्धिमन्तो प्रबुद्धान् बालान् प्रत्येवमुपदिशन्ति। हे बालाः 'अमी' भवन्तः, ईदृशीं 'वाचमुपासतां'। कीदृशी वागिति तदुच्यते। 'मे' मदीया, 'जानुका' न्यग्भूता भवतु, 'अञ्जलिका', अपि न्यग्भूता भवत्विति, श्रोतः 'इति' शब्द एवंविधलक्षणप्रदर्शनार्थः। अनुक्रमपेतादृशं लोकव्यवहारं दृष्ट्वा तन्दतुं जानीयात्। ऋतुमण्डलाख्यैरेतैर्मन्त्रैस्तिस्र इष्टका उपदध्यात्॥

अथ ब्राह्मणमुच्यते। [४]"तस्मै सर्वे ऋतवो नमन्ते • तस्यैषा भवति"[४] इति। 'यः' पुमान्, 'एवं' उक्तैरनुवाकैः प्रतिपादितमृतुस्वभावं, 'वेद'। 'तस्मै' पुरुषाय, 'सर्वे' 'ऋतवः' वसन्तादयः, 'नमन्ते' प्रह्वीभवन्ति स्वाधीना भवन्ति। किंच 'स ब्राह्मणः' 'पुरोधां' पुरतोवस्थितिं, सर्वेषु ब्राह्मणेषु प्राधान्यं 'प्राप्नोति'। ऋतूनां स्वाधीनत्वं दुःखानुत्पादकत्वं तस्मिन् स्वाधीनत्वे प्राधान्यप्राप्तौ च हेतुरुच्यते 'मर्यादाकरत्वात्', इति। अयं हि विद्वान् पुरुषः तेषां वसन्ताद्यृतूनां मर्यादां करोति यस्मिन् यस्मिन्नृतौ ये धर्माः तत्र तान् प्रवर्त्तयति। मर्यादाकरत्वमेव कथमिति तदुपपाद्यते। 'स खलु' विद्वान् ब्राह्मणः, देहपातादूर्ध्वं 'संवत्सरः' भूत्वा संवत्सरनिष्पादकादित्यरूपो भूत्वाऽऽरुण-

संवत्सर एतैस्सेनानीभिः सह। इन्द्राय सर्वान् कामानभिवहति। स द्रप्सः। तस्यैषा भवति(४)॥ २॥

(५)अव द्रप्सो अंशुमतीमतिष्ठत्। इयानः कृष्णो दशभिः सहस्रैः। आवर्तमिन्द्रः शच्या धमन्तं। उप स्तुहि तं

---

केतुकाग्निताद्रूप्यं प्राप्य, 'एतैः' 'सेनानीभिः' वसन्तो वसुभिः सह शुक्लवासा रुद्रगण इत्यादिवाक्येषु प्रतिपादितैर्वसन्तादिदेवतासहवर्त्तिभिर्वस्वादिभिः सेनाधिपतिभिः 'सह', वर्त्तमानः सन् 'इन्द्राय' कर्मस्वामिने यजमानाय, 'सर्वान् कामान्', 'अभिवहति' आभिमुख्येन सम्पादयति, तस्मादारुणकेतुकाग्निप्राप्तियोग्यत्वादयं विद्वान् मर्यादाकरो भवत्येव 'सः' च विदुषा प्राप्य आरुणकेतुकः, 'द्रप्सः' उदकस्वरूपः, वृष्टिहेतुत्वात् 'तस्य' द्रप्सरूपस्यारुणकेतुकाग्नेः, प्रतिपादिकेयं काचिदृग्विद्यते॥

अथ तामृचं दर्शयति। "(५)अव द्रप्सो अंशुमतीमतिष्ठत् ० वृष्णामसद्राम्"(५) इति। 'द्रप्सः' उदकात्मकोऽयमारुणकेतुकः, 'अंशुमती' अंशुशब्देन सोमलताखण्डवाचिना सर्वा ओषधय उपलक्ष्यन्ते तद्युक्तत्वादंशुमती पृथिवी ताम्, 'अवातिष्ठत्' अवगम्य प्राप्य तत्रावस्थितः। कीदृशो द्रप्सः, 'दशभिः सहस्रैः' अनेकसहस्रसङ्ख्याकैः आदित्यरश्मिभिः, 'इयानः' सञ्चरन्, आदित्याज्जायते वृष्टिरिति स्मृतेः। 'कृष्णः' कृषिहेतुः, सति ह्युदके भूमिं कृषन्ति। हे आदित्यरूपारुणकेतुकाग्ने 'इन्द्रः' वृष्टेरीश्वरस्त्वं, 'आवर्त्तं' पुनःपुनरिहावृत्त्य त्वं, 'शच्या' स्वकीयया

*नृम्णामघद्रामिति(५)। (६)एतयैवेन्द्रः सलावृक्या सह। असुरान् परिवृश्चति। पृथिव्यꣳशुमती। तामन्ववस्थितः संवत्सरो दिवञ्च। नैवंविदुषाचार्यान्तेवासिनौ। अन्योन्यस्मै द्रुह्यातां। यो द्रुह्यति। भ्रश्यते स्वर्गाल्लोकात्।

---

मत्वा, तदा तदाऽपेक्षितकाले समागत्य 'धमन्तं' गर्जनादिनाशब्दयन्तं 'नृम्णां' नृभिर्मनुष्यैः, मननीयं सर्वदा प्रार्थनीयं 'अघद्रां' अघो द्रवणशीलम्, 'तं' द्रप्सं, उदकविशेषं, 'उपस्तुहि'। भूमौ प्रस्रावय इत्यनेन मन्त्रेण द्रप्सवतीमिष्टकामुपदध्यात्॥

अथ ब्राह्मणमुच्यते। (६)"एतयैवेन्द्रः ० अत ऊर्ध्वं सनिर्वचनाः"(६) इति। योयं 'इन्द्रः' आरुणकेतुको वृष्टिस्वामी, 'सलावृक्या' सलः सलिलं जलन्तस्य 'आवृका' दानं तद्युक्ता भूमिः सलावृकी एतया सलावृक्या निमित्तभूतया, 'सह', 'असुरान्' असवः प्राणा रमन्ते क्रीडन्ते येषु मेघेषु खलु ते मेघा असुराः तान्, 'परिवृश्चति' परितश्छिनत्ति, अयं देवो जलार्थी पृथिवीनिमित्तं मेघभेदं कृत्वा वर्षयतीत्यर्थः। पूर्वोक्तमन्त्रे येयं 'अंशुमती', कथिता सेयं 'पृथिवी', विविचिता 'तां' पृथिवीं, 'दिवञ्च', अनुसृत्य अयं संवत्सरात्मक आरुणकेतुको देवो वह्निरूपेणादित्यरूपेण वा 'अवस्थितः', यः पुमानेवमारुणकेतुकाग्नेर्महिमानं जानाति तेन 'एवंविदुषा', सह 'आचार्यान्तेवासिनौ', 'अन्योन्यस्मै', द्रोहं कर्तुमार्हतः आचार्योऽध्वर्युः यज्ञे धर्मा-

---

* नृम्णामिति A. C. पुस्तकद्वयसम्मतः पाठः।

इत्यृतुमण्डलानि । सूर्यमण्डलान्याख्यायिकाः । अत ऊर्ध्वꣳ सनिर्वचनाः(१) ॥ ३ ॥

निजानुकां भवति द्रुह्यातामप्यच्च च(१) ॥ अनु० ६ ॥

---

माचरतीतिव्युत्पत्तेः यजमानोऽन्तेवासी तस्याध्वर्योः समीपे नि-वासात् तावध्वर्युयजमानावभिज्ञेन सह द्रोहयोग्यौ न भवतः स्वयं द्रोह्यावपि न भवतः द्रोग्धारावपि न भवत इति वक्तु-मन्योन्यस्मा इत्युक्तं, तस्मै विदुषे स्वयं द्रोहमकृत्वा सोऽपि यथा न द्रुह्यति तथा वर्त्तितव्यं, 'यः' मूढः, तस्मै विदुषे 'द्रुह्य-ति', सोऽयं स्वर्गलोकाद्भ्रष्टो भवति तस्मान्न द्रोहः कर्त्तव्यः, स्मृतिः प्रत्यक्षमित्यारभ्य पञ्चस्वनुवाकेषु प्रोक्तोऽर्थ उपसंह्रियते। 'इति' एवमतीते ग्रन्थे, ऋतुर्ऋतुनानुद्यमान इत्यादिभिर्ऋतु-मण्डलप्रतिपादकानि वाक्यान्युक्तानि, एतैरादित्यमण्डलमि-त्यादिभिः सूर्यमण्डलप्रतिपादकानि वाक्यान्युक्तानि, पूर्वोक्त एवार्थो दृढमाख्यायते। यासु ऋक्षु उदाहृतासु ता आख्या-यिकाः शुक्रन्ते अन्यदित्यादयः ता अप्युक्ताः, अत ऊर्ध्वमुपरि-तनेष्वनुवाकेषु 'सनिर्वचनाः' निःशेषेण वचनं निर्वचनं ब्राह्मणा-न्तेन सहिताः, 'आख्यायिकाः', सनिर्वचनाः पूर्वेष्वनुवाकेषु म-न्त्रप्रतिपादितेऽर्थे संवादार्थमृच उदाहृताः, उत्तरेष्वनुवाकेषु ब्राह्मणप्रतिपादितेऽर्थे संवादार्थमृच उदाह्रियन्त इत्यर्थः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-रण्यके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ० ॥

सप्तमोऽनुवाकः।

(१)आरोगोभ्राजः पटरः पतङ्गः। स्वर्णरोज्योतिषीमान् विभासः। ते अस्मै सर्वेदिवमातपन्ति। ऊर्ज्जं दुहाना अनपस्फुरन्तः(१) इति। (२)कश्यपोष्टमः। सम-

---

कल्पः। आरोग इत्यष्टौ पदश्रोयन्ते शिल्पमिति चेत्यारोगादीनि विभासान्तानि। तच्च ब्राह्मणभाग इत्यादिपदप्रतिपादिकामृचमुदाहरति। (१)"आरोगोभ्राजः ० अनपस्फुरन्तः"(१) इति। आरोगादीनि विभासान्तानि सप्त पदानि सप्तानां सूर्यविशेषाणां नामधेयानि ते सप्तापिसूर्याः 'अस्मै' लोकार्थं, 'दिवं' आकाशं, 'आतपन्ति' सर्वतः प्रकाशयन्ति। किं कुर्वन्तः, 'ऊर्जं दुहानाः' वृष्टिद्वारेण क्षीरादिरसं सम्पादयन्तः। 'अनपस्फुरन्तः' प्राणिनां प्रातिकूल्येन प्रकाशनमपस्फुरणं तदकुर्वन्तः, अनुकूलमेव प्रकाशनं सर्वदाकुर्वन्तीत्यर्थः। श्रौत 'इति'शब्द उपधानप्रदर्शनार्थः। उदाहृतायामस्यामृच्युक्तैरारोगादिनामभिः सप्तभिरिष्टका उपदध्यादित्यर्थः। आरोगस्त्वया देवतयांगिरस्वद्ध्रुवासीदेत्येवमुपधानमन्त्रा उन्नेयाः॥

अथाष्टमं नामधेयं दर्शयति। (२)"कश्यपोष्टमः ० तस्यैषा भवति"(२) इति। पूर्वोक्तारोगादिसप्तसूर्यापेक्षया योयं 'अष्टमः', सूर्यः तस्य 'कश्यपः' इति नामधेयं। तेन नाम्नेष्टका उप-

ह्यामेरुर्न जहाति। तस्यैषा भवति[१]। [२]यत्ते शिल्पं कश्यप रोचनावत्। इन्द्रियावत्पुष्कलञ्चित्रभानु। यस्मिन् सूर्या अर्पिताः सप्त साकं॥ १॥

तस्मिन्राजानमधिविश्रयेममिति[३]। [४]ते अस्मै सर्वे-

---

दध्यात्। 'सः' च कश्यपमेरुपर्वतः, 'न', कदाचिदपि परित्यजति मेरुस्थानमेव सर्वदा प्रकाशं करोति। 'तस्य' कश्यपस्य, प्रतिपादिका काचिदृग्विद्यते॥

अथ तामृचं दर्शयति। [२]"यत्ते शिल्पं कश्यप रोचनावत् ॰ तस्मिन् राजानमधिविश्रयेममिति"[३] इति। हे 'कश्यप', अष्टमसूर्य, 'यत्', 'ते' तव, 'शिल्पं' जगत्प्रकाशलक्षणं चित्रं कर्म, 'यस्मिन्' स्वकीये प्रकाशरूपे चित्रकर्मणि, आरोगादयः 'सप्त सूर्याः', 'साकमर्पिताः' त्वया सह स्थापिताः, 'तस्मिन्' शिल्पे प्रकाशलक्षणे, 'इमं' यजमानं, 'राजानं' दीप्तियुक्तं कृत्वा, 'अधिविश्रय' सर्वेषामुपरि विशिष्टत्वेन स्थापय। कीदृशं शिल्पं, 'रोचनावत्' प्रकाशयुक्तं, 'इन्द्रियावत्' इन्द्रियसामर्थ्ययुक्तं, 'पुष्कलं' सम्पूर्णं, 'चित्रभानु' विविधरश्मियुक्तं, इत्येषा काश्यपप्रतिपादिकाऽभिहिता॥

कश्यपस्य शिल्पे सप्तसूर्याणामर्पितत्वं स्पष्टीकरोति। [४]"ते अस्मै सर्वे कश्यपाज्ज्योतिः ॰ सूर्या इत्याचार्याः"[४] इति। 'ते' सर्वे सप्तापि सूर्याः, 'अस्मै' जगत्प्रकाशनार्थं, 'कश्यपात्', सकाशात्

# कश्यपाज्ज्योतिर्लभन्ते। तान्त्सोमः कश्यपादधिनिर्धमति। भस्त्राकर्मकृदिवैवं(४)। (५)प्राणो जीवानीन्द्रियजीवानि। सप्त शीर्षण्याः प्राणाः। सूर्या इत्याचार्याः(५)।

---

ज्योतिर्लभन्ते। यद्यपि सूर्याः पूर्वमेव ज्योतिष्मन्तः तथापि 'तान्' सूर्यान्, 'सोमः', देवः 'कश्यपात्', सकाशात् 'अधिनिर्धमति' अधिकत्वेन निस्तमस्का यथा भवन्ति तथा शोधयति सोमो हि तानाहृत्य कश्यपसमीपं प्रापितवान्, तस्य कश्यपस्यानुग्रहादेतेषां प्रकाशाधिक्यं सम्पन्नमित्यर्थः। भस्त्रेत्यादिस्तत्र दृष्टान्तः, रेफस्य व्यत्यये सति भस्त्राशब्दो धमसाधनमित्याचष्टे। यथा चर्ममय्या दृत्या वायुमुत्पाद्य ज्वलिताग्निना सुवर्णादेः किटादिकमपनीय 'भस्त्राकर्मकृत्' सुवर्णकारः, शोधयति एवं कश्यपसम्बन्धकारी सोमस्तान् सूर्यानशोधयत् ॥

तेषां सप्तसूर्याणां स्वरूपे मतभेदं दर्शयति। "(५)प्राणो जीवानीन्द्रियजीवानि • सूर्या इत्याचार्याः"(५) इति। मुखनासिकयोः सञ्चारी यः 'प्राणः', स एव सप्तभिः वृत्तिभेदैः 'सप्त सूर्याः', 'इति' एवं, केचित् 'आचार्याः', आहुः। 'जीवानि' जीवननिमित्तभूतानि, महदहङ्कारपञ्चतन्मात्ररूपाणि तत्त्वानि, 'सप्त सूर्याः', 'इति' एवम्, अन्ये 'आचार्याः', प्रचक्षते। 'इन्द्रियजीवानि' चक्षुरादीनि पञ्चेन्द्रियाणि मनोबुद्धिसहितानि जीवननिमित्तभूतानि, 'सप्त सूर्याः', 'इति' एवम्, अपरे

(१)अपश्यमहमेतान्सप्त सूर्यानिति। पञ्च कर्णो वात्स्या-यनः। सप्तकर्णश्च प्राक्षिः ॥ २ ॥

आनुश्रविक एव नौ कश्यप इति। उभौ वेदयिते। न

---

प्रपद्यते। शिरस्यवस्थितानि यानि सप्तच्छिद्राणि तेषु सञ्च-रन्तः 'प्राणाः', 'सप्त सूर्याः', 'इति', अन्ये। एते सर्वेऽप्याचार्याः सप्तसूर्यबुद्ध्या स्वेरूपाख्यानि तत्त्वान्याहुः, अतो नैते मुख्याः सप्त सूर्याः ॥

अथ मुख्यानां सप्तसूर्याणां द्रष्टारावृषी उदाहरति। (१)"अपश्यमहमेतान् ० महामेरुं गन्तुम्"(१) इति। 'पञ्चकर्ण-नामकः', कश्चिद्वत्सस्य पुत्रो महर्षिः 'एतान्' आरोगादीन्, 'सप्तसूर्यान्', प्रत्यक्षेणैव 'अहमपश्यम्', इत्युवाच। तथा 'सप्त-कर्णनामकः', कश्चित् प्लक्षस्य पुत्रो महर्षिरपि 'अहमपश्यम्', इत्युवाच। अतो मनुष्यैः सन्निहितत्वादेक एव सूर्योऽवलोक्यते, न तु व्यवहितत्वादितरे षट् सूर्या अवलोक्यन्ते। किञ्च तौ 'उभौ' अपि पञ्चकर्णसप्तकर्णाख्यौ महर्षी, 'वेदयिते' इत्थं वेदयतः, प्राणिनः सर्वान् बोधयतः। किमिति तदुच्यते, 'कश्यपाख्यः' अष्टमः सूर्यः, 'नौ' आवयोः उभयोः, 'आनु-श्रविक एव', न तु प्रत्यक्षः गुरूपदेशमनुश्रूयत इत्यनुश्रवो वेदः, तत्रैवानुगतः, 'आनुश्रविकः', यत्ते शिल्पं कश्यपेत्यादि-मन्त्रादेवावगम्यत इत्यर्थः। प्रत्यक्षादर्शने हेतुमप्याहुः,

हि शेकुमिव महामेरुङ्गन्तु[६]। [७]अपश्यमहमेतत् सू-र्यमण्डलं परिवर्त्तमानं। गार्ग्यः प्राणत्रातः। गच्छन्तं महामेरुं। एकञ्चाजहतं[७]। [८]भ्राजपटरपतङ्गा नि-हने। तिष्ठन्नातपन्ति। तस्मादिह तप्त्रितपाः॥ ३॥

---

'महामेरुं' कश्यपस्थानं, 'गन्तुं', आवां 'नहि शेकुमिव' न शक्तौ भवाव एव, तस्मादेहादेव जानीवः॥

अथ कश्यपदर्शिनमृषिमुदाहरति। [७]"अपश्यमहमेतत् ० एकञ्चाजहतं"[७] इति। गर्गस्य पुत्रः 'प्राणत्रातनामकः', कश्चित् महर्षिः तौ पञ्चकर्णसप्तकर्णौ प्रत्येवमुवाच, महामेरावेव 'परिवर्त्तमानम्', 'एतत्' कश्यपाभिधं, 'सूर्यमण्डलं', प्रत्यक्षेणैव 'अपश्यं', अतो हे मुनी युवामपि 'महामेरुं', 'गच्छन्तं' योग्येन मार्गेण गच्छतं, तत्र तत्तु दृष्टाच 'अजहतं' मेरुं कदाचि-दप्यपरित्यजन्तम, 'एकं' कश्यपाख्यं सूर्यञ्च, गच्छतं॥

अथ मेरुगमने मार्गं दर्शयति। [८]"भ्राजपटरपतङ्गा निहने ० तस्मादिहातप्त्रितपाः"[८] इति। य एते सप्तसूर्याः तेषां मध्ये आरोगाख्यस्य अस्माभिर्दृश्यमानस्य सूर्यस्य गतिः प्रसिद्धा, तदनन्तरभाविनो भ्राजादयस्त्रयः ते 'निहने' मेरुमार्गस्य नि-हतप्रदेशे अधोभागे, 'तिष्ठन्नातपन्ति' अवस्थिताः सन्तो रश्मि-भिरधोमुखैर्मेरुमार्गादधोवर्त्तिनः प्राणिनः सर्वतः प्रकाशयन्ति, 'तस्मात्', एषामधोमुखा रश्मयः 'तस्मात्', 'इह' लोके, 'तप्त्रि-

अमुचेतरे । तस्मादिहातप्तितपाः(८) । (९)तेषामेषा भवति। सप्त सूर्या दिवमनुप्रविष्टाः। तानन्वेति पथिभिर्दक्षिणावान्। ते अस्मै सर्वे घृतमातपन्ति। ऊर्जं

---

तपाः' तपनशीलरश्मियुक्ताः, 'इतरे' तु आरोगभ्राजपटरपतङ्गेभ्योऽन्ये, स्वर्णेन ज्योतिषा दिभागशस्तय: सूर्याः ते 'अमुच' मेरुमार्गादुपरिभागे, वर्त्तन्ते यस्मात् तेषां रश्मयः यदूर्ध्वमुखास्तस्मात्ते 'इह' अधो लोकेषु, 'अतप्तितपाः' तपनशीलरश्मियुक्ता न भवन्ति, आरोगादीनामधोमुखरश्मित्वात् स्वर्णरादीनामूर्ध्वमुखरश्मित्वाच्च वर्गद्वयमध्ये तापाभावाच्छीतलेन मार्गेण मेरुं गन्तुं शक्यत इत्यर्थः॥

अथ सूर्याणां मध्यवर्त्तिमार्गप्रतिपादिकामृचमवतारयति। (९)"तेषामेषा भवति ० अनपस्फुरन्त इति"(९) इति। आरोगादयः 'सप्त सूर्याः', 'दिवम्' अन्तरिक्षं, 'अनुप्रविष्टाः' अनुक्रमेणव्याप्ताः, 'दक्षिणावान्' शास्त्रोक्तदृष्टकदक्षिणायुक्तोऽनुष्ठितारुणकेतुकाग्निः, प्रागुक्तान् सप्तसूर्याननुसृत्य 'पथिभिः' सूर्यवर्गद्वयवर्तिभिः शान्तमार्गैः, 'एति' मेरुं गच्छति, 'ते' सूर्याः, 'सर्वे', 'अस्मै' यजमानाय, 'घृतमातपन्ति' मेरुमार्गरूपमाकाशं घृतादिभोग्यवस्तुसम्पूर्णं यथा भवति तथा प्रकाशयन्ति। किं कुर्वन्तः, 'ऊर्जं दुहानाः' भोग्यं क्षीरादिकं सम्पादयन्तः, 'अनपस्फुरन्तः' सन्तापमकुर्वन्तः, हे यजमान

दुहाना अनपस्फुरन्त इति[९]। [१०]सप्तर्त्विजः सूर्या इत्याचार्याः[१०]। [११]तेषामेषा भवति[११]। [१२]सप्त दिशो नानासूर्याः॥ ४॥

सप्त होतार ऋत्विजः। देवा आदित्या ये सप्त। ते-

---

इहास्मतां इह भुज्यतामित्येवं प्रियोक्तिं वदन्ति। तथा चार्षविका आमनन्ति, एह्येहीति तमाहुतयः सुवर्चसः सूर्यरश्मिभिर्यजमानं वहन्ति प्रियां वाचमभिवदन्त्योऽर्चयन्त इति। इत्येषा सप्त सूर्या इत्यादिकामार्गप्रतिपादिका तयेष्टकामुपदध्यात्। तथा च बौधायनः। 'सप्त सूर्याः सप्त दिशो नानापन्थानश्चित्रं देवानामिति। चतस्रः सौरीः पुरस्तादिति'॥

इदानीं सूर्यस्वरूपे पक्षान्तरमुपन्यस्यति। [१०]"सप्तर्त्विजः ० इत्याचार्याः"[१०] इति। य एते यज्ञे होत्रादयः 'सप्तर्त्विजः', त एव सप्त 'सूर्याः', 'इति', केचित् 'आचार्याः', प्रवदते॥

अस्मिन्नर्थे काञ्चिदृचमवतारयति। [११]"तेषामेषा भवति"[११] इति। 'तेषाम्' ऋत्विग्रूपाणां सप्तसूर्याणां, प्रतिपादनार्था इयमृग्विद्यते॥

तामेतामृचं दर्शयति। [१२]"सप्त दिशो नानासूर्याः० तेभिः सोमाभीरक्ष इति"[१२] इति। अष्टसु दिक्षु मध्ये या प्राची सा सूर्यवतीति सर्वेषां प्राणिनां प्रसिद्धा। यास्त्वन्या आग्नेय्याद्याः 'सप्त दिशः', ता अपि नानाविधसूर्योपेताः, ते च सप्तसु दिक्षु

भिः सोमाभीरक्षण इति[१२]। [१३]तदप्याम्नायः। दिग्-
भ्राज ऋतून् करोति[१३]। [१४]एतयैवावृता सहस्रसू-
र्यताया इति वैशम्पायनः[१४]। [१५]तस्यैषा भवति।

---

अवस्थिताः। तत्स्वामिनः सूर्या इह कर्मणि होत्रादयः 'ऋ-
त्विजः', भूत्वा चरन्ति। होता प्रशास्ता ब्राह्मणाच्छंसी पोता
नेष्टा अच्छावाका आग्नीध्र इत्येते 'सप्त होतारः', त एतेऽत्र
होत्रादयः 'ऋत्विजः', देवा भूत्वा सप्तादित्या इत्युच्यन्ते, हे
सोमयागाधिपते 'तेभिः' होत्रादिरूपैरादित्यैः, नोऽस्मान् 'अभि-
रक्ष'। इत्यनयापीष्टकामुपदध्यात्॥

ननु सूर्या ऋत्विग्रूपा इत्यस्मिन्नर्थे इयमृगाहृता। तत्र
दिशो नानासूर्या इत्येतदप्रस्तुताभिधानमित्याशङ्क्योत्तरमाह।
[१३]"तदप्याम्नायः ० करोति"[१३] इति। यदुक्तं दिशां नाना-
सूर्योपेतत्वं 'तदप्याम्नायः', शाखान्तरे कश्चिन् मन्त्रो ब्रूते,
अतो वेदान्तरसिद्धत्वादेतदपि वक्तव्यमेव। नत्वप्रस्तुतं किञ्चित्
तस्मिन्नर्थे युक्तिरप्यस्ति 'दिग्भ्राजः' तां तां दिशं प्राप्यावस्थिताः
सूर्याः, 'ऋतून्' वसन्तादिसूचितानृतुधर्मान्, 'करोति' तस्यां
तस्यां दिशि कुर्वन्ति, न हि ऋतुनिष्पादकसूर्यव्यतिरेकेण त-
त्तदृतुधर्माः सम्भवन्ति तस्मात् बह्वयेव दिक्षु विभिन्नाः सूर्याः॥

अथ कैमुतिकन्यायेन दिशां बहुसूर्यत्वं दृढीकरोति।
[१४]"एतयैवावृताः ० वैशम्पायनः"[१४] इति। 'एतयैवावृताः'

यद्द्याव इन्द्र ते शतꣳ शतं भूमीः। उत स्युः। न त्वा व-
ज्रिन् सहस्रꣳ सूर्याः ॥ ५ ॥

अनु न जातमष्ट रोदसी इति(१५)। (१६)नानालिङ्ग-

---

अनेनैव प्रकारेण ऋतुधर्मा यत्र सन्ति तत्र तत्सम्पादकः सूर्यो-ऽस्तीतिन्यायेन, 'सहस्रसूर्यताया:', सहस्रसङ्ख्याकसूर्योपेतत्वपर्यन्तं दिक्षु सूर्यभेदाः कल्पनीयाः, तत्र सप्तसूर्यत्वे किमाश्चर्यमिति 'वैशम्पायनः', आचार्यो मन्यते। आसहस्रमित्युपलक्षणं, अनन्ताः सूर्या इत्यर्थः ॥

अनन्तसूर्यप्रतिपादिकामृचमवतारयति। (१५)"तस्यैषा भवति ० अनु न जातमष्ट रोदसी इति"(१५) इति। 'यत्' यदि, हे 'इन्द्र', 'ते' तव, 'शतं द्यावः स्युः' बहुभिः शतसङ्ख्याभिर्युक्ताः द्युलोकाः सम्भवेयुः, 'उत' अपि च, 'शतं भूमी स्युः' बह्वीभिः शतसङ्ख्याकाभिर्युक्ता भूमयोऽपि यदि सम्भवेयुः, हे 'वज्रिन्', तदानीमपि रोदसीजातं द्यावापृथिव्योर्मध्ये समुत्पन्नं त्वां 'सहस्रसूर्याः' सहस्रोपलक्षिता अनन्ताः सूर्याः, 'नाष्ट' नाश्नुवते, त्वामनु न व्याप्नुवन्ति, एतावत्सु द्युलोकेषु भूलोकेषु च सत्स्वपि तत्र तत्र स्थितं त्वामनु सूर्याव्याप्तेरपर्याप्ता देशाः, सूर्याणामनन्तत्वादित्यर्थः। इत्यनयापीष्टका उपदध्यात् ॥

मन्त्रोक्तमनन्तसूर्यत्वं युक्त्योपपादयति। (१६)"नानालिङ्गत्वात् ० नानासूर्यत्वं"(१६) इति। यद्येक एव सूर्यः स्यात्

त्वादृतूनां नानासूर्यत्वं[१६]। [१७]अष्टौ तु व्यवसिता इति[१७]। [१८]सूर्यमण्डलान्यष्टात ऊर्ध्वं। तेषामेषा भवति[१८]। [१९]चित्रं देवानामुदगादनीकं। चक्षुर्मित्रस्य

---

तदानीं वसन्ताद्यृतूनां नानाविधत्वं न स्यात् न हि कारण-भेदमन्तरेण कार्यभेदः सम्भवति। तस्मादृतुधर्मवैलक्षण्यसि-द्धये बहुसूर्यत्वमभ्युपेयं॥

कथन्तर्हि पूर्वत्र कश्यपोऽष्टम इत्येवं सूर्याणामष्टसङ्ख्या स्वी-कृतेत्याशङ्क्य तदभिप्रायं दर्शयति। [१७]"अष्टौ तु व्यवसिता इति"[१७] इति। बाढं। सन्त्येव तत्तल्लिङ्गकल्प्या अनन्ताः सूर्याः किन्तु तत्रास्ति कश्चिद्विशेषः, 'व्यवसिताः' निश्चिताः, सूर्याः 'अष्टौ' इत्येवंविधः पञ्चकर्णसप्तकर्णाभ्यां सप्तानां सूर्याणां प्रत्य-क्षेण दृष्टत्वात् प्राणत्रातेनाष्टमस्यापि दृष्टत्वात्॥

अष्टसङ्ख्यां निगमयति। [१८]"सूर्यमण्डलान्यष्टात ॰ तेषा-मेषा भवति"[१८] इति। 'तेषां' अनेकसूर्यमण्डलानां, प्रतिपा-दिकेयमृग्विद्यते॥

तामेतामृचं दर्शयति। [१९]"चित्रं देवानामुदगादनीकं ॰ सूर्य आत्मा जगतस्तस्थुषश्चेति"[१९] इति। 'चित्रं' बहुमण्डल-रूपत्वेन विचित्रं, 'देवानामनीकं' अन्धकाररूपदृष्टशरीरा-त्मकस्य शत्रोर्विनाशकत्वेन देवसैन्यरूपमादित्यमण्डलमुदगात् पूर्वस्यां दिश्युदेति तच्च मण्डलजातं मित्रादीनां चक्षुःस्वरूपं।

वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षम्। सूर्य आत्मा जगतस्तस्थुषश्चेति[१९] ॥ ६ ॥

साकं साध्वस्तानि तपा नानासूर्याः सूर्या नव च ॥ अनु० ॥ ७ ॥

---

अष्टमोऽनुवाकः ॥

[१]क्वेदमभ्रं निविशते। क्वायꣳ संवत्सरो मिथः। क्वाहः क्वेयं देव रात्री। क्व मासा ऋतवः श्रिताः[१]।

---

अन्धकार-निवारणेन चक्षुषोऽनुग्राहकत्वात् तादृशं सैन्यं 'द्यावा-पृथिवी', 'अन्तरिक्षं', च 'आप्रा' लोकत्रयं स्वकीयप्रकाशेनापूर्य वर्त्तते, तथाविधमण्डलमध्यस्वामी 'सूर्यः', 'जगतः' जङ्गमस्य, 'तस्थुषः' स्थावरस्य, 'च', 'आत्मा' स्वरूपं। इत्यनेनेष्टकामुपदध्यात्॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथाष्टमोऽनुवाकः।

कल्पः। पुरस्तात् क्वेदमभ्रमित्येकामिति। पाठस्तु। [१]"क्वेदमभ्रं निविशते ० क्व मासा ऋतवः श्रिताः"[१] इति। आपो बिभ्रतीति 'अभ्रं' मेघस्वरूपं, तच्चाकाशे निरालम्बत्वेनास्माभिर्दृ-

(२)अर्धमासा मुहूर्ताः। निमेषास्त्रुटिभिः सह। क्वेमा आपो निविशन्ते। यदीतो यान्ति सम्प्रति(२)। (३)काला अप्सु निविशन्ते। आपः सूर्ये समाहिताः ॥ १ ॥

---

स्यते सतः कुचाधारे निवसतीति प्रश्नः। तच्चालम्बनमन्तरेण निर्द्देष्टुं शक्यं, एतच्चोपलक्षणं, कारणमपि किमिति प्रष्टुरभिप्रायः। एवं 'संवत्सराहोरात्रमासर्त्तवः', कस्मिन्नाश्रयेऽवस्थिताः किं वा तेषां कारणमिति हे 'देव' जगत्कर्त्तः, कथय। संवत्सरस्य बह्ववयवसमष्टित्वं द्योतयितुं 'मिथः', इत्युक्तं। बहवः कालावयवाः सम्भूय वसन्ति यत्र सोयं संवत्सरः ॥

कल्पः। अर्धमासा इत्युपरिष्टादिति। (२)"अर्धमासा मुहूर्त्ताः ०, यदीतो यान्ति सम्प्रति"(२) इति। 'अर्द्धमासमुहूर्त्तनिमेषाः', प्रसिद्धाः। कालपरमाणुद्वयात्मकः कालद्व्यणुकस्त्रुटिः तथाविधैः 'त्रुटिभिः', 'सह', अर्धमासादयः कुत्राधारे स्थिताः कुतश्चोत्पन्नाः। भूमौ वर्त्तमाना आपो याः सन्ति ताः 'यदि', घर्मकाले 'इतः' भूमेः सकाशात्, 'यान्ति'। दृश्यते हि तस्मिन् काले सर्वत्र जलशोषः। 'सम्प्रति' तदानीम्, 'इमाः' 'आपः', 'क्व निविशन्ते', क्व आसामाधारः कः ॥

कल्पः। काला अप्सु निविशन्त इति। तत्र प्रथमामाह। (३)"काला अप्सु निविशन्ते ० विद्युत्सूर्ये समाहिता"(३) इति। पूर्वमन्त्रद्वयोक्तानां प्रश्नानामिदमुत्तरं, संवत्सरादयः चुस्थन्ता-

अभ्राण्यपः प्रपद्यन्ते। विद्युत्सूर्ये समाहिता(१)।

---

इयः काला: पृष्टाः ते सर्वे 'कालाः', 'अप्सु निविशन्ते',। आपो वा इदमग्रे सलिलमासीत्। इत्यपां जगत्कारणत्वेनाम्नातत्वात्। तत्रैव कालानामवस्थानमुत्पत्तिश्च। तथाहि। मनुना तावदेवं स्मर्यते। अप एव ससर्जादौ तासु वीर्यमवासृजत्। तदण्डमभवद्धैमं सूर्यकोटिसमप्रभमिति। परमेश्वरेण प्रथमं सृष्टास्वप्सु घनीभावसामर्थ्यं प्रक्षिप्ते सति ब्रह्माण्डं निष्पन्नं तच्च ब्रह्माण्डमभिन्नं यावदवस्थितं तावतः कालस्य संवत्सर इति नाम सम्पन्नं। तथा च वाजसनेयिनो बृहदारण्यके समामनन्ति। नद्धरेत आसीत्संवत्सरो भवन्नहः पुरा ततः संवत्सर आभातीति। एवं ब्रह्माण्डे सत्यप्सु संवत्सरे समुत्पन्ने सति तदवयवाः कालविशेषाः सर्वेऽप्यप्सु एवोत्पन्ना अप्स्वेव 'निविशन्ते', तदिदं कालप्रश्नस्योत्तरं। या एता 'आपः', भूमौ शुष्यन्ति ताः सर्वा रश्मिद्वारा 'सूर्ये समाहिताः', भवन्ति। घर्मकाले हि तीक्ष्णैः सूर्यरश्मिभिर्जलशोषः सर्वैः प्राणिभिर्दृश्यते। अतएव बुद्धिमद्भिरुक्तं सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविरिति। इदं च कमा आपो निविशन्त इत्यस्योत्तरं। तेभ्यः सूर्यरश्मिभ्यः सकाशात् 'अभ्राणि', जलं प्राप्नुवन्ति। रश्मयो हि स्वनिष्ठजलं धूमज्योतिर्मरुतां मेलनेनाभ्राकारमापादयन्ति। अतोऽभ्रस्य रश्मिगता आप एवोत्पत्तिकारणमाधारश्च। इदं च कोदमभ्रमितिप्रश्नस्योत्तरं। येयं 'विद्युत्', मेघेषु दृश्यते सेयं 'सूर्ये समाहिता'।

(४)अनवर्णे इमे भूमी। इयञ्चासौ च रोदसी(४)। (५)कि१ँ स्विदत्रान्तराभूतं। येनेमे विधृते उभे। विष्णुना विधृते भूमी। इति वत्सस्य वेदना(५)। (६)इरा-

---

सूर्यरश्मेरेव विद्युदाकारेण परिणतत्वात्। एतदुत्तरसामर्थ्यात् कोयं विद्युन्निविशत इत्यपि प्रश्नोऽत्र द्रष्टव्यः॥

अथ द्वितीयामाह। (४)"अनवर्णे ० रोदसी"(४) इति। वर्णो रूपविशेषः। तद्राहित्यमवर्णत्वं कुरूपत्वं केनापि कुरूपत्वेन रहितम् अनवर्णत्वं सुरूपत्वं, 'इमे भूमी', उभे 'अनवर्णे', सुरूपे दृश्येते। अत्र द्विवचनान्तभूमिशब्देन विवक्षितमर्थं श्रुतिरेव ब्रूते। 'इयं च' भूमिरपि, 'असौ च' द्यौरपि, एते 'रोदसी' द्यावापृथिव्यौ, भूमिशब्देन विवक्षिते इत्यर्थः। द्यावापृथिव्योः सुरूपत्वं नाम बहुविधदेवपरिपूर्णत्वं॥

कल्पः। किंस्विदत्रेति पञ्च वैष्णवीति। तत्र प्रथमामाह। (५)"कि१ँ स्विदत्रान्तराभूतं ० वेदना"(५) इति। 'येन' वस्तुना, 'इमे' द्यावापृथिव्यौ, 'उभे', अपि 'विधृते' विशेषेण सर्वजगदाधारत्वेन धृते, 'अत्रान्तरा' अनयोर्द्यावापृथिव्योर्मध्ये 'किंस्विद्भूतं' किं नाम वस्तु तादृशं विधारकमभूत्, इति प्रश्नः। 'विष्णुना' व्यापिना परमेश्वरेण, 'भूमी' द्यावापृथिव्यौ, 'विधृते', 'इति' एवं, 'वत्साख्यस्य', महर्षेः 'वेदना' विज्ञानं। वत्सो हि स्तुतिकर्त्ता, स च विष्णुमेव द्यावापृथिव्योर्विधारकं स्मरति। इदञ्च किंस्विदत्रेति प्रश्नस्योत्तरं॥

वती धेनुमती हि भूतं। सूयवसिनी मनुषे दशस्ये॥
॥२॥

व्यष्टभ्नाद्रोदसी विष्णवेते। दाधर्थ पृथिवीमभितो मयूखैः(१)। (०)किं तद्विष्णोर्बलमाहुः* । का दीप्तिः किं परायणं। एको यद्धारयद्देवः। रेजती रोदसी उभे(०)।

---

अथ द्वितीयामाह। (१)"इरावती ० मयूखैः"(१) इति। 'मनुषे' मनुष्यार्थम्, 'एते' द्यावापृथिव्यौ, 'इरावती' अन्नवत्यौ बहन्नयुक्ते, 'धेनुमती' धेनुमत्यौ, 'सूयवसिनी' शोभनैर्यवसै-र्भक्ष्यैर्युक्ते, 'दशस्ये' दातुमर्हे, 'भूतं' अन्नादिदानशक्ते भवतः। 'रोदसी' द्यावापृथिव्यावेतादृश्यौ, 'व्यष्टभ्नात्' विष्णुर्विशेषेण धृतवान्। हे 'विष्णो', त्वं 'पृथिवीम्' एतां द्युलोकसहितां, 'अभितः' अध उपरि च, 'मयूखैः' शङ्कुस्थानीये रश्मिभिः 'दाधर्थ' धृतवानसि॥

अथ तृतीयामाह। (०)"किं तद्विष्णोर्बलमाहुः ० रोदसी उभे"(०) इति। 'यद्देवः' यो विष्णुः 'एकः', एव, 'रेजती' राजमाने, 'रोदसी' द्यावापृथिव्यौ, 'उभे', 'धारयत्' धृतवान्। तस्य 'विष्णोः', 'किं तद्बलं' तादृशी शक्तिः कुत आगता, यैर्मयूखै-र्धृतवान् सा 'दीप्तिः', 'का' कुतत्या, 'किं', च 'परायणं' तस्य सहायभूतं वस्तु, इति प्रष्टारः 'आहुः'॥

---

* B. is here defective.

(८)वाताद्विष्णोर्बलमाहुः। अक्षराद्दीप्तिरुच्यते। त्रिप-
दाद्धारयद्देवः। यद्विष्णोरेकमुत्तमं(८) ॥ ३ ॥

---

अथ चतुर्थीमाह। (८)"वाताद्विष्णोर्बलमाहुः ० यद्विष्णोरे-
कमुत्तमं"(८) इति। विष्णुर्हि वातरूपं सूत्रात्मानमुत्पाद्य तेन
सूत्रेण सर्वं जगद्धारयति। तथा च वाजसनेयिन आमनन्ति।
वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायञ्च लोकः
परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्तीति। तस्मात्
'विष्णोः', 'बलं' धारणसामर्थ्यं, 'वातात्', आगतम् इत्यभिज्ञा
उक्तरं 'आहुः'। 'दीप्तिः' जगदवभासकं ज्योतिः, तच्च विष्णोः
'अक्षरात्' विनाशरहितात् स्वकीयात् परमपदात्, भवतीत्य-
भिज्ञैः 'उच्यते'। 'विष्णोर्हि' जगत्सृष्ट्यादिनिर्वाहकमुपासकै-
रुपास्यमिदम्, अपरं, यच्च ज्ञानिभिर्वेद्यं, परमम्। अतएवा-
म्नायते। तद्विष्णोः परमम्पदं सदा पश्यन्ति सूरय इति। तच्च
परविद्यागम्यं स्वरूपं विनाशराहित्यादक्षरम्। अतएवाथर्व-
णिका आमनन्ति। अथ परा यया तदक्षरमधिगम्यत इति।
तस्मादक्षरात् जगदवभासिका चैतन्यरूपा दीप्तिर्लभ्यते। तमेव
भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतेः। इद-
स्य का दीप्तिरित्यस्योत्तरं। पुरुषसूक्ते। पादोऽस्य विश्वा भूतानि
त्रिपादस्यामृतं दिवीत्याम्नायते। सर्वमप्येतज्जगत् अस्य परमेश्व-
रस्य चतुर्थांशः। अवशिष्टमंशत्रयं व्यवहारातीतत्वादमृतमवि-
नश्वरं। स द्योतनात्मके स्वस्वरूपे सर्वदावतिष्ठते। तादृशात् 'त्रि-

(९)अग्नयो वायवश्चैव। एतदस्य परायणं(९)। (१०)पृच्छामि त्वा परं मृत्युं। अवमं मध्यमं चतुं। लोकञ्च पुण्यपापानां। एतत् पृच्छामि सम्प्रति(१०)। (११)अमु-

---

पात्'स्वरूपाद्ब्रह्मणो लब्धसामर्थ्यो 'देवः' विष्णुः, 'धारयत्', सर्वं जगद्धारयति, 'यत्' त्रिपाद्वस्तु, 'विष्णोरेकम्', एव 'उत्तमं', स्वरूपं तस्मात्त्रिपदादिति पूर्वत्रान्वयः। अथवा एतदुत्तरवाक्यात् पूर्वत्रैको यद्धारयदिति वाक्ये कथमेको धृतवानिति प्रश्न उन्नेयः॥

अथ पञ्चमीमाह। (९)"अग्नयो ० परायणं"(९) इति। य एते 'अग्नयः' सावित्रादय आरुणकेतुकान्ताः, ये च तत्-सखिभूता 'वायवः', 'च'काराद्येऽप्यादित्याः, 'एतत्' सर्वं देवता-जातं, 'अस्य' विष्णोः, 'परायणं' सहकारिभूतं, इदञ्च किं परायणमित्यस्योत्तरं॥

कल्पः। पृच्छामि त्वा परं मृत्युमिति चतस्रो मृत्युमती-रिति। तत्र प्रथमामाह। (१०)"पृच्छामि ० सम्प्रति"(१०) इति। अत्र कश्चिन्मुनिर्जिज्ञासुरभिज्ञमन्यं मुनिं पृच्छति। हे अभि-ज्ञमुने 'त्वां', प्रति चतुर्विधान् मृत्यून् 'पृच्छामि'। परो-ऽवमो मध्यमश्चतुर्थश्चेत्येते मृत्यवः तेषां स्वरूपं ब्रूहि। चतुर्थ इत्येतस्मिन्नर्थे 'चतुः' शब्दः, तथा पुण्यकृतां पापिनाञ्च 'लोकं', ब्रूहि। एतत् सर्वमिदानीं 'पृच्छामि'॥

अथ द्वितीयामाह। (११)"अमुमाहुः ० चन्द्रमाश्चतुरुच्य-

माहुः परं मृत्युं । पवमानन्तु मध्यमं । अग्निरेवावमो मृत्युः । चन्द्रमाश्चतुरुच्यते(११) ॥ ४ ॥

(१२)अनाभोगाः परं मृत्युं । पापाः संयन्ति सर्वदा । आभोगास्त्वेव संयन्ति । यत्र पुण्यकृतो जनाः(१२) ।

---

ते"(११) इति । इदमभिन्नस्योत्तरं । योऽसावादित्यः 'अमुं', एव 'परं मृत्युं', पूर्वे महर्षयः 'आहुः' । आदित्यस्य परिस्पन्द-बाहुल्येनायुषः क्षये सति मृत्योरवश्यम्भावित्वात् । 'पवमानं', वायुं 'मध्यमं', 'मृत्युमाहुः' । प्राणवायोर्नाडीष्वन्यथासञ्चारे सति तत्क्लेशेन मृत्युः प्राप्यते । स च प्राणायामकुशलैर्योगि-भिः क्लेशेन समाधातुं शक्यते । तस्मान्मध्यमो मृत्युः । जाठ-राग्निर्यदा मन्दो भवति तदा व्याधिद्वारा मृत्युः प्राप्नो-ति स च चिकित्सकैरल्पप्रयासेन समाधातुं शक्यते तस्मात् 'अग्निरवमो मृत्युः' । 'चन्द्रमाः', ओषधीनामधिपतिः, तद-नुग्रहाभावे सस्याभावान्मृत्युः प्राप्नोति । तस्मादसौ चतुर्थो मृत्युः ॥

अथ तृतीयामाह । (१२)"अनाभोगाः परं मृत्युं ० यत्र पुण्य-कृतो जनाः"(१२) इति । 'पापाः' श्रुतिस्मृत्युल्लङ्घनेन पापमेवाच-रन्तः पुरुषाः, 'अनाभोगाः' सुखलेशेनापि हीनाः कृमिकीटा-दयः सन्तः, 'सर्वदा परं मृत्युं', 'संयन्ति' कतिपयैरेवादित्यपरि-स्पन्दैरल्पायुषः सन्तः पुनः पुनर्जायन्ते म्रियन्ते च, सेयं सर्वदा परं

(१३)ततो मध्यममायन्ति । चतुर्थमग्निं च सम्प्रति(१३) ।
(१४)पृच्छामि त्वां पापकृतः । यत्र यातयते यमः । त्वं-
नस्तद्ब्रह्मन् प्रब्रूहि । यदि वेत्थाऽसतो गृहान्(१४) ॥५॥
(१५)कश्यपादुदिताः सूर्याः । पापान्निर्घ्नन्ति सर्वदा ।

---

मृत्युं प्राप्तिः । ये तु श्रुतिस्मृतिमार्गवर्त्तिनः ते सर्वेऽपि ‘आभोगाः’ सम्पूर्णाः सर्वभोगयुक्ताः सन्तः, तादृशं स्थानं प्राप्नुवन्ति । ‘यत्र’ यस्मिन् स्वर्गे, पूर्वे ‘पुण्यकृतो जनाः’ देवाः, वर्त्तन्ते तत्र गच्छन्ति । एतत्तु लोकस्य पुण्यपापानामित्यस्योत्तरं ॥

अथ चतुर्थीमाह । (१३)“ततो ० सम्प्रति”(१३) इति । ‘ततः’ पूर्वोक्तेभ्योऽत्यन्तपापकृद्भ्योऽत्यन्तपुण्यकृद्भ्यश्च, अन्ये ये पुरुषाः मिश्राणि पुण्यपापान्याचरन्ति ते ‘सम्प्रति’ मनुष्यजन्मनि, मध्यमाधमचतुर्थमृत्युञ्च तदा प्राप्य प्रतीकारैः समादधते । एतदपि पुण्यपापलोकप्रश्नस्योत्तरं ॥

कल्पः । पृच्छामि त्वा पापकृतस्तिस्रो निरयवतीरिति । तत्र प्रथमामाह । (१४)“पृच्छामि ० गृहान्”(१) इति । हे ‘ब्रह्मन्’, ‘त्वां’ इन्द्रं, ‘पृच्छामि’ । किं पृच्छसीति तदुच्यते । ‘पापकृतः’, प्राणिनो ‘यमः’, ‘यत्र’ स्थाने, ‘यातयते’ क्लेशयति, तत्र स्थानं ‘नः’ अस्मभ्यं, त्वं ‘प्रब्रूहि’ । ‘यदि’, ‘असतः’ पापिनो जन्तोः, ‘गृहान्’ पातकानि, ‘वेत्थ’, तर्हि शुश्रूषवे मह्यं ब्रूहि ॥

अथ द्वितीयामाह । (१५)“कश्यपादुदिताः ० वासवैः”(१५)

रोदस्योरन्तर्देशेषु। तत्र न्यस्यन्ते वासवैः(१५)। (१६)तेऽ-
शरीराः प्रपद्यन्ते। यथाऽपुण्यस्य कर्मणः। अपाण्यपा-
दकेशासः। तत्र तेऽयोनिजा जनाः(१६)। (१७)मृत्वा

---

इति। योऽयं कश्यपाख्योऽष्टमः सूर्यो महामेरौ नित्यं वसति। तस्मादुत्पन्ना आरोगादयः सप्तसूर्याः तदीयमूर्त्तिविशेषा अन्ये सहस्रसङ्ख्याकाः ते सर्वेऽपि 'रोदस्योरन्तः' द्यावापृथिव्यो-र्मध्यदेशेषु रौरवादिनरकप्रदेशेषु, 'पापान्' पापिनः प्राणि-नः, 'सर्वदा', 'निघ्नन्ति' निःशेषेण मारयन्ति, मारिताश्च ते पापिनः 'वासवैः' निवासहेतुभिः सूर्यरश्मिरूपैर्देवैः, 'तत्र', 'न्य-स्यन्ते'। तेष्वेव नरकप्रदेशेषु पुनरपि बाधिता उत्पाद्य स्थाप्यन्ते॥

अथ तृतीयामाह। (१६)"तेऽशरीराः० निजा जनाः"(१६)इति। 'ते' पापिनः, तेषु नरकस्थानेषु 'अशरीराः' सम्पूर्णावयव-समीचीनावयवरहिताः, 'प्रपद्यन्ते' जन्म प्राप्नुवन्ति, 'अपुण्यस्य कर्मणो यथा', योग्यं तथा प्राप्नुवन्ति। तत्र कश्चित्पापी पाणि-शून्यः कुणिर्भवति। अपरः पादहीनः पङ्गुर्भवति। अपरः केशहीनः खलतिर्भवति। एवम् 'अपाण्यपादकेशासः', विकृत-शरीरा जायन्ते। किञ्च तेषु नरकस्थानेषु केचित् 'अयो-निजाः', जन्तवो भवन्ति। तन्मध्ये केचित्स्वेदजाः कृमिदंशा-द्याः। अपरे उद्भिदाः तरुगुल्माद्या भवन्ति। अतएव वाज-सनेयिनः। पञ्चाग्निविद्यायां दक्षिणोत्तरमार्गरहितानां पा-

पुनर्मृत्युमापद्यन्ते। अद्यमानाः स्वकर्मभिः॥ ६॥

आशातिकाः कृमय इव। ततः पूयन्ते वासवैः(१७)।

(१८)अपैतं मृत्युं जयति। य एवं वेद। स खल्वेवंविद्ब्रा-

---

पिनामीदृशं जन्मामनन्ति। अथ य एतौ पन्थानौ न विदुः, ता कीटाः पतङ्गा यदिदं दन्दशूकमिति। छान्दोगाश्चैवमामनन्ति तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्तीति॥

अथ चतुर्थीमाह। (१७)"मृत्वा ° वासवैः"(१७) इति। तेषु नरकस्थानेषूत्पन्नाः प्राणिनः सन्तः 'मृत्वा पुनः', उत्पद्यन्ते 'मृत्युं', प्राप्नुवन्ति, जन्ममरणसहस्राणि प्रतिपद्यन्त इत्यर्थः। ते च 'स्वकर्मभिः' स्वकीयैः पापैः, 'अद्यमानाः' भक्ष्यमाणाः, कर्मपरवशा इत्यर्थः। तेषामेव मध्ये अस्मत्प्रत्यक्षविषयो दृष्टान्त उदाह्रियते। 'आशातिकाः' आगत्य शात्यमानाः अस्माभिरेव बाध्यमानाः शिरोवस्त्रखट्वादिषु वर्त्तमानाः, 'कृमय इव' यूकामत्कुणादय इव, यूकादयः पापिनो यथास्माभिः प्रतिक्षणं मार्यन्ते एवमन्येपि पापिनो देवैर्मार्यन्ते इत्यर्थः॥

अथ ब्राह्मणं। (१८)"अपैतं ° विद्ब्रागमनः"(१८) इति। 'यः' पुमान्, 'एवं' कश्यपादुदिताः सूर्या इत्याद्युक्तप्रकारेण, कश्यपमहिमानं जानाति असौ 'एतमपमृत्युं' कृमिकीटादिकेषूत्पत्तिरूपमपकृष्टमृत्युं, 'जयति'। विदुषः पापेष्वप्रवृत्तेर्युक्तो मृत्युजयः। किञ्च 'स खलु' 'ब्राह्मणः', 'एवंवित्' कश्यपमहिमा-

ह्मणः। दीर्घश्रुत्तमो भवति। कश्यपस्यातिथिः सिद्ध-गमनः सिद्धागमनः[१८]। [१९]तस्यैषा भवति[१९]। [२०]आ यस्मिन्त्सप्त वासवाः। रोहन्ति पूर्व्या रुहः ॥ ७ ॥

ऋषिर्ह दीर्घश्रुत्तमः। इन्द्रस्य घर्मो अतिथिरि-

---

भिज्ञः सन्, 'दीर्घश्रुत्तमो भवति' दीर्घं चिरकालं कश्यपेनोप-श्रूयते, सम्यगनुष्ठातायमिति ततोप्यतिशयेो बहूनां देवानां मुखाच्छ्रवणं बहवोपि देवाः कश्यपसमीपं गत्वा ब्राह्मणोऽय-मारण्यकेतुकं सम्यगनुतिष्ठति इति पुनः पुनः कथयन्ति अतोयं दीर्घश्रुत्तमः। परलोके 'कश्यपस्यातिथिः', इव पूज्यो भवति। किञ्च स ब्राह्मणः स्वेच्छया कश्यपसमीपगमनागमनयोः समर्थो भवति ॥

अथ ब्राह्मणोक्तार्थस्य प्रतिपादिकामृचमवतारयति। [१९]"तस्यैषा भवति"[१९] इति ॥

तामेतामृचं दर्शयति। [२०]"आ यस्मिन्त्सप्त ० अतिथि-रिति"[२०] इति। 'यस्मिन्' कश्यपे, सप्तसङ्ख्याका आरोगादयः सूर्याः 'आरोहन्ति', कश्यपादेवोत्पद्य स्थितिं लभन्त इत्यर्थः। कीदृशाः सप्त सूर्याः, 'वासवाः' जगन्निवासहेतवः, 'पूर्व्यासः' सृष्ट्यादावुत्पन्नत्वेन प्रथमाङ्कुरभूताः, तस्य 'इन्द्रस्य' परमैश्वर्य-युक्तस्य कश्यपस्य, 'दीर्घश्रुत्तमनामकः', कश्चित् 'ऋषिः', 'घर्मः' दीप्यमानः सन्, 'अतिथिः', सम्पन्नः। इत्यनयेष्टकामुपदध्यात्। अतएव बौधायनः। आ यस्मिन्नग्रे नयेति द्वे इति ॥

ति[२०]। [२१]कश्यपः पश्यको भवति। यत्सर्वं परिपश्यतीति सौक्ष्म्यात्[२१]। [२२]अथाग्नेरष्टपुरुषस्य। तस्यैषा भवति[२२]। [२३]अग्ने नय सुपथा राये अस्मान्। विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनः। भूयिष्ठां ते नमउक्तिं विधेमेति[२३] ॥ ८ ॥

---

अथ ब्राह्मणमुच्यते। [२१]"कश्यपः ० सौक्ष्म्यात्"[२१] इति। योयमष्टमः सूर्यः स एव 'कश्यपः', इति नाम्नाभिधीयते स एवावयवार्थपर्यालोचनायामाद्यन्तयोरक्षरयोर्व्यत्यासेन 'पश्यकः', भवति। 'यत्' यस्मात् कारणात्, अत्यन्तसूक्ष्मत्वेन दिव्यदृष्ट्या 'सर्वं' अतीतानागतादिकं, परितः 'पश्यति' ॥

तदेवं कश्यपप्रकरणं समाप्याग्निप्रकरणमारभते। [२२]"अथाग्नेरष्टपुरुषस्य ० भवति"[२२] इति। 'अथ' कश्यपमहिमाकथनानन्तरं, 'अष्टपुरुषस्य', अष्टसङ्ख्याकमूर्त्तियुक्तस्य, 'अग्नेः', महिमा कथ्यत इति शेषः। 'तस्य' अग्नेः, महिमप्रतिपादिकेयमृगाम्नायते ॥

तामेतामृचं दर्शयति। [२३]"अग्ने नय ० विधेमेति"[२३] इति। हे 'अग्ने', 'राये' धनप्राप्त्यर्थम्, 'अस्मान्', 'सुपथा नय' शोभनेन मार्गेण प्रापय। हे 'देव', त्वं 'विश्वानि वयुनानि' सर्वान् मार्गान्, ज्ञानं वा, वर्त्तसे। 'जुहुराणं' कुटिलम्, 'एनः' पापम्, 'अस्मत् युयोधि' अस्मत्सकाशाद्वियोजय, 'ते' तुभ्यं, 'भू-

सभाहिंता, दृश्यस्ये, उत्तमम्, उच्यते, गृह्णाम्, स्वकर्मभिः, पृथ्वीं, रुद्र, इति* ॥ अनु० ८ ॥

नवमोऽनुवाकः ।

(१)अग्निश्च जातवेदाश्च। सहोजा अजिरा प्रभुः। वैश्वानरो नर्यापाश्च। पङ्क्तिराधाश्च सप्तमः। विसर्प-

---

यिष्णम्' अत्यधिकां, 'नमउक्तिं' नमस्कारप्रतिपादकं वाक्यं, 'विधेम' कुर्याम । इत्यनयेष्टकामुपदध्यात् ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

अथ नवमोऽनुवाकः ।

कल्पः । अग्निश्च जातवेदाश्चेत्यष्टाविति । पाठस्तु । (१)"अग्निश्च ० चिता इति"(१) इति । अग्न्यादयः शब्दा मूर्त्तिविशेषाणां नामधेयानि । तत्र, 'पङ्क्तिराधाः', योग्नीनां मूर्त्तिविशेषाणां मध्ये 'सप्तमः', शेषः विसर्पच्छब्देन विसर्पीति नाम विवक्ष्यते । सोऽयम् 'अग्नीनां', मध्ये 'अष्टमः', 'एते' अग्न्यादयः, 'अष्टौ', मूर्त्तिविशेषाः 'वसवः' सर्वेषां प्राणिनां निवासहेतवः, स्वयञ्च 'चिताः' सुखेन निवासं प्राप्ताः । 'इति' शब्द

---

* अत्र प्रतीकसङ्ग्रहे अष्टमकण्डिकायाः विधेमेतीति प्रतीकं नास्ति ।

वाष्टमोऽग्नीनां। एतेऽष्टौ वसवः क्षिता इति[१]। [२]यथ-र्त्वेवाग्नेरर्चिर्वर्णविशेषाः। नीलार्चिश्च पीतकार्चिश्चे-ति[२]। [३]अथ वायोरेकादशपुरुषस्यैकादशस्त्रीकस्य[३]। [४]प्रभ्राजमाना व्यवदाताः॥ १॥

याश्च वासुकि वैद्युताः। रजताः परुषा श्यामाः।

---

उपधानप्रदर्शनार्थः। अस्यामृच्यभिहितानि नामान्येवोपधान-मन्त्राः। अग्निस्तया देवतयाङ्गिरस्वद्ध्रुवासीदेत्येवं सर्वत्रोपधानं॥

अथ ब्राह्मणमुच्यते। [१]"यथर्त्वेवाग्ने ० पीतकार्चिश्चेति"[१] इति। ऋतुमनतिक्रम्य 'यथर्त्तु', यस्मिन्नृतौ यादृशो वर्णविशेषः। तस्मिन् ऋतौ 'अग्नेः', अपि 'वर्णविशेषः', तादृगेव भवति। एवं सति कस्मिंश्चिदृतौ 'नीलार्चिः', कस्मिंश्च 'पीतार्चिः', इत्या-दिकं द्रष्टव्यं॥

कल्पः। प्रभ्राजमाना इत्येकादश रुद्राः प्रभ्राजमान्य इत्ये-कादश रुद्राण्य इति। तदेतदुभयविधं विधत्ते। [२]"अथ ० स्त्रीकस्य"[२] इति। 'अथ' अग्नेरष्टविधस्य मन्त्रस्य कथनादन-न्तरम्, एकादशभिः पुरुषमूर्त्तिभिरेकादशभिः स्त्रीमूर्त्तिभिश्च युक्तस्य वायोरिष्टका उपधेयाः॥

तत्र पूर्ववन्नामधेयरूपान् मन्त्रान् दर्शयति। [४]"प्रभ्राज-मानाः ० इत्येकादश"[४] इति। अत्रापि प्रभ्राजमानास्तया देवतयाङ्गिरस्वद्ध्रुवासीदेत्यादिकं द्रष्टव्यं। 'याश्च', इत्युपन्यासा-र्थमुच्यते। ननु नामान्तःपाती वैद्युतपर्यन्ता ये उक्तास्ताः 'इति',

कपिला अतिलोहिताः। ऊर्ध्वा अवपतं ताश्च। वैद्युत इत्येकादश[४]। [५]नैनं वैद्युतो हिनस्ति। य एवं वेद[५]। [६]सहोवाच व्यासः पाराशर्यः। विद्युद्वधमेवाहं मृत्युमैच्छमिति[६]* ॥ २ ॥

---

शब्देन परामृश्यन्ते। इत्येकादशवायुसम्बन्धिपुरुषगणः। एकैकस्मिन् गणे पुरुषबाहुल्यात् 'प्रभ्राजमानाः', इत्यादिबहुवचननिर्देशः। एकादशस्तोगणकस्येति† विहितत्वादाम्नाता अपि स्तोमाममन्त्रा अत्रोह्येयाः। तथा च प्रभ्राजमान्यस्तया देवतयाङ्गिरस्वद्ध्रुवासीदेति मन्त्रपाठः सम्पद्यते ॥

उक्तवायुगणवेदनं प्रशंसति। [५]"नैनं ॰ एवं वेद"[५] इति। 'यः' पुमान्, वायुगणमाहात्म्यं 'वेद', 'एनं', 'वैद्युतः', अग्निरशनिरूपः 'न हिनस्ति' ॥

एतस्योत्तमफलत्वं द्योतयितुं वैद्युतवधस्य कष्टतां दर्शयति। [६]"सहोवाच ॰ मृत्युमैच्छमिति"[६] इति। पराशरस्य पुत्रो 'व्यासाख्यः', महर्षिः योऽस्ति 'सः', खल्वेवम् 'उवाच', विद्युतामशनिना क्रियमाणो यो वधः तमेव 'अहं', 'मृत्युमैच्छं' तस्य मरणस्यातिकष्टत्वात् स एव वध एको मृत्युशब्दस्य मुख्यार्थः। तदपेक्षयान्येषां पापिष्ठत्वाभावादितरे वधा मृत्यव एव न भवन्तीत्यहं मन्ये ॥

---

* अत्र रेखापातक्रमेण नवपादाः सन्ति, अपेक्षितास्तु दश।

† D पुस्तके "अय" शब्दो नास्ति।

(७)न त्वकामꣳ हन्ति । य एवं वेद(७) । (८)अथ गन्धर्वगणाः(८) । (९)स्वानभ्राट् । अङ्घारिर्बम्भारिः । हस्तः सुहस्तः । कृशानुर्विश्वावसुः । मूर्धन्वान्त्सूर्यवर्चाः । कृतिरित्येकादश गन्धर्वगणाः(९) । (१०)देवाश्च महादेवाः । रश्मयश्च देवा गरगिरः(१०) ॥ ३ ॥*

---

विद्युद्वधस्यातिकष्टत्वं प्रदर्श्य वेदितुस्तद्वधराहित्यलक्षणं फलं पूर्वोक्तमुपसंहरति । (७)"न त्वकामꣳ ० एवं वेद"(७) इति । एवं वेदितुर्विद्युद्वधपरिहारार्थित्वाद्विद्युद्वधे कामरहितं वेदितारं स वैद्युतोऽग्निर्नैव 'हन्ति' ॥

कल्पः । स्वानभ्राडित्येकादश गन्धर्वाः पदशः पश्चादिति । तदेतद्विधत्ते । (८)"अथ गन्धर्वगणाः"(८) इति । वायुगणानन्तरं 'गन्धर्वगणाः', उपधेयाः ॥

गन्धर्वाणां नामसमाम्नान् दर्शयति । (९)"स्वानभ्राट् ० गन्धर्वगणाः"(९) इति । स्वानादीनि गणनामधेयानि स्वानतया देवतयाङ्गिरस्वद्ध्रुवासीदेत्येवमुपधानं कर्त्तव्यम् ॥

एकादशसङ्ख्याका ये एते गन्धर्वगणास्तान् प्रशंसति । (१०)"देवाश्च ० देवा गरगिरः"(१०) इति । 'देवाः' स्वयं द्योतमानाः । 'महादेवाः' इतरेषु देवेषु मध्ये गुणैर्महान्तः, 'रश्मयः' दीप्तिमन्तः, 'देवाः' इतरेषामपि द्योतयितारः । 'गरगिरः' विषमपि निगीर्य जरयन्ति ॥

---

* अत्रैकादश पादाः सन्ति । नियमस्तु सर्वत्र दशपादानां । रेखापातभ्रमेणातिरिक्तपादोऽत्र जातः स्यादित्यनुमीयते ।

[११]नैनं गरो हिनस्ति। य एवं वेद[११]। [१२]गौरी मिमाय सलिलानि तक्षती। एकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी। सहस्राक्षरा परमे व्योमन्निति[१२]। [१३]वाचो विशेषणं[१३]। [१४]अथ

---

एतद्वेदनं प्रशंसति। [११]"नैनं गरो ० एवं वेद"[११] इति। वेदितुर्विषबाधा नास्ति॥

कल्पः। गौरी मिमायेत्येकेति। [१२]"गौरी मिमाय ० व्योमन्निति"[१२] इति। 'गौरी' शुक्लवर्णा सरस्वती या शब्दब्रह्मात्मिका, सा 'मिमाय' मिमीते, स्वकीयैः शब्दैरभिधेयं सर्वं जगत् परिच्छिनत्ति। किं कुर्वती, 'सलिलानि' उदकजन्यानि सर्वाणि भूतजातानि, 'तक्षती' स्वव्याप्त्या नानाकुर्वती। एकैकस्य हि पदार्थस्य बहूनि नामधेयानि, वृक्षो महीरुहः शाखीत्येवं पर्यायबहुत्वदर्शनात्। यद्यप्यत्र प्रवृत्तिनिमित्तभूता अवयवार्था भिद्यन्ते तथापि देशभेदेन भिन्नभाषासु नास्ति प्रवृत्तिनिमित्तभेदः। अतः शब्दप्रपञ्चस्य बाहुल्यादर्थप्रपञ्चोऽपि स्वल्पो भवति, सा च सरस्वती छन्दोभेदादेकपद्यादिरूपेण वर्द्धमाना 'सहस्राक्षरा' सहस्रशब्दस्यानन्तपर्यायत्वादनन्ताक्षरा, अत 'बभूवुषी' भवितुमिच्छां कृतवती, 'परमे व्योमन्' विविधरक्षके परमे जगत्कारणे ब्रह्मणि स्थिता, इत्यनयेष्टकामुपदध्यात्॥

अस्या ऋचस्तात्पर्यं दर्शयति। [१३]"वाचो विशेषणं"[१३] इति। वाग्देवतायास्स्तुतिरस्यामृचि क्रियत इत्यर्थः॥

निगद्व्याख्याताः । ताननुक्रमिष्यामः(१४) । (१५)वराहवः स्वतपसः ॥ ४ ॥

विद्युन्महसो धूपयः । श्वापयो गृहमेधाश्चेतीति ।

---

कल्पः । वराहव इति सप्तवाताः पदश इति । तदेतद्विधत्ते । (१४)"अथ निगद्व्याख्याताः ताननुक्रमिष्यामः"(१४) इति । 'अथ' सारस्वतेष्टकोपधानानन्तरं, 'निगद्व्याख्याताः' उपधेयाः । निगद्यमानेनैव मन्त्रपाठेनैव तेषां वायूनां महिमा विस्पष्टमाख्यातो भवति, 'तान्' एतान् मन्त्रान्, 'अनु'-क्रमेण, कथयिष्यामः ॥

प्रतिज्ञातान्मन्त्रान् दर्शयति । (१५)"वराहव स्वतपसः • श्रिमिविद्विषः"(१५) इति । अथ वराहव इत्यारभ्य गृहमेधा इत्यन्तैः षड्भिः पदैः पर्जन्यप्रवर्त्तका वायुविशेषा उच्यन्ते । तेषां गणरूपत्वादेकैकगणस्थान् बहून् विवक्षित्वा वराहव इत्यादि बहुवचननिर्देशः । वरं श्रेष्ठं वर्षमाह्वयतीति वराहुः, ते च बहवः 'वराहवः' । ये वायवः 'स्वतपसः' स्वयमेव तपन्ति न तु तापार्थमग्निमादित्यं वा अपेक्षन्ते 'स्वतपसः' । विद्युत्समानं महस्तेजो येषान्ते 'विद्युन्महसः' । 'धूपयः' गुग्गुलदशाङ्गादिद्रव्यान्तरैरनपेक्षेण स्वशरीरगतसुगन्धेनैव सर्वान् पदार्थान् धूपयन्तो वासितान् कुर्वन्तो वर्त्तन्ते । 'श्वापयः', 'शु'शब्द आशुशब्दपर्यायः ततः शीघ्रव्यापिन इत्युक्तं भवति । गृहेषु मधार्हाः

ये॒ येमेऽग्निमिवि॒द्विषः[१५] । [१६]पर्जन्याः सप्त पृथिवीम-
भि॒वर्ष॒न्ति । वृष्टिभिरि॒ति । एतयैव विभक्तिविपरी॒-

---

'मरुन्मेघाः', 'च'कारः षष्ठां समुच्चयार्थः। 'इतीति' इतिशब्द-
द्वयेन षष्ठोक्तनिर्वचनप्रख्यातमहिमत्वं प्रदर्श्यते । एवं षड्विधा
वायुगणा एकदेशवर्त्तिनो निर्दिष्टाः । गणान्तरं तु देशान्तरव-
र्त्तित्वात् पृथक् निर्दिश्यते । अग्निः कर्म क्रव्यादिकं तस्य वि-
घातकाः अग्निविद्विषः तद्विपरीताः 'अग्निमिविद्विषः' कर्मा-
नुकूलप्रवृत्तयो वायव इत्यर्थः । तादृशा 'ये च', सन्ति तेऽपि
पूर्वोक्तषड्गुणवन्निगदेनैव व्याख्यातमहिमान इत्यभिप्रायः । एत
नामान्येव मन्त्राः। तथा सति वराहवस्तथा देवतयाग्निरसद्गु-
वासीदेत्येवमुपधानं सम्पद्यते ॥

तच्छब्देरेव व्याख्यापितो यो महिमा तं महिमानं वक्ष्य
पुनः प्रकटयति । [१६]"पर्जन्याः ० तेषामेषा भवति"[१६] इति।
पूर्वोक्तैः सप्तभिर्वायुगणैः प्रवर्त्तिताः सप्तविधा मेघाः 'वृष्टिभिः',
क्षपाभिर्दृश्यमानाभिः 'पृथिवीं', 'अभि'लक्ष्य 'वर्षन्ति', इत्ये-
षां वायूनां महिमा। निराधारेऽन्तरिक्षे मेघान् सम्पाद्य बहु-
विधजलधूरो योऽस्ति यस्य देशविशेषस्य यावदपेक्षितं तच
तावदेव वर्षणं यथास्ति 'सः' सर्वोऽपि, अचिन्त्यतममहिमेति
दर्शयितुम् 'इति'शब्दप्रयोगः, यया रीत्या भूमावभिवर्षणं
'एतयैव', रीत्या 'अमून्' सर्वान्, 'लोकान्', 'पर्जन्याः', 'अभि-

ताः। सप्तभिर्वातैरुदीरिताः। अमूँल्लोकानभिवर्षन्ति। तेषामेषा भवति[१९]। [२०]समानमेतदुदकं ॥ ५ ॥

उच्चैत्यव चाहभिः। भूमिं पर्जन्या जिन्वन्ति। दिवं

---

वर्षन्ति'। इयांस्तु विशेषः। यद्विभक्तिवैपरीत्यविशिष्टं भजनं, भूमिं प्रतिपर्जन्यानामधोमुखत्वम्, उपरितनाँल्लोकान् प्रत्यभिवर्षणार्थमूर्ध्वमुखत्वमिति। वैपरीत्यस्य नोर्ध्वाभिवर्षणमयुक्तमिति मन्तव्यम्। यस्मादेते पर्जन्याः पूर्वोक्तैः 'सप्तभिः' वायुगणैः, 'उदीरिताः' ऊर्ध्वं प्रेरिताः। दृश्यते हि वायूनां सर्वतः प्रेरणसामर्थ्यं। तस्मादधोवर्षणवद्वायुवशादूर्ध्वं वर्षणमपि सम्भवत्येव। 'तेषां' पूर्वोक्तवाक्यानाम्, ऊर्ध्वाधोवर्षणसामर्थ्यप्रतिपादकेयमृगाम्नायते ॥

तामेतामृचं दर्शयति। [२०]"समानमेतदुदकं • दिवं जिन्वन्त्यग्नय इति"[२०] इति। यत् 'उदकं', भूमौ दृष्टं यच्चोर्ध्वलोकेषु तत् सर्वं 'समानं' द्रवस्वभावतामेव, तथापि 'अहभिः' कैश्चिदहोभिर्दिनैः, 'उच्चैति च' ऊर्ध्वमपि गच्छति च, पुनरपि कैश्चिद्दिनैः 'अवैति च' अधोऽपि गच्छति। तथागतेनोदकेन 'पर्जन्या भूमिं', 'जिन्वन्ति' प्रीणयन्ति। यथा 'अग्नयः' ऊर्ध्वज्वालाः। एवमूर्ध्वाभिमुखाः पर्जन्याः, ऊर्ध्वगतिसामान्यादग्नय इत्युच्यन्ते। ते चोर्ध्वाभिवर्षणेन 'दिवं', प्रीणयन्ति। इत्यनयेष्टकामुपदध्यात् ॥

जिन्वन्त्यग्नय इति(१७)। (१८)यदक्षरं भूतकृतं। विश्वे देवा उपासते। महर्षिमस्य गोप्तारं। जमदग्निमकुर्वते(१८)। (१९)जमदग्निराप्यायते। छन्दोभिश्चतुरुत्तरैः। राज्ञः सोमस्य तृप्तासः॥ ६॥

---

तथा च बोधायन आह। समानमेतदिति वृष्टिमतीति इष्टकाविशेषस्य वृष्टिमतीति नामधेयम्। एवमुत्तरैस्त्रिभिर्मन्त्रैर्लोकाप्यायितशंयुनामकानामिष्टकाविशेषाणामुपधानं। स एवाह। यदक्षरमिति लोको जमदग्निरित्याप्यायितश्छंयोरिति शंयुरिति। तत्र प्रथमं मन्त्रमाह। (१८)"यदक्षरं ० जमदग्निमकुर्वते"(१८) इति। न क्षरति न विनश्यति कदाचिदपीति 'अक्षरं' यत्परं ब्रह्म वस्तु, 'भूतकृतं' आकाशादिभूतरूपेण निष्पन्नं। अत एवोपनिषद्याम्नायते। तदात्मानं स्वयमकुरुतेति। तादृशं 'विश्वे' सर्वेऽपि, 'देवाः', 'उपासते'। 'अस्य' अक्षरस्य, 'गोप्तारं' रक्षितारं, 'जमदग्न्याख्यं', 'महर्षिम्', 'अकुर्वते' देवा इन्द्रादयः स्वपुरुषार्थसिद्ध्यर्थं स्वयमुपासते, मनुष्याणामनुग्रहार्थं जमदग्निप्रभृतिकमहर्षिसङ्घमक्षरस्योपदेष्टारमकुर्वते। ऋषयो हि तत्तद्वेदप्रवर्त्तनेन मनुष्येभ्योऽक्षरमुपदिश्य तत्सम्प्रदायं परिपालयन्ति॥

अथ द्वितीयं मन्त्रमाह। (१९)"जमदग्निराप्यायते ० प्रदिशो दिशः"(१९) इति। स च 'जमदग्निः', 'चतुरुत्तरैः' अक्षर-

ब्रह्मणा वीर्यावता। शिवा नः प्रदिशो दिशः(१९)।
(२०)तच्छं योरावृणीमहे। गातुं यज्ञाय। गातुं यज्ञपतये। दैवी स्वस्तिरस्तु नः। स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजं। शन्नो अस्तु द्विपदे। शं चतु-

---

चतुष्टयानुत्तरभाविभिर्गायत्र्यादिभिश्छन्दोभिः, स्वेनोपदिष्टैर्मन्त्रैर्वा, 'आप्यायते' प्राणिनोऽभिवर्द्धयति, ते च प्राणिनः 'वीर्यावता' शक्तिमता, 'ब्रह्मणा' मन्त्रेण, 'राज्ञः' राजमानस्य 'सोमस्य' लतात्मकस्य, पातारो भूत्वा 'तृप्ताः' लतकृत्यत्व-बुद्ध्या तृप्ता भवन्ति। सैव तृप्तिः स्पष्टीक्रियते। 'नः' अस्माकं, 'प्रदिशः' प्राच्याद्या मुख्यदिशः, आग्नेय्याद्या अवान्तर'दिशः', च 'शिवाः' शान्ताः सम्पन्नाः, सर्वदिग्वर्तिप्रजासुखहेतवः सम्पन्ना इत्यर्थः॥

अथ तृतीयं मन्त्रमाह। (२०)"तच्छंयोरावृणीमहे • शं चतुष्पदे"(२०) इति। 'शं' प्राप्तानां रोगादीनामुपशमनकारणं, 'योः' आगामिनां रोगादीनां वियोगकारणं। 'तत्' कर्म, चरुकेतुकाख्यम्, 'आवृणीमहे' आभिमुख्येन प्रार्थयामहे। 'यज्ञाय' तस्मिन्नारुणकेतुकेऽनुष्ठीयमानस्योत्तरक्रतोः 'गातुं' गतिं, 'आवृणीमहे' प्रार्थयामहे। 'यज्ञपतये' यजमानस्य, च 'गातुं' गतिं फलप्राप्तिम्, 'आवृणीमहे'। 'नः' अस्माकं, 'दैवीः स्वस्ति' देवैः सम्पादितः क्षेमोऽस्तु, 'मानुषेभ्यः' पुत्रा-

ष्पदे[२०]। [२१]सोमपा३ असोमपा३ इति निगदव्याख्याताः[२१] ॥ ७ ॥

व्यवदातार्ईति गरगिरस्तपस उर्दकं हृत्तासश्चतुष्पद् एकं च ॥ अनु० ९ ॥

---

हिभ्यश्च, 'कृषि' धेनोस्तु, इतः 'ऊर्ध्वं', सर्वदा 'भेषजं' सर्वाभिष्टनिवारणं, 'निमातु' प्राप्नोतु, स 'नः' अस्मदीयाय, 'द्विपदे' मनुष्याय, च 'शं' सुखमस्तु, 'चतुष्पदे' पशवेऽपि, 'शं' सुखमस्तु ॥

अथ ब्राह्मणवाक्यमुच्यते। [२१]"सोमपा३ ० व्याख्याताः" [२१]इति। अथ निगदव्याख्याता इति यदुक्तमन्तं तदत्रोपसंह्रियते। वराइव इत्यादिषु शं चतुष्पाद इत्यन्तेषु मन्त्रेषु ये 'सोमपाः', देवाः ये च 'असोमपाः', ते सर्वेऽप्यभिहिताः, श्रुतिद्वयमाख्यानार्थम्। प्रश्नाख्यानयोरिति सूत्रेण प्रश्नवदविचिताख्यानेपि प्लुतस्य विहितत्वात्। त एते सर्वदेवाः 'निगदव्याख्याताः'। मन्त्रपाठेनैव तदर्थपर्यालोचनयामन्तत्वाच्छिष्यः प्रतीयमानात् ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

अथ दशमोऽनुवाकः।

[१]सहस्रवृदियं भूमिः। परं व्योम सहस्रवृत्। अश्विना भुज्यू नासत्या। विश्वस्य जगतस्पती[१]। [२]जाया भूमिः पतिर्व्योम। मिथुनं ता अतुर्यथाः। पुत्रो बृहस्प-

---

कल्पः। इति सहस्रवृदियमित्यष्टौ संयामीरिति। तत्र प्रथमामाह।[१]"सहस्रवृदियं भूमिः ० जगतस्पती"[१] इति। 'इयं' दृश्यमाना, 'भूमिः', 'सहस्रवृत्' उपकारकतया सहस्रसङ्ख्याकैः पुरुषैर्व्रियमाणा प्रार्थ्यमाना भवति, तथा 'परं व्योम' उत्कृष्टं स्वर्गस्थानमपि, 'सहस्रवृत्' सहस्रसङ्ख्याकैर्देवैः प्रार्थ्यमानं भवति। ते एते द्यावापृथिव्यौ 'अश्विनौ' अश्विसदृशौ, यथाऽश्विनौ सर्वेषामुपकुरुतः, एवमेते द्यावापृथिव्यावपीत्यर्थः। कीदृशावश्विनौ, प्राणिनां रोगनिवर्त्तनेन 'भुज्यू' भोगहेतू, 'नासत्यौ' कदाचिदप्यसत्यरहितौ, अत एव 'विश्वस्य जगतः', 'पती' पालयितारौ॥

अथ द्वितीयामाह। [२]"जाया भूमिः ० स्तोपमम्"[२] इति। पूर्वमन्त्रे द्यावापृथिव्यावश्विरूपेण स्तुते इह तु मिथुनरूपेण स्तूयेते। येयं 'भूमिः', सा 'जाया', जायतेऽस्यां प्राणिजातमिति व्युत्पत्तेः। यत्तु 'व्योम', तत् 'पतिः', देवानां विविधरक्षकत्वेन, पालयतीति पतिः इति व्युत्पत्तिसम्भवात्। द्यावापृथिव्यौ 'ते'

ती रुद्रः। संरमा इति स्त्रीपुमं(२)। (१)शुक्रं वामन्यद्रजतं वामन्यत्। विषुरूपे अहनी द्यौरिव स्थः ॥ १ ॥

विश्वा हि माया अवथः स्वधावन्तौ। भद्रा वां पूष-

---

उभे 'मिथुनं', यथा भवति तथा 'ऋतुर्यथाः' परस्परं गच्छथः। तुरीगताविति धातुः। तथासङ्गतयोर्द्यावापृथिव्योरुत्पन्नवर्त्ती 'बृहस्पतिः', एकः 'पुत्रः', 'रुद्रः' अग्निः। रुद्रो वा एष यदग्निरिति श्रुतेः। सोऽयमपरः पुत्रः, 'सरमा' वेदिः, सरः सरणमनुष्ठानप्रवृत्तिः सा च मीयते परिच्छिद्यते अत्रेति 'सरमा', सा च तयोर्दुहिता। 'इति' एवं, 'स्त्रीपुमं' एका स्त्री द्वौ पुमांसाविति अपत्यत्रयं सम्पन्नं ॥

अथ तृतीयामाह। (१)"शुक्रं वा ० रातिरस्तु"(१) इति। पूर्वत्र द्यावापृथिव्यौ दम्पतिरूपेण स्तुते। इह त्वहोरात्ररूपेण स्तूयेते। हे द्यावापृथिव्यौ 'वां' युवयोर्मध्ये, 'अन्यत्' परं स्वरूपं, 'शुक्रं' शुक्लवर्णं भास्वरमहः। 'अन्यत्' इतरत् स्वरूपं, 'रजतं' निश्यनुष्ठितयागोपलक्षितकृष्णवर्णोपेता रात्रिः, इत्येवं युवां 'विषुरूपे' विलक्षणरूपयुक्ते, 'अहनी' अहोरात्रे, 'स्थः', ते युवां 'द्यौरिव' द्युलोकस्य आदित्य इव, सर्वस्योपकुरुत इति शेषः। हे 'स्वधावन्तौ' अन्नवन्तौ, युवां देवौ 'हि' यस्मात्, 'विश्वा माया' सर्वा अपि मतीः, 'अवथः' रक्षथः। सति ह्यन्ने सर्वेषां बुद्धिः प्रसीदति तस्माद् हे 'पूषणौ' पोषकौ

वामिह रातिरस्तु[३]। [४]वासात्यौ चित्रौ जगतो निधानौ। द्यावाभूमी चरथस्सꣳ सखायौ। तावश्विना रासभाश्वा हवं मे। शुभस्पती आगतꣳ सूर्यया सह[४]। [५]त्युग्रोह भुज्युमश्विनोदमेघे। रयिन्न कश्चिन्म-

---

देवौ, 'वां' युवयोः, 'इह' कर्मणि, 'रातिर्भद्राऽस्तु' धनादिदानं कल्याणं भवतु ॥

अथ चतुर्थीमाह। [४]"वासात्यौ ० सूर्यया सह"[४] इति। अहोरात्ररूपेण स्तुतयोः पुनः सखिद्वयरूपेण स्तुतिः क्रियते। हे द्यावापृथिव्यौ 'द्यावाभूमी', युवां 'सखायौ' सखिद्वयमिव, 'सञ्चरथः' सम्भूय वर्त्तेथे। कीदृशौ सखायौ, 'वासात्यौ' वसतिमर्हतः, देवानां मनुष्याणाञ्च निवासं प्रयच्छथ इत्यर्थः। 'चित्रौ' विलक्षणभोगप्रदत्वेन नानाविधौ, 'जगतो निधानौ' सर्वस्यापि प्राणिजातस्य निधानस्थानीयौ, 'रासभाश्वा' रासभौ गर्दभावेवाश्वस्थानीयौ ययोरश्विनोर्देवयोस्तौ रासभाश्वास्थौ, तथाविधौ 'अश्विनौ' अश्विसदृशौ, 'तौ' देवौ, युवां 'शुभस्पती' शोभनस्य कर्मणः पालकौ सन्तौ, 'सूर्यया' उषसा, 'सह', द्यावापृथिव्या सह 'हवं' मदीयं यज्ञं प्रति, 'आगतं' आगच्छतं ॥

अथ पञ्चमीमाह। [५]"त्युग्रोह ० प्रुङ्भिरपोदकाभिः"[५] इति। हे 'अश्विनौ', 'उदमेघे' उदकसहितमेघे, अत्रस्थितं

मृवां अवाहाः। तमूहथुर्नौभिरात्मन्वतीभिः। अन्त-
रिक्षप्रुद्भिरपोदकाभिः[५] ॥ २ ॥

[६]तिस्रः क्षपास्त्रिरहाऽतिव्रजद्भिः। नासत्या भुज्यु-
मूहथुः पतङ्गैः। समुद्रस्य धन्वन्नार्द्रस्य पारे। त्रिभी र-

---

'भुज्युं' पालकं, 'तं' उदकसङ्घं, 'ऊहथुः' वहथः, सम्पादयथः।
कीदृशमुदकसङ्घं, 'नौभिः', तरणीयमिति शेषः। कीदृशीभि-
र्नौभिः, 'आत्मन्वतीभिः' दृढस्वरूपयुक्ताभिः, 'अन्तरिक्षप्रुद्भिः'
भूमिस्पर्शमन्तरेण जलस्योपर्यन्तरिक्षे प्लवनशीलाभिः, 'अपोद-
काभिः' उदकप्रवेशरहिताभिः, निश्छिद्राभिरित्यर्थः। अश्विनो
रुदकस्य वहने दृष्टान्तः, 'तुग्रः' अत्युग्रो मूर्खः, 'कश्चित्' पुमान्,
'मम्रिवान्' मरणं प्राप्यमाणोपि, 'रयिं' धनं, 'न', प्रयच्छति
किन्तु 'अवाहाः' आवहत्येव, यद्वा स्वयमेवावहरति। यथा स
लुब्धोऽत्यादरेण धनं सम्पादयति, एवमश्विनावप्यादरेण वृष्टिं
सम्पादयत इत्यर्थः ॥

अथ षष्ठीमाह। [६]"तिस्रः ० षडश्वैः"[६] इति। 'नास-
त्या' असत्यभावरहितावश्विनौ देवौ, 'तिस्रः क्षपाः' रात्रित्रयं,
'त्रिरहाः' अहस्त्रयञ्च नैरन्तरेण, 'अतिव्रजद्भिः' अतिशयेन
गच्छद्भिः, 'पतङ्गैः' पक्षिसदृशैरितस्ततः सञ्चारिभिर्मेघैः,
'भुज्युं' पालकं जलसमूहं, 'ऊहथुः' युवां वहथः। कुत्रदेश इति
तदुच्यते। 'आर्द्रस्य' जलपूर्णस्य, 'समुद्रस्य', 'पारे' परभागे,

थैः शतपद्भिः षडश्वैः(६)। (७)सवितारं वितन्वन्तं। अनु- बध्नाति शाम्बरः। आपपूरप शम्बरश्चैव। सविता रे- पसो भवत्(७)। (८)त्यꣳ सुतृप्तं विदित्वैव। बहुसोमगि- रं वशी ॥ ३ ॥

---

'धन्वन्' निर्जले मरुदेशे। कीदृशैर्मेघैः, 'त्रिभिः' तत्तद्देशमनु- सृत्योत्तममध्यमाधमभावेन त्रिविधैः, 'रथैः' रथसदृशैः। यथा रथा उपरिमहान्तं भारं वहन्ति तथा बहुजलभारवाहिन इत्यर्थः। 'शतपद्भिः' शतसङ्ख्याकाः पदाः जलधाराः पाद- सदृशा येषां तादृशैः, अनन्तधारैरित्यर्थः। 'षडश्वैः' षट्प्रकार- व्याप्तियुक्तैः, उत्तमादीनां त्रयाणामागमनार्थास्तिस्रो व्याप्तयः पुनर्गमनार्थास्तिस्र इत्येवं षड्विधव्याप्तयः ॥

अथ सप्तमीमाह। (७)"सवितारं ० रेपसो भवत्"(७) इति। शम्बरमुदकं तस्योदकस्य धारको मेघः 'शाम्बरः', स च 'वित- न्वन्तं' वृष्ट्यर्थं रश्मीन् विस्तारयन्तं, 'सवितारम्' आदित्यम्, 'अनुबध्नाति' स्वानुग्रहार्थमाश्रयति। 'आपपूः' आपशब्दो जल- वाची तेन जलेन पूर्णः, 'शम्बरः' पूर्वोक्तः शाम्बरो मेघो यः सोपि, 'अपरेपसः' पापरहितायाः सर्वानुग्राहिकाया वृष्टेः, 'सविता', 'भवदेव' उत्पादयिता भवत्येव ॥

अथाष्टमीमाह। (८)"त्यꣳ सुतृप्तं ० सोमतृप्सु"(८) इति। 'सुतृप्तं' सुष्टु तृप्तियुक्तं, उदकपूर्णमित्यर्थः। 'बहुसोमगिरं' बहवः

अन्वेति तुग्रो वक्रियान्तं। आयसूयान्सोमतृप्सु-षु(८)। (९)स सञ्ज्रामस्तमोद्योऽत्योतः। वाचो गाः पिपाति तत्। स तद्गोभिः स्तवाऽत्येत्यन्ये। रक्षसाऽनन्वितार्श्च

---

सोम्या गिरः शब्दास्तनितरूपा यस्यासौ बहुसोमगीः, बहुविधगर्जनयुक्त इत्यर्थः। तादृशं त्वं पूर्वोक्तं मेघं, 'विद्‌त्वा', 'वश्री' स्वाधीनमेघः, 'तुग्रः' आदित्यः, 'तुग्र'शब्दो रश्मिनाम, तद्वांस्तुग्रः। स च 'वक्रियां' वक्रं कुटिलं वृष्टिविमुखं, 'तं' मेघं, 'अन्वेति' वर्षयितुमनुगच्छति। किं कुर्वन्, 'सोमतृप्सु आयसूयान्' सोमेन तृप्यन्तीति सोमतृप्सवो यजमानाः, तेषु निमित्तभूतेषु, वृष्टेरागमनमायः तस्य प्रेरणमायसूः तत् प्रेरणं याम् अप्राप्नुवन्, आयसूयान्, वृष्टिं प्रेरयितुमुद्यमं कुर्वन्नित्यर्थः। एतैरष्टभिर्मन्त्रैरिष्टका उपदध्यात्॥

कल्पः। स सञ्ज्राम इति द्वे इति। तत्र प्रथमामाह। (९)"स सञ्ज्रामः • अनन्वितार्श्च ये"(९) इति। 'सः' आदित्यः, 'गाः' गवादीन् पशून्, 'तत्' अप्सु उदकं, 'पिपाति' पाययति। कीदृशीर्गाः, 'वाचः' शब्दयन्तीः, पूर्वमुदकाभावात् तृषार्त्ताः सत्यो जलपानार्थं हम्भारवं कुर्वन्तीत्यर्थः। कीदृशः स आदित्यः, 'सञ्ज्रामः' समूहवाची ग्रामशब्दोऽत्र रश्मिसङ्घमाचष्टे। सम्प्राप्तो ग्रामो रश्मिसङ्घो येनासौ सञ्ज्रामः, रश्मिभिः पूर्ण इत्यर्थः। तमो द्यति खण्डयतीति 'तमोद्यः', अत्यैरश्वैः ऊतो

ये(९)। (१०)अन्वेति परिवृत्याऽस्तः। एवमेतौ स्थो अश्विना। ते एते द्युःपृथिव्योः। अहरहर्गर्भं दधाथे(१०) ॥ ४ ॥

---

रचितो ध्वत इति 'अत्योतः'। अश्वोऽसि हयोऽस्यत्योऽसि नरोऽसीत्यश्वनामस्वत्यशब्द आम्नातः। आदित्यो ह्यश्वैः स्वकीयरथे स्थितः। 'सः' आदित्यः, 'तत्' तदा, 'गोभिः' वृष्ट्या परितुष्टानां प्राणिनां वाग्भिः, 'स्तवा' स्तूयमानः सन्, 'अन्ये' अन्यान् देवान्, 'अत्येति' अतिक्रामति, सर्वदेवाधिकत्वेन भासत इत्यर्थः। ये च दिव्या जनाः 'रक्षसा' रक्षसो जात्या, 'अनन्विताः' असंबद्धाः, देवपक्षपातिनः सर्वैः स्तूयत इति शेषः॥

अथ द्वितीयामाह। (१०)"अन्वेति ० गर्भं दधाथे"(१०) इति। 'अस्तः' क्षिप्तः, आदित्येन प्रेरितो मेघः, 'परिवृत्य' पुनरपि वृष्ट्यर्थं पर्यागत्य, 'अन्वेति' आनुकूल्येन गच्छति, वर्षतीत्यर्थः। हे 'अश्विना', 'ते एते' ययोर्मत्वृष्टियुक्ते द्यावापृथिव्यौ ये विद्येते, तयोः 'एवं' उक्तेन प्रकारेण, उपकुर्वन्तौ 'एतौ' युवां, 'स्थः' वर्त्तेथे। कथमुपकार इति तदेव स्पष्टीक्रियते। 'द्युःपृथिव्योः' द्यावापृथिव्योः, 'अहरहः', प्रतिदिनं, 'गर्भं दधाथे' जलद्वारा तत्तत्प्राण्युत्पत्तिबीजं सम्पादयथः। एवमेताभ्यां मन्त्राभ्यामिष्टके उपदध्यात्॥

अतः परं ब्राह्मणवाक्यमुच्यते। तत्र द्यावापृथिव्यौ बहुधा

(११)तयोरेतौ वत्सावहोरात्रे। पृथिव्या अहः। दिवो रात्रिः। ता अविसृष्टौ। दम्पती एव भवतः(११)।
(१२)तयोरेतौ वत्सौ। अग्निश्चादित्यश्च। रात्रेर्वत्सः। श्वेत आदित्यः। अह्नोऽग्निः॥ ५॥
ताम्रो अरुणः। ता अविसृष्टौ। दम्पती एव भवतः(१२)।

---

प्रशंस्येते। तत्रैकां प्रशंसामाह। (११)"तयोरेतौ ० एव भवतः" (११)इति। 'तयोः' द्यावापृथिव्योः, 'एतौ' अहोरात्ररूपौ कालौ, वत्सस्थानीयौ, तत्रोत्पन्नत्वात्। तयोर्मध्ये 'पृथिव्याः' गोस्थानीयायाः, 'अहः', वत्सस्थानीयं, 'दिवः', च 'रात्रिः', च वत्सस्थानीया। प्रशंसारूपत्वान्नात्र विभागे कारणमन्वेष्टव्यं। 'तौ' एतावहोरात्ररूपौ वत्सौ, परस्परम् 'अविसृष्टौ दम्पती एव भवतः' इति॥

अथ द्वितीयां प्रशंसामाह। (१२)"तयोरेतौ ० एव भवतः" (१२) इति। 'तयोः' द्यावापृथिव्योः, यौ वत्सौ अहोरात्ररूपौ पूर्वमुक्तौ, तयोरहोरात्रयोरग्न्यादित्यौ वत्सौ, योऽयं 'श्वेत आदित्यः', रात्रेर्वत्सस्थानीयः, रात्रेः परभागे तदाविर्भावात्। योऽयं 'ताम्रो अरुणः', च अग्नौ ईषद्रक्तस्तास्रः, अत्यन्तरक्तः अरुणः, सोऽयमह्नो वत्सस्थानीयः, अहनि पाकाद्यर्थमग्निः प्राणिभिः प्रज्वाल्यते। अन्यत् पूर्ववत्॥

[१३]तयोरेतौ वत्सौ। धूमश्च वैद्युतश्च। अग्नेर्धूमः। वैद्युत आदित्यस्य। ता अविसृष्टौ*। दम्पती एव भवतः[१३]। [१४]तयोरेतौ वत्सौ ॥ ६ ॥

उष्मा च नीहारश्च। धूमस्योष्मा। वैद्युतस्य नीहारः। तौ तावेव प्रतिपद्येते[१४]। [१५]सेयꣳ रात्री गर्भिणी पुत्रेण संवसति। तस्या वा एतदुल्बणम्। यद्रात्रौ रश्मयः।

---

तृतीयां प्रशंसामाह। [१३]"तयोरेतौ • एव भवतः"[१३] इति। 'तयोः' अग्न्यादित्ययोः, 'धूमः' आवरको धूमः, 'वैद्युतः' आतपः। अन्यत् पूर्ववत् ॥

अथ चतुर्थीं प्रशंसामाह। [१४]"तयोरेतौ • प्रतिपद्येते"[१४] इति। 'तयोः' धूमवैद्युतयोः, 'धूमस्य' आवरकस्य धूमस्य, 'ऊष्मा', वत्सस्थानीयः। सति हि धूमे अत्योष्मा भवति। उष्णत्वमूष्मा। 'वैद्युतस्य' आतपस्य, 'नीहारः', वत्सस्थानीयः। नीहारो हिमवान्। 'तौ' ऊष्मनीहारौ, 'तावेव' स्वकारणभूतौ धूमवैद्युतावेव, 'प्रतिपद्येते', कारणयोरेव लीयेते न तु कार्यान्तरं जनयतः। एवं साक्षात्परम्परया च द्यावापृथिव्यौ प्रशस्ते ॥

अथ रात्रिं तद्वत्समादित्यञ्च विशेषेण प्रशंसति। [१५]"सेयꣳ रात्री गर्भिणी • एवमेतस्या उल्बणं"[१५] इति। येयं रात्रिरादित्यवत्सस्य समाहत्वेन निरूपिता, 'सेयं रात्रिः', गर्भरूपमादित्यं धारयन्ती तेनादित्येन 'पुत्रेण', सह निवसति।

---

*अविसृष्टाविति B पुस्तकपाठम्।

यथा गोर्गर्भिण्यां उल्बणं। एवमेतस्या उल्बणं[१५]। [११]प्रजयिष्णुः प्रजया च पशुभिश्च भवति। य एवं वेद। एतमुद्यन्तमपि यंतश्चेति। आदित्यः पुण्यस्य वत्सः[११]।
[१०]अथ पविचाङ्गिरसः[१०] ॥ ७ ॥

स्थो,पौद्काभि,वंशी,द्धाथे, अग्नि,स्तयोरेतौ वत्सौ, भवति चत्वारि च ॥ अनु० १० ॥

---

अत एव राचावादित्यो नाम्नाभिर्दृश्यते। आदित्यस्य रश्मय उल्बणस्थानीयाः। 'यथा', लोके, 'गर्भिण्या गोः', उल्बो गर्भस्य बहिरन्तर्वर्त्तते। 'एवं', आदित्यस्य 'रश्मयः', अपि 'राचौ', आदित्येन सहावस्थितत्वान्नाभिर्दृश्यन्ते ॥

यथोक्तराच्यादित्ययोर्वेदनं प्रशंसति। [११]"प्रजयिष्णुः • पुण्यस्य वत्सः"[११] इति। 'यः', राचिमाहात्म्यं,'वेद', सोयं प्रजापशूत्पादकः, 'भवति', । आदित्यमहिमावेदनात् उदयास्तमययुक्तमादित्यं प्राप्नोति। उदयस्थानेऽस्तमयस्थाने च स्वेच्छया गन्तुं समर्थो भवति, किन्त्वादित्यवत्, 'पुण्यस्य वत्सः' धर्मदेवतापुत्रः, भवति ॥

वक्ष्यमाणानुवाकतात्पर्यं सङ्क्षिप्य दर्शयति। [१०]"अथ पविचाङ्गिरसः"[१०] इति। संयामीष्टकामन्त्रकथनादनन्तरं पविचभूता अङ्गिरोनामाङ्किता इष्टकामन्त्रा वक्ष्यन्त इति शेषः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

एकादशोऽनुवाकः।

(१)पवित्रवन्तः परि वाजमासते। पितैषां प्रत्नो अभिरक्षति व्रतं। महः समुद्रं वरुणस्तिरोदधे। धीरा इच्छेकुर्धरुणेष्वारभं(१)। (२)पवित्रं ते विततं ब्रह्मणस्पते।

---

कल्पः। पवित्रवन्तः, पवित्रन्ते, ब्रह्मा देवानां, असतः सत्, इति चतस्रः पवित्रवत्य उत्तरस्मिन्निति। तत्र प्रथमामाह। (१)"पवित्रवन्तः ० धरुणेष्वारभं"(१) इति। 'पवित्रवन्तः' दशापवित्रयुक्ता ऋत्विग्यजमानाः, 'वाजं' अन्नं, 'पर्यासते' परितः सेवन्ते। अन्नमुद्दिश्य सोमयागं कुर्वन्तीत्यर्थः। 'एषां' सोमयाजिनां, 'पिता' पालकः, 'प्रत्नः' पुरातनो ब्रह्मा, 'व्रतं' एतत्कर्म, 'अभिरक्षति',। 'महः' महाप्रौढं, 'समुद्रं' समुद्रस्य सदृशमन्तरिक्षं, 'वरुणः' जलाधिपतिर्देवः, 'तिरोदधे' कर्मफललेन दृष्टिं दातुं मेघैराच्छादयति। 'धीरा इत्' बुद्धिमन्त एव, 'धरुणेषु' अग्निधारकेषु यागप्रदेशेषु, 'आरभं' आरब्धुं, 'शेकुः' शक्ताः॥

अथ द्वितीयामाह। (२)"पवित्रन्ते ० तत्समाशत"(२) इति। हे 'ब्रह्मणस्पते' अन्नस्य मन्त्रस्य वा पालक सोम, 'ते' त्वदर्थं, 'पवित्रं' शोधकम्, इदं दशापवित्रं, 'विततं' विस्तारितं, 'प्रभुः' तेन पवित्रेण शोधितत्वात् त्वं कर्मणि समर्थः,

प्रभुर्गात्राणि पर्येषि विश्वतः। अतप्ततनूर्न तदामो अश्नुते। शृतास इद्वहन्तस्तत्समाशत[१]। [२]ब्रह्मा देवानां[२]। [४]असतः सद्ये ततक्षुः॥ १॥

---

सन्, 'विश्वतः' सर्वतः, 'गात्राणि' यज्ञाङ्गानि, 'पर्येषि' व्याप्नोषि। पवित्रेणाशोधितस्य यज्ञाङ्गत्वं नास्ति शोधितस्य तु सोमस्य यज्ञाङ्गत्वमस्तीत्यत्र हविरन्तरं दृष्टान्तत्वेनोपन्यस्यते। 'अतप्ततनूः' अतप्ता तनूः स्वरूपं यस्य पुरोडाशादेः सोऽयं अतप्ततनूः तादृशः पुरोडाशः, 'आमः' अपक्वः सन्, 'तत्' यज्ञाङ्गत्वं 'नाश्नुते' न व्याप्नोति। यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्र इति श्रुतेः। 'शृतास इत्' पक्वा एव पुरोडाशादयः, 'वहन्तः' यज्ञं निर्वहन्तः, 'तत्' यज्ञाङ्गत्वं, 'समाशत' सम्यक् प्राप्तवन्तः। यः शृतः स देव इति श्रुतेः। अपक्वस्य पुरोडाशादेर्यज्ञाङ्गत्वं यथा नास्ति, पक्वस्य तु यथा विद्यते, तथा पवित्रेणाशोधितस्य सोमस्य यज्ञाङ्गत्वं नास्ति, शोधितस्य तु विद्यत इत्यभिप्रायः॥

अथ तृतीयमन्त्रप्रतीकं दर्शयति। (२)"ब्रह्मा देवानां"(२) इति। ब्रह्मा देवानां पदवीः कवीनामित्ययं मन्त्रः त्वमग्ने रुद्रेदय इत्यनुवाके व्याख्यातः॥

अथ चतुर्थमन्त्रमाह। (४)"असतः ० ब्रह्मतोऽवसन्"(४) इति। असच्छब्देन जगत्कारणमव्यक्तावस्थापन्नमुच्यते। सच्छब्देन य-

ऋषयः सप्तात्रिश्च यत्। सर्वे अत्रयो अगस्त्यश्च। नक्षत्रैः शङ्कृतोऽवसन्[४]। [५]अथ सवितुः श्यावाश्वस्या-

---

त्मकं जगत्। 'ये', 'सप्तर्षयः' मरीचिवसिष्ठप्रमुखाः, तन्मध्ये मुख्यः 'अत्रिश्च', 'यत्' यः, विद्यते ते 'सर्वे', 'असतः' जगत्कारणादव्यक्तात् सकाशात्, 'सत्' व्यक्तं जगत्, 'ततक्षुः' रचणोपलचितं निष्पादनं कृतवन्तः। एते हि पूर्वस्मिन् कल्पे स्वाधिकारार्थं तपस्तप्त्वा वर्तमानकल्पे जगत्कारणादव्यक्तात् सकाशात् स्वस्वाधिकारोचितं व्यक्तं जगदुत्पादितवन्तः। अव्यक्ताद्व्यक्तमुत्पन्नमित्ययमर्थ उपनिषद्याम्नायते। असदा इदमग्र आसीत्, ततो वै सदजायतेति। एवं सति सप्तर्षिवत्ये पुरुषाः अस्मिन् जन्मन्याहवनीयकेतुकमग्निं चिन्वन्ति, ते सर्वेऽप्यागामिजन्मनि अत्र्यगस्त्यसमानाश्च भवन्ति। किञ्चैते कर्मानुष्ठातारः 'नक्षत्रैः' दिवि भासमानैः सह, 'शङ्कृतोऽवसन्' सर्वप्राणिनां सुखकारिणो वसन्ति, द्युलोके नक्षत्ररूपेणोत्पद्यन्त इत्यर्थः। तथा चान्यत्राम्नायते। यो वा इह यजते अमुं स लोकं नक्षते। तन्नक्षत्राणां नक्षत्रत्वमिति। एतैश्चतुर्भिर्मन्त्रैरुपदध्यात्॥

अथैकं ब्राह्मणवाक्यमाह। [५]अथ सवितुः ० अवर्तिकामस्य"[६] इति। पूर्वमत्र पवित्राङ्गिरसेति अङ्गिरोनामा महर्षिः सम्बन्धिन इष्टकामन्त्रान् प्रतिज्ञाय ते दर्शिताः 'अथ' तेभ्योऽनन्तरं, 'श्यावाश्वस्य' श्यावाश्वनाम्नः कस्यचिन्महर्षेः, सम्ब-

वर्तिकामस्य(५)। (६)अमी य ऋक्षा निहितास उच्चा। नक्तं ददृशे कुहचिद्दिवेयुः। अदब्धानि वरुणस्य व्रतानि। विचाकशच्चन्द्रमा नक्षत्रमेति(६)। (७)तत् सवितुर्वरेण्यं। भर्गो देवस्य धीमहि ॥ २ ॥

---

न्धिन इष्टकामन्ता उच्यन्त इति शेषः। कीदृशस्य, 'सवितुः' प्रेरकस्य, मन्त्रसम्प्रदायप्रवर्तकस्येत्यर्थः। 'अवर्तिकामस्य' वर्तिवर्तनं लोकव्यवहारे साधनं धनं तद्राहित्यमवर्तिर्दारिद्र्यं तेन वैराग्यमुपलक्ष्यते, अतो वैराग्यकामस्येत्युक्तं भवति ॥

कल्पः। अमी य इति सप्त मध्य इति। तत्र प्रथमामाह। (६)"अमी य ० नक्षत्रमेति"(६) इति। 'ऋक्षाः' नक्षत्रविशेषाः, 'अमी' अस्माभिर्दृश्यमानाः, 'उच्चा' उच्चस्थाने दिवि, 'निहिताः' प्रजापतिनावस्थापिताः, ते नक्षत्रविशेषाः, 'नक्तं' रात्रौ, 'ददृशे' विस्पष्टं दृश्यन्ते, 'दिवा' अहनि, 'कुहचित्' क्वापि गताः, अस्माभिर्न दृश्यन्त इत्यर्थः। 'वरुणस्य' नक्षत्रज्योतिषामावरकस्य सौर्यतेजसः, 'व्रतानि अदब्धानि' व्यापाराः केनाप्यहिंसिताः। तस्मात् तेजोऽन्तराभिभावकस्य भावस्य सूर्यतेजसः केनाप्यहिंसितत्वादहनि तेनाभिभूतानि नक्षत्राणि न भासन्त इत्यर्थः। 'चन्द्रमाः', तु 'विचाकशत्' विशेषेण प्रकाशमानं, 'नक्षत्रम्', 'एति' प्राप्नोति, न तु सूर्यवन्नक्षत्राण्यभिभवति। तस्माद्रात्रौ दृश्यन्त इत्यर्थः ॥

धियो यो नः प्रचोदयात्(७)। (८)तत् सवितुर्वृणीमहे। वयं देवस्य भोजनं। श्रेष्ठꣳ सर्वधातमं। तुरं भगस्य धीमहि(८)। (९)अपागूहत सविता तृभीन्। सर्वान्

---

अथ द्वितीयामाह। (७)"तत् सवितुर्वरेण्यं ० प्रचोदयात्" (७) इति। 'वरेण्यं' वरणीयं श्रेष्ठं, 'सवितुः' प्रेरकस्य सूर्यस्य, 'तत्' प्रसिद्धं, 'भर्गः' तेजः, 'धीमहि' ध्यायामः, 'यः' सविता, 'नः' अस्माकं, 'धियः' बुद्धीः, 'प्रचोदयात्' प्रकर्षेण प्रेरयति, तस्य सवितुरिति पूर्वत्रान्वयः॥

अथ तृतीयामाह। (८)"तत् सवितुः ० भगस्य धीमहि"(८) इति। 'वयं' यजमानाः, 'सवितुर्देवस्य', 'तत्' तेजः, 'वृणीमहे' प्रार्थयामहे। कीदृशन्तेजः, 'भोजनं' भोगसाधनं, 'श्रेष्ठं' अतिशयेन प्रशस्तं, 'सर्वधातमं' सर्वस्य जगतोऽतिशयेन धारयितृ, 'तुरं' तूर्णं, 'भगस्य' सौभाग्ययुक्तस्यादित्यस्य, 'धीमहि' तत्तेजो ध्यायामः॥

अथ चतुर्थीमाह। (९)"अपागूहत ० भविष्यामः"(९) इति। 'सविता' सूर्यनक्षत्रप्रकाशस्यावरणेनान्ध्यापादकान् 'सर्वान्', 'तृभीन्' रश्मीन्, 'दिवः' अन्तरिक्षात् सकाशात्, 'अपागूहत' 'अवगूहति' रात्रौ गुप्तत्वेन स्थापयति। तस्मात् कारणात् 'तानि' नक्षत्रज्योतींषि, 'नक्तं' रात्रौ, 'दृशे' दर्शनीयानि,'अभवन्' योग्या भवन्ति। अयमर्थः। अहनि सूर्यरश्मिभ्याविर्भूतेषु तैरभिभू-

दिवो अन्धसः । नक्तं तान्यभवन् दृशे । अस्थ्यस्थ्ना सं-
भविष्यामः(९) । (१०)नाम नामैव नाम मे ॥ ३ ॥

नपुंसकं पुमाँ स्त्र्यस्मि । स्थावरोऽस्म्यथ जङ्गमः ।

---

तस्मान्नक्षत्रज्योतींष्यस्वानि भवन्ति, प्रकाशरहितानि भवन्ति, रात्रौ तु सूर्यः स्वकीयान् रश्मीनुपसंहरति, अत आच्छादकाभावान्नक्षत्रज्योतींषि प्रकाशन्त इति। अहनि नक्षत्रज्योतिषामभावे दृष्टान्त उच्यते। यथा वयं 'अस्थि' शरीरगतं, 'अस्थ्ना' असृजा रक्तेन, 'सम्भविष्यामः', एवमिदमपि द्रष्टव्यं ॥

अथ पञ्चमीमाह। (१०)"नाम नामैव ० यज्ञे यक्षि यष्टाहे च"(१०) इति। यथा पूर्वेषु मन्त्रेषु सूर्यनक्षत्रादिरूपेण इष्टकां स्तोतुं तत्तद्वस्तुमहिमा वर्णितः। एवमत्रापि परमात्मरूपेण स्तोतुं परमात्मनः सर्वात्म्यमुच्यते। तदेतन्मन्त्रद्रष्टुर्ब्रह्मविदो वचनं। अत्राद्यौ द्वौ नामशब्दौ मकारान्तौ नामधेयमाचक्षाते। तृतीयो नामशब्दः प्रसिद्धिवाचकमव्ययं। तत्र ब्रह्मवित्पुमान् स्वानुभवं प्रकटयति। 'मे' मम ब्रह्मात्मभूतस्य, पूर्वमज्ञानदशायां देवो मनुष्यो गौरश्व इत्येवं तत्तज्जन्मसु यत् 'नाम', व्यवह्रियते तत् सर्वं 'नामैव' नामशब्दमात्रमेव खलु, न तु तत्र परस्परविलक्षणः कश्चिदर्थोऽस्ति। अत एव छन्दोगा उपनिषद्येवमामनन्ति, वाचारम्भणं विकारो नामधेयमिति। योऽयं विकारः शरीरादिर्दृश्यते स सर्वोऽपि वाङ्निष्पाद्यं नाम-

यजे यक्षि यष्टाहे च[१०] । [११]मया भूतान्ययक्षत । पशवो मम भूतानि । अनुबन्ध्योऽस्म्यहं विभुः[११] ।

---

मात्रमेव न तु वास्तवः कश्चिद्विकारोऽस्तीति तस्यार्थः । देवतिर्य्यङ्मनुष्यादिशरीरभेदस्य तत्तन्नामव्यतिरेकेण वास्तवत्वाभावे सति किं तद्वास्तवं स्वरूपमिति चेत् तदुच्यते, सर्वेष्वपि वस्तुषु यदनुगतं सर्वाधिष्ठानकारणरूपं ब्रह्म तदेव ब्रह्मविदो वास्तवं स्वरूपमित्यभिधीयते। लोके यत् 'नपुंसकं' शरीरं, यश्च 'पुमान्', या च 'स्त्री', तत् सर्वमहमेव 'अस्मि'। यश्च 'स्थावरः' वृक्षादिः, योपि 'जङ्गमः' मनुष्यपश्वादिः, तदुभयमप्यहमेव 'अस्मि'। तथा वर्त्तमानयजमानरूपेण 'यजे' याजनं करोमि, अतीतयजमानरूपेण 'यक्षि' यागं कृतवानस्मि, भविष्यद्यजमानरूपेण 'यष्टा' यागं करिष्यामि । सर्ववस्तुष्वनुगतं सच्चिदानन्दरूपमेकाकारं यद्ब्रह्म वस्तु तदेवाहमित्येवं स्वानुभावो मन्त्रदर्शिना प्रकटीकृतः ॥

अथ षष्ठीमाह । [११]"मया भूतानि ० अनुबन्ध्योस्म्यहं विभुः"[११] इति। 'मया' मद्रूपेणैव, 'भूतानि' सर्वे प्राणिनः, 'अयक्षत' यागं कृतवन्तः, अहमेव यजमानशरीरेषु जीवरूपेण प्रविश्य तन्तं यागमकार्षमित्यर्थः । 'मम भूतानि' मया सृष्टत्वेन मदीयानि पृथिव्यादीनि पञ्च भूतानि, 'पशवः' द्विपादैश्चतुष्पादैः सम्पन्नाः, 'अहं', ब्रह्मचैतन्यरूपेण 'विभुः' व्याप्त एव सन्, 'अनुबन्ध्योस्मि' तत्तच्छरीरेषु प्रविश्य तदात्मत्वाभिमानं कृत्वा अनुबन्ध्यवान् सम्बन्धवानस्मि ॥

(११)स्त्रियः॑ स॒तीः। ता उ॑ मे पुं॒स आ॑हुः। पश्य॑दक्ष॒-
ण्वान्न वि चे॑तद॒न्धः। क॒विर्यः पु॒त्रः स इ॒माः चि॑केत॥४॥

---

अथ सप्तमीमाह। (११)“स्त्रियः सतीः ० सवितुः पिता-
सत्”(१२) इति। याः लोकप्रसिद्धाः ‘स्त्रियः’, ‘सतीः’ सद्रूपाः,
गुरुकटाक्षेण सदेव सोम्येदमग्र आसीदित्यादिश्रुत्युक्तं सद्वस्तु बुद्ध्वा
तदनुभवेन तद्रूपा वर्त्तन्ते। ‘ता उ’ ता अपि स्त्रियः, ‘मे’, मते
‘पुंस आहुः’ ब्रह्मविदः पुरुषान् कथयन्ति। यद्यपि शरीरे
स्तनवृद्ध्यादि स्त्रीलक्षणं दृश्यते, तथापि पुरुषस्योचितं तत्त्वज्ञा-
नमस्तीति पुरुषलक्षणसद्भावात् पुरुषत्वं तासामभिज्ञाः कथ-
यन्ति। ये तु ते तु शरीरे श्मश्रुप्रभृतिभिः पुरुषलक्षणैर्युक्ता अपि
पुरुषस्योचितं तत्त्वज्ञानं न सम्पादयन्ति, ते स्त्रीणामुचितेन मो-
हेनोपेतत्वात् स्त्रिय एवेत्यभिप्रायः। यथा स्त्रीपुरुषविभागो
लोकविपरीतः, एवमन्धानन्धविभागोपि द्रष्टव्यः। ‘अक्षण्वान्’
चक्षुरिन्द्रिययुक्तः, ‘पश्यत्’ नीलपीतादिरूपं पश्यन्नपि, ‘न विचेत्’
विवेकेन सद्वस्तुतत्त्वं न जानाति चेत्, सोऽयम् ‘अन्धः’, एव। मांस-
दृष्टिरहितोपि स्वरूपतत्त्वाभिज्ञश्चेत् सोयं चक्षुष्मानेवेत्यपि द्र-
ष्टव्यं। यथायमलौकिकान्धानन्धविभागः, एवं पितृपुत्रविभागो-
प्यलौकिकः कश्चिद्द्रष्टव्यः। लोके यत्र पिता न जानाति, पुत्रस्तु
‘कविः’ वेदशास्त्रपारङ्गतः, तत्र ‘स पुत्रः’, ‘इमाः’ एतानि
दृश्यमानानि सर्वाणि भूतानि, विवेकेन स्वात्मत्वेन जानाति,

यस्ता विजानात् सवितुः पिता सत्(१२)। (१३)अन्धो मणिमविन्दत्। तमनङ्गुलिरावयत्। अग्रीवः प्रत्य-

---

तदाणीं 'यः' पुत्रः, 'ता विजानात्' तानि सर्वाणि भूतानि स्वात्मतया जानाति, स पुत्रः 'सवितुः' उत्पादकस्यापि, 'पिता सत्' पिता भवति, ज्ञानोपदेशेन पालयितुं समर्थत्वात्। किं बहुना तत्त्वज्ञानमेव प्रशस्तम्, अज्ञानं निकृष्टमिति तात्पर्यार्थः॥

कल्पः। अन्धो मणिमिति पञ्च वैश्वदेव्य उत्तर इति। तत्र प्रथमामाह। (१३)"अन्धो मणिं ० तमजिह्वा असश्चत"(१३)इति। लोके हि पुरुषश्चक्षुषा मणिं दृष्ट्वा तमङ्गुलिभिरादाय ग्रीवायां प्रतिमुच्य जिह्वया प्रशंसति, चिद्रूप आत्मा तु चक्षुरङ्गुलिग्रीवाजिह्वावर्जित एव सन् अचिन्त्यशक्तित्वात्तान् सर्वान् व्यापारान् करोति। तथाच श्वेताश्वतरा बाह्यसाधनरहितस्यैव सर्वव्यापारकर्तृत्वमामनन्ति, अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्ण इति। आत्मा ह्युपाधिभेदाद्द्विविधः, जीव ईश्वरश्चेति। तथाच सिद्धान्तरहस्याभिज्ञा आहुः, कार्योपाधिरयं जीवः कारणोपाधिरीश्वर इति। कार्यं देहेन्द्रियादिसङ्घातरूपं, कारणमचिन्त्यशक्तिः, तत्र कार्योपाधिर्जीवः स्वतो निरुपाधित्वेन सर्वसाधनशून्य एव सन् अज्ञानेन देहेन्द्रियतादात्म्यं स्वस्मिन्नारोप्य भ्रान्त्या सर्वमिदं करोतीति लक्ष्यते, ईश्वरस्तु भ्रान्तिरहितोऽप्यचिन्त्यशक्तियुक्तत्वाच्चक्षुरादिसाधन-

मुञ्चत्। तमजिह्व असस्वत(१३)। (१४)ऊर्ध्वमूलमवाक्छाखं। वृक्षं यो वेद सम्प्रति। न स जातु जनः श्रद्दध्यात्।

---

हीन एव सन् सङ्कल्पमात्रेण सर्वव्यापारं करोति, तदुभयमभिप्रेत्यायं मन्त्रः प्रवृत्तः। अथवा योगाभ्यासेन चक्षुरादीन्द्रियं निरुध्य नीलपीतादिष्वन्धः सन् मणिमिव स्वयंप्रकाशमात्मानं समाधिना पश्यति। तस्य च दृष्टस्य वस्तुनः स्वस्वरूपत्वेन निश्चयः स्वीकारः। अतोङ्गुलिव्यापाररहितोपि स्वीकरोतीत्युच्यते। तस्मिन् वस्तुनि स्थैर्यं प्रत्यमुञ्चत् इत्युच्यते। कृतकृत्योस्मीत्यादि भाषणं जिह्वया प्रशंसेत्युच्यते॥

अथ द्वितीयामाह। (१४)"ऊर्ध्वमूलमवाक्छाखं ० मृत्युर्मा मारयात्"(१४) इति। लौकिकस्य हि वृक्षस्याधोभागे मूलं ऊर्ध्वभागे शाखाश्च। संसारवृक्षस्य तद्वैपरीत्यम्, 'ऊर्ध्वं' सर्वोत्कृष्टं ब्रह्म, 'मूलं', 'अवाञ्चः' अधमा ब्रह्मादिस्तम्बान्ता देहाः, 'शाखाः', अयञ्च संसारो व्रश्चनयोग्यत्वाद्वृक्षः। तत्त्वज्ञानेन हि सोयमज्ञानजन्यो वृक्षः छिद्यते। तमीदृशं 'वृक्षं', 'यः' पुमान्, गुरुशास्त्रमुखात् 'वेद', 'सः' जनः, 'सम्प्रति' तदानीमेव, 'न श्रद्दध्यात्' न विश्वस्यात्। किंविषयोयमविश्वास इति तदुच्यते। 'जातु' कदाचिदपि, 'मृत्युः', 'मा मारयात्' मां हन्यात्, 'इति'। अयमर्थः, सर्वो ह्यज्ञानेन जन्तुः कदाचिन्मृत्युर्मां मारयिष्यतीति विश्वासं कृत्वैव वर्त्तते, अयन्तु

मृत्युर्मा मा॒रया॒दिति[१४]। [१५]ह॒सित॑ꣳ रु॒दि॒तं गी॒तं॥

॥ ५ ॥

वी॒णा॒प॒ण॒व॒ला॒सि॒तं। मृ॒तं जी॒वञ्च॒ यत्कि॒ञ्चि॒त्। अ॒ङ्गानि॑ स्ने॒व॒ वि॒द्धि॒ तत्[१५]। [१६]अ॒तृ॒ष्य॒ꣳस्तृ॒ष्य॒ध्या॒य॒त्।

---

ब्रह्मज्ञानी ब्रह्मरूपस्य स्वस्य जन्ममरणभावं निश्चित्य तस्मिन्नेव क्षणे स्वकीयमरणविश्वासं परित्यजति, आत्मनो मरणाभावाद्देहस्य च स्वव्यतिरिक्तत्वान्मृत्योर्न बिभेतीत्यर्थः॥

अथ तृतीयामाह। [१५]"हसितꣳ रुदितं ० अङ्गानि स्नेव विद्धि तत्"[१५] इति। अत्र शरीरस्यात्मशङ्कां वारयितुं तदीया विकारा उपन्यस्यन्ते। 'हसितं' कदाचिन्मुखे हासो दृश्यते, कदाचिद्रोदनं, कदाचिदुत्साहेन गानं, कदाचिद्धस्ते वाद्यमानायाः वीणायाः, कदाचित्पणवस्य मृदङ्गस्य 'लासितं' वादनरूपो विनोदः। कदाचिच्छरीरं 'मृतं', दृश्यते, कदाचिज्जीवनोपेतम्, एवमन्यदपि 'यत्किञ्चित्' विकारजातमस्ति, 'तत्' सर्वम्, 'अङ्गानि स्नेव विद्धि' यथा हस्तपादाद्यङ्गानि शरीरगतानि, 'स्ना'शब्देन स्नायवोऽभिधीयन्ते, यथा वा स्नायवः शरीरगताः,एवमेता हसितादिविकाराः शरीरादिगताः, न त्वात्मनो योग्याः, इति हे विवेकिन् त्वं विजानीहि॥

अथ चतुर्थीमाह। [१६]"अतृष्यꣳस्तृष्यध्यायत् ० अचेता यस्य चेतनः"[१६] इति। अत्र पूर्वोक्तेन हसितादिगुणयुक्तेन शरी-

अस्माज्जाता मे मिथू चरन्। पुत्रो निर्ऋत्या वैदेहः। अचेता यश्च चेतनः[११]। [१०]स तं मणिमविन्दत्। सो-ऽनङ्गुलिरावयत्। सोऽग्रीवः प्रत्यमुञ्चत्॥ ६॥

---

रादिना सह चिदात्मनस्तादात्म्याध्यासो वर्ण्यते। अयञ्चिदात्मा स्वयम् 'अहृष्यन्', एव हृष्यन् हर्षं प्राप्नोति, हर्षाया जड-धर्मत्वेन स्वस्मिन्नसम्भवेपि जडतादात्म्यभ्रमेण हर्षं प्राप्नोतीव लक्ष्यते। तथा 'अध्यायत्' ध्यायतीव, स्वयं ध्यानरहितोपि ध्यान-युक्तेन मनसा सह तादात्म्यभ्रमात् स्वयं ध्यायतीव लक्ष्यते। 'अस्मात्' दृश्याज्जडदेहात्, 'जाताः', हसितादिविकाराः, 'मे' मदीयाः, इति भ्रान्त्या ध्यायतीति शेषः। 'मिथू'शब्दो मिथः-शब्दपर्यायः सन् चिज्जडयोः परस्परमेलनं ब्रूते, तेन मेल-नेन 'चरन्', मदीयमिति वृथाभिमन्यते। कोऽसावेवमभिमन्य-ते इति तदुच्यते। 'निर्ऋत्याः' निर्ऋतिप्रतिकूलाया मायायाः, 'पुत्रः' अहङ्कारः, विदेहस्य शरीररहितस्य चिदात्मनः स-म्बन्धी 'वैदेहः' चैतन्यच्छायायुक्त इत्यर्थः। तदेव स्पष्टीक्रि-यते। 'यः' अहङ्कारः, 'अचेताः' स्वयमचेतनः सन्, 'चेतनश्च' चैतन्यच्छायायोगेन चेतनोपि भवति, तादृशः पदार्थः। देहेन्द्रियादिधर्मानात्मन्यारोप्य तदारोपेण सुखध्यानादिधर्मा आत्मनि प्रतिभासन्ते॥

अथ पञ्चमीमाह। [१०]"स तं मणिमविन्दत् • अमञ्चत" [१०] इति। यः पूर्वोक्तश्चेतनाचेतनयोरन्योन्यतादात्म्याध्यासेन

सोऽजिह्वो असश्चत[१७]। [१८]नैतमृषिं विदित्वा नगरं प्रविशेत्। यदि प्रविशेत्। मिथौ चरित्वा प्रविशेत्। तत्सम्भवस्य व्रतम्[१८]। [१९]आ तमग्ने रथं तिष्ठ।

---

निष्पन्नः संसारी, 'सः', एव, 'तं मणिं', अनीते अन्धो मणिमित्यादि मन्त्रे प्रोक्तं मण्याद्युपलक्षितमाभरणं चक्षुषा दृष्टवान्। 'सः', एव स्वतोऽङ्गुलिरहितोऽपि देहतादात्म्याध्यासेन तदीयैरङ्गुलिभिः 'आवयत्' स्वीकृतवान्। तथा स्वतो ग्रीवारहितोऽपि शरीरगतायां ग्रीवायां 'प्रत्यमुञ्चत्'। तथा स एव स्वतो जिह्वारहितोऽपि शरीरगतया जिह्वया 'असश्चत' प्रशंसां कृतवान्॥

अथ ब्राह्मणमाह। [१८]"नैतमृषिं ० सम्भवस्य व्रतं"[१८] इति। 'एतमृषिं' पूर्वोक्तं विवेकप्रतिपादकं मन्त्रसङ्घं, 'विदित्वा' मन्त्रप्रतिपाद्यं परमार्थतत्त्वमवगत्य, 'नगरं' जनसम्मर्दयुक्तं, 'न प्रविशेत्', यद्वा नगरोपलक्षितं देहं न प्रविशेत्, देहे तादात्म्यभ्रमं न कुर्यादित्यर्थः। 'यदि' कथञ्चित् पूर्ववासनावशात्, 'प्रविशेत्' देहे तादात्म्यबुद्धिं कुर्यात्, तदानीं 'मिथौ चरित्वा' शास्त्रार्थपर्यालोचनया मिथ्येदमिति निश्चित्य, 'प्रविशेत्' तादात्म्यभ्रमरहितेन देहेन प्रारब्धभोगाय लोकव्यवहारं कुर्यात्। 'तत्' एतत्, सम्भवनाम्न ऋषेः 'व्रतं' आचारः, स ह्येवमाचरितवान्॥

कल्पः। आ तमग्ने रथमिति तिस्र इति। तच्च प्रथमामाह।

एकाश्वमेकयोजनं। एकचक्रमेकधुरं। वातध्राजिगतिं विभो[१९]। [२०]न रिष्यति न व्यथते ॥ ७ ॥

नास्याक्षो यातु सज्जति। यच्छ्वेतान् रोहिताꣳश्चा-

---

[१९]"आतमग्ने ० वातध्राजिगतिं विभो"[१९] इति। हे 'अग्ने' अरुणकेतुक, इह कर्मण्यागमनाय 'तं' तादृशं, 'रथं', 'आतिष्ठ' आरोह। कीदृशं, 'एकाश्वं' एक एव प्रबलोऽश्वः तं वहति, 'एकयोजनं' निमिषमात्रेण योजनरूपं गच्छति, 'एकचक्रं' लौकिकरथवच्चक्रद्वयं नापेक्षते किन्त्वेकचक्रेण वर्त्तते, 'एकधुरं' अश्वस्यैकत्वात् तद्योजनाय धूरप्येकैव, 'वातध्राजिगतिं' ध्राजिशब्दोऽपि गमनवाची, वातस्य ध्राजिर्वातध्राजिः तद्गतिर्यस्यासौ वातध्राजिगतिः तादृशं, यथोक्तरथस्यालौकिकत्वेन गमनाद्याचिन्त्यशक्तिमग्नेर्द्योतयितुं विभुशब्देन सम्बोधनं ॥

अथ द्वितीयामाह। [२०]"नरिष्यति न ० युक्ताधितिष्ठति"[२०] इति। अयमेकचक्रो रथो 'न रिष्यति' न विनश्यति, 'न व्यथते' निषीदति इतस्ततश्चलति, 'अस्य' रथस्य, 'अक्षः', 'यातु' याने गमनवेलायां, 'न सज्जति' क्वापि पाषाणवृक्षादौ सक्तो न भवति, 'यत्' यस्मात् कारणात्, अयमग्निः 'श्वेतान् रोहितांश्च', प्रसिद्धान् प्रबलान् अश्वान् पर्य्यायेणास्मिन् 'रथे युक्ता', तं रथं 'अधितिष्ठति', तस्मादश्वसामर्थ्यात् रथस्य न कोऽपि बाध इत्यर्थः ॥

म्नेः। रथे युक्ताधितिष्ठति[२०]। [२१]एकया च दशभिश्च स्वभूते। द्वाभ्यामिष्टये विंशत्या च। तिसृभिश्च वहसे त्रिंशता च। नियुद्भिर्वायविह ता विमुञ्च[२१] ॥ ७ ॥

ततस्तुः, धीमहि, नाम मे, चिकेत, गीतं, प्रत्यमुञ्चत्, व्यथते, सप्त च ॥ अनु० ११ ॥

---

अथ तृतीयामाह। [२१]"एकया च ० विमुञ्च"[२१] इति। नियुच्छब्दो वायुसम्बन्धिनीरश्वयोषित आचष्टे। हे वायो 'इष्टये' अस्मत्सम्बन्धियागार्थं, 'स्वभूते' स्वाधीने रथे, एकादिसङ्ख्यायुक्ताभिः 'नियुद्भिः', तं रथं योजयित्वा, 'वहसे' अस्मत्समीपं प्रापयसि, अश्वादिविषयाः षट्प्रकाराः सङ्ख्याविकल्पिताः। हे 'वायो', 'इह', आगत्य 'ताः' नियुतः, 'विमुञ्च' ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

### अथ द्वादशोऽनुवाकः।

(१)आतनुष्व प्रतनुष्व। उद्धमाधम सन्धम। आदित्ये चन्द्रवर्णानां। गर्भमाधेहि यः पुमान्(१)। *(२)इतः सिक्तꣳ सूर्यगतं। चन्द्रमसे रसं कृधि। वारादञ्जन-

---

कल्पः। आतनुष्वेति चतस्र इति। तत्र प्रथमामाह। (१)"आतनुष्व ० यः पुमान्"(१) इति। हे इन्द्र त्वं 'आतनुष्व' समन्तादात्मानं विस्तारय, स्वरूपं प्रदर्श्य सर्वाननुगृहाण। 'प्रतनुष्व' प्रकर्षेण क्रतुषु स्वात्मानं विस्तारय, क्रतुष्वागत्य सन्निहितो भव। 'उद्धम' उत्कर्षेण शब्दय, अहमागत इत्येवमुच्चैः कथय। 'आधम' आभिमुख्येन शब्दय। 'सन्धम' सम्यगानुकूल्येन शब्दय, ततस्त्वं 'चन्द्रवर्णानां' हिरण्यवर्णानामपां, 'गर्भमादित्ये धेहि' आदित्यरश्मिषु जलं सङ्गृहाणेत्यर्थः। 'यः' त्वं, 'पुमान्' पुंस्त्वशक्तियुक्तः, स तं 'गर्भमाधेहि'॥

अथ द्वितीयामाह। (२)"इतः सिक्तꣳ ० रुद्र उच्यते"(२) इति। 'इतः' कर्मणः सकाशात्, 'सिक्तं' आज्याद्याहुतिद्रव्यं, 'सूर्यगतं', कृत्वा 'चन्द्रमसे' चन्द्रवृद्ध्यर्थं, 'रसं', 'कृधि' कुरु, अग्नौ प्रक्षिप्तं द्रव्यमादित्यं प्राप्य जलं भूत्वा दिवि चन्द्रं भूमावोषधीश्चाभिवर्धयति, तत् सर्वमिन्द्र त्वं कुरु। ततः 'वारादं' वरणीयस्य फलस्य समन्ताद्दातारं, 'अग्निं' आह्वणकेतुकरूपं, 'अग्रे' अस्माकं पुरतः, 'जनय' उत्पादय, 'यः' अग्निः, 'एको

---

* B चिह्नितपुस्तके इतःशब्दपूर्वं तद्यः इति पाठः।

याग्नेऽग्निं। य एको रुद्र उच्यते⁽²⁾। ⁽³⁾असङ्ख्याताः सहस्राणि। स्मर्यते न च दृश्यते॥ १॥

एवमेतन्निबोधत⁽³⁾। ⁽⁴⁾आ मन्द्रैरिन्द्र हरिभिः। याहि मयूररोमभिः। मा त्वा केचिन्न्येमुरिन्न पाशिनः। दधन्वेव ता इहि⁽⁴⁾। ⁽⁵⁾आ मन्द्रैरिन्द्र हरि-

---

रुद्रः', इति सर्वत्र 'उच्यते'। तथा चान्यत्राम्नातं, एक एव रुद्रो न द्वितीयोऽवतस्थ इति। रुद्रो वा एष यदग्निरिति च॥

अथ तृतीयामाह। [3]"असङ्ख्याताः ० निबोधत"[3] इति। एकस्य रुद्रस्य मूर्त्तीनां 'सहस्राणि' 'असङ्ख्याताः' असङ्ख्यातानि, गणयितुं न शक्यन्ते। स च रुद्रः स्वयं 'स्मर्यते' श्रुतिस्मृतिमुखादवगत्य स्मर्त्तुं शक्यते, स रुद्रो न द्रष्टुं शक्यः। 'एतं' रुद्रमग्निं, 'एवं' उक्तप्रकारेण, 'निबोधत' हे यजमाना अवगच्छत॥

अथ चतुर्थीमाह। [4]"आ मन्द्रैरिन्द्र हरिभिः ० दधन्वेव ता इहि"[4] इति। हे 'इन्द्र', 'मन्द्रैः' मदनीयैर्हर्षहेतुभिः, 'मयूररोमभिः' मयूरसदृशवर्णरोमयुक्तैः, 'हरिभिः' अश्वैः, 'आयाहि' अस्मिन् कर्मण्यागच्छ। आयान्तं त्वां 'केचित्' अपि जनाः, 'मा न्येमुः' मा नियमयन्तु, प्रतिबन्धं मा कुर्वन्त्वित्यर्थः। 'पाशिन इत्' अश्वानां पाशधारिणः सारथयोऽपि, 'न न्येमुः' नियमनं विलम्बरूपं न कुर्वन्तु, 'दधन्वेव' सर्वाभिमतानां दातेव, 'ता इहि' 'ता' अस्मद्युक्तभुवः 'इहि' गच्छ॥

भिः। यामि मयूररोमभिः। मा मा केचिन्न्येमुरिन्न पाशिनः। निधन्वेव ताँ३ इमि(५)। (६)अणुभिश्च महद्भिश्च॥ २॥

निघृष्वैरसमायुतैः। कालैर्हरित्वमापन्नैः। इन्द्रायाहि सहस्रयुक्(६)। (७)अग्निर्विभ्राष्टिवसनः। वायुः

---

कल्पः। आमन्द्रैरित्येकां यजमान उपदध्यात्। पाठस्तु। (५)"आ मन्द्रैरिन्द्र हरिभिः ० निधन्वेव ताँ३ इमि"(५) इति। इत्ययं* शब्दः प्रथमैकवचनमुपलक्षयति तस्मादहमित्यर्थः सम्पद्यते। मन्द्रैरित्यादि पूर्ववद्योजनीयं। हे 'इन्द्र', त्वया सहाहमपि त्वदीये लोके 'यामि' गच्छामि, त्वामिव मामपि जनाः 'पाशिनः', मां 'मा', प्रतिबध्नन्तु ततोऽहं 'निधन्वेव' निधानवानिव लब्धनिधिरिव तुष्टः सन्, 'तान्' उक्तमलोकान्, 'इमि' एमि, प्राप्नवानि॥

कल्पः। अणुभिश्चेति द्वे इति। तत्र प्रथमामाह। (६)"अणुभिश्च ० सहस्रयुक्"(६) इति। हे 'इन्द्र', त्वं 'कालैः' कालविशेषैः सह, 'आयाहि' आगच्छ। कीदृशैः कालैः, 'अणुभिश्च' क्षणमुहूर्त्ताद्याकारेण सूक्ष्मरूपैः, 'महद्भिश्च' संवत्सरयुगादिरूपेण प्रौढैरपि, 'निघृष्वैः' नितरां दीप्यमानैः, यद्यपि कालस्य नीरूपत्वान्नास्ति दीप्तिः, तथापि तदभिमानिनां देवानां अस्त्येव दीप्तिः। 'असमायुतैः' परस्परमसङ्गतैः, न ह्येकस्मिन् काले

---

* इत्ययमित्यत्र भाष्योद्धृत इतिशब्दो मूले न दृश्यते।

श्वेतसिकद्रुकः। संवत्सरो विषूवर्णैः। नित्यास्तेनुचरास्तव(७)। (८)सुब्रह्मण्योꣳ सुब्रह्मण्योꣳ सुब्रह्मण्यों। इन्द्रागच्छ हरिव आगच्छ मेधातिथेः। मेष वृषणश्वस्य मेने ॥ ३ ॥

---

वर्त्तमाने कालान्तरं सह प्रवर्त्तते। 'हरित्वमापन्नैः' हरिनामकतदीयाश्वत्वं प्राप्तैः, कालाभिमानिदेवा एव तवाश्वा इत्यर्थः। कीदृश इन्द्रः, 'सहस्रयुक्' अश्विसहस्रेण युक्तः॥

अथ द्वितीयामाह। (७)"अग्निर्विभ्राष्टिवसनः ० नित्यास्तेनुचरास्तव"(७) इति। हे इन्द्र 'अग्निः' 'वायुः' 'संवत्सरः', ये त्रयः सन्ति ते त्रयोपि 'तव नित्या अनुचराः', कदाचिदप्यनपायिनो नित्याः। कीदृशोऽग्निः, 'विभ्राष्टिवसनः' विशेषेण भ्राजमानवसनयुक्तः। कीदृशो वायुः, 'श्वेतसिकद्रुकः' श्वेतानां सिकतानां द्रोग्धा, तदेतदुपलक्षणं, नानाविधां धूलिमुत्पादयतीत्यर्थः। कीदृशः संवत्सरः, 'विषूवर्णैः' नानाविधैर्वर्णैर्युक्तः। वसन्ताद्यृतुभेदाः पूर्वमेवोक्ताः॥

कल्पः। सुब्रह्मण्योमित्येकामिति। पाठस्तु। (८)"सुब्रह्मण्योꣳ ० गौतम ब्रुवाण"(८) इति। शोभनं ब्रह्म सुब्रह्म वेदः तस्मै हितः 'सुब्रह्मण्यः' इन्द्रः, 'ॐ', इति सम्बोधनार्थः। हे सुब्रह्मण्येति त्रिरभिधानमादरार्थं। तद्गुणकथनेन स्तुत्यर्थमिन्द्रादिपदैः सम्बोधनं। हे 'इन्द्र' परमैश्वर्ययुक्त, इह कर्मणि 'आगच्छ',

गौरावस्कन्दिन्नहल्यायै जार। कौशिकब्राह्मण गौतमब्रुवाण[८]। [९]अरुणाश्वा इहागताः। वसवः पृथि-

'हरिवः' हरिनामकावश्वावस्य विद्येते इति हरिवान् तस्य सम्बोधनं, शुक्लकृष्णपक्षद्वेवावेव तदीयाश्वत्वं प्राप्य हरिशब्देनोच्येते, तादृश हे हरिवः, इह कर्मणि 'आगच्छ'। 'मेधातिथेः' मेधातिथिर्नामकः कश्चिदृषिः कण्वस्य पुत्रः तत्सम्बन्धिन्, हे 'मेष' रूप, वृषणश्वो नाम कश्चिन्मुनिः तस्य सम्बन्धिनी या मेनकाख्या दुहिता तां मन्यमाने तस्मिन्नर्थे 'वृषणश्वस्य मेने', इति सम्बुध्यन्तं प्रयुक्तं। 'गौरावस्कन्दिन्' गौरमृगो भूत्वा यागमध्ये समागत्य सोमं पीत्वा हे विनाशक। तदेतत् सर्वं शाखान्तरब्राह्मणे समाम्नातं, हरिव आगच्छेति पूर्वपक्षावपरपक्षौ वा इन्द्रस्य अश्वे ताभ्यां ह्येष सर्वं हरतीति मेधातिथेर्मेषेति मेधातिथिं काण्वायनिं मेषो भूत्वा जहार। वृषणश्वस्य मेन इति वृषणश्वस्य मेनका नाम दुहिता तामिन्द्रश्चकमे गौरावस्कन्दिन्निति गौरमृगो भूत्वा राजानं पिबतीति। 'अहल्यायै जार' अहल्या गौतमस्य भार्या तस्य इन्द्रो जार इति पुराणे प्रसिद्धं, 'कौशिकब्राह्मण' कौशिकनामा कश्चिन्महर्षिः तस्य समीपे ब्राह्मणवेषेण समागतवान्, 'गौतमब्रुवाण' गौतमो महर्षिः तं प्रसादयितुं स्तुतिं कृतवान्, तथाविध हे इन्द्र आगच्छेत्यन्वयः॥

कल्पः। अरुणाश्वा इति षतस्र इति। तत्र प्रथमामाह।

विक्षितः। अष्टौ दि॒ग्वास॑सो॒ऽग्नयः॑। अ॒ग्निश्च॑ जातवे॑दाश्चे॒त्येते॑[९]। [१०]ता॒म्राश्वा॑स्ताम्र॒रथाः। ताम्रव॑र्णास्त॒थासिताः। द॒ण्डह॑स्ताः खा॒द॒ग्द॑तः। इतो रु॒द्राः प॒राङ्गताः ॥ ४ ॥

उक्त॑ꣳस्थानं प्रमाणञ्च॑ पुर॒ इत[१०]। [११]बृ॒हस्पति॑श्च

---

[९]"अरुणाश्वाः ० जातवेदाश्चेत्येते"[९] इति। 'अष्टावग्नयः', 'इह' कर्मणि, 'आगताः'। कीदृशाः, 'अरुणाश्वाः' अरुणवर्णैरश्वैर्युक्ताः, 'वसवः' जगतोनिवासहेतवः, 'पृथिविक्षितः' भूमिवासिनः, 'दिग्वाससः' दिश एतेषामग्नीनां वासांसि। केतेऽष्टावग्नय इति तदुच्यते, 'अग्निश्च जातवेदाश्च', 'इति' एतस्मिन् मन्त्रे' ये पूर्वमभिहिताः 'एते' अग्नयः, वेदितव्याः ॥

अथ द्वितीयामाह। [१०]"ताम्राश्वाः ० पुर इते"[१०] इति। ये 'रुद्राः', सन्ति ते 'इतः' स्थानात् पृथिवीरूपात्, 'परां' दिवं, 'गताः'। कीदृशा रुद्राः, ताम्रवर्णैरश्वैरथैश्च युक्ताः, स्वयञ्च 'तथा', 'ताम्रवर्णाः', 'असिताः' ईषदपि सितं श्वेत्यं येषां नास्ति ते तादृशाः, 'दण्डहस्ताः' गदापाणयः, 'खादग्दतः' खादयन्तो भक्षयन्तो दन्ता येषां तादृशाः, एवम्विधा हे रुद्रा युष्माकं 'स्थानं', 'उक्तं' शास्त्रेषु प्रसिद्धं, तथा तस्य स्थानस्य 'प्रमाणञ्च' इयत्तानिश्चयः शास्त्रसिद्धः, तस्मात् 'पुरः' भवदीयाः पुरीः, 'इत' गच्छत ॥

सविता। विश्वरूपैरिहागतां। रथेनोदकवर्त्मना। अप्सुषा इति तद्द्वयोः(११)। (१२)उक्तो वेषो वासाꣳसि च। कालावयवानामितः प्रतीच्या। वासात्या इत्य-

---

अथ तृतीयामाह। (११)"बृहस्पतिश्च ० इति तद्द्वयोः" (११) इति। योऽयं 'बृहस्पतिः', यश्च 'सविता', तावुभौ 'विश्वरूपैः' नानाविधरूपैरश्वैः, 'इह' कर्मणि, 'आगतां' आगच्छतां, केन साधनेन, 'उदकवर्त्मना रथेन' उदकस्येव वर्त्म मार्गो यस्य रथस्य सोऽयमुदकवर्त्मा, यथा वृष्टिजलस्यान्तरिक्षमेव मार्गः एवमेतदीयरथस्याप्यन्तरिक्षमेव मार्गः। कीदृशावेतौ, 'अप्सुषा' अपांसनितारौ, 'इति' एवमुक्तप्रकारेण, 'द्वयोः' सवितृबृहस्पत्योरुभयोः, 'तत्' स्वरूपं, उक्तमिति शेषः॥

एवं त्रयो मन्त्रा उक्ताः, चतुर्थस्तु उपरिष्टादुदाहरिष्यते। (१२)"उक्तो वेषो ० तस्यैषा भवति"(१२) इति। 'कालावयवानां' वसन्ताद्यृतूनां, 'इतः' अस्मादनुवाकात्, प्रतीच्येष्वतीतेष्वनुवाकेषु साकं जानामित्यादिषु, 'वेषः' आकारविशेषः, 'उक्तः', 'वासांसि च' वस्त्राण्युक्तानि। ऋतुर्ऋतुनाऽनुद्यमानः। विननादाभिधावाः षष्टिश्च त्रिंशका वल्गा इत्यादिना यत् स्वरूपमृतूनामभिहितं सोऽयं वेष इत्युच्यते। साराग वस्त्रैर्जरदक्षः वसन्तो वसुभिः सहेत्यादिना वस्त्राण्युक्तानि। तथा वासात्यौ चित्रौ इत्यादिनाऽश्विनोर्देवयोर्वेष उक्तः।

श्विनोः। कोन्तरिक्षे शब्दं करोतीति। वासिष्ठो रौहिणो मीमाᳫंसां चक्रे। तस्यैषा भवति(१२)। (१३)वाश्रेव विद्युदिति(१३)। (१४)ब्रह्मण उदरणमसि। ब्रह्मण उदी-

---

यद्यप्येतद्ब्राह्मणं न सन्निहितमन्त्रोपयुक्तं तथाप्युक्तं स्थानमिति वचनेन बुद्धिस्थमर्थं प्रसङ्गात् ब्रूते। अथ चतुर्थमन्त्रोदाहरणार्थमिदमुच्यते। 'वासिष्ठः' वसिष्ठगोत्रोत्पन्नः, 'रौहिणः' रोहिणाख्यस्य मुनेः पुत्रः, सोऽयमाकाशे कञ्चिद्ध्वनिं श्रुत्वा 'मीमांसां चक्रे' विचारितवान्, किमिति को नामान्तरिक्षे शब्दं करोति, न ह्यूर्ध्वमवलोक्यमाने कश्चिदपि पुमानुपलभ्यते, शब्दश्च भेरीवादनादप्यधिकः श्रूयते, तस्माद्विस्मयं प्राप्तस्य को नाम शब्दकर्त्तेति विचारः। 'तस्य' विचारस्य, 'एषा' निर्णयवादिनी काचिदृग्, विद्यते॥

तस्या ऋचः प्रतीकं दर्शयति। (१३)"वाश्रेव विद्युदिति"(१३) इति। वाश्रेव विद्युन्मिमातीत्ययं मन्त्रोऽग्निना रयिमश्नवदित्यनुवाके व्याख्यातः। 'वाश्रा' वाशनशीला, गौर्यथावत्सं प्रति शब्दं करोति एवमियं 'विद्युत्' सूर्यतेजोरूपमेघवर्त्तिनी, 'मिमाति' शब्दं निर्मिमीत इत्यर्थः॥

कल्पः। ब्रह्मण उदरणमसीति चतस्रो ब्रह्मसदना इति। पाठस्तु। (१४)"ब्रह्मण उदरणमसि ० उपस्तरणमसि"(१४) इति। हे इष्टके त्वं 'ब्रह्मणः' हिरण्यगर्भस्य, 'उदरणं' उदी-

रणमसि। ब्रह्मण आस्तरणमसि। ब्रह्मण उपस्तरण-
मसि(१४) ॥ ५ ॥

दृश्यते, च, मेने, पराकृताः, चक्रे, षट् च॥ अनु० १२॥

---

अथ त्रयोदशोऽनुवाकः।

*(१)अष्टयोनीमष्टपुत्राम्। अष्टपत्नीमिमां महीम्।
अहं वेद न मे मृत्युः। न चामृत्युरघाहरत्(१)। (२)अष्ट-

---

रणत्वहेतुरसि। 'उदीरणं' उदीर्णत्वहेतुरसि। उदीरणत्वं
लोभराहित्यं। उदीर्णत्वं गुणान्तरैरन्येभ्य आधिक्यं। 'आस्तरणं'
आसनं। 'उपस्तरणं' उपर्याच्छादनं। एतैश्चतुर्भिर्यजुर्मन्त्रैस्तस्य
इष्टका उपरि दध्यात्॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-
रण्यके प्रथमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

अथ त्रयोदशोऽनुवाकः।

कल्पः। अष्टयोनीमित्यष्टौ दिश्या इति। तत्र प्रथमा-
माह। (१)"अष्टयोनी ० मृत्युरघाहरत्(१) इति। अष्टौ अष्ट-
सङ्ख्याकानि मूलप्रकृतिसहितानि महदहङ्कारपञ्चतन्मात्ररू-

---

* B चिह्नितपुस्तके "चपकामन्तगर्भिण्यः" इत्यधिकः पाठः।

योन्यष्टपुत्रं। अष्टपदिदमन्तरिक्षं। अहं वेद न मे मृत्युः। न चामृत्युरघाहरत्[१]। [२]अष्टयोनीमष्टपुत्रां। अष्टपत्नीमिमां महीं॥ १॥

अहं वेद न मे मृत्युः। न चामृत्युरघाहरत्[३]। [४]सुत्रामाणं[४] [५]महीमूषु[५]। [६]अदितिर्द्यौरदितिरन्तरिक्षं।

---

पाणि तस्मानि योनयः कारणानि यस्याः पृथिव्याः सेयं 'अष्टयोनी', तां। अष्टसङ्ख्याका वक्ष्यमाणा मित्रावरुणादयः पुत्रा यस्याः पृथिव्याः सेयं 'अष्टपुत्रा', तां। अष्टसङ्ख्याका इन्द्रादयो दिग्वर्त्तिनः पतयः पालका यस्याः पृथिव्याः सेयं 'अष्टपत्नी', तां। तथोक्तगुणयुक्तां 'इमां महीं' पृथिवीं, 'अहं' मन्त्रद्रष्टा, 'वेद' जानामि, अतो ज्ञानप्रभावेन 'मे मृत्युः', नास्ति, किन्त्वतो मुक्त एव भविष्यामीति शेषः। किञ्च 'अमृत्युः' परममृत्यो-रन्योपमृत्युरित्यर्थः। सः 'अघः' पापानि दुःखानि, 'न चाहरत्' ज्ञानप्रभावादेव नैव सम्पादयिष्यति॥

अथ द्वितीयाद्तृतीयावाह। [२]"अष्टयोन्यष्टपुत्रं ॰ न चामृत्युरघाहरत्"[३] इति। 'अष्टपत्' अष्टपतिः, अष्टसङ्ख्याकाः पालका इत्यर्थः। अन्यत् पूर्ववत्॥

अथ चतुर्थपञ्चममन्त्रयोः प्रतीके दर्शयति। [४]"सुत्रामाणं महीमूषु"[५] इति। सुत्रामाणं पृथिवीद्यामित्येको

अदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः। विश्वे॑ दे॒वा अदि॑तिः प॒ञ्चज॑नाः। अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वं(६)। (७)अ॒ष्टौ पु॒त्रासो॒ अदि॑तेः। ये जा॒तास्त॒न्वः॑ परि॑। दे॒वाꣳ उप॒प्रैत् स॒प्तभिः॑ ॥ २ ॥

---

मन्त्रः। महीमूषु मातरमित्यपरो मन्त्रः। एतौ चोभौ वैश्वानरो न ऊत्येत्यनुवाके व्याख्यातौ ॥

अथ षष्ठीमाह। (६)"अदितिर्द्यौः ० मदितिर्जनित्वं"(६)इति। अदितिशब्दवाच्यदेवता सर्वात्मकत्वेन स्तूयते। 'माता' पृथिवी, अतो लोकत्रयात्मिकांशः देवताविशेषोदित्याख्यः, सर्वस्य जगतः 'पिता', 'सः', एव 'पुत्रः', च। ये 'विश्वे देवाः' सर्वेपि देवाः, ये च 'पञ्चजनाः' निषादपञ्चमा ब्राह्मणक्षत्रियवैश्यशूद्राः ते सर्वेपि, 'अदितिः', एव 'जातं' यत् पूर्वमुत्पन्नं जगत्, 'जनित्वं' जननरूपो व्यापारः तत् सर्वमपि 'अदितिः', एव ॥

अथ सप्तमीमाह। (७)"अष्टौ पुत्रा ० मार्ताण्डमास्यत्"(७) इति। 'अदितेः' देवतायाः, 'अष्टौ पुत्रासः' अष्टसङ्ख्याकाः पुत्रा विद्यन्ते, 'ये' पुत्राः, 'तन्वःपरि' शरीरस्योपरि जाताः, औरसा इत्यर्थः। तेषां मध्ये 'सप्तभिः', पुत्रैः सह 'देवान्', 'उपप्रैत्' समीपे प्राप्तवती, 'मार्ताण्डं', अष्टमं पुत्रं 'परास्यत्' पराकृतवती। तमेकं परित्यज्यान्यैरेव सप्तभिः सह देवलोकं गता ॥

परा मार्ताण्डमास्यत्(७)। (८)सप्तभिः पुत्रैरदितिः। उ-
पप्रैत् पूर्व्यं युगं। प्रजायै मृत्यवे तत्। परा मार्ता-
ण्डमाभरदिति(८)। (९)ताननुक्रमिष्यामः(९)। (१०)मित्रश्च

---

अथाष्टमीमाह। (८)"सप्तभिः ० मार्ताण्डमाभरदिति"(८) इति। अस्यामृच्यदितिदेवतायाः सप्तपुत्रस्वीकारे मार्ताण्ड-परित्यागे च कारणमुच्यते। इयं 'अदितिः', देवी 'सप्तभिः पुत्रैः', निमित्तभूतैस्तदुत्पादनार्थं 'पूर्व्यं युगं' तदुत्पत्तेः पूर्व-कालीनं पतिसंयोगं, 'प्रजायै' प्रजोत्पत्त्यर्थं, 'उपप्रैत्' प्रीति-पूर्वकं प्राप्तवती। एतेषु सप्तसु पुत्रेषूत्पन्नेषु तद्द्वारा प्रजावृद्धि-र्भवतीत्यभिप्रेत्य तैः सह देवलोके गमनं। मार्त्ताण्डाख्यमष्टमं पुत्रं 'पराभरत्' परित्यक्तवतीति यत् तत् 'मृत्यवे' मृत्यु-निमित्तं, मार्त्ताण्डो हि मृत्योरेव हेतुर्न प्रजाभिवृद्धेः। मार्त्ताण्डो ह्यादित्यः, स चाण्डभेदेनोत्पद्यते। तथा हि छन्दोगास्तदाण्डं निरवर्त्तत। तत् संवत्सरस्य मात्रामशायत। तन्निरभिद्यतेत्युपक्रम्याम्ने समामनन्ति। अथ यत् तदजायत सोऽसावादित्य इति। शब्दनिर्वचनमपि तादृशमेव। मृतमण्डं यदीयजन्मना स मार्त्ताण्ड इति। तथा च स्मर्यते। मृतेऽण्डे जायते यस्मान्मार्त्ताण्डः स उदाहृत इति। अतोयं मृत्यवे मृत्युप्रीत्यर्थमेवोपयुज्यते। न त्वभिवृद्ध्यर्थमित्यदितेस्तत्परि-त्यागो युक्तः। 'इति'शब्दो मन्त्रसमाप्तिद्योतनार्थः॥

वरुणश्च। धाता चार्यमा च। अꣳशश्च भगश्च। इन्द्रश्च विवस्वाꣳश्चेत्येते(१०)।(११)हिरण्यगर्भो हꣳसः शुचि-

---

अथ ब्राह्मणवाक्यमुच्यते। (९)"ताननुक्रमिष्यामः"(९) इति। अष्टपुत्रमिति ये पुत्राः सूचिताः 'तान्' पुत्रान्, 'अनु'क्रमेण, वक्ष्यामः॥

कल्पः। मित्रश्च वरुणश्चेत्यष्टौ दिश्या इति। पाठस्तु। (१०)मित्रश्च ० विवस्वाꣳश्चेत्येते"(१०) इति। मित्रादिनामान्येवात्र मन्त्राः। मित्रस्त्वया देवतयाङ्गिरस्वद्ध्रुवेत्युपधानं द्रष्टव्यं। 'इत्येते' मित्रवरुणादयोऽष्टौ पुत्रा उक्ताः॥

अथ मन्त्रचतुष्टयस्य प्रतीकानि दर्शयति। (११)"हिरण्यगर्भो ० तदित्पदमिति"(११) इति। हिरण्यगर्भ इत्ययं मन्त्र ऊर्ध्वा अस्येत्यनुवाके व्याख्यातः। हꣳसः शुचिषदित्ययं मन्त्र इन्द्रस्य वज्रोसीत्यनुवाके व्याख्यातः। ब्रह्मजज्ञानमित्ययं मन्त्रो-ऽभ्यस्थाद्विश्वा इत्यनुवाके व्याख्यातः। तदित्पदमित्ययं मन्त्र उदस्तप्सीत् सवितेत्यनुवाके व्याख्यातः। तत्र हिरण्यगर्भ इति मन्त्रो हिरण्मयपुरुषोपधानार्थः। हंसः शुचिषदिति मन्त्रः पुष्करपर्णोपधानार्थः। ब्रह्मजज्ञानमिति मन्त्रो रुक्मोपधानार्थः। तदित्पदमिति मन्त्रः कूर्मोपधानार्थः। एतदेवाभिप्रेत्य कल्पे निहितं। पुष्करपर्णं हिरण्मयं पुरुषं कूर्ममिति। 'इति'शब्दः प्रतीकसमाप्त्यर्थः॥

षत्। ब्रह्मजज्ञानं तदित्पदमिति[११]। [१२]गर्भः प्राजापत्यः। अथ पुरुषः सप्तपुरुषः[१२] ॥ ३ ॥

अमून्दिवꣳ, सप्तभिः, एते, चत्वारि च ॥ अनु० १२॥

अथ चतुर्दशोऽनुवाकः।

*[१]योसौ तपन्नुदेति। स सर्वेषां भूतानां प्राणानादायोदेति। मा मे प्रजाया मा पशूनां। मा मम प्रा-

अथ ब्राह्मणमुच्यते। [१२]"गर्भः प्राजापत्यः ० सप्तपुरुषः" [१२]इति। प्रजापतेरयं 'प्राजापत्यः', तादृशः 'गर्भः', पूर्वमुक्तः, हिरण्यगर्भ इति मन्त्रे प्राजापत्यगर्भाभिधानात्। 'अथ' अनन्तरं, उत्तरेणानुवाकेन 'पुरुषः' आदित्याख्यः, प्रतिपाद्यते। स च कीदृशः, 'सप्तपुरुषः' सप्तपुरुषाः किङ्करस्थानीयाः नक्षत्रमासार्द्धमासर्तुसंवत्सराहोरात्राख्यपुरुषा यस्यासौ सप्तपुरुषः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके त्रयोदशोऽनुवाकः॥ १३ ॥

अथ चतुर्दशोऽनुवाकः।

योऽसावित्यनुवाकस्योपधाने विनियोगदर्शनाभिक्षानुसारेणायुष्काम एतेनादित्यमुपतिष्ठेत्। तस्मिन्ननुवाके प्रथमं मन्त्र-

* B चिह्नितपुस्तके "यथास्थानं गर्भिण्यः" इत्यतिरिक्तः पाठः।

णानादायोदगाः[१]। [२]असौ योऽस्तमेति। स सर्वेषां भूतानां प्राणानादायास्तमेति। मा मे प्रजाया मा पशूनां। मा मम प्राणानादायास्तङ्गा[२]। [३]असौ य आपूर्यति। स सर्वेषां भूतानां प्राणैरापूर्यति॥ १॥

मा मे प्रजाया मा पशूनां। मा मम प्राणैरापूरि-

---

माह। [१]"योऽसौ तपन्नुदेति ० प्राणानादायोदगाः"[१] इति। 'योऽसौ' आदित्यः, प्रातःकाले प्राच्यां 'उदेति', 'सः' आदित्यः, 'सर्वेषां' प्राणिनां, 'प्राणान्', 'आदाय' स्वीकृत्य, 'उदेति' आयुःक्षयोपादानेन प्राणानपहरति, सूर्योदये सति पूर्वदिनस्य समाप्तत्वादेकदिनमात्रमायुःक्षीणं भवति। तस्मादेवं प्रार्थयाम हे आदित्य मदीयानां प्रजानां 'पशूनां', च 'मम', च 'प्राणानादाय', उदयं 'मागाः' माप्नुहि। प्राणापहारहेतुमायुःक्षयं मा कुर्वित्यर्थः॥

अथ द्वितीयं मन्त्रमाह। [२]"असौ योऽस्तमेति ० प्राणानादायास्तङ्गा"[२] इति। 'योऽसौ' आदित्यः, सायङ्काले, 'अस्तं', प्राप्नोति 'सः', अप्येकमहः समाप्य तावन्मात्रमायुः क्षपयति। अन्यत् पूर्ववत्॥

अथ तृतीयं मन्त्रमाह। [३]"असौ यः ० प्राणैरापूरिष्ठा"[३] इति। उदेतुं प्रक्रान्तः सूर्यः क्रमेण यावद्यावद्रश्मिः 'आपूर्यते', तावत् प्राणिनामायुः क्षीयते। अन्यत् पूर्ववत्॥

ष्ठा[३] । [४]असौ यो पक्षीयति । स सर्वेषां भूतानां प्रा-
णैरपक्षीयति । मा मे प्रजाया मा पशूनां । मा मम प्रा-
णैरपक्षेष्ठाः[४] । [५]अमूनि नक्षत्राणि । सर्वेषां भूतानां
प्राणैरप प्रसर्पन्ति चोत्सर्पन्ति च । मा मे प्रजाया मा
पशूनां । मा मम प्राणैरप प्रसृपत*मोत्सृपत[५] ॥ २ ॥

---

अथ चतुर्थमाह । [४]"असौ योऽपक्षीयति ० प्राणैरपक्षेष्ठाः" [४] इति । अस्तं प्राप्तुमुपक्रान्तः सूर्यो यावद्यावत् रश्मिभिः क्रमेण क्षीणो भवति तावत् तावत् प्राणिनामायुःक्षयः । अन्यत् पूर्ववत् सर्वत्र योज्यं ॥

अथ पञ्चममाह । [५]"अमूनि नक्षत्राणि ० प्रसृपत मोत्सृपत"[५] इति । 'अमूनि' एतानि, 'नक्षत्राणि', दिवि सञ्चरन्ति तानि सर्वाण्यहनि 'अपसर्पन्ति' अपगतज्योतींषि भूत्वा प्रकर्षेण सञ्चरन्ति । रात्रौ 'च', 'उत्सर्पन्ति' उत्कृष्टज्योतींषि भूत्वा प्रवर्त्तन्ते, तस्मिन्नुभयस्मिन्नपि काले प्राणिनां 'प्राणैः', सहैव प्रवर्त्तन्ते । यावद्यावत् कालातिक्रमः तावत् तावदायुषा क्षीयमाणत्वात् । ततो हे 'नक्षत्राणि', प्रजादीनां 'प्राणैः', सह 'मापसृपत' अहनि अपसर्पणं मा कुरुत, 'मोत्सृपत' रात्रावुत्सर्पण-

---

* (A) चिह्नितपुस्तके अपप्रसृप इत्यस्मात् परं मोत्सृपत इत्यस्मात् पूर्वं "योऽसौ षोडशामूनि द्वादशायं संवत्सरश्चतुर्दश" इति पाठः । स च न मूलान्तरपठितः भाष्यकारसम्मतश्च ॥

(६)इमे मासाश्चार्धमासाश्च। सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोत्सर्पन्ति च। मा मे प्रजाया मा पशूनां। मा मम प्राणैरप प्रसृपत मोत्सृपत(६)। (७)इम ऋतवः। सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोत्सर्पन्ति च। मा मे प्रजाया मा पशूनां। मा मम प्राणैरप प्रसृपत मोत्सृपत(७)। (८)अयꣳ संवत्सरः। सर्वेषां भूतानां प्राणैरप प्रसर्पति चोत्सर्पति च॥ ३॥

मा मे प्रजाया मा पशूनां। मा मम प्राणैरप प्रसृप मोत्सृप(८)। (९)इदमहः। सर्वेषां भूतानां प्राणैरप प्रसर्पति चोत्सर्पति च। मा मे प्रजाया मा पशूनां। मा मम प्राणैरप प्रसृप मोत्सृप(९)। (१०)इयꣳरात्रिः। सर्वेषां भूतानां प्राणैरप प्रसर्पति चोत्सर्पति च। मा मे प्रजाया

---

मपि मा कुरुत। भवदीयप्रजारक्षणनिमित्तमायुःक्षयोमा भूदित्यर्थः॥

अथ षष्ठसप्तममन्त्रावाह। (६)"इमे मासाश्चार्द्धमासाश्च॰ प्रसृपत मोत्सृपत" "इमे ऋतवः॰ प्रसृपत मोत्सृपत"(७) इति। नक्षत्रवाक्यवद्व्याख्येयं॥

अथाष्टममाह। (८)"अयꣳसंवत्सरः॰ प्रसृप मोत्सृप"(८) इति। अत्र संवत्सरशब्दस्यैकवचनान्तत्वात् सर्प प्रसर्पति चैकवचनं। अन्यत् पूर्ववत्॥

मा पशूनां। मा मम प्राणैरप प्रसृप मोत्सृप(१०) ॥ (११)ॐ भूर्भुवः स्वः(११)। (१२)एतद्वो मिथुनं मा नो मिथुनꣳरीढ्वं(१२) ॥ ४ ॥

प्राणैरापूर्यति, उत्सृपत, उत्सर्पति च, उत्सृप द्वे च ४ ॥

उदेत्यस्तमेत्यापूर्यत्यपक्षीयत्यमूनिनक्षत्राणीमे मासा इम ऋतवोयꣳ संवत्सर इदमहरियꣳ रात्रिर्दश ॥

अनु० ॥ १४ ॥

---

अथ नवमदशमौ मन्त्रावाह। (९)"इदमहः ॰ प्रसृप मोत्सृप" (९) (१०)"इयं रात्रिः ॰ रप प्रसृप मोत्सृप"(१०) इति। एतद्वाक्यद्वयं संवत्सरवाक्यवद्व्याख्येयं ॥

अथैकादशं मन्त्रमाह। (११)"ॐ भूर्भुवः स्वः"(११)इति। योयं प्रणवप्रतिपाद्यः परमात्मा स एव लोकत्रयरूप इत्यर्थः ॥

अथ द्वादशमाह। (१२)"एतद्वोमिथुनं ॰ मिथुनं रीढ्वं" (१२) इति। नक्षत्रमासार्द्धमासर्त्तुसंवत्सराहोरात्ररूपा ये सप्त पुरुषाः प्रणवप्रतिपाद्यपरमात्मरूपेणादित्येन सहावस्थानं यद्स्ति तद् 'वः' युष्माकं, 'मिथुनं' सम्बन्धः, उपकार्योपकारकलक्षणः, एतस्य ध्यानेनास्माकमपि 'मिथुनं' स्त्रीपुंसलक्षणं, 'मारीढ्वं' हिंसितं मा कुरुत ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

अथ पञ्चदशोऽनुवाकः ।

(१)अथादित्यस्याष्टपुरुषस्य(१) ।

(२)वसूनामादित्यानाꣳ स्थाने स्वतेजसा भानि(२)।
(३)रुद्राणामादित्यानाꣳस्थाने स्वतेजसा भानि(३)। (४)आ-

---

कल्पः। वसूनां रुद्राणामित्यष्टावुत्तरत इति तदेतदनु-वाकेन सङ्ग्रहरूपेण प्रतिजानीते। (१)"अथादित्यस्याष्टपुरुषस्य"(१) इति। अष्टयोनीमित्यनुवाकोक्तैर्मन्त्रैरिष्टकोपधानानन्तरं वक्ष्यमाणाष्टविधपुरुषेणावस्थितस्यादित्यस्य सम्बन्धिभिर्मन्त्रैरिष्टका उपदध्यादिति शेषः ॥

तत्र प्रथमं मन्त्रमाह। (२)"वसूनामादित्यानां ० स्वतेजसा भानि"(२) इति। पूर्वमृतुप्रकरणे वसन्तो वसुभिः सह प्रत्यक्षवाचा रुद्रगण इत्यादिना ये च रुद्रादयो निर्दिष्टाः, ते सर्वेप्यादित्यस्यैवावतारविशेषाः, तेषाञ्च मन्त्रेषु क्रमेण निर्दिश्यन्ते। अष्टवसुरूपेणावतीर्णा ये आदित्यमूर्त्तिविशेषाः, तेषां 'स्थाने', तिष्ठन्त्यस्मिन्नत्प्रसादलभ्येन स्वकीयेन 'तेजसा', 'भानि' भासमानो भूयासं ॥

अथ द्वितीयमाह। (३)"रुद्राणामादित्यानां ० स्वतेजसा भानि"(३) इति। एकादशरुद्ररूपेणावतीर्णा आदित्यमूर्त्तिविशेषाः। अन्यत् पूर्ववत् सर्वत्र व्याख्येयं ॥

दित्यानामादित्यानाँ स्थाने स्वतेजसा भानि(४)। (५)स-
ताँ सत्यानां। आदित्यानाँ स्थाने स्वतेजसा भानि(५)।
(६)अभिधून्वतामभिघ्नतां। वातवतां मरुतां। आदित्या-
नाँ स्थाने स्वतेजसा भानि(६)। (७)ऋभूणामादित्यानाँ-
स्थाने स्वतेजसा भानि(७)॥ (८)विश्वेषां देवानां। आदि-

---

अथ तृतीयमाह। (४)"आदित्यानां ० स्वतेजसा भानि" (४)इति। द्वादशादित्यरूपेणावतीर्णाः परमात्मरूपादित्यस्य मूर्त्तिविशेषाः॥

अथ चतुर्थमाह। (५)"सतांसत्यानां ० स्वतेजसा भानि"(५) इति। 'सन्तः' सत्पुरुषाः, 'निजावतारेण सर्वलोकसम्प्रतिपन्ना महर्षयः', तेच 'सत्याः' सर्वदा सत्यवादिनः, तादृशाः केचि-दादित्यावतारविशेषाः॥

अथ पञ्चमषष्ठावाह। (६)"अभिधून्वतां ० स्वतेजसा भानि"(६) (७)"ऋभूणामादित्यानां ० स्वतेजसा भानि"(७) इति। चतुष्प्रकरणेऽभिधून्वन्तोऽभिघ्नन्त इत्यादिना मरुद्गणा उक्ताः ते चाभितो धून्वन्ति वृष्टिजलञ्चालयन्ति इतस्ततः कम्पयन्ति मार्गे गच्छतः पुरुषानभिघ्नन्ति आभिमुख्येन ताडयन्ति। तेच 'वात-वन्तः' तीव्रवायुयुक्ता भवन्ति, ते च मरुद्गणा आदित्यावतार-विशेषाः॥

त्यानाꣳस्थाने स्वतेजसा भानि(८)। (९)संवत्सरस्य सवितुः। आदित्यस्य स्थाने स्वतेजसा भानि(९)। (१०)ओंभूर्भुवः स्वः। रश्मयो वो मिथुनं मा नो मिथुनꣳरीढ्वं(१०)॥ १॥

अभूत्सामादित्यानाꣳस्थाने स्वतेजसा भानि षट् च॥ अनु० १५॥

---

अथ सप्तममाह। (८)"विश्वेषां० स्वतेजसा भानि"(८)इति। ये प्रसिद्धास्ते विश्वेदेवा स्तेप्यादित्यावतारविशेषाः॥

अथाष्टममाह। (९)"संवत्सरस्य ० स्वतेजसा भानि"(९) इति। ऋतुप्रकरणे स खलु संवत्सर एतैरिति संवत्सरोऽभिहितः सचादित्यस्यावतारविशेषः॥

अथ सर्वमन्त्रेषु अनुषञ्जनीयं वाक्यद्वयमाह। (१०)"ओंभूर्भुवःस्वः०मिथुनꣳरीढ्वं"(१०) इति। प्रणवप्रतिपाद्यस्य लोकत्रयात्मकस्यादित्यस्य सम्बन्धिनो हे 'रश्मयः', 'वः' युष्माकं, स्वामिनाऽऽदित्येन सह 'मिथुनं' मिथुनवदुपकार्योपकारकभावोस्ति, अतस्तादृशा यूयं 'नः' अस्माकं, स्त्रीपुरुषलक्षणमिथुनं 'मा रीढ्वं' हिंसितं मा कुरुत॥

इति सायनाचार्य्यविरचिते यजुरारण्यके प्रथमप्रपाठके पञ्चदशोऽनुवाकः॥ १५॥

अथ षोडशोऽनुवाकः ।

(१)आरोगस्य स्थाने स्वतेजसा भानि । भ्राजस्य स्थाने स्वतेजसा भानि । पटरस्य स्थाने स्वतेजसा भानि । पतङ्गस्य स्थाने स्वतेजसा भानि । स्वर्णरस्य स्थाने स्वतेजसा भानि । ज्योतिषीमतस्य स्थाने स्वतेजसा भानि । विभासस्य स्थाने स्वतेजसा भानि । कश्यपस्य स्थाने स्वतेजसा भानि । ओं भूर्भुवः स्वः । आपोवो मिथुनं मा नोमिथुनꣳरीढ्वं(१) ॥ १ ॥

आरोगस्य दश ॥ अनु० १६ ॥

---

कल्पः । आरोगस्येत्यष्टावुपरिष्टादिति । आरोगो भ्राजः पटरः पतङ्ग इत्यादीन्यष्टसूर्यनामानि मन्त्ररूपाणि पूर्वमाम्नातानि इदानीं तेनैव क्रमेणाष्टौ मन्त्रान्तराण्याम्नायन्ते । तानि दर्शयति । (१)"आरोगस्य ० मिथुनं रीढ्वं"(१) इति । आरोगनामको यः प्रथमः सूर्यः तस्य 'स्थाने,' तिष्ठन्नहन्तत्प्रसादलब्धेन स्वकीयेन 'तेजसा', भासमानो भूयासं । प्रणवप्रतिपाद्यो लोकत्रयात्मको यः सूर्यः तेन सह 'आपः', 'वः', युष्माकम्, उपकार्योपकारकभावोस्ति अतस्तथाविधा यूयं अस्मदीयं 'मिथुनं', हिंसितं मा कुरुत । एतच्च वाक्यद्वयं पूर्ववत् सर्वं मन्त्रशेषः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

अथ सप्तदशोऽनुवाकः ।

(१)अथ वायोरेकादश पुरुषस्यैकादशस्त्रीकस्य(१) । (२)प्रभ्राजमानानाꣳ रुद्राणाꣳस्थाने स्वतेजसा भानि व्यवदातानाꣳ रुद्राणाꣳस्थाने स्वतेजसा भानि । वासुकिवैद्युतानाꣳ रुद्राणाꣳस्थाने स्वतेजसा भानि । रजतानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । परुषाणाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । श्यामानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । कपिलानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । अतिलोहितानाꣳ रुद्राणाꣳस्थाने स्वतेजसा भानि । ऊर्ध्वानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि ॥ १ ॥

---

कल्पः । प्रभ्राजमानानामित्येकादशप्रभ्राजमानानामिति चैकादशमध्य इति । तेषां मन्त्राणां सङ्ग्रहरूपेण ब्राह्मणवाक्येन प्रतिज्ञां दर्शयति । (१)"अथ वायोरेकादशपुरुषस्यैकादशस्त्रीकस्य"(१) इति । एक एव वायुः प्रभ्राजमानाद्येकादशरुद्रमूर्त्तिरूपेण प्रभ्राजमानाद्येकादशस्त्रीमूर्त्तिरूपेणाप्यवतीर्णः तस्य सम्बन्धिनो मन्त्रा उच्यन्त इति शेषः । तान् मन्त्रान् दर्शयति । (२)"प्रभ्राजमानानाꣳ • मासोमिथुनꣳरौद्रं" (२) इति । प्रभ्रा-

(१)अवपतन्तानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि।
वैद्युतानाꣳ रुद्राणाꣳस्थाने स्वतेजसा भानि। प्रभ्राज-
मानीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि। व्यव-
दातीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि। वासु-
किवैद्युतीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि।
रजतानाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि। परु-
षाणाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि। श्यामा-
नाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि। कपिलानाꣳ
रुद्राणीनाꣳ स्थाने स्वतेजसा भानि। अतिलोहिती-
नाꣳ रुद्राणीनाꣳस्थाने स्वतेजसा भानि॥ ऊर्ध्वानाꣳ
रुद्राणीनाꣳ स्थाने स्वतेजसा भानि। अवपतन्तीनाꣳ
रुद्राणीनाꣳ स्थाने स्वतेजसा भानि। वैद्युतीनाꣳ रु-
द्राणीनाꣳ स्थाने स्वतेजसा भानि। ओं भूर्भुवः स्वः।
रूपाणि वो मिथुनं मा नो मिथुनꣳ रीढ्वं(२)॥ २॥

---

जमानमानामको वायुसम्बन्धी यो रुद्रविशेषः तस्य बहवो मूर्त्ति-
विशेषाः। अतः प्रभ्राजमानानामिति बहुवचनं। एवं सर्वत्र
द्रष्टव्यं। 'रूपाणि' स्त्रीपुरुषविशेषाः, हे 'रूपाणि', 'वः' युष्माकं,

ऊर्ध्वानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि, अतिलोहितीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि, पञ्च च ॥ अनु० ॥ १७ ॥

अथ अष्टादशोऽनुवाकः ।

(१)अथाग्नेरष्टपुरुषस्य(१) । (२)अग्नेः पूर्वदिश्यस्य स्थाने स्वतेजसा भानि । जातवेदस उपदिश्यस्य स्थाने स्व-

---

सम्बन्धि यत् 'मिथुनं', तत्प्रसादादस्मदीयमपि 'मिथुनं', अहिंसितं भवतु । अयञ्च सर्वमन्त्रशेषः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

अथ अष्टादशोऽनुवाकः ।

कल्पः । अग्नेः पूर्वदिश्यस्येत्यष्टौ दिश्या इति । तत्र सङ्ग्रहरूपेण ब्राह्मणवाक्येन मन्त्रान् प्रतिजानीते । (१)"अथाग्नेरष्टपुरुषस्य"(१) इति । अग्निजातवेदःप्रभृतयः पुरुषा मूर्त्तिविशेषाः यस्याग्नेः सन्ति सोयम्'अष्टपुरुषः',तस्य। 'अग्नेः',सम्बन्धिनो मन्त्राः पूर्वोक्तवायुसम्बन्धिद्दिविधेकादशरुद्ररुद्राणमन्त्ररमुच्यन्ते। तान्मन्त्रान् दर्शयति। (२)"अग्नेः पूर्वदिश्यस्य • मा नो मि-

तेजसा भानि। सद्योजसो दक्षिणदिश्यस्य स्थाने स्वतेजसा भानि। अजिराप्रभव उपदिश्यस्य स्थाने स्वतेजसा भानि। वैश्वानरस्यापरदिश्यस्य स्थाने स्वतेजसा भानि। नर्यापस उपदिश्यस्य स्थाने स्वतेजसा भानि। पङ्क्तिराधस उदग्दिश्यस्य स्थाने स्वतेजसा भानि। विसर्पिण उपदिश्यस्य स्थाने स्वतेजसा भानि। ओं भूर्भुवःस्वः॥ दिशो वो मिथुनं मा नो मिथुनꣳ रीढ्वं(२)॥ १॥

स्वः, एकञ्च॥ अनु०॥ १८॥

एतद्ब्रह्मय आपोरूपाणि दिशः पञ्च॥

---

थुनं रीढ्वं"(२) इति। पूर्वा दिक् प्राची तस्यां भवः 'पूर्वदिश्यः', तथाविधोऽग्निनामको यो मूर्त्तिविशेषः तस्य 'स्थाने', तिष्ठत्स्वत्प्रसादात्मीयेन 'स्वतेजसा', भासमानो भूयासं। उपदिगाग्नेयी तस्यां भव 'उपदिश्यः' 'जातवेदः'नामकः। एवं सर्वत्र योज्यं। हे 'दिशः', 'वः' युष्माकम्, अग्निना स्वामिना सह उपकार्योपकारकभावः। अतो युष्मत्प्रसादेनास्मदीयं 'मिथुनं', अहिंसितं भवतु। सोयं सर्वमन्त्रशेषः। अथवा ओमित्यादिः सर्वत्र यजमानाभिमन्त्रणमन्त्रो द्रष्टव्यः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके अष्टादशोऽनुवाकः॥ १८॥

अथ एकोनविंशोऽनुवाकः ।

(१)दक्षिणपूर्वस्यां दिशि विसर्पी नरकः । तस्मान्नः परिपाहि(१) । (२)दक्षिणापरस्यां दिश्यविसर्पी नरकः । तस्मान्नः परिपाहि(२) । (३)उत्तरपूर्वस्यां दिशि विषा-

---

कल्पः । दक्षिणपूर्वस्यामिति चतस्रो नरकवतीर्यथालिङ्गमिति । तत्र प्रथमं मन्त्रमाह । (१)"दक्षिण ० परिपाहि"(१) इति । दक्षिणस्याः पूर्वस्याश्चान्तरालवर्त्तिनी दिगाग्नेयी तस्यां 'विसर्पि'नामकः 'नरकः', विद्यते इष्टके 'तस्मात्' नरकात्, 'नः' अस्मान्, 'परिपाहि' ॥

अथ द्वितीयमाह । (२)"दक्षिणापरस्यां ० परिपाहि"(२) इति । नैर्ऋती 'दक्षिणापरा', तस्यां 'अविसर्पी',नाम 'नरकः' । पूर्वंच वेदनातिशयात् विविधमितस्ततः सर्पतीति व्युत्पत्त्या विसर्पी, इहतु दुःखस्यात्यन्तमाधिक्याद्विसर्पितुमपि न क्षमते तस्मात् 'अविसर्पी' । शेषं पूर्ववत् ॥

अथ तृतीयमाह । (३)"उत्तरपूर्वस्यां ० परिपाहि"(३) इति । ऐशानी दिक् 'उत्तरपूर्वा', तत्र हि 'विषादि'संज्ञकः 'नरकः' । किमर्थमस्माभिः पापं कृतमिति जन्तवो विषादं कुर्वन्ति तस्मादयं 'विषादी' । अन्यत् पूर्ववत् ॥

अथ चतुर्थमाह । (४)"उत्तरापरस्यां ० परिपाहि"(४) इति । वायवी दिक् 'उत्तरापरा', तत्र 'अविषादी नरकः',

दी नरकः। तस्मान्नः परिपाहि(३) । (४)उत्तरापरस्यां दिश्यविषादी नरकः। तस्मान्नः परिपाहि(४)। (५)आयस्मिन् सप्त वासवा इन्द्रियाणि शतक्रतवित्येते(५)॥ १ ॥

दक्षिणपूर्वस्यां नव ॥ अनु० ॥ १९ ॥

अथ विंशोऽनुवाकः।

(१)इन्द्रघोषा वो वसुभिः पुरस्तादुपदधतां। मनो

---

दुःखातिशयाज्जन्तवो विषादमपि कर्त्तुं न क्षमन्ते तस्माद-विषादी। शेषं पूर्ववत्॥

कल्पः। आयस्मिन्निन्द्रियाणि शतक्रतविति द्वे इति। तयो मंत्रयोः प्रतीके दर्शयति। (५)"आयस्मिन् ० शतक्रतवित्येते"(५) इति। 'इत्येते' ये ऋचौ ताभ्यामिष्टके उपदध्यादित्यर्थः। एतच्चोभयमिद्रं वो विश्वतस्परीत्यनुवाके व्याख्यातं॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके एकोनविंशोऽनुवाकः॥ १९ ॥

अथ विंशोऽनुवाकः।

कल्पः। इन्द्रघोषा वः संज्ञानमिति षड् दिश्या इति। पाठस्तु।

अवस वोवः पितृभिर्दक्षिणत उपदधतां। प्रचेता वोरुद्रैः पश्चादुपदधतां। विश्वकर्मा व आदित्यैरुत्तरत उपदधतां। त्वष्टा वो रूपैरुपरिष्टादुपदधतां। सञ्ज्ञानं वः पश्चादिति[१]। [२]आदित्यः सर्वोऽग्निः पृथिव्यां। वायुरन्तरिक्षे। सूर्यो दिवि। चन्द्रमा दिक्षु॥ नक्षत्राणि स्वलोके[२]। एवा ह्येव। एवा ह्यग्ने। एवाहि वा-

---

[१]"इन्द्रघोषा वो०पश्चादिति"[१] इति। हे अरूपा इष्टकाः 'वः' युष्मान्, 'पुरस्तात्' पूर्वस्यां दिशि, 'वसुभिः', देवैः सहिताः 'इन्द्रघोष'नामका देवाः 'उपदधतां'। 'पितृभिः', सहिताः 'मनोजवसः', देवाः 'वः' युष्मान्, दक्षिणस्यां दिशि 'उपदधतां'। एवं सर्वत्र योज्यम्। 'संज्ञानं' समीचीनज्ञानयुक्तं देवतास्वरूपं, 'वः' युष्मान्, 'पश्चात्', उपदधातीतिशेषस्य सूचनार्थः 'इति'शब्दः प्रयुक्तः। त एते षण्मन्त्राः॥

कल्पः। आदित्यः सर्व इति पञ्च दिश्या इति। पाठस्तु। [२]"आदित्यः ० नक्षत्राणि स्वलोके"[२] इति। आदित्यात्मकः 'सर्वः', अपि 'अग्निः', 'पृथिव्यां', उपदधातु। एवं वाय्वादिषु योज्यं॥

यो। एवाहीन्द्र। एवाहि पूषन्। एवा हि देवाः(१) ॥ १ ॥
दिक्षु, सप्त च ॥ अनु० ॥ २० ॥

---

कल्पः। एवाह्येवेति षड् दिश्या इति। पाठस्तु। (१)"एवा-ह्येव ० एवाहि देवाः"(१) इति। ईङ्गताविति धातोरुत्पन्न एव शब्दः, हे 'एव' अयनशील आदित्य, 'एवाः' एतव्याः प्राप्तव्याः, कामास्ते सर्वे सन्तीति शेषः। 'हि'शब्देनादित्यस्य सर्वकामहेतुत्वप्रसिद्धिरुच्यते। एवमुत्तरत्रापि योज्यं॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके विंशोऽनुवाकः॥ २० ॥

---

अथ एकविंशोऽनुवाकः।

(१)आपमापामपः सर्वाः। अस्मादस्मादितोमुतः। अग्निर्वायुश्च सूर्यश्च। सहसञ्चस्करर्धिया। वायवश्चा-

---

कल्पः। आपमापामिति नवोपरिष्टादिति। पाठस्तु। (१)"आपमापामपः ० मातव्योमसंदृशी"(१) इति। अत्र केतव इति मन्त्रं विहायान्येऽष्टौ मन्त्राः प्रथमानुवाके व्याख्याताः।

रश्मिपतयः । मरीच्यात्मानो अद्रुहः । देवीर्भुवनसूवरीः । पुत्रवत्वाय मे सुत । महानाम्नीर्महामानाः । महसो महस स्वः ॥ १ ॥

देवीः पर्जन्यसूवरीः । पुत्रवत्वाय मे सुतः । अपाश्न्युष्णिमपा रक्षः । अपाश्न्युष्णिमपारघं । अपाघ्राममपचावर्तिं । अपदेवीरितो हित । वज्रं देवीरजीताश्श्च । भुवनं देवसूवरीः । आदित्यानदितिं देवीं । योनिनोर्ध्वमुदीषत ॥ २ ॥

भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाश्सस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु । केतवो अरुणासश्च । ऋषयो वातरशनाः ॥ प्रतिष्ठाश्शतधा हि । समाहिता-

---

पुनरप्युपधानार्थं मन्त्रपाठः । केतवरुणवातरशनशब्दा ऋषिसङ्घानाचक्षते । ते सर्वेऽपि ऋषिसङ्घाः 'समाहितासः' अप्रमत्ताः सन्तः, 'शतधा हि' शतसङ्ख्याकेनापि प्रकारेण, 'प्रतिष्ठां' स्वैर्य-

सो सहस्रधार्यसं। शिवानः शन्तमा भवन्तु। दिव्या आप ओषधयः। सुमृडीकासरस्वती। मातेव्योम-संदृशि॥ ३॥

स्वः, उदीषत, वातरशनाः, षट् च॥ अनु० ॥२१॥

अथ द्वाविंशोऽनुवाकः।

(१)योऽपां पुष्पं वेद। पुष्पवान् प्रजावान् पशुमान् भवति। चन्द्रमा वा अपां पुष्पं। पुष्पवान् प्रजावान् प-

---

हेतुं 'सहस्रधायसं' सहस्रसङ्ख्याकस्य फलस्य धारयित्रीं, इष्ट-कामुपदधात्विति शेषः॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके एकविंशोऽनुवाकः॥ २१॥

अथ द्वाविंशोऽनुवाकः।

एतावत्स्वनुवाकेषूपधानमन्त्राः प्रायेणाभिहिताः, अतः-परमिष्टकानां ब्राह्मणमुच्यते। तत्रादौ तावदापो बहुधा प्रशंस्यन्ते। तत्र प्रथमां प्रशंसामाह। (१)"योपां पुष्पं ० य एवं

शुमान् भवति। य एवं वेद[१]। [२]योऽपामायतनं वेद। आयतनवान् भवति। अग्निर्वा अपामायतनं। आयतनवान् भवति। योऽग्नेरायतनं वेद ॥ १ ॥

आयतनवान् भवति। आपो वा अग्नेरायतनं। आयतनवान् भवति। य एवं वेद[२]। [१]योऽपामायतनं वेद।

---

वेद"[१] इति। अमृतमयं हि चन्द्रमण्डलं। अतो जलकार्यत्वादपां पुष्पस्थानीयं। एतस्य वेदिता स्वयं भोगार्थचम्पकबकुलादिपुष्पैः पुत्रादिप्रजया गवादिपशुभिश्च समृद्धो भवति। वेदने प्ररोचनार्थमादौ फलकथनं, उपसंहारार्थं पुनःकथनं ॥

अथ द्वितीयां प्रशंसामाह। [२]"योऽपामायतनं • य एवं वेद"[२] इति। सृष्टिश्रुतावग्नेराप इति अग्नेर्जलकारणत्वाभिधानादग्निरपामाश्रयः। अत्रापि प्ररोचनार्थमादौ फलकथनं। उपसंहारार्थं पुनरप्यायतनवानित्यभिधानं। तत्र य एवं वेदेत्यध्याहरणीयं। यद्यप्युत्पत्तावपामग्निकार्यत्वेपि ब्रह्माण्डावान्तरसृष्टौ आपो वा इदमासन् सलिलमासीदित्यादिवाक्येनापां सर्वकारणत्वाभिधानाद्ब्रह्माण्डान्तःपातिनोऽस्यापि अग्नेर्जलकार्यत्वादपामप्याधारत्वं। अत्रापि प्ररोचनार्थमुप-

आयतनवान् भवति । वायुर्वा अपामायतनं । आयतनवान् भवति । यो वायोरायतनं वेद । आयतनवान् भवति ॥ २ ॥

आपो वै वायोरायतनं । आयतनवान् भवति । य एवं वेद[३] । [४]योऽपामायतनं वेद । आयतनवान् भवति । असौ वै तपन्नपामायतनं । आयतनवान् भवति । योऽमुष्य तपत आयतनं वेद । आयतनवान् भवति । आपो वा अमुष्य तपत आयतनं ॥ ३ ॥

---

संहारार्थं द्विःफलकथनं । सेयं जलाग्न्योः परस्पराधारत्वोक्तिः । द्वितीया प्रशंसा । एवमुत्तरत्र द्रष्टव्यं ॥

अथ तृतीयां प्रशंसामाह । [३]"योऽपामायतनं वेद • य एवं वेद"[३] इति । महाभूतेषु वायोरग्निः अग्नेराप इति श्रुतेः । अग्निद्वारा वायोरप्कारणत्वादायतनत्वं, अपां त्ववान्तरसृष्टौ पूर्वोक्तन्यायेन वाय्वाधारत्वं । अन्यत् पूर्ववद्व्याख्येयं ॥

अथ चतुर्थीमाह । [४]"योऽपामायतनं • य एवं वेद"[४] इति । योऽसावादित्यस्तपन्नुपलभ्यते सोऽयमपामाधारः । आदित्याज्जायते वृष्टिरिति जलकारणत्वस्मृतेः अपाञ्च पूर्ववदादित्याधारत्वं द्रष्टव्यं ॥

आयतनवान् भवति। य एवं वेद[४]। [५]योपामायतनं वेद। आयतनवान् भवति। चन्द्रमा वा अपामायतनं। आयतनवान् भवति। यश्चन्द्रमस आयतनं वेद। आयतनवान् भवति। आपो वै चन्द्रमस आयतनं। आयतनवान् भवति॥ ४॥

य एवं वेद[५]। [६]योपामायतनं वेद। आयतनवान् भवति। नक्षत्राणि वा अपामायतनं। आयतनवान् भवति। यो नक्षत्राणामायतनं वेद। आयतनवान् भवति। आपो वै नक्षत्राणामायतनं। आयतनवान् भवति। य एवं वेद[६]॥ ५॥

---

अथ पञ्चमीमाह। [५]"योपामायतनं ० य एवं वेद"[५] इति। तुहिनरूपाणां किरणानां चन्द्रजन्यत्वाच्चन्द्रमसो जलाधारत्वं॥

अथ षष्ठीमाह। [६]"योपामायतनं वेद ० य एवं वेद"[६] इति। पुष्याश्लेषादिषु महानक्षत्रेषु वर्त्तमानेषु वृष्ट्याधिक्यदर्शनान्नक्षत्राणामबाधारत्वं॥

अथ सप्तमीमाह। [७]योपामायतनं वेद ० य एवं वेद"[७] इति। पर्जन्याख्यस्य मेघस्य जलाधारत्वं प्रसिद्धं॥

(७)योऽपामायतनं वेद। आयतनवान् भवति। पर्जन्यो वा अपामायतनं। आयतनवान् भवति। यः पर्जन्यस्यायतनं वेद। आयतनवान् भवति। आपो वै पर्जन्यस्यायतनं। आयतनवान् भवति। य एवं वेद(७)। (८)योऽपामायतनं वेद॥ ६॥

आयतनवान् भवति। संवत्सरो वा अपामायतनं। आयतनवान् भवति। यः संवत्सरस्यायतनं वेद। आयतनवान् भवति। आपो वै संवत्सरस्यायतनं। आयतनवान् भवति। य एवं वेद(८)। (९)योऽप्सु नावं प्रतिष्ठितां वेद। प्रत्येव तिष्ठति॥ ७॥

---

अथाष्टमीमाह। (८)"योऽपामायतनं वेद ० य एवं वेद"(८) इति। वर्षर्त्तुद्वारा संवत्सरस्य जलाधारत्वं॥

अथ नवमीमाह। (९)"योऽप्सुनावं ० तदेषाभ्यनूक्ता"(९) इति। 'यः' पुमान्, 'अप्सु', 'प्रतिष्ठितां' स्थैर्येणावस्थितां, 'नावं', 'वेद'। स स्वयं लोके प्रतिष्ठायुक्तो भवति। कासौ प्रतिष्ठिता नौरिति सेयमुच्यते। 'इमे वै' दृश्यमाना एव, भूरादयः 'लोकाः', 'अप्सु', स्थैर्येणावस्थिताः नौस्थानीयाः। अतः सर्वलोकाधारभूता आप इति वेदनेन प्रतिष्ठितप्रा-

इमे वै लोका अप्सु प्रतिष्ठिताः। तदेषाभ्यनूक्ता[९]।
[१०]अपाꣳ रसमुद्यꣳसन्। सूर्ये शुक्रꣳसमाभृतं।
अपाꣳ रसस्य यो रसः। तं वो गृह्णाम्युत्तममिति[१०]।

---

भिः। नद्यादिषु परतीरगमनाय जनैर्या नौ सम्पाद्यते सा-जले प्रतिष्ठिता न भवति। गमनागमनाभ्यामुन्मुखत्वात्। सर्वा लोकसमूहरूपा तु नौर्न कदाचिदपि चलति किं त्वप्सु स्थैर्येणावतिष्ठते। आवरणसहितं ब्रह्माण्डं घनोदाख्ये महा-जलेऽवतिष्ठत इति हि पौराणिकप्रसिद्धिः। तत् तस्मिन् सर्वजगदाधारभूता आप इत्येवं रूपेऽर्थे काचिदृक् 'अभ्य-नूक्ता', शाखान्तरे समाम्नानात् तामेतामृचं दर्शयति। "(१०) अपाꣳ • गृह्णाम्युत्तममिति"(१०) इति। योऽयम् 'अपां', 'रसः' सारः, तं रसमभिलक्ष्य 'उद्यन् सन्' सर्वे लोका उद्गताः। तस्मादेव रसादुत्पद्यतेऽस्मिन्नेवावतिष्ठत इत्यर्थः। कीदृशं रसं, 'सूर्ये' आदित्यमण्डले, वृष्टिजननाय 'समा-भृतं' सम्पादितं, अत एव 'शुक्रं' निर्मलं, 'अपां रसस्य' त्रैलोक्यरूपस्योदकसारस्य, तदुत्तमः 'रसः' सोमरूपः, हे आपो युष्मदीयं 'तं' 'उत्तमं', रसं, 'गृह्णामि' तेषु तेषु स्वीकरोमि, 'इति'शब्दो मन्त्रसमाप्त्यर्थः, अनेन मन्त्रेण का-चिदिष्टकोपधेया॥

(११)इमे वै लोका अपाꣳरसः। तेमुष्मिन्नादित्ये समाभृताः(११)। (१२)आनुदघ्नीमुत्तरवेदीं खात्वा अप पूरयित्वा गुल्फदघ्नं॥ ८॥

पुष्करपर्णैः पुष्करदण्डैः पुष्करैश्च सꣳस्तीर्य। तस्मिन्

---

तथाच बौधायन आह। अपाꣳरसमित्येकेतिमन्त्रस्य तात्पर्यं दर्शयति। "(११)इमे वै लोकाः॰समाभृताः"(११) इति। य एते पृथिव्यादयः 'लोकाः', ते सर्व्वेऽपि 'अपां', मध्ये सारभूताः सर्व्वलोकगर्भिताः। ब्रह्माण्डगोलकरूपा पृथिवी क्षीरमध्ये मण्डमिव जलमध्ये घनीभूता। तथाच वाजसनेयिन आमनन्ति। यदपां शर आसीत्तत्समाहन्यत सा पृथिव्यभवदिति। 'ते' च उदकसारभूता लोकाः 'अमुष्मिन्' दृश्यमान आदित्यमण्डले 'समाभृताः' सम्यगाश्रिताः। आदित्यस्य वृष्टिद्वारेण सर्व्वलोकस्थितिहेतुत्वात्। तदेवं योऽपां पुष्पमित्यारभ्यामुष्मिन्नादित्ये समाभृता इत्यन्तेन ग्रन्थेनेष्टकोपधानार्थमपां बहुधा प्रशंसा कृता॥

अथ प्रयोगं विधत्ते। "(१२)आनुदघ्नीमुत्तरवेदीं॰ समाधाय"(१२) इति। तत्र सावित्रचयनवद्द्रथचक्रं परिलिख्य तत्र जानुप्रमाणाम् 'उत्तरवेदीं खात्वा', तां खातामुत्तरवेदीं 'गुल्फदघ्नं', यथा भवति तथा जलैः पूरयित्वा तत्र समादौ

विज्ञायसे। अग्निं प्रणीयोपसमाधाय[११]। [१२]ब्रह्म-वादिनो वदन्ति। कस्मात् प्रणीतेयमग्निश्चीयते।

---

पक्षपत्रैः सञ्छाद्य तत उपरि पत्ररहितैः केवलैः पक्षदण्डैः सञ्छाद्य ततोऽप्युपरि मूलदण्डपत्रसहितैः कृत्स्नैः पक्षैः सञ्छाद्य 'तस्मिन् विज्ञायसे', तत् तत्रापि तस्य मन्त्रकस्य उपरिकर्मानुगुणमग्नेः प्रणयनं कृत्वा तत्र 'अग्निमुपसमाधाय', तस्याग्नेः परित इष्टका उपदध्यादिति वक्ष्यमाणेनान्वयः॥

अथाक्षेपसमाधानाभ्यां तमिमं प्रयोगं समर्थयते। "[१२]ब्रह्मवादिनो •उपदधाति"[१२] इति। अन्यस्मरेभ्योऽस्य वैलक्षण्यं दर्शयितुं 'ब्रह्मवादिनः',अत्र पर्यनुयोगमाहुः। इतरत्र हि चयने सम्पूर्णे सति पश्चादग्निः प्रणीयते, अत्र तु कस्मात् कारणात् मन्त्रकस्योपरि वह्नौ प्रणीते सति पश्चादिष्टकाभिः'अयम्' आरुणकेतुकः, 'अग्निश्चीयते'। मन्त्रकन्तु बौधायने दर्शितम्। दीर्घदा ऊतिर्मञ्चं कृत्वा पृष्ठो द्विवीति पुरीषव्यूहनमिति। अतोऽस्य मन्त्रकस्योपर्याकाशेऽग्निप्रणयनादूर्ध्वं पुनरिष्टकोपधानमितरचयनावैलक्षण्यादयुक्तमिति ब्रह्मवादिनामाक्षेपाभिप्रायः। तस्याक्षेपस्योत्तरं साप्रणीत इत्यादिनोच्यते। अद्भिः सह वर्त्तत इति सापः यस्मादयं जलसहितस्तस्मादयमिष्टकाचयनरूपोऽग्निरङ्गाररूपे वह्नौ प्रणीते सति पश्चाच्चेतव्यः अप्सु श्वयं चीयत इत्यनेन जलसहितत्वमेव स्पष्टीक्रियते। आदावुत्तरवेद्यामद्भिः

सा प्रणीतेयमप्सु त्वयं चीयते। असौ भुवनेऽप्यनाहिताग्निरेताः। तमभित एता अबीष्टका उपदधाति(१२)। (१४)अग्निहोत्रे दर्शपूर्णमासयोः। पशुबन्धे चातुर्मास्येषु ॥ ६ ॥

अथो आहुः। सर्वेषु यज्ञक्रतुष्विति(१४)।

---

पूरणं, ततः पुष्करपर्णादिभिश्छादनं, ततो मण्डूकस्योपरि वह्निप्रणयणं, एवं सत्यप्स्वेवायं प्रणीतो भवति। इतरस्त्वग्निर्नाप्सु प्रणीयते, तस्मादितरवैलक्षण्यात् प्रणयनादूर्द्धमबीष्टकोपधानं कर्त्तव्यं। पश्चात् प्रणिधानाभावे सति 'असौ' अग्निः, परितो रक्षकाभावेन 'भुवने' देवयजनादन्यस्मिन् लोके, 'अपि', गत्वा 'अनाहिताग्निः', सन्नेवागमिष्यति। इतराग्नयो जलभयाभावाद्देवयजन एव तिष्ठन्ति, अयन्तु जलाद्भीतः सन् बहिरपि गमिष्यति। 'एताः' इति शब्दः उत्सृज्य गमिष्यतीत्यस्मिन्नर्थे वर्त्तते। अतो बहिर्गमनं माभूदित्येवमर्थं 'तं' प्रणीतमग्निम्, 'अभितः' सर्वतः, रक्षार्थम् 'एता अबीष्टकाः', उपदध्यात्। तदेवमाक्षेपसमाधानाभ्यामग्निं प्रणीयोपसमाधाय तमभित एता अबीष्टका उपदधातीत्ययमर्थ उपपादितः॥

अथायमारुणकेतुकोऽग्निः कस्मिन् कर्मण्यङ्गभूत इत्याकाङ्क्षायामङ्गीनि कर्माणि दर्शयति। "(१४)अग्निहोत्रे ० क्रतुष्विति"(१४) इति। अग्निहोत्रादिविषयत्वेन सङ्कोचो माभूदिति सोमयागविषयत्वमप्यभिप्रेत्य पक्षान्तरोपन्यासः॥

(१५)एतद्ध स्म वा आहुः शण्डिलाः। कमग्निं चिनुते। सत्रियमग्निं चिन्वानः। संवत्सरं प्रत्यक्षेण(१५)। (१६)कमग्निं चिनुते। सावित्रमग्निं चिन्वानः। अमुमादित्यं प्रत्यक्षेण(१६)। (१७)कमग्निं चिनुते॥ १०॥

नाचिकेतमग्निं चिन्वानः। प्राणान् प्रत्यक्षेण(१७)।

---

अथ प्रश्नोत्तरपर्यायैः सप्तभिरारुणकेतुकस्याग्नेरधिकफलत्वं वक्तुं प्रथमं प्रश्नोत्तरपर्यायं दर्शयति। (१५)एतद्ध स्म ० प्रत्यक्षेण(१५) इति। शण्डिलो नाम कश्चिन्महर्षिः तस्य वंशे समुत्पन्नाः सर्वे 'शण्डिलाः', ते वै तदारुणकेतुकफलं निश्चितुं परस्परमेवं 'आहुः', 'ह स्म वै' इति निपातत्रयस्याप्येक एवार्थः। तत्र कैश्चिदेवं पृच्छ्यते। 'सत्रियं' सत्रे भवमग्निं, यः 'चिनुते', सोऽयं 'कमग्निं' किम्फलमग्निं, 'चिनुते', इति। तत्राभिज्ञैरुत्तरमुच्यते। 'प्रत्यक्षेण' मुख्यया वृत्त्या, 'संवत्सरं' संवत्सरप्राप्तिफलकमग्निं, चिनुत इत्युत्तरं॥

अथ द्वितीयं पर्यायं दर्शयति। (१६)"कमग्निं ० अमुमादित्यं प्रत्यक्षेण"(१६) इति। अनुपचारेणादित्यप्राप्तिफलकः 'सावित्रोऽग्निः'॥

तृतीयं पर्यायं दर्शयति। (१७)"कमग्निं चिनुते ० प्राणान् प्रत्यक्षेण"(१७) इति। यथा सावित्रस्यादित्यरूपत्वम् एष वाव सावित्रो य एष तपतीति श्रुत्या अवगतं। एवम्, अयं वायवः पवते, सोऽग्निर्नाचिकेत इति श्रुत्या नाचिकेतस्य वायुरूपत्वावगमात् तच्चयनेन वायुरूपप्राणप्राप्तिः॥

(१८)कमग्निं चिनुते। चातुर्होत्रचियमग्निं चिन्वानः। ब्रह्म प्रत्यक्षेण(१८)। (१९)कमग्निं चिनुते। वैश्वसृजमग्निं चिन्वानः। शरीरं प्रत्यक्षेण(१९)। (२०)कमग्निं चिनुते। उपानुवाक्यमाशुमग्निं चिन्वानः॥ ११ ॥

इमान् लोकान् प्रत्यक्षेण(२०)। (२१)कमग्निं चिनुते। इममारुणकेतुकमग्निं चिक्यान इति। य एवासौ।

---

चतुर्थं पर्यायं दर्शयति। (१८)"कमग्निं ० ब्रह्म प्रत्यक्षेण"(१८) इति। ब्रह्म वै चतुर्होतार इत्युक्तत्वाद्ब्रह्मप्राप्तिः। 'ब्रह्म'शब्देन वेदपुरुष उच्यते॥

पञ्चमं पर्यायं दर्शयति। (१९)कमग्निं ० शरीरं प्रत्यक्षेण"(१९) इति। 'शरीरं' हिरण्यगर्भस्य देहं॥

षष्ठं पर्यायं दर्शयति। (२०)"कमग्निं ० लोकान् प्रत्यक्षेण"(२०) इति। यदेकेन संस्थापयतीत्यादिकं, उपानुवाक्या, काण्डं, तच प्रोक्तोऽग्निरपि 'उपानुवाक्यः', स च 'आशुः' शीघ्रं, महाफलित्यर्थः। अतएव तच्चयनेन सर्वलोकप्राप्तिः॥

सप्तमं पर्यायं दर्शयति। (२१)"कमग्निं ० तमिति"(२१) इति। इमञ्च लोकं व्यतीत्यातिक्रम्य हित्वा यो न गच्छति सोऽयं 'अव्यतीपातो' सूर्यः, 'तं' सूर्यं, प्राप्नोति। आद्येतिशब्दः, प्रश्नसमाप्त्यर्थः, द्वितीय उत्तरसमाप्त्यर्थः॥

इतश्चामुतश्चाव्यतीपाती। तमिति[२१]। [२२]योऽग्नेर्मिथूया वेद। मिथुनवान् भवति। आपो वा अग्नेर्मिथूयाः। मिथुनवान् भवति॥ य एवं वेद[२२] ॥ १२ ॥

वेद, भवति, आयतनम्, आयतनवान् भवति, वेद, वेद, प्रत्येव तिष्ठति, गुल्फदघ्नं, चातुर्मास्येषु, अमुमादित्यं प्रत्यक्षेण कमग्निं चिनुते, उपानुवाक्यमाशुमग्निं चिन्वानः, मिथुनवान् भवति, एकञ्च॥ अनु० २२ ॥

पुष्यम्, अग्निः, वायुः, असौ वै तपं, चन्द्रमा, नक्षत्राणि, पर्जन्यः, संवत्सरः, तिष्ठति, सचियः, संवत्सरः, सावित्रम्, अमुम्, नाचिकेतं, प्राणान्, चातुर्होचियं, ब्रह्म, वैश्वसृजः, शरीरम्, उपानुवाक्यमाशुम्, इमान्, लोकान्, इममारुणकेतुकं, य एवासौ, ॥

---

आरुणकेतुकाग्नेरपाञ्च सम्बन्धरूपो यो मिथुनीभावः तद्वेदनं प्रशंसति। (२२)"योऽग्नेर्मिथूया • य एवं वेद"(२२) इति। 'मिथूयाः' मिथुनगमनाः, 'मिथुनवान्' मिथुनशक्तिमान्, वेदनफलस्य पुनर्वचनमुपसंहारार्थं ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

अथ त्रयोविंशोऽनुवाकः।

(१)आपो वा इदमासन्त्सलिलमेव। स प्रजापति-रेकः पुष्करपर्णे समभवत्। तस्यान्तर्मनसि कामः समवर्तत। इदꣳ सृजेयमिति। तस्माद्यत् पुरुषो मनसाभिगच्छति। तद्वाचा वदति। तत् कर्मणा करो-

---

अथ त्रयोविंशोऽनुवाकः।

अथास्मिन्नप्यनुवाके सृष्ट्युपन्यासमुखेनारुणकेतुकमग्निं तद्-युक्ता अपश्च प्रशंसति। तत्र सृष्ट्यादौ कामोत्पत्तिं दर्शयति। (१)"आपो वा ० तदेषाभ्यनूक्ता"(१) इति। यत् 'इदं' जगत्, इदानीमस्माभिर्दृश्यते तत् 'इदम्', उत्पत्तेः पूर्वम् 'आपः', एव 'आसन्', न तु देवतिर्यङ्मनुष्यादिकं किञ्चिदपि भौतिकमा-सीत्। पृथिव्यादिभूतान्तरमपि वारयितुं 'सलिलमेव', इत्यु-च्यते। तासामपां मध्ये कस्मिंश्चित् 'पुष्करपर्णे', जगदीश्वरः 'स प्रजापतिः', 'समभवत्' सम्यगाविर्भूयावस्थितः, 'तस्य' प्रजा-पतेः, मनोमध्ये सर्वम् 'इदं' जगत्, 'सृजेयम्', इत्येवं 'कामः', उदपद्यत। यस्मात् प्रजापतेर्वाक्छरीरप्रभृतिभ्यो पूर्वं सर्व-प्रवृत्तिहेतुः कामो मनस्याविरभूत्। 'तस्मात्', प्रजापति सन्तताबुत्पन्नः सर्वः 'पुरुषः', इदं कार्यं करिष्यामीत्यादौ 'मनसा', चिन्तयति, 'तत्' तथैव, 'वाचा वदति', 'कर्मणा'

ति। तदेषाभ्यनूक्ता[१]। [१]कामस्तदग्रे समवर्तताधि। मनसो रेतः प्रथमं यदासीत्॥ १॥

सतो बन्धुमसति निरविन्दन्। हृदि प्रतीष्या क-वयो मनीषेति[१]। [२]उपैनं तदुपनमति। यत्कामो

---

शरीरव्यापारेणापि, तथैव 'करोति', 'तत्' तस्मिन् कामस्य प्रथमोत्पत्तिलक्षणेऽर्थे, काचिदृक् शाखान्तरे 'अभ्यनूक्ता'॥

तामेतामृचं दर्शयति। [१]"कामस्तदग्रे ० कवयो मनीषेति"[१] इति। 'तत्' तदानीं सृष्टिकाले, प्रजापतेः सकाशात् 'अग्रे' प्रथमं, 'कामः' सर्वं सृजेयमित्यभिलाषः, 'अधिसमवर्त्तत' आधिक्येन सम्यगुत्पन्नः, 'यत्' यदा, 'मनसः प्रथमं', 'रेतः' कार्यम्, 'आसीत्'। तदिति पूर्वत्रान्वयः। पूर्वसृष्टौ लीनायामव्यक्ते जगत्कारणे स्रक्ष्यमाणप्राणिकर्मोद्भवे सति यदा प्रजापतेर्मानसं प्रथमं कार्यमुत्पन्नं तदा तत्कार्यं सृष्टिविषयेच्छारूपेण निष्पन्नमित्यर्थः॥ 'मनीषाः' मनस ईशितारः, 'कवयः' विद्वांसः, तत्तत्सृष्टिगताः प्रजापतयः, 'हृदि' स्वचित्ते, 'प्रतीष्य' प्रत्येकं निश्चित्य, 'सतः' विद्यमानस्य व्यक्तस्य जगतः, 'बन्धुं' बन्धकमुत्पत्तिहेतुं कामं, 'असति' अव्यक्ते कारणे, 'निरविन्दन्' निष्कृष्य लब्धवन्तः, न केवलमेतस्यामेव सृष्टौ किन्तु सर्वास्वपि सृष्टिषु प्रवृत्ताः प्रजापतयः काममेव प्रथमं लभन्त इत्यर्थः।

भवति। य एवं वेद[३]। [४]स तपोऽतप्यत। स तपस्तप्त्वा। शरीरमधूनुत। तस्य यन्मांसमासीत्। ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन्॥ २॥

ये नखाः। ते वैखानसाः। ये बालाः। ते बालखि-

---

'इति'शब्दो मन्त्रसमाप्तौ। अनेन मन्त्रेणैकामिष्टकामुपदध्यात्॥ तथा च बौधायन आह। 'कामस्तदग्र इति सङ्कल्पवतीमिति'॥

यथोक्तकाममाहात्म्यवेदनं प्रशंसति। [३]"उपैनं ० य एवं वेद"[३] इति। 'यः' पुमान्, काममाहात्म्यं 'वेद', स पुमान् 'यत्कामः' यद्विषयकामनावान्, 'भवति', 'तत्' वस्तु, 'एनं' वेदितारम्, 'उपनमति' प्राप्नोति। देशकालयोः सामीप्यविवक्षया द्वावुपशब्दावुक्तौ॥

कामानन्तरभाविनीं सृष्टिं दर्शयति। [४]"स तपोऽतप्यत ० सोऽपाम्"[४] इति। 'सः' प्रजापतिः, सृष्टिं कामयित्वा 'तपः', कृतवान्। नाच तप उपवासादिरूपं, किन्तु स्रष्टव्यं वस्तु कीदृशमिति पर्यालोचनरूपं। अतएवाथर्वणिका आमनन्ति। 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' इति। 'सः' प्रजापतिः, 'तपः' पर्यालोचनरूपं, कृत्वा स्रष्टव्यविशेषं निश्चित्य, स्वकीयं 'शरीरं', 'अधूनुत' कम्पितवान्। 'तस्य' कम्पनस्य शरीरस्य, 'यन्मांसं', अस्ति, तस्मान्मांसादरुणादिनामकास्त्रिविधाः 'ऋष-

स्याः। यो रसः। सोऽपां[७]। [५]अन्तरतः कूर्मं भूतꣳ सर्पन्तं। तमब्रवीत्। मम वै त्वङ्माꣳसा। समभूत् ॥३॥

नेत्यब्रवीत्। पूर्वमेवाहमिहासमिति। तत् पुरुषस्य पुरुषत्वं। स सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्। भूत्वोदतिष्ठत्। तमब्रवीत्। त्वं वै पूर्वꣳ समभूत्। त्वमिदं पूर्वः कुरुष्वेति[५]। [६]स इत आदायापः ॥ ४ ॥

---

षः', उदपद्यन्त। प्रजापतेः सत्यसङ्कल्पत्वात् तत्सङ्कल्पानुसारेण तत्तद्वस्तूत्पद्यते। तस्य शरीरस्य 'ये नखाः', आसन् 'ते', वैखानसनामका मुनयोऽभवन्। 'ये', च शरीरे 'बालाः' केशाः, 'ते', बालखिल्यनामका मुनयोऽवभवन्। 'यः' शरीरस्य 'रसः' सारांशः, 'सोऽपां', मध्ये कश्चित् कूर्मोऽभूदिति शेषः ॥

तेन कूर्मेण सह प्रजापतेः संवादं दर्शयति। [५]"अन्तरतः• पूर्वः कुरुष्वेति"[५] इति। 'अन्तरतः' जलस्य मध्ये, कूर्माकारेण निष्पन्नं तत्रैव सञ्चरन्तं 'तं' पुरुषं, स प्रजापतिः 'अब्रवीत्'। हे कूर्म 'मम वै', 'त्वङ्माꣳसा', त्वचो मांसस्य च सम्बन्धिनो रसात् 'समभूत्'। त्वं समुत्पन्नोऽसीति तदा स कूर्मो 'नेत्यब्रवीत्' यत् त्वयोक्तं तन्न त्वदीयशरीररसात्समुत्पन्नः, किन्तु कूर्माकारं शरीरमेव निष्पन्नं, अहं तु सर्वगतनित्यचैतन्यस्वरूपत्वात् 'पूर्व-

अञ्जलिना पुरस्तादुपादधात्। एवाह्येवेति। तत आदित्य उदतिष्ठत्। सा प्राची दिक्[(१)]। [(७)]अथारुणः केतुर्दक्षिणत उपादधात्। एवा ह्यग्न इति। ततो वा

---

मेवाहमस्मिंस्थाने स्थितोऽस्मि इत्येतत् कूर्मस्य वचनं। यस्मात् पूर्वमासमित्युवाच तस्मात् 'पुरुषः',इति परमात्मनो नाम सम्पन्नम्। एवमुक्ता 'सः' कूर्मशरीरवर्त्ती परमात्मा, स्वसामर्थ्यप्रकटनाय विराड्रूपं कृत्वा सहस्रसङ्ख्याकैः शिरोभिरचभिः पादैश्च युक्तो 'भूत्वा', प्रादुरभूत्। तदानीं प्रजापतिः 'तं' विराड्रूपं, दृष्ट्वा तत्त्वं परमात्मानमेवम् 'अब्रवीत्', भोः परमात्मन् मच्छरीरात् 'पूर्वं', 'त्वं', एव सर्वदा विद्यमानः अतोमत्तः पूर्वभावी सन् 'त्वं', एव 'इदं' सर्वं जगत्, 'कुरुष्व' ॥

इति तेन प्रजापतिनैवमुक्तस्य परमेश्वरस्य सृष्टिप्रकारं दर्शयति। [(१)]"स इत ० प्राची दिक्"[(१)] इति। 'सः' परमेश्वरः, स्वयमारुणकेतुकरूपः सन् 'इतः' सृष्टेरपि पूर्वस्थितात् सलिलमेवासीदित्युक्तात् महाजलात्, कियतीः 'अपः', स्वकीयेन 'अञ्जलिना', 'समादाय', पूर्वस्यां दिशि तामसौष्टकामुपधत्तवान्। केन मन्त्रेण 'एवाह्येवेति', अनेन मन्त्रेण। तस्य मन्त्रस्यादित्यपरत्वं पूर्वमेव दर्शितं। 'ततः' समन्त्रकोपधानात्, 'आदित्यः', उत्पन्नः। स यस्यां दिश्युत्पन्नः 'सा प्राची दिक्', अभूत् ॥

अनेन प्रकारेण क्रमात् सर्वदिगुत्पत्तिं दर्शयति। [(७)]"अ-

अग्निरुदतिष्ठत्। सा दक्षिणा दिक्। अथारुणः केतुः पश्चादुपादधात्। एवा हि वायो इति॥ ५॥

ततो वायुरुदतिष्ठत्। सा प्रतीची दिक्। अथारुणः केतुरुत्तरत उपादधात्। एवा ह्यीन्द्रेति। ततो वा इन्द्र उदतिष्ठत्। सोदीची दिक्। अथारुणः केतुर्मध्य उपादधात्। एवा हि पूषन्निति। ततो वै पूषोदतिष्ठत्। सेयं दिक्॥ ६॥

अथारुणः केतुरुपरिष्टादुपादधात्। एवा हि देवा इति। ततो देवमनुष्याः पितरः। गन्धर्वाप्सरसश्चोदतिष्ठन्। सोर्द्ध्वा दिक्(७)। (८)या विप्रुषो वि परापतन्। ताभ्योऽसुरा रक्षाꣳसि पिशाचाश्चोदतिष्ठन्। तस्मात्

---

थारुणः ० सोर्द्ध्वा दिक्"(७) इति। एतेषु मन्त्रेषु 'एवाः' एतव्याः प्राप्तव्या कामाः। 'हि'शब्दः प्रसिद्धौ। सर्वेषां देवानां कामप्रदत्वेन तत्कामरूपत्वं प्रसिद्धमिति पूर्वं व्याख्यातम्। 'एवाहि' इतिशब्दः आगच्छ इत्येतस्मिन्नर्थे वा व्याख्येयः। 'सेयम्' इति अधोदिगुच्यते। अन्यत् पूर्ववद्व्याख्येयं॥

देवसृष्टिमभिधायासुरसृष्टिं दर्शयति। (८)"या विप्रुषो ० समभवन्"(८) इति। अञ्जलिनोपधीयमानानामपां सम्बन्धिन्यः 'याः' 'विप्रुषः' विन्दवः, विविधा भूत्वा तस्मात्

ते परा॑भवन्। विप्रुड्भ्यो हि ते स॑मभवन्(८)। (९)तद्दे॒-षाऽभ्यनू॑क्ता(९) ॥ ७ ॥

(१०)आपो॑ ह॒ यद्बृ॑हतीर्ग॑र्भ॑मायन्। दक्ष॒ं द॑धाना ज॒-नयन्तीः स्वय॒म्भुं। तत॑ इ॒मेऽध्यसृ॑ज्यन्त॒ सर्गाः। अ॒द्भ्यो

---

उपधानप्रदेशात् बहिः 'परापतन्'। 'ताभ्यः' विप्रुड्भ्यः, असुरादय उत्पन्नाः। ते चावान्तरजातिभेदात्त्रिविधाः। यस्मात् 'ते', पराभवन्तीभ्यः 'विप्रुड्भ्यः', उत्पन्नाः, 'तस्मात्', पराभूताः। अधमाः सन्तो विनष्टा इत्यर्थः॥

अपां सकाशाद्येयं सृष्टिः प्रपञ्चिता, तस्याः सङ्ग्रहरूपामृचमवतारयति। (९)"तदेषाऽभ्यनूक्ता"(९) इति। 'तत्' तस्मिन्, अद्भ्यः सर्वं समुत्पन्नमित्यस्मिन्नर्थे, काचिदियं ऋक् शाखान्तरे 'अभ्यनूक्ता'॥

तामेतामृचं दर्शयति। (१०)"आपो ह यद्बृहतीर्गर्भमायन् • स्वयम्भ्विति"(१०) इति। अद्भ्यो वा इति वाक्यं ब्राह्मणरूपमपि तृतीयपादतात्पर्यप्रदर्शनाय मन्त्रमध्ये समाम्नातं। 'बृहतीः' प्रौढाः, 'आपः', यं 'गर्भं' जायद्रूपम्, 'आयन्' प्राप्तवत्यः। कीदृश्य आपः, 'दक्षं' वृद्धिशीलं गर्भं, 'दधानाः' धारयन्त्यः, 'स्वयम्भुं' कूर्मरूपं परमात्मानं, 'जनयन्तीः' जनयितुकामाः, 'ततः' तस्माद्विराड्रूपात् अपां गर्भात्, 'इमे' भूरादयः सर्गाः सृज्यमाना लोकाः, 'अध्यसृज्यन्त', सृष्टर्हानेतान् सृष्टवानित्यर्थः। 'अद्भ्यः', एवेदं सर्वं जगदुत्पन्नमिति कृत्वा पादत्रये-

वा इदꣳ समभूत्। तस्मादिदꣳ सर्वं ब्रह्म स्वयम्भ्विति(१०)। (११)तस्मादिदꣳ सर्वꣳ शिथिलमिवाध्रुवमिवाभवत्(११)। (१२)प्रजापतिर्वाव तत्। आत्मनात्मानं वि-

---

णोऽर्थो युक्त एव। यस्मात् कारणात् कूर्मरूपं ब्रह्मैव सर्वं सृष्टवान् 'तस्मात्' कारणात्, 'इदं सर्वं' जगत्, 'स्वयम्भु' स्वतःसिद्धं, 'ब्रह्म', एव 'इति' अनेन मन्त्रेण, एकामिष्टकामुपदध्यात्। तथाच बौधायन आह। आपो ह यदित्योघवतीमिति ॥

कार्यत्वं जगतो युक्त्योपपादयति। (११)"तस्मादिदꣳ ० मिवाभवत्"(११) इति। यस्माच्छिथिलाभ्योऽद्भ्यो जातं, आपो हि शिथिलाः न तु पाषाणवद्दृढाः, 'तस्मात्' कारणात्, 'इदं सर्वं' जगत्, 'शिथिलमिव', दृश्यते। तस्यैव व्याख्यानम् 'अध्रुवमिव', इति। अनित्यत्वम् अध्रुवत्वं ॥

अथास्य जगतो दार्ढ्योपायं दर्शयति। (१२)"प्रजापतिर्वाव ० तदेवानुप्राविशत्"(१२) इति। केवलकार्यत्वं समुत्पन्नं शिथिलं भवत् न तु तदस्ति। किन्तु 'तत्' जगत्, 'प्रजापतिः', एव। यथा घटे मृदंशः पृथुबुध्नोदराकारांशश्चेत्यंशद्वयं, एवं जगत्यपि सच्चिदानन्दरूपप्रजापत्यंशो नामरूपांशश्चेत्यंशद्वयं, तत्र नामरूपयोरकार्यत्वेन शैथिल्येऽपि सच्चिदानन्दप्रजापत्यंशस्य दार्ढ्यमस्ति। स हि प्रजापतिः, 'आत्मना' साधनान्तरनिरपेक्षेण

धायं। तदेवानुप्राविशत्(१२)। (१३)तदेषाऽभ्यनूक्ता(१३)॥
॥८॥

(१४)विधाय लोकान् विधाय भूतानि। विधाय सर्वाः प्रदिशो दिशश्च। प्रजापतिः प्रथमजा ऋतस्य। आत्मनात्मानमभिसंविवेशेति(१४)। (१५)सर्वमेवेदमाप्ना। सर्वमवरुध्य। तदेवानुप्रविशति। य एवं वेद(१५) ॥९॥

---

स्वसामर्थ्येन, 'आत्मानं' स्वस्वरूपं, जगदाकारेण 'विधाय', 'तदेव' जगत्, 'अनु'सृत्य शरीरेषु स्वयं चिद्रूपेण 'प्राविशत्' ॥

अस्मिन्नर्थे ऋचमुदाहरति। (१३)"तदेषाऽभ्यनूक्ता"(१३) इति॥

तामेतामृचन्दर्शयति। (१४)"विधाय ० संविवेशेति"(१४) इति। 'ऋतस्य' सत्यस्य परब्रह्मणः, सकाशात् प्रथममुत्पन्नः 'प्रजापतिः', 'लोकान्' भूरादीन्, 'विधाय' भूतानि प्राणिनश्च विधाय, प्राच्याद्या मुख्यदिश आग्नेय्याद्या विदिशश्च 'विधाय', 'आत्मना' स्वकीयेन चैतन्येन, 'आत्मानं' स्वशरीररूपं जगत्, अभितः सम्यक् 'प्रविवेश'। इत्यनेन क्रमेण काचिदिष्टकोपधेया। तथाच बैधायन आह। विधाय लोकानिति स्वयमातृण्णावतीमिति ॥

यथोक्तसृष्टिवेदनं प्रशंसति। (१५)"सर्वमेवेदमाप्ना ० य एवं वेद"(१५) इति। 'यः' पुमान्, 'एवं' प्रजापतिसृष्टिप्रकारं, विजानाति स पुमान् 'सर्वमेव' जगदिति विद्यमानम्, 'इदं' फलं,

आसीत्, अतिष्ठन्, अभूत्, अपः, वायो इति, सेयं दिक्, अभ्यनूक्ता, अभ्यनूक्ता, अष्टौ च ॥ अनु०२३॥

अथ चतुर्विंशोऽनुवाकः ।

(१)चतुष्टय्य आपो गृह्णाति । चत्वारि वा अपाꣳ रूपाणि । मेघो विद्युत् । स्तनयित्नुर्वृष्टिः । तान्येवाव-

प्राप्य तत्र 'सर्वं', वशीकृत्य 'तदेव' जगत्, 'अनुप्रविशति' । सर्वात्मको भवतीत्यर्थः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

अथ चतुर्विंशोऽनुवाकः ।

अतीतेनानुवाकद्वयेनापां प्रशंसामुक्त्वाऽस्मिन्ननुवाकेऽपीष्टकानामनुष्ठानविशेष उच्यते। तत्रादौ सामान्येनापां ग्रहणं विधत्ते। (१)"चतुष्टय्य आपो • तान्येवावरुन्धे"(१) इति। उपधानार्थं चतुर्विधापो गृहीतव्याः, 'अपाꣳ रूपाणि' निरूपकाणि वस्तूनि मेघादीनि, 'चत्वारि', एव। ततस्तनयित्नुशब्देन गर्जनं विवक्षितं। अपां चतुर्विधत्वेन मेघादिचतुष्टयमपि स्वाधीनं भवति॥

रुन्धे(१)। (२)आतपंति वर्ष्या गृह्णाति। ताः पुरस्तादुपं- दधाति। एता वै ब्रह्मवर्चस्या आपः। मुखत एव ब्रह्मवर्चसमवरुन्धे। तस्मान्मुखतो ब्रह्मवर्चसितरः(२)॥ ॥ १ ॥

(१)कूप्यां गृह्णाति। ता दक्षिणत उपंदधाति। एता वै तेजस्विनीरापः। तेज एवास्य दक्षिणतो दधाति।

---

तेषु चतुर्विधेषु जलेषु प्रथमं जलविशेषं विधत्ते। (२)"आ- तपति ० ब्रह्मवर्चसितरः"(२) इति। आतपयुक्ते प्रदेशे वर्षेण सम्पन्ना या आपः ताः पात्रेण केनचिद्गृह्णीयात् 'ताः', च गृही- ताः चयनक्षेत्रे पूर्वस्यां दिश्युपदध्यात्। 'एताः' आतपयुक्ते देशे वृष्टाः, 'आपः', एव प्रकाशोपेतत्वाद्ब्रह्मवर्चसयोग्याः, तासां पुर- स्तादुपधानेनाग्नेर्मुख 'एव', 'ब्रह्मवर्चसं', अवरुद्धं भवति। यस्मादेवं 'तस्मात्', लोकेऽपि वेदशास्त्रपाठरूपस्य ब्रह्मवर्चसस्य जिह्वा- वर्त्तित्वात् पुमान् मुखप्रदेश एवातिशयेन ब्रह्मवर्चसयुक्तो भवति॥

द्वितीयं जलविशेषं विधत्ते। (१)"कूप्या गृह्णाति ० स्तेज- स्वितरः"(१) इति। कूपे भवाः 'कूप्याः',तासां बहुविधगृहकृत्यो- पयोगित्वेन 'तेजस्विनीः', ता दक्षिणदिश्युपधाने सति अग्नेर्द- क्षिणभागे 'तेजः', सम्पादयन्ति। यस्मादेवं 'तस्मात्', लोकेऽपि शरीरे दक्षिणभागोऽतिशयेन तेजस्वी शक्तिमान् भवति॥

तस्माद्दक्षिणोर्ध्वस्तेजस्वितरः(३)। (४)स्थावरा गृह्णाति। ताः पश्चादुपदधाति। प्रतिष्ठिता वै स्थावराः। पश्चादेव प्रतिष्ठति(४)। (५)वहन्तीर्गृह्णाति ॥ २ ॥

ता उत्तरत उपदधाति। ओजसा वा एता वहन्तीरिवोद्गतीरिव आकूजतीरिव धावन्तीः। ओज

---

तृतीयं जलविशेषं विधत्ते। (४)"स्थावरा गृह्णाति ० प्रतिष्ठति"(४) इति। नदीषु क्वचिदगाधो ह्रदो दृश्यते। तत्रापो न प्रवहन्ति किन्तु स्थिरावस्थितिशीलास्तासां प्रतिष्ठितस्वभावानां पश्चिमदिश्युपधानेन स्वकीयानां सर्वेषां प्रतिष्ठां कृत्वा 'पश्चात्', स्वस्य प्रतिष्ठां करोति ॥

चतुर्थं जलविशेषं विधत्ते। (५)"वहन्तीर्गृह्णाति ० तेजस्वितरः"(५) इति। नद्यां प्रवहन्त्यो या आपः 'ताः', गृहीत्वोत्तरस्यां दिश्युपदध्यात्। 'एताः' आपः, यदा धावन्ति तदानीं 'ओजसा' स्वकीयेन बलेन, प्रवाहमध्यपतितान् काष्ठादिपदार्थान् 'वहन्तीरिव' आकर्षयन्त्य इव भवन्ति, 'उद्गतीरिव' पाषाणादिषु लग्नाः स्वबिन्दुभिरूर्ध्वं गच्छन्त्य इव, 'आकूजतीरिव' तत्र तत्र निम्नोन्नतप्रदेशेषु सञ्चाराच्छब्दं कुर्वन्त्य इव भवन्ति, तस्यैतस्य वहनस्योद्गमनस्याकूजनस्य चौज एव कारणं, अत उत्तरस्यां दिशि 'ओज एव', आस्थापयति। यस्मादेवं 'तस्मात्', लोकेऽपि

एवास्योत्तरतो दधाति। तस्मादुत्तरोऽर्द्ध ओजस्वितरः(५)। (६)सम्भार्या गृह्णाति। ता मध्य उपदधाति। इयं वै सम्भार्याः। अस्यामेव प्रतितिष्ठति(६)। (७)पल्वल्या गृह्णाति। ता उपरिष्टादुपादधाति॥ ३॥
असौ वै पल्वल्याः। अमुष्यामेव प्रतितिष्ठति(७)।

---

शरीरस्य 'उत्तरः', भागः 'ओजस्वितरः', पूजाहोमादिकार्य्येषु दक्षिणहस्तस्य तेजस्वित्वं पूर्वमुक्तं, पादप्रक्षालनादिषु वामहस्तस्यौजस्वित्वमत्रोच्यते। चतुष्टय्य इत्यस्याः सङ्ख्याया उपलक्षणत्वात् षड्विधा आपो द्रष्टव्याः॥

तत्र पञ्चमं जलविशेषं विधत्ते। (६)"सम्भार्या गृह्णाति ॰ प्रतितिष्ठति"(६) इति। गृहे घटेषु सम्पादनीया आपः 'सम्भार्याः', 'ताः', गृहीत्वा चतसृणां दिशां 'मध्ये', उपदध्यात्। सम्भार्याणां घटेष्ववस्थितत्वेन भूमिसदृशत्वादुपधानेन भूम्यामेव प्रतिष्ठितो भवति॥

षष्ठं जलविशेषं विधत्ते। (७)"पल्वल्या गृह्णाति ॰ अमुष्यामेव प्रतितिष्ठति"(७) इति। यत्र कदाचिदपि जलशोषो नास्ति द्रवमात्रानुवृत्तिः सर्वदा दृश्यते तत् 'पल्वलं', तत्रोत्पन्ना आपो गृहीत्वा मध्ये स्थापितानामिष्टकानां 'उपरिष्टात्', उपदध्यात्। पल्वल्यानां कूपादिवत् खननमन्तरेण भूमेरुपर्य्येव वर्त्तनात् तदुपधानेन द्युलोके प्रतिष्ठितो भवति॥

X

(८)दिक्षूपदधाति । दिक्षु वा आपः । अन्नं वा आपः । अद्भ्यो वा अन्नं जायते । यदेवाद्भ्योऽन्नं जायते । तद्-वरुन्धे(८) । (९)तं वा एतमरुणाः केतवो वातरशना ऋषयोऽचिन्वन् । तस्मादारुणकेतुकः(९) ॥ (१०)तदेषाऽभ्यनूक्ता(१०) । (११)केतवो अरुणासश्च । ऋषयो वात-रशनाः । प्रतिष्ठाꣳ शतधा हि । समाहितासो सहस्र-

---

यथोक्तं दिक्षूपधानं प्रशंसति । (८)"दिक्षूपदधाति ० तद्-वरुन्धे(८)" इति । दिक्ष्वपां आततत्वात् अद्भ्यश्चान्नोत्पत्तेर्दिक्षूप-धानेनान्नं प्राप्नोति ॥

अस्य चितस्याग्नेरारुणकेतुकनाम निर्वक्ति । (९)"तं वा एत-मरुणाः ० तस्मादारुणकेतुकः"(९) इति । अरुणादिभिस्त्रिविधै-र्मुनिभिश्चितत्वात् तत्सम्बन्धेनारुणकेतुकत्वं । यद्यपि वातरशनैर-प्ययञ्चितः तथाप्यरुणानां केतूनाञ्च मुख्यत्वात्तन्नाम्नैव व्यवहारः॥

उक्तार्थप्रतिपादिकां ऋचमवतारयति । (१०)"तदेषा-ऽभ्यनूक्ता"(१०) इति । 'तत्' तस्मिन्, आरुणकेतुकसम्बन्धोऽय-मग्निरित्यस्मिन्नर्थे, काचिदृक् शाखान्तरे पठिता ॥

तामेतामृचं दर्शयति । (११)"केतवो ० सहस्रधायसमि-ति"(११) इति । एषा च आपमापामित्यनुवाके व्याख्याता । इत्यनेन मन्त्रेणापि काञ्चिदिष्टकामुपदध्यात् । तथा च बौधा-यन आह । केतव इत्येकेति ॥

धायसमिति[११]। [१२]शतशश्चैव सहस्रशश्च प्रतितिष्ठति। य एतमग्निं चिनुते। य उ चैनमेवं वेद[१२] ॥४॥

ब्रह्मवर्चसितरः, वहन्तीर्गृह्णाति, ता उपरिष्टादुपादधाति, आरुणकेतुकः, अष्टौ च ॥

अनु॰ २४ ॥

---

अथ पञ्चविंशोऽनुवाकः।

[१]जानुदघ्नीमुत्तरवेदीं खात्वा। अपां पूरयति। अपाᳩ सर्वत्वाय[१]। [२]पुष्करपर्णᳩ रुक्मं पुरुषमित्युप-

---

चयनवेदने प्रशंसति। [१२]"शतशश्चैव ॰ चैनमेवं वेद"[१२] इति ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके चतुर्विंशोऽनुवाकः ॥ २४ ॥

---

अथ पञ्चविंशोऽनुवाकः।

अवोष्टकाः पूर्वानुवाकेऽभिहिताः। तत्र पुष्करपर्णाद्युपधानं विधत्ते। तत्रादावुत्तरवेदिखननं पूर्वमेव विहितं प्रशंसति। [१]"जानुदघ्नीमुत्तवेदीं ॰ सर्वत्वायेति"[१] इति। जानुपरि-

दधाति। तपो वै पुष्करपर्णम्। सत्यꣳ रुक्मः। अमृतं पुरुषः। एतावद्वावास्ति। यावदेतत्। यावदेवास्ति॥ ॥ १ ॥

तदवरुन्धे[१]। [२]कूर्ममुपदधाति। अपामेव मेधमवरुन्धे। अथो स्वर्गस्य लोकस्य समष्ट्यै[३]। [४]आपमापामपः सर्वाः। अस्मादस्मादितोऽमुतः। अग्निर्वा-

---

माणेन खातायामुत्तरवेद्यां गुल्फपरिमाणेन पूरितमुदकं यदस्ति तेन 'अपां', सर्वत्वं सम्पादितं भवति। यस्मात् खातस्याप्युदकमयत्वमपेक्षितं तस्मादितरस्य वस्तुनो जलमयत्वं किमु वक्तव्यमित्यभिप्रायः॥

(१)"पुष्करपर्णꣳ ० तदवरुन्धे"(१) इति। पुष्करपर्णस्य पवित्रत्वेन तपोरूपत्वाद्रुक्मस्याग्निसंयोगोऽपि विनाशाभावेन सत्यत्वात्। हिरण्मयपुरुषस्यापि। अत एवामृतत्वात् चयायामुपधानेन 'यावत्', सारं 'अस्ति', तत् सर्वं प्राप्तं भवति॥

उक्तचितयादनन्तरं कूर्मोपधानं विधत्ते। (२)"कूर्ममुपदधाति ० लोकस्य समष्ट्यै"(२) इति। 'अपां', सम्बन्धी मेधः सारः कूर्मः तदुपधानेन सारं प्राप्नोति। किञ्च स्वर्गोऽपि प्राप्यते॥

अथाग्नीष्टकाविधिं सूचयितुं तन्मन्त्रान् पूर्वमेवाम्नातान् प्रदर्शयितुं लेशतः पठति। (४)"आपमापामपः ० रश्मिप-

युञ्च हृयस्व। सह संवत्सरधिया इति। वाव्वस्था रश्मि-पतयः(४)। (५)लोकं पृण छिद्रं पृण ॥ २ ॥

यास्तिस्रः परमजाः(५)। (६)इन्द्रघोषा वो वसुभि-रेवा ह्येवेति(६)। (७)पञ्च चितय उपदधाति। पाङ्क्तोऽग्निः।

---

तयः"(४) इति। आपमापामित्यारभ्य वाव्वस्था इत्यादिभिर-ष्टौ इष्टका उपधेया इति तात्पर्यार्थः ॥

लोकं पृणेष्टकोपधानमन्त्रं दर्शयति। (५)"लोकं पृण छिद्रं ० परमजाः"(५) इति। हे इष्टके 'लोकं' पूर्वमुपधान-रहितं स्थानं, 'पृण' पूरय, तत्पूरणेन चित्याग्नेः 'छिद्रं', 'पृण' पूरय। 'याः' च 'तिस्रः' स्वमाहृगणाः, प्रथममध्यमोत्तरचिति-षूपधेयतया 'परमजाः' प्रकृष्टमुत्पन्नाः, ता अपि पूरय ॥

मन्त्रान्तरमपि पूर्वमाम्नातमेवोपधानविध्यभिप्रायेण पुनः प्रदर्शयति। (६)"इन्द्रघोषा ० एवा ह्येवेति"(६) इति। इन्द्र-घोषेत्यादयो ये मन्त्राः एवा ह्येवेत्यादयश्च ये मन्त्राः, 'इति' शब्दप्रदर्शिताः, अन्ये च ये मन्त्रास्तैः सर्वैरुपदध्यादित्यर्थः ॥

चितीनां सङ्ख्यां विधत्ते। (७)"पञ्च चितय ० तं चिनुते"(७) इति। जानुप्रमाणेन खातस्य मध्ये पञ्चसङ्ख्याकाश्चितीरुप-दध्यात्। गुल्फदघ्नमुदकं पूरयित्वा पर्णैर्दण्डैः हस्तपुष्करैश्च सञ्छाद्य मृण्मयपात्रेभ्यो दृत्वा ता अष्टौ इष्टका उपदध्यात्। तत्र

यावानेवाग्निः। तं चिनुते(७)। (८)लोकंपृणया द्वितीयामुपदधाति। पञ्चपदा वै विराट्। तस्या वा इयं पादः। अन्तरिक्षं पादः॥ द्यौः पादः। दिशः पादः। परो रजाः पादः(८)। (९)विराज्येव प्रतितिष्ठ-

---

उपर्यपि पूर्ववत्पञ्चैर्दण्डैः कृत्स्नपुष्करैश्च छादयित्वा पुनरप्यष्टीष्टका उपदध्यात्। एवं पञ्चकल्पाभिरुत्तरवेद्यां पूरवितायां तत्र पञ्चचितयः सम्पद्यन्ते। तत्रोर्ध्वैः काष्ठैः मञ्चकं कृत्वा तस्योपरि पुरीषं प्रसार्य पुरीषस्योपर्यग्निं प्रणीयोपसमाधाय तस्याग्नेश्चतुर्दिक्षु तत्तन्मन्त्रैरष्टीष्टका उपदध्यात्। एवं कृतेऽग्निः पञ्चचितियुक्तो भवति। आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यरूपेण पञ्चसङ्ख्यायोगात् 'पाङ्क्तः', 'अग्निः', सर्वोऽपि चितो भवति॥

द्वितीयचितौ विशेषं विधत्ते। (८)"लोकंपृणया ० परो रजाः पादः"(८) इति। येयं द्वितीया चितिः, सेयं 'लोकंपृणया', एव इष्टकोपधेया, सर्वपूरकत्वादियं 'लोकंपृणा' विराड्देहरूपी, सा च विराण्मूर्त्तिः पञ्चपादोपेता। लोकत्रयं चितदिशश्च पादचतुष्टयं। रजोगुणात्मकस्य संसारस्य परस्ताद्वाह्मो योऽयं चिदात्मा वर्त्तते असौ 'परो रजाः', स च पञ्चमः 'पादः', एवं प्रशस्ता लोकंपृणा॥

तच्चयनवेदने प्रशंसति। (९)"विराज्येव ० य एवं-

ति। य एतदमग्निञ्चिनुते। य उचैनमेवं वेद(९) ॥ ३ ॥

अस्ति, पृण, अन्तरिक्षं पादः, षट् च ॥ अनु०॥२५॥

---

अथ षड्विंशोऽनुवाकः।

(१)अग्निं प्रणीयोपसमाधाय। तमभित एता अवीष्टका उपदधाति। अग्निहोत्रे दर्शपूर्णमासयोः। पशुबन्धे चातुर्मास्येषु। अथो आहुः। सर्वेषु यज्ञक्रतुष्विति(१)। (२)अथ ह स्माहारुणः स्वायम्भुवः। सावित्रः

---

मेवं वेद"(९) इति। 'विराड्येव' अन्न एव, विराड्देह एव, वा ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

अथ षड्विंशोऽनुवाकः।

पूर्वानुवाके पुष्करपर्णाद्युपधानमुक्तं। इह फलविशेषा व्रतविशेषाश्चोच्यन्ते। पूर्वं विहितमेवार्थं पुनर्विशेषकथनायादावनुवदति। (१)"अग्निं प्रणीयो॰ क्रतुष्विति"(१) इति। एतत् सर्वं योऽपां पुष्पं वेदेत्यनुवाके व्याख्यातं ॥

सर्वोऽग्निरित्यननुषक्तं मन्यामहे। नाना वा एतेषां वीर्याणि[२]। [२]कमग्निं चिनुते ॥ १ ॥

---

अस्यारुणकेतुकस्य स्वातन्त्र्येण फलवत्त्वमाक्षेपसमाधानाभ्यामुपपादयितुं मतद्वयमुपन्यस्यति। [१]"अथ ह स्माहारुणः ० एतेषां वीर्याणि"[१] इति। स्वयम्भुवः पुत्रः कश्चित् 'अरुण'-नामको मुनिरेवं 'आह स्म', काठकेषु योऽयं विहितः 'अग्निः', सावित्रादिरारुणकेतुकान्तः सः 'सर्वः', अपि 'सावित्रः', एव उत्तरोत्तरेषु पूर्वपूर्वानुषङ्गस्य विद्यमानत्वात्। यो नाचिकेतः स सावित्रपूर्वक एवानुष्ठेयः। चातुर्होत्रीयस्तदुभयपूर्वकः। वैश्वसृजस्त्रितयपूर्वकः। आरुणकेतुकश्चतुष्टयपूर्वकः। एवमनुषङ्गे सत्यारुणकेतुकस्येतरनिरपेक्षस्य स्वातन्त्र्यं नास्ति। सावित्रस्य तु तद्विद्यते। तस्मात् सर्वेष्वनुषक्तत्वात् सर्वोऽपि सावित्र इत्येव व्यवहार्यः। अतस्तस्यैव फलवत्त्वं न त्वारुणकेतुकस्य स्वतन्त्रस्येत्यरुणस्य मुनेर्मतं तदिदं दूष्यते। ब्रह्मवादिनो वदन्ति 'सावित्रः सर्वोऽग्निरित्यनुषक्तं मन्यामहे', न कोऽप्यग्निरितरत्रानुषज्यति। 'एतेषां' अग्नीनां, 'वीर्याणि' फलानि, 'नाना'-पृथग्भूतान्येव, तानि च योऽपां पुष्पमित्यनुवाके संवत्सरं प्रत्यक्षेणामुमादित्यं प्रत्यक्षेणेत्यादिना निरूपितानि॥

तदेतत्फलनानात्वं प्रपञ्चेन प्रदर्शयति। [२]"कमग्निं चिनुते ० चिन्वान इति"[२] इति। द्वादशाहादिषट्कात्वेन

सवित्रियमग्निं चिन्वानः। कमग्निं चिनुते। सावि-त्रमग्निं चिन्वानः। कमग्निं चिनुते। नाचिकेतमग्निं चिन्वानः। कमग्निं चिनुते। चातुर्होत्रियमग्निं चिन्वा-नः। कमग्निं चिनुते। वैश्वसृजमग्निं चिन्वानः। कम-ग्निं चिनुते ॥ २ ॥

उपानुवाक्यमाशुमग्निं चिन्वानः। कमग्निं चिनुते। इममारुणकेतुकमग्निं चिन्वान इति[३]। [४]वृषा वा अग्निः। वृषाणौ सꣳस्फालयेत्। हन्येतास्य यज्ञः।

---

चीयमानो योऽयं महाग्निः सोऽयं 'सवित्रियः' तच्चिन्वानः पुमान् 'कमग्निं' किम्फलकमग्निं, 'चिनुते', इत्येवं भो अरुणात्मजमुने त्वं विचारय। संवत्सरदेवताप्राप्तिस्तस्य फलं, इतरेषां त्वन्यदेव पृथक् पृथक् फलमादित्यप्राप्त्यादिरूपं, अतो नैकफलस्य स-म्भावनाप्यस्तीति किंशब्दस्याभिप्रायः। एवमुत्तरत्रापि योज्यं। उपानुवाक्यमाशुमग्निमित्यत्र यदेकेनेत्याद्युपानुवाक्यकाण्डोक्तो महानग्निर्विवक्षितः। यद्यसौ सवित्रियमिति वाक्येनैव मतार्थः, तर्हि शाखान्तरप्रसिद्धं कश्चिदन्यत्तरमस्तु। तदेव फल-नानात्वमविस्पष्टमिति ब्रह्मवादिनामभिप्रायः॥

सावित्राग्नेरनुषङ्गपक्षे बाधं दर्शयति। [४]"वृषा वा अग्निः॰ तस्मान्नानुषज्यः"[४] इति। योऽयमभ्युपलक्षितोऽग्निचित् सोऽयं

तस्मान्नानुषज्यः^(४)। ^(५)सोत्तरवेदिषु क्रतुषु चिन्वीत। उत्तरवेद्यां ह्यग्निश्चीयते^(५)। ^(६)प्रजाकामश्चिन्वीत ॥३॥

प्राजापत्यो वा एषोऽग्निः। प्राजापत्याः प्रजाः। प्रजावान् भवति। य एवं वेद^(६)। ^(७)पशुकामश्चि-

---

'वृषा' सेक्ता, रेतःसेचनेन प्रजामुत्पादयितुं समर्थः। तादृशो यद्यनुषक्तं कुर्यात् तदानीमस्याग्निचितो वृषणद्वयं कश्चिद्वैरी 'संस्रावयेत्' पीडयेत्। 'अस्य', 'यज्ञः', अपि विनश्येत्। 'तस्मात्', साविचाग्निरितरैश्च नानुषञ्जनीयः, स्वतन्त्रा एवैते सर्वेऽग्नयः। तस्मादारुणकेतुकस्य स्वातन्त्र्येणैव क्रतुत्वयुक्तमित्यर्थः ॥

क्रतुविशेषे तत्सम्बन्धं विधत्ते। ^(५)"सोत्तरवेदिषु • ह्यग्निश्चीयते"^(५) इति। उत्तरवेदिसहिता ये क्रतवः पशुबन्धादयः तेष्वेवारुणकेतुकमग्निं 'चिन्वीत', नतूत्तरवेदिरहितेष्वग्निहोत्रादिषु। यस्मादयं 'अग्निः,' उत्तरवेदिस्थाने 'चीयते', तस्मात् तद्रहितं तच्चयनं न युक्तं। एवं सत्यस्मादग्निनिषेधात् पूर्वोक्तादग्निहोत्रदर्शपूर्णमासयोरित्यादिविधानाच्चाग्निहोत्रादावारुणकेतुकस्य विकल्पो द्रष्टव्यः ॥

अथास्य चयनस्य काम्यप्रयोगाः। तत्रैकं काम्यं दर्शयति। ^(६)"प्रजाकामश्चिन्वीत • य एवं वेद"^(६) इति। अग्नेः प्रजानां च प्रजापतिना सृज्यत्वात् प्राजापत्यत्वन्तेन साम्येन प्रजाफलकत्वमग्नेः ॥

न्वीत। सञ्ज्ञानं वा एतत् पशूनां। यदापः। पशू-
नामेव सञ्ज्ञानेऽग्निं चिनुते। पशुमान् भवति। य एवं
वेद(७) ॥ ४ ॥

(८)वृष्टिकामश्चिन्वीत। आपो वै वृष्टिः। पर्जन्यो वर्षुको
भवति। य एवं वेद(८)। (९)आमयावी चिन्वीत। आ-
पो वै भेषजं। भेषजमेवास्मै करोति। सर्वमायुरेति(९)।
(१०)अभिचरꣳश्चिन्वीत। वज्रो वा आपः॥ ५ ॥

वज्रमेव भ्रातृव्येभ्यः प्रहरति। स्तृणुत एनं(१०)।

---

अथ द्वितीयकाम्यं दर्शयति। (७)"पशुकामश्चिन्वीत ० य एवं वेद"(७) इति। ये तृषार्त्ताः पशवो यत्र क्वाप्यपोऽन्विष्य जानन्ति तस्मात् 'आपः,' पशूनां', सम्यग्ज्ञानसाधनं आनोऽपाञ्चयने सति 'पशूनां', ज्ञानसाधन 'एव', अग्निश्चितो भवति॥

अथ तृतीयं दर्शयति। (८)"वृष्टिकामश्चिन्वीति ० य एवं वेद"(८) इति॥

चतुर्थं दर्शयति। (९)"आमयावी चिन्वीत ० सर्वमायुरेति" (९) इति। तापशान्तिकरत्वादपां भेषजत्वं॥

पञ्चमं दर्शयति। (१०)"अभिचरꣳश्चिन्वीत ० स्तृणुत एनं" (१०) इति। उपरिष्टात् ता आपो वज्रोभूत्वेत्येव वच्यते। तस्मादपां वज्रत्वं। अत्रापामेवोपधेयत्वात् सर्वतः फलसाधनत्वेनापामेवोपशंसनं॥

(११)तेजस्कामो यशस्कामः। ब्रह्मवर्चसकामः स्वर्गकाम-
श्चिन्वीत। एतावद्वावास्ति। यावदेतत्। यावदेवास्ति।
तदवरुन्धे(११)। (१२)तस्यैतद्व्रतं। वर्षति न धावेत् ॥६॥
अमृतं वा आपः। अमृतस्यानन्तरित्यै(१२)। (१३)ना-
प्सु मूत्रपुरीषं कुर्यात्। न निष्ठीवेत्। न विवसनः स्ना-
यात्। गुह्यो वा एषोऽग्निः। एतस्याग्नेरनतिदाहाय(१३)।

---

षष्ठसप्तमाष्टमनवमफलानि दर्शयति। (११)"तेजस्कामो ० तदवरुन्धे"(११) इति। तत् प्रजापश्वादिकं स्वर्गान्तं 'यावत्', फलमुक्तं 'एतावत्', एव लोकेऽपि विद्यमानमुत्तमं फलं, अतः 'यावत्', उत्तमं फलं 'अस्ति', 'तत्', सर्वमनेन चयनेन प्राप्नोति॥

अथारुणकेतुकाग्निचितो नियमविशेषं विधत्ते। (१२)"तस्यैतद्व्रतं ० अमृतस्यानन्तरित्यै"(१२) इति। पर्जन्ये 'वर्षति', सति यदा मार्गे गच्छति तदा क्लेदनभीत्या धावनं न कुर्यात्। तत्र करणे चामृतरूपाणामपां परित्यागेन स्वर्गसुखरूपममृतमन्तरितं भवेत्। तन्माभूदिति 'न धावेत्'॥

नियमान्तराणि विधत्ते। (१३)"नाप्सु मूत्रपुरीषं ० एतस्याग्नेरनतिदाहाय"(१३) इति। 'एषः' आरुणकेतुकः, 'अग्निः', अवीष्टकाभिर्निष्पाद्यत्वादप्सु गूढो वर्त्तते। तादृशो मूत्रादिकारिणमतिशयेन दहति। स दाहो माभूदिति मूत्रादिकं 'न कुर्यात्'। पुरुषार्थत्वेन शास्त्रेषु निषिद्धस्यापि अत्र पुनर्निषेधः॥

(१४)न पुष्करपर्णानि हिरण्यं वाधितिष्ठेत्। एतस्याग्ने-रनभ्यारोहाय(१४)। (१५)न कूर्मस्याश्नीयात्॥ नोदकस्या-घातुकान्येनमौदकानि भवन्ति। अघातुका आपः। य एतमग्निं चिनुते। य उ चैनमेवं वेद(१५) ॥ ७ ॥

चिनुते, चिनुते, प्रजाकाममश्विन्वीत, य एवं वेद, आपः, धावेत्, अश्नीयात्, चत्वारि च॥ अनु० २६ ॥

---

ओतप्रायश्चित्तार्थं नियमान्तरं विधत्ते। (१४)"न पुष्कर-पर्णानि ० एतस्याग्नेरनभ्यारोहाय"(१४) इति। पुष्करपर्णस्य हिरण्यस्य वा पादेनाक्रमणे सति तमग्निमारूढवान् भवेत्। अतस्तद्भयं 'नाधितिष्ठेत्' ॥

नियमान्तरं विधत्ते। (१५)"न कूर्मस्याश्नीयात् ० य उचै-नमेवं वेद"(१५) इति। 'कूर्मस्य', अङ्गं किञ्चिदपि न भुञ्जीत। उदकशब्देन तत्रत्यो मीनादिरूपो लक्ष्यते, तदीयमप्यङ्गं 'नाश्नीयात्'। 'यः', 'एतं' आहवकेतुकं, 'अग्निं', 'चिनुते', 'यः', च 'एवं', 'वेद', तं 'एनं', प्रति 'औदकानि' उदकवर्त्तीनि मीनादीनि, 'अघातुकानि' अहिंसकानि, 'भवन्ति' 'आपः', अपि 'अघातुकाः' उदकमरणं न भवेदित्यर्थः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-रण्यके प्रथमप्रपाठके षड्विंशोऽनुवाकः ॥ २६ ॥

अथ सप्तविंशोऽनुवाकः ।

(१)इमा नु कं भुवना सीषधेम। इन्द्रश्च विश्वे च देवाः(१)। (२)यज्ञञ्च नः तन्वञ्च प्रजाञ्च। आदित्यैरिन्द्रः सह सीषधातु(२)। (३)आदित्यैरिन्द्रः सगणो मरुद्भिः। अस्माकं भूत्ववितां तनूनां(३)। (४)आप्लवस्व

---

अथ सप्तविंशोऽनुवाकः ।

कल्पः। इमा नु कमिति चतस्र इति। तत्र प्रथमामाह। (१)"इमा नु कं ० विश्वे च देवाः"(१) इति। 'इन्द्रश्च विश्वे देवाश्च', वयञ्च 'इमाः' 'भुवनानि', 'नु कं सीषधेम' सुखनामसु नु कमितिपठितं सुखं यथा भवति तथा साधयाम॥

अथ द्वितीयामाह। (२)"यज्ञं च न ० सह सीषधातु" (२) इति। अयं 'इन्द्रः', 'आदित्यैः सह', 'नः' अस्माकं, 'यज्ञं', शरीरं 'प्रजाञ्च', साधयतु॥

अथ तृतीयामाह। (३)"आदित्यैरिन्द्रः ० तनूनां"(३) इति। 'आदित्यैर्मरुद्भिः', च युक्तत्वात् 'सगणः', अयं 'इन्द्रः', अस्माकं 'तनूनां', 'अविता भूत्' रक्षिता भवतु* ॥

कल्पः। आप्लवस्वेति सप्तदशचपण्य इति। तत्र प्रथमामाह। (४)"आप्लवस्व ० स्वां पुरं"(४) इति। अशब्देन जन्मवान्

---

* अत्र चतुर्थी नास्ति।

मास्रवस्व। आण्डीभव ज मा मुहुः। सुखादीं दुःख-
निधनां। प्रतिमुञ्चस्व स्वां पुरं[४] ॥ १ ॥

[५]मरीचयः स्वायम्भुवाः। ये शरीराण्यकल्पयन्। ते ते देहं कल्पयन्तु। मा च ते ख्यास्मतीरिषत्[५]। [६]उत्तिष्ठत मा स्वप्त। अग्निमिच्छध्वं भारताः। राज्ञः

---

यजमान उच्यते। आस्रवं नाम गमनं जन्म, स्रवनं प्रापणं. यजमानं अक्षोपेतमाहुः। 'आस्रवस्व' पुनः पुनर्जन्मलक्षणमागमनं, मा कुरु, मुहुः 'मास्रवस्व' पुनः पुनर्मरणलक्षणं स्रवनं मा कुरु। 'मा 'मुहुराण्डीभव' आण्डः ब्रह्माण्डमध्य इत्यर्थः आण्डीत्यभूततद्भाव उच्यते। पूर्वमनाण्डा इदानीमाण्डीभव तस्य निषेधो माशब्देनोच्यते, पुनः पुनर्ब्रह्माण्डवर्त्तित्वं तव माभूदित्यर्थः। स्वशब्देनावश्यकत्वं द्योतयति। संसारोत्तरणविषया तवाख्यातिः सर्वथा विनश्यत्वित्यर्थः ॥

अथ द्वितीयामाह। [५]"मरीचयः स्वायम्भुवाः ॰ मा च ते ख्यास्मतीरिषत्"[५] इति ॥

अथ तृतीयामाह। [६]"उत्तिष्ठत मा स्वप्त ॰ सूर्येण सयुजोषसः"[६] इति। हे ऋत्विजो यूयं 'उत्तिष्ठत', उत्थिता भवत, उत्साहं कुरुतेत्यर्थः। 'मा स्वप्त' स्वप्नं मा कुरुत, असला मा भूतेत्यर्थः। 'भारताः' हविरादिभरणशीलाः सन्तः,

सोमस्य तृप्तासः । सूर्येण सयुजोषसः(६) । (७)युवा सुवासाः(७) । (८)अष्टाचक्रा नवद्वारा ॥ २ ॥

देवानां पूरयोध्या । तस्याᳬं हिरण्मयः कोशः । स्वर्गो लोको ज्योतिषाऽऽवृतः(८) । (९)यो वै तां ब्रह्मणो

---

'अग्निं' आरुणकेतुकं, 'इन्धध्वं' । कीदृशा ऋत्विजः, 'राज्ञः' राजमानस्य, 'सोमस्य', पानेन 'तृप्ताः', 'सूर्येण', 'सयुजोषसः' समानप्रीतयः, यद्यप्येवंविधो मन्त्र अनुष्ठेयार्थस्येष्टकोपधानस्य प्रकाशको न भवति तथाप्येतदर्थानुस्मरणेन कश्चिददृष्टातिशयो द्रष्टव्यः ॥

अथ चतुर्थ्याः प्रतीकं दर्शयति । (७)"युवा सुवासाः"(७) इति । सोऽयं मन्त्रो यजन्ति त्वामध्वरे देवयन्त इत्यनुवाके व्याख्यातः ॥

अथ पञ्चमीमाह । (८)"अष्टाचक्रा ० ज्योतिषावृतः"(८) इति । पूरिति शरीरमुच्यते, 'देवानां' इन्द्रादीनां, 'पूः,' 'अष्टाचक्रा' चक्रवदावरणभूतास्त्वगसृङ्मांसमेदोस्थिमज्जाशुक्रौ-जोरूपाः अष्टौ धातवो यस्याः सेयं 'अष्टाचक्रा', शिरोवर्त्तिभिः सप्तभिर्द्वारैरधोवर्त्तिभ्यां द्वाराभ्यामुपेता 'नवद्वारा', 'अयोध्या' कर्मगतिमन्तरेण केनापि प्रहर्त्तुमशक्या, 'तस्यां' पुरि, 'हिरण्मयः' सुवर्णनिर्मितपदार्थसदृशः, 'कोशः', अवकाशरूपः, 'स्वर्गः' सुखमयः, 'लोकः' स्थानविशेषः, 'ज्योतिषा' भासकेन जीवचैतन्येन, 'आवृतः' परिवेष्टितः, वर्त्तते ॥

वेद। अमृतेनावृतां पुरीं। तस्मै ब्रह्म च ब्रह्मा च।
आयुः कीर्तिं प्रजां ददुः(९)। (१०)विभ्राजमानाꣳ हरि-
णीं। यशसा सम्परीवृतां। पुरꣳ हिरण्मयीं ब्रह्मा॥ ३॥
विवेशापराजिता(१०)। (११)पराङेत्यज्यामयी। परा-

---

अथ षष्ठीमाह। (९)"यो वै तां ० प्रजां ददुः"(९) इति। 'ब्रह्मणः' सत्यं ज्ञानमनन्तमित्यादिश्रुतिप्रतिपादितस्य वस्तुनः, सम्बन्धिनी 'अमृतेन' परमानन्देन, 'आवृतां', 'तां पुरीं', 'यो वै' यः कोऽपि पुमान्, 'वेद', 'तस्मै' विदुषे, 'ब्रह्म च' परमात्मापि, 'ब्रह्मा च' प्रजापतिरपि, चकाराभ्यामन्येऽपि सर्वे देवा आयुरादिकं प्रयच्छन्ति॥

अथ सप्तमीमाह। (१०)"विभ्राजमानाꣳ ० विवेशापराजिता"(१०) इति। 'ब्रह्मा' प्रजापतिः, 'पुरं' शरीरं, 'विवेश' प्रविष्टवान्। कीदृशीं पुरं, 'विभ्राजमानां' विशेषेण राजमानां, 'हरिणीं' पापहरणशीलां, 'यशसा' जगत्स्रष्टृत्वलक्षणया कीर्त्या, 'सम्परीवृतां' सम्यक् परिवेष्टितां, 'हिरण्मयीं' सुवर्णनिर्मितां, कदाचिदपि पराजयरहितां॥

अथाष्टमीमाह। (११)"पराङेत्यज्यामयी ० सुरानुभयान्" (११) इति। 'विद्वान्' परब्रह्मतत्त्ववित्, 'पराङ्' पुनरावृत्तिरहितः, 'एति' ब्रह्मतत्त्वं प्राप्नोति। कीदृशोविद्वान्, 'अज्यामयी'

ङ्क्त्यनाशकी। इह चामुत्र चान्वेति। विद्वान् देवासुराननुभयान्[११]। [१२]यत्कुमारी मन्द्रयते। यद्योषित्पतिव्रता। अरिष्टं यत्किञ्च क्रियते। अग्निस्तदनुवेधति[१२]। [१३]अशृतासः शृतासश्च॥ ४॥

---

ज्या, वयोहानिः आमयः, व्याधिः तद्वान् ज्यामयी तदुभयराहित्यादयम्, 'अज्यामयी', नाशकः अपमृत्युबन्धकं कर्म वा, तद्योगान्नाशकी, तद्राहित्यात् 'अनाशकी', देहतादात्म्यभ्रमाभावात् वयोहानिव्याध्यपमृत्युरहितः पुनरावृत्तिशून्यः सन् ब्रह्म प्राप्नोति। 'इह चामुत्र च', लोकद्वयेऽपि, 'देवासुराननुभयान्', 'अन्वेति' अनुगच्छति, सर्वात्मको भवतीत्यर्थः॥

अथ नवमीमाह। [१२]"यत्कुमारी मन्द्रयते ० अग्निस्तदनुवेधति"[१२] इति। 'कुमारी' विवाहरहिता स्त्री, 'यत्' पापं पुरुषसम्भोगरूपमुद्दिश्य,'मन्द्रयते' हर्षं करोति। 'योषित्' युवतिः च, 'यत्' पापं परपुरुषसम्भोगं रूपम् उद्दिश्य, 'मन्द्रयते' हृष्टा भवति, 'पतिव्रता', अपि स्वभर्तृसंयोगाभावेन क्लिष्टा सती 'यत्' पापं देहत्यागरूपमुद्दिश्य, 'मन्द्रयते', 'यत्' अन्यदपि, 'किञ्चित्','अरिष्टं' दानादिना रेष्टुं विनाशयितुमशक्यं महत्पापं, अस्य यजमानस्य येन केनापि 'क्रियते' 'तत्' सर्वम्, अयमाहवनकेतुकः 'अग्निः', 'अनुवेधति' अनुक्रमेण विनाशयति॥

अथ दशमीमाह। [१३]"अशृतासः ० इन्द्रमग्निश्च ये वि-

यज्वानो येऽप्ययज्वानः। स्वर्यन्तो नापेक्षन्ते। इ-न्द्रमग्निञ्च ये विदुः(१३)। (१४)सिकता इव संयन्ति। रश्मिभिः समुदीरिताः। अस्माल्लोकादमुष्माच्च। ऋ-षिभिरदात् पृश्निभिः(१४)। (१५)अपेत वीत विच सर्पता-

---

दुः"(१३) इति। 'अशृतासः' अपक्वचित्ताः, 'शृतासश्च' पक्वचित्ता अपि, 'यज्वानः' श्रुतिस्मृतिविहितकर्मानुष्ठायिनः, 'येऽप्ययज्वानः' तद्विपरीताः, तेषां मध्ये 'ये' पुरुषाः,'इन्द्रं' परमैश्वर्ययुक्तं परमात्मानं, 'अग्निं' आरुणकेतुकञ्च, 'विदुः' याथात्म्येन जानन्ति, ते ज्ञानिनः 'स्वर्यन्तः' स्वर्गं मोक्षं वा प्राप्नुवन्तः, ज्ञानव्यतिरिक्तसाधनान्तरं 'नापेक्षन्ते'॥

अथैकादशीमाह। (१४)"सिकता इव ० पृश्निभिः"(१४) इति। यथा लोके वायुना प्रेरिताः 'सिकताः' क्वचित् परस्परं 'संयन्ति' राशिरूपेण सङ्गच्छन्ते। तद्वदेते जीवाः 'रश्मिभिः' रज्जुस्थानीयैः कर्मभिः, 'समुदीरिताः' प्रेरिताः सन्तः, कर्मार्जनस्थानीयात् 'अस्माल्लोकात्' कर्मफलभोगरूपात्, 'अमुष्माच्च' लोकात्, तदा तदा निर्गत्य क्वचित् क्वचित् संयन्ति तेषां सर्वेषामनुग्रहाय परमेश्वरः 'पृश्निभिः' शुक्लैः, तत्त्वप्रकाशकैः, 'ऋषिभिः' मन्त्रैः, 'अदात्' ज्ञानं प्रयच्छति॥

अथ द्वादशीमाह। (१५)"अपेत वीत ० वसानमस्मै"(१५) इति। यमेन नियुक्ताः पुरुषाः पुरातना नूतनाश्च सर्वस्यां

तः। येऽत्रस्थाः पुराणा ये च नूतनाः। अहोभिरद्भिर-क्तुभिर्व्यक्तं॥ ५ ॥

यमो ददात्ववसानमस्मै(१५)। (१६)नृ मुणन्तु नृ पा-त्वर्यः। अकृष्टा ये च कृष्टजाः। कुमारीषु कनीनीषु।

---

भूमौ व्याप्य वर्त्तन्ते तान् सम्बोध्येदमुच्यते हे यमदूताः 'ये' यूयं, 'पुराणाः' अत्र अग्निक्षेत्रे ये पूर्वं स्थिताः, 'ये च नूतनाः', 'ये अत्रस्थाः', ते सर्वे यूयं 'अपेत' अस्मात् स्थानादपगच्छत, 'वीत' परस्परं वियुज्य गच्छत, किञ्च 'अतः' 'विसर्पत' अस्मात् स्थानाद्विदूरं गच्छत, 'अहोभिः' दिवसैः, 'अक्तुभिः' रात्रि-भिश्च, 'अद्भिः' अबीष्टकाभिः, 'व्यक्तं' विशेषेण सम्बद्धं, 'अव-सानं' इदं स्थानं, 'अस्मै' यजमानाय, 'यमो ददातु', यमेन दत्ते सति केषुचिदहोरात्रेष्वत्राबीष्टकोपधानं कुर्म इत्यर्थः॥

अथ त्रयोदशीमाह। "(१६)नृमुणन्तु ० च ये हिताः"(१६) इति। अविभक्तिको नृशब्दो मनुष्यजातिमात्रे ज्ञेयः, परपीडा-दिना परभृत्यभावादिना जीवन्तो गर्हिताः पुरुषाः ते जातिमा-त्रान्वयवन्तो नृशब्देनात्र विवक्षिताः। तादृशाः पुरुषाः 'मुण-न्तु' अस्मात् स्थानादपगच्छन्तु,'नृ' तादृशानां मनुष्याणां,'अर्यः' स्वामी, च 'पातु' इतः स्थानादपेत्यास्मान् पातु, 'अकृष्टाः' अक-र्मयोग्याः, दुष्कृतप्रसूताः, 'ये च कृष्टजाः' विशुद्धवंशजाता एव

जारिणीषु च ये हिताः[१६]। [१७]रेतःपीता आण्डपीताः। अङ्गारेषु च ये हुताः। उभयान् पुत्रपौत्रकान्। युवेऽहं यमराजगान्[१७]। [१८]शतमिन्नु शरदः[१८]॥ [१९]अ-

---

सन्तः, अकर्मयोग्या अन्धादयः पातकिनो वा, ते सर्वेऽप्यस्मात् स्थानादपयन्तु। तथा 'कुमारीषु' विवाहरहितासु स्त्रीषु, 'ये हिताः' गर्भत्वेन स्थापिताः, तथा 'कनीनीषु' कुमार्याः पुत्रीषु, विवाहयुक्तास्वपि ये गर्भत्वेन स्थापिताः, तथा 'जारिणीषु' उपपतियुक्तासु स्त्रीषु, 'ये हिताः' गर्भत्वेन स्थापिताः। ते दुष्टक्षेत्रजाः सर्वेऽप्यस्मादुपधानस्थानादपगच्छन्तु॥

अथ चतुर्दशीमाह। [१७]"रेतःपीताः ० यमराजगान्" [१७] इति। 'रेतःपीताः' पीतरेतस्काः पुरुषाः। 'आण्डपीताः' अण्डस्पृष्टोदकाः पापिनः, एवमाद्यभक्ष्यभक्षणाः सर्वेऽपीतोऽपगच्छत। तथा 'अङ्गारेषु', 'ये' पश्वादयः, अशास्त्रीयमार्गेण 'हुताः', पिपीलिकादयो वा पिशाचादिभावेन जगति वर्त्तन्ते सर्वेऽप्यस्मात् स्थानादपगच्छन्तु। तथा 'पुत्रपौत्रकान्' श्रुतवृत्तहीनताकुत्सितान् पुत्रान् पौत्रांश्च, 'उभयान्', 'अहं युवे' अस्मात् स्थानात् पृथक् करोमि, तथा 'यमराजगान्' यमेन पातयितुं योग्यान्, सर्वानप्यपनयामि॥

अथ पञ्चदश्याः प्रतीकं दर्शयति। [१८]"शतमिन्नुशरदः" [१८] इति। इयञ्च शाखान्तरीया वैश्वदेवकाण्डे योगे योग

द्रो यद्ब्रह्म विलवं। पितृणाञ्च यमस्य च। वरुणस्या-
श्विनोरग्नेः। मरुताञ्च विहायसां(१९)। (२०)कामप्रय-

---

इत्यनुवाके समाम्नाता। तत्पाठस्तु। शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसन्तनूनां। पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोरिति। हे 'देवाः', 'शतमिन्नु' शतमपि, 'शरदः' संवत्सराः, 'अन्ति' अस्माकमन्तिकस्था एवाल्पा एव, शतायुः पुरुष इति श्रुत्या शतं, शरद आधिक्येन तत्र तत्र प्रशंसन्ते। अस्माकं तु न पर्याप्ता तत्र हेतुरुच्यते, 'यत्र' एषु शतसंवत्सरेषु, 'नः' अस्मदीयानां, 'तनूनां', 'जरसं' शरीराणं वयोहानिलक्षणं शैथिल्यं, 'चक्र' हे देवा यूयं कृतवन्तः। किञ्च 'यत्र' यस्यां जरायां, 'पुत्रासः' पुत्राः स्वकीयोदरजाताः स्वेन रचिता एव, 'पितरो भवन्ति' प्रत्युत पालका भवन्ति। तादृशमायुः कथं पर्याप्तं भवेत्, आस्तां तावदायुषः पर्याप्तिः। हे देवाः यूयं 'आयुर्गन्तोः' तादृशमप्यायुः सर्वं प्राप्तुमिच्छा विद्यते यस्य तस्मात्, 'मध्या' तस्यायुषो मध्ये, 'नः' अस्मान्, 'मारीरिष' तद्धिंसिताम् मा कुरुत, इति शाखान्तरीयमन्त्रस्यार्थः॥

अथ षोडशीमाह। (१९)"अदो यत्० विहायसां"(१९) इति। 'यत् ब्रह्म', पूर्वोक्तजगत्कारणमस्ति 'अदः' ब्रह्म, पित्रादीनां सर्वेषां 'विलवं' विशेषेणालम्बनं। 'विहायसाः' इत्यनेनाकाशवर्त्तिनो यक्षगन्धर्वादय उच्यन्ते॥

वर्णम्मे अस्तु। सद्योवास्मि सनातनः। इति नाको ब्रह्मिश्रवो रायो धनं। पुत्रानापो देवीरिहाहिता[१०] ॥ ॥ ६ ॥

पुरं, नवद्वारा, ब्रह्मा, च, व्यक्त॰, शरदः, अष्टौ च ॥ अनु॰ २७ ॥

---

अथ सप्तदशीमाह। [१०]"कामप्रयवणं ॰ पुत्रानापोदेवी-रिहाहिता"[१०] इति। प्रकर्षेण यवनं मिश्रीकरणं प्रयवणं कामानां प्रयवणं येन ब्रह्मणा भवति तत् 'कामप्रयवणं','मे' मम, ब्रह्मप्रकामप्रापकं 'अस्तु'। 'हि' यस्मात्, अतः 'सनातनः' अनादिसिद्धः, 'स एव' परमात्मैव, 'अस्मि', इत्यतः कारणात् 'नाकः' दुःखरहित स्थानविशेषः, 'ब्रह्मिश्रवः' ब्रह्मविषयवाक्यश्रवणं, 'रायः' हिरण्यादयः, धनं प्रीतिसाधनं स्त्रीपुत्रादि-चेत्येतत् सर्वं ममास्तु इति शेषः। 'देवीः' देवनशीलाः, 'आपः' यूयमवीष्टकाः, 'इह' अस्मिन् कर्मणि, 'पुत्रान्', 'आहिता' धत्त सम्पादयत ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके सप्तविंशोऽनुवाकः ॥ २७ ॥

---

अथ अष्टाविंशोऽनुवाकः ।

(१)विशीर्ष्णीं गृध्रशीर्ष्णीं च । अपेतो निर्ऋतिं हथ । परिबाधं श्वेतकुक्षं । निजङ्घं शबलोदरं(१) । (२)स तान्वाच्यायया सह । अग्ने नाशय संदृशः । ईर्ष्यासूये

---

अथ अष्टाविंशोऽनुवाकः ।

कल्पः । विशीर्ष्णीमिति द्वे इति । तत्र प्रथमामाह । (१)"विशीर्ष्णीं ० शबलोदरमि"(१) इति । हे अग्ने 'विशीर्ष्णीं' शिरोरहितां, 'गृध्रशीर्ष्णीं च', गृध्रसमानशिरोयुक्तां च, 'निर्ऋतिं' राक्षसीम्, अलक्ष्मीम्, 'इतः' अस्मात् स्थानात्, 'अपहथ' अपजहि, परिबधादिनामका निर्ऋतिसम्बन्धिनः पुरुषा अप्यपजहि 'परिबाधपरितेः' 'बाधकं' श्वेतकुक्षिः, श्वेतवर्णकुक्षियुक्तं 'निजङ्घं' न्यग्भूतजङ्घायुक्तं, 'शबलोदरं' शुक्लवर्णमिश्रितोदरयुक्तं ॥

अथ द्वितीयामाह । (२)"स तान्वाच्यायया सह ० अग्नेनाशय संदृशः"(२) इति । वाच्यानि जनैर्निन्द्यानि, पूर्वोक्तपरिबाधादिरूपाण्यपत्यानि तान्यात्मन इच्छतीति 'वाच्याया' परिबाधादीनां माता काचिदलक्ष्मी, अस्मदुपद्रवोपायं सम्यक् पश्यन्तीति 'संदृशः', परिबाधादयः हे 'अग्ने', 'स', त्वं 'तान्' परिबाधादीन्, 'नाशय' मात्रासह विनाशाय । किञ्च ये

बुभुक्षां। मन्युं कृत्यां च दीधिरे। रथेन किꣳशुकावता। अग्ने नाशय संदृशः[१] ॥ १ ॥

विशीर्ष्णीं द्रश* ॥ अनु॰ २८ ॥

---

अथ एकोनत्रिंशोऽनुवाकः।

[१]पर्जन्याय प्रगायत। दिवस्पुत्राय मीढुषे। स नो य-

---

विद्वेषिणोऽस्माकमीर्ष्यादीन् 'दीधिरे' दीपयन्ति। अस्मद्गुणानामसहनं 'ईर्ष्या', तेषु दोषारोपः 'असूया', अन्नाभावेन बाधा 'बुभुक्षा', 'मन्युः' अस्मद्विषयः क्रोधः, 'कृत्या' अस्मद्विषयोऽभिचारः, एतेषामीर्ष्यादीनां दीपनमभिवृद्धिं कुर्वन्तो ये द्वेषिणोऽस्मान् मारयितुं सम्यक् पश्यन्ति तान् सर्वान् 'रथेन', तदीयेन सह, 'नाशय'। कीदृशेन रथेन, 'किंशुकावता' कुत्सिताः शुकाः किंशुकाः प्राण्युपद्रवकारिणः पक्ष्याकारा राक्षसविशेषास्तैर्युक्तेन ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके अष्टाविंशोऽनुवाकः ॥ २८ ॥

---

अथ एकोनत्रिंशोऽनुवाकः।

कल्पः। पर्जन्यायेति तिस्र इति। तत्र प्रथमामाह। "[१]पर्ज-

---

* एतदुपसंहारप्रतीकं मद्दृष्टपुस्तकेषु एकोनत्रिंशानुवाकशेषे वर्त्तते। तद्भाष्यमतेनाभावर्त्त।

वसमिच्छतु(१)। (२)इदं वचः पर्जन्याय स्वराजे। हृदो अस्त्वन्तरन्तद्युयोत। मयोभूर्वातो विश्वकृष्टयः सन्त्वस्मे। सुपिप्पला ओषधीर्देवगोपाः(२)। (३)यो गर्भमो-

---

न्याय ० समिच्छतु"(१) इति। हे ऋत्विग्यजमानाः 'पर्जन्याय' वृष्ट्यभिमानिदेवार्थं, 'प्रगायत' प्रकर्षेण स्तुतिं कुरुत। कीदृशाय, 'दिवस्पुत्राय', दिव्युत्पन्नत्वात् पुत्रत्वं। 'मीढुषे' वृष्टिरूपेण जलस्य सेचकाय, 'सः' पर्जन्यदेवः, 'नः' अस्माकं, 'यवसं' यवादिरूपं भक्ष्यं, सम्पादयितुं 'इच्छतु'॥

अथ द्वितीयामाह। (२)"इदं वचः ० देवगोपाः"(२) इति। 'स्वराजे' स्वत एव राजमानाय, 'पर्जन्याय' पर्जन्यदेवार्थं, अस्माभिरुक्तं 'इदं' स्तुतिरूपं, 'वचः', 'हृदोऽन्तरमस्तु' तदीयचित्ते प्रविष्टमस्तु। 'तत्' मदीयं वचः, 'युयोत' तच्चित्ते हे ऋत्विजो मिश्रयत। 'वातः' वायुः, 'अस्मे' अस्मासु, 'मयोभूः' सुखस्य भावयिता, भवतु 'विश्वकृष्टयः' सर्वेऽपि मनुष्याः, अस्मासु मयोभुवः सन्तु। 'ओषधीः' व्रीहियवाद्याः, 'सुपिप्पलाः' शोभनफलोपेताः, 'देवगोपाः' हविर्द्वारा देवानां पालयित्र्यः 'सन्तु'॥

अथ तृतीयामाह। (३)"यो गर्भमोषधीनां ० पुरुषीणाम्" (३) इति। 'यः' पर्जन्यो देवः, 'व्रीहियवाद्योषधीनां', 'गवां'

षधीनां। गवां कृणोत्यर्वतां। पर्जन्यः पुरुषीणां[१] ॥ २ ॥
पर्जन्याय दश ॥ अनु० २९ ॥

अथ त्रिंशोऽनुवाकः।

[१]पुनर्मा मैत्विन्द्रियं। पुनरायुः पुनर्भगः। पुनर्ब्राह्मणमैतु मा। पुनर्द्रविणमैतु मा[१]। [२]यन्मेऽद्य रेतः

---

प्रजानां, मनुष्यस्त्रीणाञ्च 'गर्भं कृणोति'। सोऽस्माकं मयोभूरिति शेषः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके एकोनत्रिंशोऽनुवाकः॥ २९ ॥

अथ त्रिंशोऽनुवाकः।

कल्पः। पुनर्मा मैत्विति चेति। तत्र प्रथमामाह। [१]"पुनर्मा मैत्विन्द्रियं ० पुनर्द्रविणं मैतु मा"[१] इति। यत् 'इन्द्रियं' श्रोत्रमेव नष्टं, तत् 'पुनः', अपि 'मां', प्रति 'मैतु' आगच्छतु। 'आयुः', अपि 'पुनरैतु', ब्राह्मण इदं 'ब्राह्मणं' ब्रह्मवर्चसं, तदपि 'पुनर्मामैतु'। 'द्रविणं' धनमपि, 'पुनर्मामैतु'। एतत् सर्वं मम पुनः पुनर्वर्द्धतामित्यर्थः॥

अथ द्वितीयामाह। [२]"यन्मेऽद्य रेतः ० वर्चसे"[२] इति।

पृथिवीमस्कान् । यदोषधीरप्यसरद्यदापः । इदं तत् पुनराददे । दीर्घायुत्वाय वर्चसे(१) । (२)यन्मे रेतः प्रसिच्यते । यन्म आजायते पुनः ॥ तेन माममृतं कुरु । तेन सुप्रजसं कुरु ॥ १ ॥

पुनः, द्वे च ॥ अनु० ३० ॥

---

अथास्मिन् दिने 'मे' मदीयं, 'यद्रेतः', 'पृथिवीं', प्रति 'अस्कान्' प्रमादेन स्कन्नमासीत् । 'ओषधीः अपि', मदीयं 'यत्' रेतः, 'असरत्' 'प्राप्नोत्', ओषधीषु स्कन्नमित्यर्थः । यच्च रेतः, आपः, असरत्, अप्सु स्कन्नं, 'तदिदं' रेतः, 'पुनः', अपि अहं 'आददे' । किमर्थं, 'दीर्घायुत्वाय', 'वर्चसे' आयुर्वृद्धये, ब्रह्मवर्चसाय च ॥

अथ तृतीयामाह ।(१)"यन्मे रेतः ० सुप्रजसं कुरु"(१)इति । 'मे' मदीयं, 'यद्रेतः', गर्भाशये प्रकर्षेण 'सिच्यते', 'मे' मदीयं, 'यत्' रेतः, 'पुनः', अपि 'आजायते' अपत्यरूपेणोत्पद्यते, 'तेन' अपत्येन, 'मां' यजमानं, 'अमृतं' सुखयुक्तं, 'कुरु' । 'तेन' अपत्यरूपेण रेतसा, 'मां', 'सुप्रजसं' शोभनपुत्रपौत्रादिप्रजायुक्तं 'कुरु' ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके त्रिंशोऽनुवाकः ॥ ३० ॥

अथैकत्रिंशोऽनुवाकः।

[१]अग्निस्तिरोधाऽजायत। तव वैश्रवणः सदा। तिरोधेहि सपत्नान्नः। ये अपोऽश्नन्ति केचन[१]। [२]त्वाष्ट्रीं मायां वैश्रवणः। रथꣳ सहस्रबन्धुरं। पुरु-

---

अथैकत्रिंशोऽनुवाकः।

अथ वैश्रवणयज्ञमन्त्रा उच्यन्ते। तत्र चतसृभिर्वैश्रवणमावाहयेत्। तासु प्रथमामाह। [१]"अग्निस्तिरोधाऽजायत ० अपोऽश्नन्ति केचन"[१] इति। अत्रानादिसिद्धः कुबेरः सम्बोध्यते। हे कुबेर त्वया गृहीतो यः 'वैश्रवणः', विश्रवसोऽपत्यं, स खलु 'सदा', 'तव', 'अग्निस्तिरोधाऽजायत' अनुपलक्षितानां त्वदीयकर्मणां तिरोधायक आसीत्। अतो वैश्रवणस्य कर्मतिरोधायकत्वं निवार्य्य, तन्मुखेन 'नः' अस्मदीयान् शत्रून्, 'तिरोधेहि' विनाशय, 'केचन' अन्येऽपि, 'अपः' अस्मदीयानि कर्माणि, 'अश्नन्ति' तिरोदधति, नाशयन्ति, तानपि सर्वांस्त्वं 'तिरोधेहि' ॥

अथ द्वितीयामाह। [२]"त्वाष्ट्रीं मायां ० याहि नो बलिम्"[२] इति। हे कुबेर वैश्रवणसहितस्त्वं 'रथमास्थाय', 'नो बलिं' अस्मदीयां पूजां प्रति, 'आयाहि' आगच्छ। कीदृशं रथं, 'सहस्रबन्धुरं' अराणां सहस्रं यस्मिन् चक्रे तच्चक्रं सहस्रवत्

स्वश्वंऽसहस्राश्वं । आस्थाया याहि नो बलिं(१) । (२)यस्मै भूतानि बलिमावहन्ति । धनं गावो हस्तिहिरण्यमश्वान् ॥ १ ॥

असाम सुमतौ यज्ञियस्य । श्रियं बिभ्रतोऽन्नमुखीं विराजम्(२) । (४)सुदर्शने च क्रौञ्चे च । मैनागे च म-

---

तद्युक्ताधूर्यस्य रथस्य सोऽयं सहस्रवन्धुरः तादृशं, 'पुरुश्चक्रं' बहुचक्रोपेतं, 'सहस्राश्वं' सहस्रसङ्ख्याकैरश्वैरुपेतं, । तस्य रथस्योपमानमुच्यते । 'त्वाष्ट्रीं मायां' यथा त्वष्ट्रा निर्मिता माया आश्चर्यकरी तद्वदाश्चर्यकरं ॥

अथ तृतीयामाह । (२)"यस्मै भूतानि ० विराजम्"(२) इति । 'यस्मै' कुबेराय, 'भूतानि' सर्वे प्राणिनः, 'बलिं' पूजां, 'आवहन्ति' सम्पादयन्ति । कीदृशं बलिं, धनादिरूपं, 'धनं' मणिमुक्तादिकं, हस्तिभिः सहितं हिरण्यं 'हस्तिहिरण्यं', 'यज्ञियस्य' बलिना पूजनीयस्य तस्य कुबेरस्य, 'सुमतौ' अनुग्रहबुद्धौ, 'असाम' अवस्थिता भूयास्म । कीदृशस्य कुबेरस्य, 'अन्नमुखीं' अन्नप्रधानां, 'विराजं' विविधं राजमानां, 'श्रियं' सम्पदं, 'बिभ्रतः' धारयतः ॥

अथ चतुर्थीमाह । (४)"सुदर्शने ० सऽहार्यं नगरं तव"(४) इति । सुदर्शनादिनामकास्त्रयः पर्वताः तस्मिन्नेकैकस्मिन् 'महागिरौ', यत् 'तव नगरं', तत् 'संहार्यं', तत् परित्यज्य

हागिरौ। सतद्वाद्वारंगमन्ता। सꣳहार्यं नगरन्तव(४)। (५)इति मन्त्राः। कल्पोत ऊर्ध्वं(५)। (६)यदि बलिꣳ-हरेत्। हिरण्यनाभये वितुदये कौबेरायायं बलिः॥२॥ सर्वभूताधिपतये नम इति। अथ बलिꣳहृत्वोप-

---

अस्मदनुग्रहार्थमत्रागच्छेत्यर्थः। कीदृशं नगरं, 'सतद्वाद्वार-गमन्ता' सन्तः, शतं वा द्वाराणि, अद्वारः कक्ष्याविशेषाः गम-न्ताः, गमनयोग्या रथ्याविशेषाः शतसङ्ख्याका द्वारविशेषाः कक्ष्याविशेषा रथ्याविशेषाश्च यस्मिन् नगरे तं नगरं सतद्वा-द्वारगमन्ता॥

ओदनबुद्धिसमाधानार्थं पूर्वोत्तरग्रन्थौ विभजते। (५)"इति मन्त्राः ० ऊर्ध्वम्"(५) इति। 'इति' एवमुक्ता, अक्षिनिरोधे-त्यादयो नगरन्तवेत्यन्ता मन्त्रा द्रष्टव्याः। 'अत ऊर्ध्वं', यदि बलिं हरेदित्यादिग्रन्थः 'कल्पः' अनुष्ठानविधायकब्राह्मणरूपः॥

तद्विधां दर्शयति। (६)"यदि बलिꣳहरेत् ० हत्वोपति-ष्ठेत"(६) इति। 'यदि'शब्दप्रयोगाद्बलिहरणं वैकल्पिकमिति गम्यते। तस्मिन् बलिहरणपक्षे हिरण्येत्यादिमन्त्रेण बलिं हृत्वा वक्ष्यमाणमन्त्रेणोपस्थानं कुर्यात्। कुबेरस्य सम्बन्धी वैश्रवणः कौबेरः, हिरण्यं नाभौ यस्यासौ हिरण्यनाभः सर्वाभरण-भूषित इत्यर्थः। हिरण्यं दुर्लभं कुर्वन् सर्वप्राणिनो विशेषेण तुदति व्यथयतीति 'वितुदिः', यथोक्तगुणयुक्ताय वैश्रवणाय

तिष्ठेत(६)। (७)क्षत्रं क्षत्रं वैश्रवणः। ब्राह्मणा वयꣳ स्मः। नमस्ते अस्तु मा मा हिꣳसीः। अस्मात् प्रविश्यान्नमद्धीति(७)। (८)अथ तमग्निमादधीत। यस्मिन्नेतत्कर्म प्रयुञ्जीत(८)। (९)तिरोधा भूः। तिरोधा भुवः॥ ३॥

---

'अयं बलिः', मया दत्तः, सर्वप्राणिनामधिपतये तस्मै वैश्रवणाय 'नमः', अस्तु। इत्युक्तो बलिहरणमन्त्रः॥

(७)"क्षत्रं क्षत्रं ० प्रविश्यान्नमद्धीति"(७) इति। अत्रैकः क्षत्रशब्दः क्षतात् त्रायत इति व्युत्पत्त्या पालकत्वं ब्रूते, द्वितीयः क्षत्रशब्दो जातिवाची, अयं 'वैश्रवणः', 'क्षत्रं क्षत्रं' पालकः, क्षत्रियत्वजातियुक्तश्च, 'वयं' यजमानाः, ब्राह्मणजातियुक्तास्तेन पालनीयाः 'स्मः', अतः 'ते' वैश्रवणाय, 'नमः' 'अस्तु', 'मा मा हिꣳसीः' हिंसितं मा कुरुतः, यस्मादयं ब्राह्मणत्वेन नमस्कर्तृत्वेन च त्वया पालनीयाः 'अस्मात्' कारणात्, अत्र बलिस्थाने 'प्रविश्य', 'अन्नं' अस्माभिर्दत्तं बलिरूपं, 'अद्धि' भक्षय। 'इति' अस्मै, उपस्थानमन्त्रः॥

अग्निस्थापनं विधत्ते। (८)"अथ तमग्निमादधीत ० प्रयुञ्जीत"(८) इति। 'यस्मिन्' अग्नौ, वैश्रवणयज्ञाख्यं 'एतत् कर्म', प्रयुज्यते। 'तमग्निं', पूर्वोक्तोपस्थानानन्तरं भूमौ स्थापयेत्॥

स्थापनीयं मन्त्रं दर्शयति। (९)"तिरोधा भूः ०पत्ये स्वाहेति"(९) इति। हे अग्ने 'भूस्तिरोधा' भूर्लोकं स्वतेजसाच्छादय,

तिरोधा स्वः। तिरोधा भूर्भुवः स्वः। सर्वेषां लोकाना-
माधिपत्ये सीदेति[९]। [१०]अथ तमग्निमिन्धीत। यस्मिन्ने-
तत् कर्म प्रयुञ्जीत[१०]। [११]तिरोधा भूः स्वाहा। तिरो-
धा भुवः स्वाहा। तिरोधा स्वः स्वाहा। तिरोधा भूर्भु-
वः स्वः स्वाहा[११]। [१२]यस्मिन्नस्य काले सर्वा आहुती-
र्हुता भवेयुः ॥ ४ ॥

अपि ब्राह्मणमुखीनाः। तस्मिन्नह्नः काले प्रयुञ्जीत।

---

एवं 'भूः', लोकः 'स्वः', लोकः वा, एकैकशः समुदायरूपेणापि सर्वान् व्याप्नुहि। व्याप्य च 'सर्वेषां' एतेषां, 'लोकानां', 'आधिपत्ये' अधिकपालननिमित्तं, 'सीद' अत्रोपविश। 'इति' अयमग्निस्थापनमन्त्रः ॥

समिन्धनं विधत्ते। [१०]"अथ तमग्नि ॰ प्रयुञ्जीत"[१०] इति। पूर्ववद्व्याख्येयं ॥

समिन्धनमन्त्रान् दर्शयति। [११]"तिरोधा ॰ तिरोधा भूर्भुवः स्वः स्वाहा"[११] इति। 'स्वाहा' समिदियं स्वाहुतमस्तु। अन्यत् पूर्ववत् ॥

अस्य वैश्रवणयज्ञस्य कालविशेषं दर्शयति। [१२]"यस्मिन्नस्य ॰ सुप्तजनादपि"[१२] इति। 'अस्य' आरुणकेतुकस्य, सम्बन्धः, 'ब्राह्मणमुखीनाः' रुद्रो वा एषः यदग्निः स एतर्हि जात इत्यादि ब्राह्मणप्रतिपादिताः शतरुद्रीयादयः, 'सर्वा अपि', आहु-तयः 'यस्मिन् काले', 'हुता भवेयुः', तदहःसम्बन्धिनि

परः सुप्तजनाद्वेपि[१२]। [१३]मा स्म प्रमाद्यन्तमाध्यापयेत्। सर्वार्थाः सिध्यन्ते। य एवं वेद। क्षुध्यन्निदमजानताम्। सर्वार्था न सिध्यन्ते[१३]। [१४]यस्ते विघातुको भ्राता। ममान्तर्हृदये श्रितः॥ ५॥

तस्मा इममग्रपिण्डं जुहोमि। स मेऽर्थान् मा विव-

---

'तस्मिन् काले', वैश्रवणयज्ञं 'प्रयुञ्जीत', 'वेपि' अपि वा, 'सुप्तजनात् परः', सर्वेषु जनेषु सुप्तेषूत्तरस्मिन् काले॥

एतदीयग्रन्थाध्ययने नियमं दर्शयति। [१३]"मा स्म प्रमाद्यन्तमाध्यापयेत् ० सर्वार्था न सिध्यन्ते"[१३] इति। 'प्रमाद्यन्तं' प्रमादयुक्तं दुर्वृत्तं पुरुषं, 'इदं' वैश्रवणबलिकर्म, गुरुमुखात् 'अजानतां', पुरुषाणां 'क्षुध्यन्' क्षुध्यतां अन्नाभावेन दरिद्राणां, 'न', केऽपि कामाः सिध्यन्ति, अन्नमपि तैर्न लभ्यते कुतोऽन्यत्कामप्राप्तिरित्यर्थः॥

अथ बलिहरणमन्त्रं दर्शयति। [१४]"यस्ते विघातुकः ० मयि स्वाहा"[१४]। हे कुबेर 'विघातुकः' सर्वेषां हिरण्यलाभविघ्नकरणशीलः 'ते' तव, 'यः' 'भ्राता' वैश्रवणः, सोऽयं 'ममान्तर्हृदये', ध्येयत्वेन 'आश्रितः', 'तस्मै' वैश्रवणाय, 'इमं', 'अग्रपिण्डं' श्रेष्ठपिण्डं, 'जुहोमि'। 'सः' वैश्रवणः, 'मेऽर्थान्' मदीयान् हिरण्यलाभादीन् पुरुषार्थान्, 'मा विवधीत्' मा विनाशयतु, किन्तु मह्यं सम्पादयतु तदर्थमिदं स्वाहुतमस्तु॥

अथोपस्थानमन्त्रमाह। [१५]"राजाधिराजाय ० मा ते

धीत् । मयि स्वाहा[१४] । [१५]राजाधिराजाय प्रसह्य साहिने । नमो वयं वैश्रवणाय कुर्महे । स मे कामान् कामकामाय मह्यं । कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय । महाराजाय नमः । केतवो अरुणासश्च ॥ ऋषयो वातरशनाः । प्रतिष्ठाꣳ शतधाहि । समाहितासो सहस्रधायसं । शिवा नः शन्तमा भवन्तु । दिव्या आप ओषधयः । सुमृडीका सरस्वति । मा ते व्योम संदृशि[१५] ॥ ६ ॥

---

व्योमसंदृशि"[१५] इति । राज्ञां सर्वेषामधिकत्वेन यो राज्यस्वामी सोयं 'राजाधिराजः', तस्मै, बलात्कारेण सर्वेषां स्वाभावां योऽभिभविता प्रतिबन्धकः स 'प्रसह्यसाही', तस्मै, 'वैश्रवणाय', 'वयं' यजमानाः, 'नमस्कुर्महे' । 'कामेश्वरः' सर्वेषां कामानां स्वामी, स 'वैश्रवणः', 'कामकामाय' बहुभोगार्थिने, 'मह्यं', 'मे कामान्' मदपेक्षितान् सर्वान् भोगान्, 'ददातु' । कुबेररूपाय 'महाराजाय वैश्रवणाय', 'नमः', अस्तु । केतव इत्यादिकं पूर्वमेव व्याख्यातं । अस्य च वैश्रवणयज्ञस्यारुणकेतुकान्तः प्रयोगो बहिश्च स्वातन्त्र्येण प्रयोग इत्युभयप्रकारो विद्यते । तच्च सर्वाहुतिहोमान्ते बोधायनेन दर्शितं । वैश्रवणयज्ञो ब्राह्मणेन व्याख्यातोऽन्नकामस्य सर्वकामस्य वा पर्वणि पर्वणि वैश्रवणयज्ञः । सोत्तरवेदिषु क्रतुषु चिन्वीतेति यथा ब्राह्मणमित्यादि ॥

अश्वान्, वस्तिः, भुवः, भवेयुः, श्रितः, च, सप्त च ॥ अनु० ३१ ॥

अथ द्वात्रिंशोऽनुवाकः ।

(१)संवत्सरमेतद्व्रतञ्चरेत् । द्वौ वा मासौ(१) । (२)नियमः समासेन(२) । (३)तस्मिन् नियमविशेषाः । त्रिषवणमुदकोपस्पर्शी । चतुर्थकालपानभक्तः स्यात् ।

---

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके एकत्रिंशोऽनुवाकः ॥ ३१ ॥

अथ द्वात्रिंशोऽनुवाकः ।

अथारुणकेतुकचयनाङ्गव्रतं विधत्ते । (१)"संवत्सरं ० वा मासौ"(१) इति । यो ह्यारुणकेतुकमग्निं चेतुमिच्छति सोऽधिकारसिध्यर्थमादौ 'संवत्सरं', 'वा', मासद्वयं वा वक्ष्यमाणं 'व्रतं', अनुतिष्ठेत् ॥

व्रतशब्दार्थमाह । (२)"नियमः समासेन"(२) इति । योयं 'नियमः' स्वीकारः, तदेव व्रतं । एतच्च 'समासेन' सङ्क्षेपेण, दर्शितं ॥

अथ विस्तारं प्रतिज्ञापूर्वकं दर्शयति । (३)"तस्मिन् ० काल स्थपयः"(३) इति । नियमो व्रतमित्येव सामान्यलक्षणमुक्तं 'तस्मिन्' व्रते, अनुष्ठेयाः 'नियमविशेषाः', क्रमेणोच्यन्ते । सूयते सोमो अत्रेति सवनं, तत् त्रिविधं, प्रातर्मध्यन्दिनसायङ्कालभेदात्, तस्मिन् सवनत्रये उदकमुपस्पृशेत्, स्नायादित्यर्थः ।

अहरहर्वा भैक्षमश्नीयात्। औदुम्बरीभिः समिद्भिरग्निं परिचरेत्। पुनर्मा मैत्विन्द्रियमित्येतेनानुवाकेन। उद्धृत परिपूताभिरद्भिः कार्यं कुर्वीत॥ १॥

असञ्चयवान्। अग्नये वायवे सूर्याय। ब्रह्मणे प्रजापतये। चन्द्रमसे नक्षत्रेभ्यः। ऋतुभ्यः संवत्सराय।

---

पानं, क्षीरादिविषयं, भक्तमन्नं, तदुभयमपि प्रतिदिनं कालद्वये स्वीक्रियते। तस्मात् द्विरक्तो मनुष्येभ्यः उपक्रियते। प्रातश्च सायञ्चेत्याम्नातत्वात्, तथा प्रातर्भुक्तवतः सायं द्वितीयः कालः, परेद्युः प्रातःकालस्तृतीयः, तत्रैव सायं चतुर्थः कालः, मध्यवर्त्तिनौ द्वितीयतृतीयकालौ परित्यज्य तस्मिंश्चतुर्थकाले पानं भक्तं च यस्यासौ 'चतुर्थकालपानभक्तः', तथाविधो भवेत्। अथवा प्रतिदिनं भिक्षित्वा तदन्नं भुञ्जीत, सोऽयं पक्षोऽशक्तविषयः। उदुम्बरवृक्षजन्याभिः 'समिद्भिः', अग्निपरिचर्यां कुर्यात्। तस्मिन् समिदाधाने मन्त्राः 'पुनर्मा मैत्विन्द्रियमित्येतेनानुवाकेन', उक्ताः। स चानुवाकः पूर्वमेव व्याख्यातः। आपः, नदीतडाकादिभ्यः पात्रेणोद्धृता वस्त्रेण शोधिताश्च, ताभिः पादप्रक्षालनाचमनादिकं कुर्यात्, न तु नद्यादौ, यत्कार्य्यः सञ्चयो भिक्षापात्रादन्यत्र भक्ष्यादिवस्तुसङ्ग्रहः, तद्युक्तो न भवेत्। प्रतिदिनमग्न्यादित्योरुणान्ताभ्यो देवताभ्यो होमं कुर्यात्। अतद्धोमनियुक्तत्वात् स्वाहाकारोऽर्थलभ्यः। ततोऽग्नये स्वाहा वायवे स्वाहेत्यादयो मन्त्राः सम्पद्यन्ते। आदित्यते वि-

वरुणायारुणायेति व्रतहोमाः। प्रवर्ग्यवदादेशः। अ-रुणाः काण्ड ऋषयः[१]। [४]अरण्येऽधीयीरन्। भद्रं कर्णेभिरिति द्वे जपित्वा ॥ २ ॥

महानाम्नीभिरुदकꣳ सꣳस्पर्श्य। तमाचार्यो दद्यात्। शिवा नः शन्तमेत्योषधीरालभते। सुमृडीकेति भूमिं।

---

धीयत इति 'आदेशः', अनुष्ठेयोऽर्थः, स च 'प्रवर्ग्यवत्', अत्राव-गन्तव्यः, प्रवर्ग्याध्ययनादौ ये धर्मास्तेऽत्राप्यनुष्ठेयाः। ते च प्रव-र्ग्यधर्मा आपस्तम्बेन सूचिताः, संवत्सरमेतद्व्रतं चरेदेतस्मिन् संव-त्सरेऽधीयीत यद्येतस्मिन् संवत्सरे नाधीयीत यावदध्ययनमेतद्व्रतं चरेत् संवत्सरे पर्यवेते श्रिते छदिर्दर्शेऽग्निमुपसमाधाय सम्परिस्तीर्य पूर्ववदिरुच्य मदन्तीरुपस्पृश्येत्यादयः। तानेतान् धर्मान् वा चरेत्, अरुणाख्ये अत्र 'काण्ड ऋषयः', तेऽपि होतव्या इत्यर्थः॥

अथारुणकेतुकचयनप्रतिपादितस्य ग्रन्थस्याध्ययने निय-मान् विधत्ते। [४]"अरण्येऽधीयीरन् ० पुण्यो भवति"[४] इति। सोऽयं ग्रन्थः 'अरण्ये', एवाध्येतव्यः, न तु ग्रामे। अध्ययनोपक्रमे शान्त्यर्थं 'भद्रं कर्णेभिरिति द्वे' ऋचौ, जपेत्। आपमापामि-त्येताभिः 'महानाम्नीभिः' ऋग्भिः, अध्येतारं माणवकं 'उदकं', स्पर्शयेत्, ततः 'तं' माणवकं, 'आचार्यो दद्यात्' व्रताय नि-युञ्जीत, शिवा न इति मन्त्रेणौषधीः स्पृशेत्। सुमृडीका सर-स्वतीति मन्त्रेण 'भूमिं', स्पृशेत्। यथाध्ययनस्योपक्रमे सर्वमे-तदनुष्ठितं, एवमध्ययनस्यावसानेऽपि सर्वमेतदनुतिष्ठेत्। स्न-

एवमपवर्गे। धेनुर्दक्षिणा। कश्सं वासश्च क्षौमं। अन्यद्वा शुक्लं। यथाशक्ति वा। एवः स्वाध्यायधर्मेण॥ अरण्येऽधीयीत। तपस्वी पुण्यो भवति तपस्वी पुण्यो भवति(४) ॥ ३ ॥

कुर्वीत, जपित्वा, स्वाध्यायधर्मेण, द्वे च॥ अनु० ३२॥

भद्रश्, स्मृतिः, साकंजानाम्, अक्षि, अतिताम्राणि, अत्यूर्ध्वाक्षः, आरोगः, केदम्, अग्निश्च, सहस्रवृत्, पवित्रवन्तः, आतनुष्व, अष्टयोनीं, योऽसौ, अथादित्यस्य, आरोगस्य, अथ वायोः, अथाग्नेः, दक्षिणपूर्वस्यां, इन्द्रघोषावः, आपमापां, योऽपां, आपो वै, चतुष्टय्यः, जानुदघ्नीम्, अग्निं प्रणीय, इमानुकं, विशीर्ष्णीं, पर्जन्याय, पुनः, अद्भ्यः, संवत्सरं द्वात्रिंश्शत् ॥ ३२ ॥

भद्रं, ज्योतिषामप्रतिरथेन, तस्मिन्राजानं, कश्यपात्, सहस्रवृद्दियं, नपुश्सकम्, अष्टयोनीम्, अथाग्ने, य

---

त्स्वाध्ययनस्य समाप्तावाचार्याय 'धेनुर्दक्षिणा', देया भोजनार्थं कांस्यपात्रं देयं, प्रावरणार्थं 'क्षौमं', वस्त्रं देयं। तदशक्तौ 'अन्यत्' कार्पासमयं, 'शुक्लं', वस्त्रं देयं। अत्यन्तमशक्तौ 'यथाशक्ति' किमपि देयं, 'एवं', एवमुक्तेनाध्ययनधर्मेण युक्तः सन्, 'अरण्ये', गुरुमुखाद्ग्रन्थं 'अधीयत', एवमधीयानो व्रतनियमानुष्ठानात्तपोयुक्तो भवति। अभ्यासोयं मन्त्रार्थः॥

एवं वेद, ये नखाः, असौ यै पल्वल्याः, अमृतं वा आपः, अद्भ्यः, नवविꣳशोत्तरशतं* ॥ १२९ ॥

भद्रं दधातु। ॐ शान्तिः शान्तिः शान्तिः। हरिः ॐ ॥ तत् सत् ॥

भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः। व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु। ॐ शान्तिः३॥ हरिः ओम्॥

नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि॥ ॐ शान्तिः३ ॥ ओम् ॥

---

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके प्रथमप्रपाठके द्वात्रिंशोऽनुवाकः॥ ३२ ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

समाप्तोऽयं प्रथमः प्रपाठकः ॥

---

* दशदशत्यनन्तरं प्रतीकमत्र प्रदर्शितं। किन्तु १०६ पृष्ठास्थाऽष्टयोनीत्यतःपरं अथाश इति प्रतीकपर्य्यन्तमेकादशदशतयः सन्ति। एताभिः सङ्कलनया त्रिंशोत्तरशतं दशतयो भवन्ति।

# तैत्तिरीये आरण्यके

## द्वितीयप्रपाठके प्रथमोऽनुवाकः ।

(१)सह वै देवानाञ्चासुराणाञ्च यज्ञौ प्रततावास्तां वयꣳ स्वर्गं लोकमेष्यामो वयमेष्याम इति तेऽसुराः सन्नह्य सहसैवाचरन् ब्रह्मचर्येण तपसैव देवास्तेऽ-

---

# तैत्तिरीये आरण्यके

## द्वितीयप्रपाठके प्रथमोऽनुवाकः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
प्रपाठके हि प्रथमे वह्निरारुणकेतुकः ।
सम्यक् प्रोक्तो द्वितीये स्यात्* स्वाध्यायब्राह्मणाभिधे ॥

तत्राद्येऽनुवाकेऽध्ययनाङ्गत्वेन यज्ञोपवीतं विधातुं तत्-प्रशंसार्थमादावुपाख्यानमाह । (१)"सह वै • पराभावयन्"(१) इति । 'वयं', एव आधिपत्यनिमित्तं 'स्वर्गं', गमिष्याम इत्येवं 'देवाः', यदा† यज्ञे प्रवृत्ताः तदानीमेव‡ 'असुराः', अपि

---

* द्वितीये तु इति तै॰ पाठः ।  † यथा इति तै॰ पाठः ।
‡ तथा इति तै॰ पाठः ।

सुरा अमुह्यꣳस्ते न प्राजानꣳस्ते पराभवन्ते न स्वर्गं लोकमायन् प्रसृतेन वै यज्ञेन देवाः स्वर्गं लोकमायन्नप्रसृतेनासुरान् पराभावयन्[१] [२]प्रसृतो ह वै यज्ञोपवीतिनो यज्ञोऽप्रसृतोऽनुपवीतिनो यत्किञ्च ब्रा-

तथैवाभिप्रेत्य यज्ञे* प्रवृत्ताः, तावुभौ 'यज्ञौ', 'प्रततौ' विस्तीर्णौ, 'आस्तां'। तदानीं तथाविधाः 'असुराः', 'असन्तु' कृतसन्नाहाः, 'अहस्तेव' भुजबलमात्रेणैव 'आचरन्' यज्ञमारब्धवन्तः, 'ते', मौर्ख्यात् ब्रह्मचर्यादिनियमं नादृतवन्तः। 'देवाः', तु ब्रह्मचर्यात् समस्ततपसा† युक्ताः सन्तो यथाशास्त्रमनुष्ठितवन्तः। 'ते', मूर्खाः 'असुराः', 'अमुह्यन्' मौर्ख्यपारवश्येन मोहं प्राप्ताः, मूढाः सन्तः कर्त्तव्याकर्त्तव्यं किमपि 'न प्राजानन्'। ततो यथाशास्त्रानुष्ठानाभावात् स्वर्गं न प्राप्ताः। 'देवाः', तु 'प्रसृतेन', एव 'यज्ञेन', 'स्वर्गं', प्राप्ताः, 'अप्रसृतेन यज्ञेन', युक्तान् 'असुरान् पराभावयन्'॥

अथ प्रसृताप्रसृतयोः स्वरूपं विभजते। [१]"प्रसृतो ह वै ० यजत एव तत्"[२] इति। यज्ञोपवीतयुक्तस्य यः अयं 'यज्ञः', सोऽयं गुणाधिक्यात्‡ 'प्रसृतः' प्रकर्षेण वृत्त इत्युच्यते। 'अनुपवीतिनः' यज्ञोपवीतरहितस्य, 'यज्ञः', गुणहीनत्वात्

* तथैवाभिप्रेत्य यज्ञे इति पाठस्तु तै० पुस्तके नास्ति।

† ब्रह्मचर्यात्मना तपसा इति तै० पाठः।

‡ गुणाधिक्यवशादिति तै० पाठः।

प्रसृतो यज्ञोपवीत्यधीते यजत एव तत्(२) (३)तस्मा-
द्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्यै(३)
(४)अजिनं वासो वा दक्षिणत उपवीत*(४) (५)दक्षिणं

---

‘अप्रसृतः’, इत्युच्यते। ‘किञ्च’, ‘ब्राह्मणः’, यज्ञोपवीतयुक्तः सन् ‘यत्’ किमपि, ‘अधीते’, तत् सर्वं यागानुष्ठानसमं भवति॥

तदेवं यज्ञोपवीतं प्रशंस्याध्ययनोपयोगं वदन् यजना†ङ्गत्वेन विधत्ते। (३)“तस्माद्यज्ञोपवीत्येवाधीयीत ॰ प्रसृत्यै”(३) इति। ‘प्रसृतिः’ प्रकृष्टगुणयुक्तत्वं॥

यज्ञोपवीतसाधनं द्रव्यं विधत्ते। (४)“अजिनं ॰ उपवीत” (४) इति। कृष्णाजिनवस्त्रयोरन्यतरद्द्रव्यं दक्षिणभागे लम्बमानं कृत्वाधीयीतेत्यर्थः। एवमध्ययनादावनेनैव वाक्येन विहितस्यापि यज्ञोपवीतस्य दर्शपूर्णमासप्रकरणे निवीतं मनुष्याणामित्यत्र‡ पुनर्विधानं तदतिक्रमे तत्त्यविशेषप्रायश्चित्तार्थं॥

यज्ञोपवीतप्रसङ्गात् त्रयाणामपि लक्षणं दर्शयति। (५)“दक्षिणं बाहुमुद्धरते ॰ संवीतं मानुषं”(५) इति। ‘दक्षिणं बाहुं’, ऊर्ध्वं धृत्वा§ सव्ये बाहौ लम्बमाने सति यद्वेष्टनं तत् ‘यज्ञोपवीतं’। ‘एतदेव विपरीतं’ सव्यबाहोरूर्ध्वं धारणं दक्षिणबाहोर्लम्बमानत्वञ्चेद्भवति तदा वेष्टनं ‘प्राचीनावीतं’, इत्युच्यते।

---

* उपवीय इति तै॰ पाठः। † अध्ययनयजनयाजनानामिति तै॰ पाठः।
‡ मनुष्याणामिति तै॰ पाठः। § कृत्वा इति तै॰ पाठः।

बाहुमुद्धरते धत्ते* सव्यमिति यज्ञोपवीतमेतदेव वि-
परीतं प्राचीनावीतꣳ संवीतं मानुषं(५) ॥ १ ॥

अथ द्वितीयोऽनुवाकः ।

(१)रक्षाꣳसि ह वा पुरोनुवाके तपोग्रमतिष्ठन्त तान्
प्रजापतिर्वरेणोपामन्त्रयत तानि वरमवृणीतादित्यो

बाह्वोरुभयोरप्यधोलम्बमानयोरंसद्वयसमं 'संवीतं', तदेतत्
'मानुषं' मनुष्याणामृषीणाञ्च यज्ञोपवीतं, देवानां यथा
'प्राचीनावीतं', पितॄणां तद्वत् ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-
रण्यके द्वितीयप्रपाठके† प्रथमोऽनुवाकः ॥ १ ॥

अथ द्वितीयोऽनुवाकः ।

प्रथमे यज्ञोपवीतविधानमुक्तं‡ । द्वितीये सन्ध्योपासनविधा-
न§मुच्यते । तत्प्रशंसार्थमादावाख्यायिका‖माह । (१)"रक्षांसि
ह वा पुरोऽनुवाके ० नाशयन्ति"(१)इति । 'ह वा'शब्दः
प्रसिद्ध्यर्थः, 'पुरोऽनुवाकः' पूर्वकालः, पुरः, इत्येव पूर्वैरनूच्यते¶

* वधत्ते इति तै० पाठः । † द्वितीयप्रारके इति तै० पाठः ।
‡ यज्ञोपवीतविधानमुक्ता इति तै० पाठः ।
§ सन्ध्योपासनविधिरिति तै० पाठः ।
‖ आदावुपाख्यानमिति तै० पाठः । ¶ सर्वैरनूद्यते इति तै० पाठः ।

नो योद्धा इति तान् प्रजापतिरब्रवीद्योधयध्वमिति तस्मादुत्तिष्ठन्तꣳ ह वा तानि रक्षाꣳस्यादित्यं योधयन्ति यावदस्तमन्वगात्तानि ह वा एतानि रक्षाꣳसि गायत्रि-या*भिमन्त्रितेनाम्भसा शाम्यन्ति(१) (२)तदु ह वा एते

---

न त्विदानीमिति वा पश्चादिति वोच्यते, एतादृशे पूर्वकाले रक्षांसि खलु 'उग्रं' श्रेष्ठं तीव्रं, 'तपः', 'अतिष्ठन्त' कृतवन्तः, तेन तपसा तुष्टः 'प्रजापतिः', 'तान्' रक्षोविशेषान्, 'वरेण', 'उपामन्त्रयत' उपच्छन्दितवान्,† वरं वृणीध्वमित्युक्त्वा तान् परितोष्य तपसो निवारितवान्। 'तानि' रक्षांसि, 'आदित्यः', 'नः' अस्माकं, 'योद्धा', भवतु 'इति' एवं,'वरं अवृणीत'। 'प्रजा-पतिः', 'तान्', आदित्येन सह युद्धं कुरुतेत्यनुज्ञां दत्तवान्। 'तस्मात्' कारणात्, 'तानि' रक्षांसि, 'उत्तिष्ठन्तं ह वा' उद्य-न्तमेव, 'आदित्यं', 'योधयन्ति' युद्धे प्रवर्त्तयन्ति। 'यावत्', अयं आदित्यः 'अस्तमन्वगात्' अस्तं प्राप्नोति। उदयमारभ्य ताव-दादित्येन सह युद्धं कुर्वन्ति तदा च युद्धे प्रवृत्तानि 'तानि' रक्षांसि, तत् सवितुर्वरेण्यमित्यनया 'गायत्र्या', अभिमन्त्रितं यज्जलं तेनैव 'शाम्यन्ति', नत्वन्येन केनापि॥

इत्यनेना‡ख्यानेन जलं प्रशंस्यार्घ्यमभिधत्ते। (२)"तदु ह वा०

---

* गायत्र्या इति तै० पाठः। † उपदेशितवानिति तै० पाठः।
‡ इत्यमाख्यानेन इति तै० पाठः।

ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्रिया*भिम-न्त्रिता आप ऊर्ध्वं विक्षिपन्ति ता एता आपो वज्रीभू-त्वा तानि रक्षाꣳसि मन्देहारुणे द्वीपे प्रक्षिपन्ति(१) (२)यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधून्वन्ति(२) (४)उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्म-

प्रक्षिपन्ति"(१) इति। यस्मादनेन जलेन रक्षसां शान्तिः, 'तदु ह वै' तस्मादेव कारणात्, 'एते' लोके दृश्यमानाः, 'ब्रह्मवादिनः' वेदस्य वक्तारः, 'सन्ध्यायां' प्रातःसन्ध्याकाले, 'पूर्वाभिमुखाः', सन्तः गायत्र्याभिमन्त्रितं जलं 'ऊर्ध्वं', 'विक्षिपन्ति', प्रक्षिपेयु-रित्यर्थः। 'ताः' च विक्षिप्ताः†, 'आपः', गायत्रीसामर्थ्याद्वज्ररूपं प्राप्य 'तानि' आदित्ययुद्धार्थमागतानि, 'रक्षांसि', मन्देहनाम-कानां रक्षसां स्वभूते कस्मिंश्चिदरुणनाम्नि द्वीपे‡ 'प्रक्षिपन्ति'॥

अथ प्रदक्षिणावृत्तिं विधत्ते। (२)"यत् प्रदक्षिणं ० पाप्मा-नमवधून्वन्ति"(२) इति। 'प्रदक्षिणं' प्रारम्भमावर्त्तनं, प्रक्र-मेयुः§। तेन च पापक्षयो भवति॥

अथ ध्यानं विधत्ते। "(४)उद्यन्तमस्तंयन्तं ० आदित्यो ब्र-ह्मेति"(४) इति। अयं परिदृश्यमानः 'आदित्यः', 'ब्रह्मेति', आस्तिकः 'विद्वान्', पुमान् 'उद्यन्तं अस्तं यन्तं', वा 'आदित्यं',

* गायत्र्या इति तै० पाठः। † विक्षिप्ताः इति तै० नास्ति।
‡ अरुणे अग्निद्वीपे इति तै०।
§ कुर्युः इति तै० अधिकः पाठः D पुस्तके तु।

सो विद्वान् सकलं भद्रमश्नुते स वादित्यो ब्रह्मेति(४)
(५)ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद(५) ॥२॥

---

अथ तृतीयोऽनुवाकः।

(१)यद्देवा देवहेलनं देवासश्चकृमा वयं। आदि-

---

तया 'ध्यायन्', प्रदक्षिणञ्च 'कुर्वन्', वर्त्तते स पुमान् 'सकलं', 'भद्रं' 'अश्नुते' श्रेयः प्राप्नोति॥

वेदनं प्रशंसति। (५)"ब्रह्मैव सन् ० य एवं वेद"(५) इति। 'यः' पुमान्, आदित्यो ब्रह्मेति 'वेद', स पुमान् पूर्वमज्ञानानोऽपि स्वयं वस्तुतः 'ब्रह्मैव सन्', प्राप्ताद्वेदनादज्ञानापगमे सति स्वानुभवेनापि 'ब्रह्म', आप्नोति॥

इति सायनाचार्य्यविरचिते* माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

अथ तृतीयोऽनुवाकः।

द्वितीये सन्ध्यावन्दनमुक्तं। तृतीयादिषु चतुर्ष्वनुवाकेषु पापक्षयार्थं कुष्माण्डहोमाङ्गभूता मन्त्रा उच्यन्ते। तत्र तृतीयानुवाकगतासु ऋक्षु प्रथमामाह। (१)"यद्देवा देव ० मामित"(१)

---

* सायणीये इति तै० पाठः।

त्यास्तस्मान् मा मुञ्चततस्यर्तेन मामित(१)। (२)देवा जीवनकाम्या यद्वाचानृतमूदिम। तस्मान्न इह मुञ्चत विश्वे देवाः सजोषसः(२)। (३)ऋतेन द्यावापृथिवी ऋतेन त्वꣳ सरस्वती। कृतान्नः पाह्येनसो यत्

---

इति। 'देवा सः' देवनशीलाः, 'आदित्याः' अदितेः पुत्राः, हे 'देवाः', 'देवहेडनं' देवानां क्रोधकारणं, 'यत्' कर्म, 'वयमूहम'। 'तस्मात्' अपराधात्, यूयं 'मुञ्चत', अपि च 'ऋतस्य' यज्ञस्य, सम्बन्धिना 'ऋतेन' सत्येन होमेन, 'मां', यूयं* 'इत' प्राप्नुत॥

अथ द्वितीयामाह। (२)"देवा जीवनकाम्याः॰ सजोषसः"(२) इति। हे 'देवाः', वयं 'जीवनकाम्याः' जीवनमात्मन इच्छन्तः, 'यदनृतं वाचा ऊदिम' राजसेवादौ तत्प्रियार्थी† अनृतमुक्तवन्तः, 'सजोषसः' परस्परमस्माभिश्च समानप्रीतियुक्ताः, हे 'विश्वे देवाः', 'इह' अस्मिन् कर्मणि, अनुष्ठिते सति, अस्मात् पापात् 'नः' अस्मान्, 'मुञ्चत'॥

अथ तृतीयामाह। (३)"ऋतेन द्यावापृथिवी॰ अनृतमूदिम"(३) इति। हे 'द्यावापृथिवी', 'ऋतेन' सत्यवचनेन, 'यत्' पापं, प्राप्तं तथा हे 'सरस्वति', अनेन 'यत्' पापं, प्राप्तं 'त्वं

---

* यूयमपि तै॰ पाठः। † तत्प्रियार्थं इति तै॰ पाठः।

किञ्चानृतमूदिम(३) । (४)इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः । ते नो मुञ्चन्त्वेनसो यदन्यकृतमारिम(४) । (५)सजातशꣳसादुत जामिशꣳसाज्ज्यायसः शꣳसादुत वा कनीयसः । अनाधृष्टं देवकृतं यदेनस्त-

---

अनृतसमाचरणेन' द्यावापृथिव्यौ, चेत्येतौ यूयं 'कृतात्', तस्मात् 'एनसः', 'नः' अस्मान्, 'पाहि' यूयं पातेत्यर्थः । किञ्च 'यत्किञ्चिदनृतं', 'ऊदिम' वयमुक्तवन्तः, तस्मादप्येनसः पात ॥

चतुर्थीमाह । (४)"इन्द्राग्नी मित्रावरुणौ ० यदन्यकृतमारिम"(४) इति । 'यत्' पापं, 'अन्यकृतं' अन्येन स्वव्यतिरिक्तेन निमित्तेन कृतं, 'आरिम' वयं प्राप्ताः, तस्मात् 'एनसः', 'ते' इन्द्रादयो बृहस्पत्यन्ताः,* देवाः, 'नः' अस्मान्, 'मुञ्चन्तु' ॥

अथ पञ्चमीमाह । (५)"सजातशꣳसादुतजामि ० मुमुग्धि" (५) इति । 'सजाताः' समानजन्मानो ज्ञातयः, समानवयस्काः सखायः वा, तैर्मयि कृतः 'शंसः' प्रशंसा स्तुतिः, 'उत' अथवा, 'जामयः' जाया भार्याः, ताभिर्मयि कृतः† 'शंसः' स्तुतिः, 'ज्यायान्' ज्येष्ठो भ्राता, तस्य 'शंसः' तेन मयि कृता स्तुतिः, 'उत वा' अथ वा, 'कनीयान्' कनिष्ठो भ्राता, तस्य शंसः

---

* बृहस्पतिपर्य्यन्ता इति तै० पाठः ।

† ताभिः कृत इति तै० पाठः ।

स्मात्त्वमस्माज्जातवेदो मुमुग्धि[५] ॥ [६]यद्वाचा यन्मनसा बाहुभ्यामूरुभ्यामष्ठीवद्भ्याँ शिश्नैर्यदनृतं चकृमा वयं। अग्निर्मा तस्मादेनसः गार्हपत्यः प्रमुञ्चतु चकृम या-

तेन मयि कृता स्तुतिः, 'तस्मात्' स्तुतिसाम्यात्, प्रमत्तेन* मया 'अनाधृष्टं' केनापि प्रकारेणापरिहार्यं प्रबलं, 'देवकृतं' देवविषये सम्पादितं, 'यत्', 'एनः' पापं, हे 'जातवेदः', 'त्वं', 'तस्मात्', 'अस्मात्' पापात्, 'मुमुग्धि' अस्मान्† मुक्तं कुरु ॥

अथ षष्ठीमाह। [६]"यद्वाचा यत् ० दुष्कृता"[६] इति। वागादिभिः 'यत्', 'अनृतं' अयुक्तरूपं पापं, 'वयं', 'चकृम' कृतवन्तः, वाचा असत्याभिधानं गुर्वादिषु त्वङ्कारादि च‡। 'मनसा', परानिष्टचिन्तनं। 'बाहुभ्यां', ब्राह्मणताडनादि। 'ऊरुभ्यां', अगम्यालिङ्गनादि। 'अष्ठीवद्भ्यां' जानुभ्यां, अमन्तव्यदेशगमनादि, 'शिश्नैः' शिश्नेन, अयोनौ रेतःसेकादि, बहुवचनाच्चक्षुरादीन्द्रियग्रहः। चक्षुषा उग्रदर्कदर्शनादि। श्रोत्रेण गुरुदेवादिनिन्दाश्रवणं। घ्राणेनाभक्ष्यभक्षणमित्यादि। 'तस्मात्' सर्वस्मात्, 'एनसः', 'अग्निः', मां 'प्रमुञ्चतु'। 'यानि दुष्कृतानि' यान्यप्यन्यानि पापानि, 'चकृम', तेभ्योऽपि 'प्रमुञ्चतु' ॥

* स्तुतिसम्मानप्रमत्तेनेति तै॰ पाठः। † मां इति तै॰ पाठः।
‡ त्वङ्कारादि चेति तै॰ पाठः।

नि दुष्कृता(६)। (७)येन चितो अर्णवान्निर्बभूव येन सूर्यं तमसो निर्मुमोच। येनेन्द्रो विश्वा अजहादरातीस्तेनाहं ज्योतिषा ज्योतिरानशान आक्षि(७)। (८)यत् कुसीदमप्रतीतं मयेह येन यमस्य निधिना चरामि। एतत् तदग्ने अनृणो भवामि जीवन्नेव

---

अथ सप्तमीमाह। (७)"येन चितो • ज्योतिरानशान आक्षि"(७) इति। 'चितः' नाम कश्चित् पुरुषः, स च पौरोडाशिककाण्डे अङ्गारेणोदकप्लावनात् निष्पन्न इति श्रुतः* स तृतीयमभ्यपातयत्, ततस्त्रितो जायतेति। स च त्रितो'येन'† परमेश्वरज्योतिषा, 'अर्णवात्' समुद्रसमानात् पापात् 'निर्बभूव' निर्मुक्तो बभूव। तथा 'येन' ज्योतिषा, परमेश्वरः स्वर्भानुसञ्ज्ञकासुरेणापादितात् 'तमसः', 'सूर्यं', 'निर्मुमोच' निर्मुक्तं कृतवान्। 'इन्द्रः' स्वर्गाधिपतिः, 'येन' परमेश्वरज्योतिषा, 'विश्वाः' 'अरातीः' सर्वानपि शत्रून्, 'अजहात्' त्यक्तवान्, 'तेन' ज्योतिषा, 'अहं', 'आनशान' सर्वतो व्याप्नुवं, 'ज्योतिराक्षि' पारमेश्वरं ज्योतिः प्राप्तवानस्मि॥

अथाष्टमीमाह। (८)"यत् कुसीदमप्रतीतं • प्रति तत्ते दधामि"(८) इति। 'इह' अस्मिन् जन्मनि, 'मया', स्वीकृतं

---

* स च पुरुषो दार्शकाण्डे अङ्गारेणोदपातनात्त्रिषु उत्पन्न इति श्रुत इति तै॰ पाठः।

† ततः त्रितः येनेति तै॰ पाठः।

प्रति तत्ते दधामि(८)। (९)यन्मयि माता यदा पिपेष य-
दन्तरिक्षं यदाशसातिक्रामामि चिते देवा दिवि जाता
यदाप इमं मे वरुण तत्त्वायामि त्वन्नो अग्ने स त्वन्नो
अग्ने त्वमग्ने अयासि(९) ॥ १ ॥

मुमुग्धि, सप्त च ॥ अनु० ३ ॥

---

'यत्', 'कुसीदं' ऋणं, 'अप्रतीतं' केनाप्यासक्यादिना उत्त-
मर्णेभ्यो न प्रत्यर्पितं, 'यमस्य' दुष्टशिक्षाधिकारिणः, निधि-
स्थानीयेन प्रत्यर्पयितव्येन, 'येन' ऋणेन, युक्तोऽहं 'चरामि',
'एतत्' एतेन होमेन, 'तत्' तस्मात् ऋणात्, मुक्तोऽहं 'अनृणः',
भूयासं 'जीवन्नेव', 'ते' तव प्रसादात्, तादृशं* 'प्रतिदधामि'
प्रत्यर्पयामि, अनेन होमेन तुष्टस्त्वं अस्मिन्नेव जन्मनि मां प्रत्य-
र्पणसमर्थं कुर्विति भावः ॥

अथ नवमीमारभ्य एकविंशतिपर्यन्तानान्त्रयोदशानां म-
न्त्राणां प्रतीकानि दर्शयति। (९)"यन्मयि माता ० त्वमग्ने
अयासि"(९) इति। एते मन्त्राः सर्वेऽप्यनेनैवाभिप्रायेणाच्छिद्र-
काण्डेयद्देवा देवहेडनमित्यनुवाके व्याख्याताः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजु-
रारण्यके द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

* ऋणमिति तै० पाठः।

अथ चतुर्थोऽनुवाकः ।

(१)यद॒दी॑व्यन्नृ॒णम॒हं ब॒भूवादि॑त्सन्वा सञ्ज॒गर॒ जने॑भ्यः । अ॒ग्निर्मा॒ तस्मा॒दिन्द्र॑श्च संविदा॒नौ प्रमु॑ञ्चतां(१) । (२)यद्धस्ता॑भ्यां च॒कर॒ किल्बि॑षाण्य॒क्षाणां॑ व॒ग्नुमु॑पजि॒घ्न॑मानः । उ॒ग्रम्प॒श्या च॑ रा॒ष्ट्रभृ॑च्च ताान्य॑प्स॒रसा॒वनु॑दत्ता-

---

अथ चतुर्थोऽनुवाकः ।

चतुर्थानुवाकोऽस्मिन्नृचु प्रथमामाह । (१)"यददीव्यन् ० संविदानौ प्रमुञ्चतां"(१) इति । 'अहं', 'अदीव्यन्' पुत्रादिरक्षणरूपं व्यवहारं कर्तुमसमर्थः सन्, 'यत् ऋणं', 'बभूव' प्राप्तवानस्मि, यद्वा तदृणं 'जनेभ्यः' उत्तमर्णेभ्यः, 'अदित्सन्' प्रत्यर्पयितुमनिच्छन्, 'सञ्जगर' सम्यग् भक्षितवानस्मि,* 'अग्निरिन्द्रश्च', 'संविदानौ' परस्परमैक्यं गतौ, मां 'तस्मात्' ऋणात्, 'मुञ्चतां' ॥

अथ द्वितीयामाह । (२)"यद्धस्ताभ्यां ० तान्यप्सरसावनुदत्तामृणानि"(२) इति । यानि 'किल्बिषाणि' पापानि द्रव्यापहरणादीनि, 'हस्ताभ्यां', अहं कृतवानस्मि । 'अक्षाणां' चक्षुरादीन्द्रियाणां,'वग्नुं' वचनापगन्तव्यं,† रूपादिविषयमित्यर्थः । तं विषयं 'उपजिघ्नमानः' उपहतं कुर्वन्, अधर्महेतुं कुर्वन्,‡

---

* सम्यगश्नितवानस्मि इति तै॰ पाठः ।

† वर्जनीयं गन्तव्यमिति तै॰ पाठः ।

‡ अधर्म्माहतं कुर्वन्निति तै॰ पाठः ।

ऋणानि[२]। [१]उग्रम्पश्ये राष्ट्रभृत् किल्बिषाणि यद्-अक्षवृत्तमनुदत्तमेतत्। नेन्न ऋणानृणव इत्समानो यमस्य लोके अधिरज्जुराय[१]। [४]अवते हेड उदुत्त-

---

‘यत्’ पापं, कृतवानस्मि, तानि पापात्मकानि* ‘ऋणानि’, ‘उग्रम्पश्या च’, ‘राष्ट्रभृच्च’, इत्येतन्नामधारिण्यौ ‘अप्सरसौ’, ‘अनुदत्तां’ आनुकूल्येन प्रत्यर्पयतां। पापरूपमृणं यथास्माकं न भवति तथा कुरुतामित्यर्थः ॥

अथ तृतीयामाह। [१]“उग्रम्पश्ये ० लोके अधिरज्जुराय”[१] इति। हे ‘उग्रम्पश्ये’, हे ‘राष्ट्रभृत्’, ‘किल्बिषाणि’† ऋणरूपाणि यानि कृतानि, ‘यत् अक्षवृत्तं’ यत् द्यूते पणादिरूपं प्रतिश्रुतं‡ अप्रणीतं, ‘एतत्’ सर्वं, ‘अनुदत्तं’ अनुकूले युवामेव दत्तवत्यौ, ‘ऋणान्’ ऋणयुक्तान्, ‘नः’ अस्मान्, ‘समानः’ सदृशः उत्तमर्णः, ‘अधिरज्जुः’ बन्धनार्थं अधिकरज्जुयुक्तः सन्, ‘आय’ अस्मानादाय,बध्वा ‘नेदृणवः’ नैव ऋणयुक्तः, ऋणप्रयुक्तं बन्धनं कुर्यादित्यर्थः। कुत्रेति तदुच्यते, ‘यमस्य लोके’ मरणादूर्ध्वभाविनि गन्तव्ये लोके। द्वितीयः ‘इत्’-शब्द एवकारार्थः सन्, ‘आय’ इत्यनेन सम्बध्यते, आदायैव रज्जुभिर्बध्वेत्यर्थः ॥

---

* पातकानीति तै॰ पाठः। † किल्बिषाणि चेति तै॰ पाठः।
‡ यच्चाक्षवृत्तं अक्षद्यूतपणादिरूपमप्रतिश्रुतमिति तै॰ पाठः।

ममिमम्मे वरुण तत्त्वायामि त्वन्नो अग्ने स त्वन्नो अग्ने (४)। (५)सङ्कुसुको विकुसुको निर्ऋथो यश्च निस्वनः। ते येऽस्मत् यक्ष्ममनागसो दूराद्दूरमचीचतं(५)। (६)नि-

चतुर्थीमारभ्य नवमीपर्य्यन्तानां षसामृचां प्रतीकानि दर्शयति। (४)"अवते हेड ० स त्वन्नो अग्ने"(४) इति। "अवते हेड उदुत्तमम्" इति द्वयं वैश्वानरो न इत्यत्र व्याख्यातं। "इमं मे वरुण तत्त्वायामि" इति द्वयं इन्द्रं वो विश्वतस्परीत्यत्र व्याख्यातं। "त्वं नो अग्ने स त्वं नो अग्ने" इति द्वयं आयुष्ट आयुर्दा अग्ने इत्यनुवाके व्याख्यातं॥

अथ दशमीमाह। (५)"सङ्कुसुको विकुसुको ० दूराद्दूर-मचीचतं"(५) इति। 'सङ्कुसुकः' सङ्क्षेपेण परापवादनशीलः,* 'विकुसुकः' परापवादनस्य विस्तारयिता, 'निर्ऋथः' क्लेशस्य प्रापयिता, 'यश्च', 'निस्वनः' पिशुनः, 'ते' तादृशा ये वयं,† स्म, 'अस्मत्' तेभ्योऽस्मत्तः, 'यक्ष्मं' रोगनिमित्तं पापं, 'अना-गसः' पापरहिता देवाः, 'दूराद्दूरं' अतिशयेन दूरं यथा भवति तथा, 'अचीचतं' चोतयन्तु, विनाशयन्त्वित्यर्थः॥

अथैकादशीमाह। (६)"निर्यक्ष्ममचीचते ० तमस्मै प्रसुवा-मसि"(६) इति। तेन 'यक्ष्मं'‡ रोगनिमित्तं पापं, 'निरचीचते'

* परापवादस्य विस्मारयिता इति तै० पाठः।
† तादृशा वयमिति तै० पाठः। ‡ यक्ष्ममित्येव तै० पाठः।

यँक्ष्ममचीचते कृत्यान् निर्ऋँतिञ्च ॥ तेन योऽस्मत् समृच्छातै तमस्मै प्रसुवामसि(६)। (७)दुःशृꣳसानुशꣳसाभ्यां घणेनानुघणेन च। तेनान्योस्मत् समृच्छातै तमस्मै प्रसुवामसि(७)। (८)सं वर्चसा पयसा सन्तनूभिरग-

---

निष्कृष्य निश्चयेन वा चाभचयामि नाशयामि,* 'कृत्यां' पापरोगादिकामलक्ष्मीञ्च† नाशयामि। 'यः' शत्रुः, 'अस्मत्' अस्मासु, 'तेन' कृत्यादिना, 'समृच्छातै' विनाशमाचरेत्, 'अस्मै' शत्रवे, 'तं' यक्ष्मादिकं, 'प्रसुवामसि' प्रेरयामः ॥

अथ द्वादशीमाह। (७)"दुःशꣳसानुशꣳसाभ्यां ० प्रसुवामसि"(७) इति। ‡'दुःशंसः' अस्मदीयस्य दुष्कृतस्य शंसिता कथयिता, 'अनुशंसः' अन्येषामपेऽस्मदीयस्य दुष्कृतस्य पुनः पुनः शंसिता, 'घणः' हननशीलः, 'अनुघणः' तस्यैवानुविधायकः, 'तेन' तैर्दुःशंसादिभिः, सह 'अन्यः', अपि यः शत्रुः§ 'अस्मत्समृच्छातै' अस्मासु विनाशमाचरेत्। 'अस्मै' विनाशकाय, 'तं' यक्ष्माणमस्माकं||, 'प्रसुवामसि' प्रेरयामः ॥

---

* निष्कृष्य निश्चयेन वा घातयामि विनाशयामीत्यर्थं इति तै० पाठः।
† 'कृत्यां' नरोत्पादितां, 'निर्ऋतिं' अलक्ष्मीञ्चेति तै० पाठः।
‡ यक्ष्मरोगनिमित्तमिति तै० अधिकः पाठः।
§ यः कश्चिदिति तै० पाठः।
|| तस्मै विनाशाय एतं यक्ष्मादिकमिति तै० पाठः।

न्म हि मनसा सꣳशिवेन। त्वष्टा नो अत्र विदधातु रायोऽनुमार्ष्टु तन्वोऽ यद्विलिष्टं(८) ॥ १ ॥

कृत्यान् निर्ऋतिश्च, पञ्च च ॥ ४ ॥

---

अथ चयोदशीमाह। (८)"सं वर्चसा पयसा ० तन्वोऽ यद्विलिष्टं"(८) इति। एवमनेन कर्मणा निर्धूतपापा वयं 'वर्चसा' बलेन, 'सम्पयसा' क्षीरादिना, 'सन्तनूभिः' शोभनैः शरीरैः, 'मनसा' चाद्यापि तेन* 'समगन्म' हिंसां गता भूयास्म। 'अत्र' कर्मणि, 'त्वष्टा', देवः, 'नः' अस्माकं, 'रायः' धनानि, 'विदधातु' सम्पादयतु। 'यत्', च 'विलिष्टं' स्वल्पं पापं, 'तन्वः' अस्मच्छरीरस्य सम्बन्धि विद्यते† तदपि 'अनुमार्ष्टु' 'त्वष्टा', शोधयतु ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

* वा स्खलितेनेति ते० पाठः।

† तन्वोऽस्मत्सम्बन्धिशरीरविषयमिति ते० पाठः।

अथ पञ्चमोऽनुवाकः ।

(१)आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते प्राण आयाति परा यक्ष्मꣳसुवामि ते(१)। (२)आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि घृतं पीत्वा-

अथ पञ्चमोऽनुवाकः ।

पञ्चमानुवाकप्रोक्तर्चु* प्रथमामाह । (१)आयुष्टे ० सुवामि ते”(१) इति । हे यजमान ‘ते’ तुभ्यं, ‘वरेण्यः’ श्रेष्ठोऽयमग्निः, ‘विश्वतः आयुर्दधत्’ सम्पूर्णमायुर्दधातु, अपमृत्युनिग्टहीतो-ऽपि ‘ते प्राणः’, ‘पुनः’, अस्यानुग्रहेण† ‘आयाति’ लद्देहे समागच्छतु । ‘ते’ तव, ‘यक्ष्मं’ व्याधिं, ‘परा सुवामि’ विनाशयामि ॥

अथ द्वितीयामाह । (२)“आयुर्दा ० पुत्रमभिरक्षतादिमं”(२) इति । हे ‘अग्ने’, त्वं ‘आयुर्दाः’, सन् ‘एधि’ यजमानस्यायुःप्रदो भव‡ । कीदृशः त्वं, ‘हविषो जुषाणः’ आज्यं सेवमानः, ‘घृतप्रतीकः’ घृतोपक्रमः, आघारादीनां घृतेन क्रियमाणत्वात् । अवसानेऽपि घृतमेव योनिर्ज्वालोत्पत्तिकारणं यस्यासौ ‘घृतयोनिः’, तादृशस्त्वं । ‘मधु’ स्वादुतमं, ‘चारु’

* पञ्चमानुवाकप्रोक्तासु ऋक्षु इति तै० पाठः ।

† अनुग्रहादि तै० पाठः ।

‡ ‘आयुर्दा एधि’ यजमानस्यायुःप्रदो भवेति तै० पाठः ।

मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमं(२)। (३)इममग्न आयुषे वर्चसे क्षधि तिग्ममोजो वरुण सꣳशिशाधि। मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथासत्(३)। (४)अग्न आयूꣳषि पवस आसुवोर्जमिषञ्च

---

शोधितत्वेन निर्मलं, 'गव्यं घृतं पीत्वा', 'पिता पुत्रमिव', 'इमं' यजमानं, अभितो रक्ष॥

अथ तृतीयामाह। (३)"इममग्ने ० जरदष्टिर्यथासत्"(३) इति। हे 'अग्ने', 'इमं' यजमानं, 'क्षधि आयुषे वर्चसे' दीर्घायुषे बलाय च समर्थं* कुरु। हे 'वरुण', 'तिग्मं' तीक्ष्णं, 'ओजः' बलं, पुनरपि 'सꣳशिशाधि' नियमितं† कुरु। हे 'अदिते' पृथिवि, 'मातेव' मातृवत्, 'अस्मै', सुखं प्रयच्छ। हे 'विश्वेदेवाः', ममायं यजमानः 'जरदष्टिर्यथासत्',‡ तथा कुर्वन्तु, जरया अष्टिर्व्याप्तिर्यस्यासौ 'जरदष्टिः' बाल्ये यौवने च मरणरहितः, जरामायुःसम्पूर्त्तिपर्यन्तां§ यथा व्याप्नोति तथा कुर्वित्यर्थः॥

अथ चतुर्थीमाह। (४)"अग्न आयूꣳषि ० दुच्छुनां"(४)

---

* समृद्धमिति तै० पाठः।

† संशितमिति तै० पाठः।

‡ यथायं यजमानो जरदष्टिरसदिति तै० पाठः।

§ जरामायुःसम्पत्तिपर्यन्तामिति तै० पाठः।

नः। आरे बाधस्व दुच्छुनां(४)। (५)अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यं। दधद्रयिं मयि पोषं(५) ॥ १ ॥

(६)अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। तमीमहे महागयं(६)। (७)अग्ने जातान् प्रणुदा नः स-

---

इति। हे 'अग्ने', 'आयूंषि' अस्मदीयजीवनानि, 'पवसे' यथा वर्द्धन्ते* तथा शोधयसे। 'ऊर्जं' क्षीरादिरसं, 'इषं' अन्नं, 'च', 'नः' अस्माकम्, 'आसुव' आभिमुख्येन प्रेरय, 'दुच्छुनां' उपद्रवं, 'आरे' दूरे नीत्वा, 'बाधस्व' विनाशय ॥

अथ पञ्चमीमाह। (५)"अग्ने पवस्व ० मयि पोषं"(५)इति। हे 'अग्ने', शोभनमपः कर्म यस्यासौ 'स्वपाः', तादृशस्त्वं, 'अस्मे' अस्मदीयं, 'वर्चः' ब्रह्मवर्चसं, 'सुवीर्यं' शोभनसामर्थ्यञ्च, 'पवस्व' शोधय, वर्द्धयेत्यर्थः। धनं पुष्टिञ्च 'मयि', 'दधत्' स्थापय ॥

अथ षष्ठीमाह। (६)"अग्निर्ऋषिः ० महागयं"(६) इति। यः 'अग्निः', 'ऋषिः' अतीन्द्रियज्ञानवान्, 'पवमानः' शोधनशीलः, निषादपञ्चमा वर्णाः, पञ्च जनाः, तेषु भवः 'पाञ्चजन्यः', 'पुरोहितः' सर्वकर्मसु पुरस्तान्निहितः, 'तं' एवंगुणमग्निं, 'महागयं' महागृहं, 'ईमहे' प्राप्नुमः ॥

अथ सप्तमीमाह। (७)"अग्ने जातान् ० स्तामचिवहृथ उक्थी"

---

* वर्द्धन्ते इति तै० पाठः।

पत्नान् प्रत्यजाताञ्जातवेदो नुदस्व । अस्मे दीदिहि सुमना अहेडञ्छर्मन्ते स्याम चिवरूथ उद्भौ[७] । [८]सहसा जातान् प्रणुदा नः सपत्नान् प्रत्यजाताञ्जातवेदो नुदस्व । अधि नो ब्रूहि सुमनस्यमानो वयꣳ स्याम

---

[७] इति । हे 'अग्ने', 'नः' अस्माकं, 'जातान्' 'सपत्नान्' ये पूर्वमुत्पन्नाः शत्रवस्तान्, 'प्रणुद' प्रकर्षेण नाशय, हे 'जातवेदः', पूर्वमनुत्पन्ना इतःपरमुत्पत्तिप्रसक्तियुक्ताः तान् 'अजातान्', शत्रून् 'प्रणुदस्व' उत्पत्तिप्रतिबन्धेन,* निराकुरु । 'सुमनाः' अस्मदनुग्रहचित्तः,† त्वं 'अहेडन्' अक्रुध्यन्, 'चिवरूथः' प्राग्वंशसदोहविर्द्धानरूप‡गृहत्रयोपेतः,'उद्भौ'उद्भित्, अनुष्ठेयकर्मोत्पादकः§ सन्, 'अस्मे दीदिहि' अस्मान् प्रकाशय, 'ते' तव, प्रसादात् 'शर्मन् स्याम' सुखवान् भवेयं ॥

अथाष्टमीमाह । [८]"सहसा जाताम् ० सपत्नान्"[८] इति । 'सहसा' बलेन, जातानित्यादि पूर्ववत् । 'सुमनस्यमानः' अस्मासु सौमनस्यं प्राप्तः सन्, 'नः' अस्मान्, 'अधिब्रूहि' शत्रुभ्योधिकान् ब्रूहि । 'वयं', अपि त्वदनुग्रहादधिकाः 'स्याम', 'नः' अस्माकं,|| 'सपत्नान्' शत्रून्, 'प्रणुद' ॥

---

* उत्पत्तिप्रतिबन्धनेनेति तै० पाठः ।

† सानुग्रहचित्तः इति तै० पाठः ।

‡ हविर्द्धानाख्येति तै० पाठः ।

§ अनुष्ठेयधर्मोत्पादक इति तै० पाठः ।

|| अस्मदीयान् इति तै० पाठः ।

प्रणुदा नः सपत्नान् (८)। (९)अग्ने यो नोभितो जनो वृको वारो जिघाꣳसति। स्ताꣳस्त्वं वृत्रहञ्जहि वस्वस्मभ्यमाभर (९)। (१०)अग्ने यो नोभिदासति समानो यश्च निष्ट्यः। तं वयꣳ समिधं कृत्वा तुभ्यमग्नेपि दध्मसि (१०)। (११)यो नः शपादशपतो यश्च नः शपतः शपात्। उषाश्च तस्मै

अथ नवमीमाह। (९)"अग्ने यो ० वस्वस्मभ्यमाभर" (९) इति। हे 'अग्ने', 'यः', शत्रुजनः, 'वृकः' वृकसदृशः, अरण्यस्था यथोपद्रवं करोति तथोपद्रवकारीत्यर्थः। अतएव 'वारः' अस्मद्व्यवहारस्य निवारकः सन्, 'अभितः' 'सर्वतः, 'नः' अस्मान्, 'जिघाꣳसति' हन्तुमिच्छति। हे 'वृत्रहन्' वैरिघातिन् अग्ने, 'त्वं', तान् वृकवद्घातुकान्, 'जहि' मारय। 'अस्मभ्यं', तु 'वसु' धनम्, 'आभर' सम्पादय॥

अथ दशमीमाह। (१०)"अग्ने योनोभिदासति ० दध्मसि" (१०) इति। हे 'अग्ने', 'यः' प्रबलः शत्रुः, 'नः' अस्मान्, 'अभिदासति' हिनस्ति, 'यश्च' अन्यः, 'समानः', सन्* 'निष्ट्यः' नित्यं शत्रुत्वेनावस्थितः, हिनस्ति। 'वयं', 'तं' हिंसकं, 'समिधं' समित्सदृशं, 'कृत्वा', हे 'अग्ने', 'तुभ्यं' त्वदर्थं 'अपि', 'दध्मसि' प्रक्षिपामः॥

अथैकादशीमाह। (११)"यो नः शपादशपतः ० पापꣳ समू-

* समानवचाः सन्निति तै० पाठः।

निर्मुक्च सर्वं पापꣳ समूहतां⁽¹¹⁾। ⁽¹²⁾यो नः सपत्नो यो रणो मर्त्तोऽभिदासति देवाः। इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किञ्चन⁽¹²⁾। ⁽¹³⁾यो मां द्वेष्टि जातवेदो यं

---

हतां"⁽¹¹⁾ इति। 'अशपतः' अनाक्रोशतः, 'यः' शत्रुः, 'शपात्' शपति, अधिक्षिपति, 'यश्च' अन्यः शत्रुः, 'शपतः' अधिक्षिपतः, 'नः' अस्मान्, 'शपात्' प्रत्यधिक्षिपति, 'तस्मै' तदर्थं तस्मिन्नवस्थापयितुं, 'उषाश्च निर्मुक्च' उदयास्तमयदेवौ,* अहोरात्रदेवौ वा, 'सर्वं पापं', अस्मदीयं 'समूहतां' सङ्गतं कृत्वा तस्मिन्नेवास्थापयतां॥

अथ द्वादशीमाह। ⁽¹²⁾"यो नः ० किञ्चन"⁽¹²⁾ इति। हे 'देवाः', 'यः' 'मर्त्तः' मनुष्यः, अस्माकं 'सपत्नः' शत्रुः सन्, अनर्थं चिन्तयति 'यः', च अस्माभिः सह 'रणः' युद्धकारी सन्, 'अभिदासति' उपक्षपयति† 'तस्य' उभयविधस्य, सम्बन्धि 'किञ्चन' धनादिकं‡ 'मोच्छेषि' अवशिष्टं मा कुरुत, किन्तु सर्वं विनाशयत। यथा 'प्रक्षायतः' प्रकर्षेण क्षीयमाणस्य, दह्यमानस्य, 'इध्मस्य' काष्ठस्य, न कोऽप्यंशोऽवशिष्यते तद्वत्॥

अथ त्रयोदशीमाह। ⁽¹³⁾"यो मां द्वेष्टि ० द्वेष्मि ये च

---

* उदयास्तमयदवौ इति तै० पाठः।

† उपक्षयति इति तै० पाठः।

‡ सदनादिकं इति तै० पाठः।

चाहं द्वेष्मि यश्च मां। सर्वाꣳस्तानग्ने सन्दह याꣳश्चाहं द्वेष्मि ये च मां[१३]। [१४]यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः। निन्दाद्यो अस्मान्दिप्साच्च* सर्वाꣳस्तान्म-

---

मां"[१३] इति। हे 'जातवेदः','यः' शत्रुः, 'मां द्वेष्टि','अहञ्च',यं 'द्वेष्मि', द्विविधो द्वेषः प्रत्यक्षः परोक्षश्च। तत्र प्रत्यक्ष उभय-कर्तृको द्वेष† उदाहृतः, परोक्षमुभयकर्तृकं द्वेषं सूचयितुं यश्चमामिति पुनरुक्तिः। एवञ्च द्वेष्यो द्वेष्टा च, द्वौ प्रत्यक्षौ द्वौ च परोक्षौ 'तान्' चतुर्विधान्, 'सर्वान्', हे 'अग्ने', 'सन्दह' सम्यग्भस्मीकुरु। यौ मुख्यौ द्वेष्टारौ तद्द्वारा तदीया अन्येऽपि द्वेष्या द्वेष्टारश्च ये सन्ति तान् सङ्ग्रहीतुं याꣳश्चाहमिति पुन-रुक्तिः। तान् सर्वांश्च सन्दहेति पूर्वत्रान्वयः॥

अथ चतुर्दशीमाह। [१४]"यो अस्मभ्यं ० तान्मसषा कुरु" [१४] इति। शत्रवस्त्रिविधाः, अरातयो द्वेषिणो निन्दकाश्चेति। तत्र दातव्यत्वेन प्राप्तं धनं यो न ददाति सोऽयमरातिः। कार्यविघातं यः करोति स द्वेषी। वाग्दौर्जन्यमात्रं यः करोति स निन्दकः। हन्तुकामस्तुर्यः। तत्र 'यः', 'अस्मभ्यम्', 'अरातीयात्' अरातित्वमिच्छति, 'यश्च जनः', 'नः' अस्मान्,

---

* अस्मान् दिप्साच्चेति तै॰ पाठः।

† तत्र प्रत्यक्षः परोक्षश्च उभयकर्तृकः प्रत्यक्षं उभयकर्तृकद्वेष इति तै॰ पाठः।

भ्मषा कुरु(१४)। (१५)सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलं। सꣳशितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः(१५)॥ (१६)उदेषां बाहू अतिरमुद्वर्चो अथो बलं। क्षिणोमि

'द्वेषते' कार्यनाशेन* बाधते, 'यः', अप्यन्यो जनः, 'निन्दात्' दौर्जन्यात् निन्दति। यश्चाऽपरोऽस्मान् 'दिप्सात्' दम्भितुं हिंसितुमिच्छेत्। 'तान्' 'सर्वान्' जनान्, 'मभ्मषा कुरु' चूर्णन-भस्मीकरणादिजन्यस्य शब्दस्यानुकरणं, मभ्मषेति, चूर्णीकृत्य भस्मीकुर्वित्यर्थः॥

अथ पञ्चदशीमाह। (१५)"सꣳशितं ० पुरोहितः"(१५) इति। 'मे' मदीयं, 'ब्रह्म' ब्राह्मण्यं, 'सꣳशितं' सम्यक् तीक्ष्णीकृतं, शास्त्रीयमार्गेण† कृतमित्यर्थः। तथा 'वीर्यं' इन्द्रियशक्तिः, 'बलं' शरीरदर्पः‡ तदुभयं 'संशितं' सम्यक् स्वस्य कार्यक्षमं कृतं, तथा 'यस्य' क्षत्रस्य राज्ञः, 'अहं', 'पुरोहितः', 'अस्मि', 'मे' मदीयं, तत् 'क्षत्रं', 'जिष्णु' जयनशीलं,§ यथा भवति तथा 'सꣳशितं'॥

अथ षोडशीमाह। (१६)"उदेषां ० अहं"(१६) इति। 'एषां' स्वकीयानां राजब्राह्मणादीनां मध्ये, एकैकस्य 'बाहू' 'उदतिरं' उत्कर्षेण वर्द्धितवानस्मि। लौकिकोक्तिरियं, लोके हि योऽन्यस्मात् उत्कृष्टो भवति, तं जना एवमाहुः स्वकीयं हस्तमुपरितनं कृतवानिति। 'वर्चः' कान्तिः, तामपि 'उदतिरं',

* कार्यनाशनेनेति तै० पाठः। † शास्त्रीयमार्गवर्त्तीति तै० पाठः। ‡ शरीरशक्तिः इति तै० पाठः। § जयशीलमिति तै० पाठः।

ब्रह्मणाऽमित्रानुन्नयामि स्वां३ अहं(११)। (१०)पुनर्मनः पुनरायुर्म आगात् पुनश्चक्षुः पुनः श्रोत्रं म आगात् पुनः प्राणः पुनराकूतं म आगात् पुनश्चित्तं पुनराधीतं म आगात्। वैश्वानरो मेऽदब्धस्तनूपा अववाधतां दुरितानि विश्वा(१०) ॥ ३ ॥

पोषं, दध्मसि, पुरोहितः, चत्वारि च ॥ ५ ॥

---

'अथो' अपि च, 'बलं' शरीरशक्तिः, तामपि 'उदतिरं' उत्कर्षं प्रापयामि, 'ब्रह्मणा' मन्त्रसामर्थ्येन 'अमित्रान्' शत्रून्, 'क्षिणोमि' क्षीणान् करोमि। 'स्वान्' स्वकीयान् पुरुषान्, 'अहं', 'उन्नयामि' उत्कर्षं प्रापयामि ॥

अथ सप्तदशीमाह। (१०)"पुनर्मनः ० दुरितानि विश्वा" (१०) इति। मनःप्राणादीनां पापेन योपचयः प्राप्तः तस्य पापस्यानेन कर्मणा विनाशितत्वात् मे 'मनः', 'पुनः', अपि 'आगात्' अस्मिन् शरीरे समागच्छतु। एवमायुरादयोऽपि समागच्छन्तु। 'आकूतं' सङ्कल्पितं कार्यं। 'चित्तं' मनोजन्यं ज्ञानं। 'आधीतं' साकल्येन पठितो वेदः। एतेषां सर्वेषामागमनार्थं 'वैश्वानरो मे', 'विश्वा' सर्वाणि, 'दुरितानि', 'अववाधतां' विनाशयतु। कीदृशो वैश्वानरः, 'अदब्धः' केनाप्यहिंसितः, 'तनूपाः' मदीयशरीरपालकः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

अथ षष्ठोऽनुवाकः।

(१)वैश्वानराय प्रतिवेदयामो यदीनृणꣳ सङ्गरो देवतासु। स एतान् पाशान् प्रमुचन् प्रवेद स नो मुञ्चातु दुरितादवद्यात्(१)। (२)वैश्वानरः पवयान्नः पवित्रै-

---

अथ षष्ठोऽनुवाकः।

अथ षष्ठानुवाकोक्तासु ऋक्षु प्रथममाह*। (१)"वैश्वानराय ० दुरितादवद्यात्"(१) इति। 'यदीनृणं' यदेव प्रसिद्धमृणं, 'देवतासु' 'सङ्गरः' प्रतिज्ञारूपेण स्तुत्या सम्पादितः सङ्गरशब्दः प्रतिज्ञावाची। प्रतिज्ञा चैवं श्रूयते। त्रिभिर्ऋणं वा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इति। तदेतदृणं त्रिविधं 'वैश्वानराय' अस्मत्स्वामिने, 'प्रतिवेदयामः' विज्ञापयामः। तत्र देवताशब्देन ऋषयः पितरश्चोपलक्षिताः, 'सः' वैश्वानरः, 'एतान्' ऋणत्रयरूपान्, 'पाशान्', 'प्रमुचन्' प्रमोक्तुं, 'प्रवेद' प्रकर्षेण जानाति। 'सः' अभिज्ञो वैश्वानरः, 'नः' अस्मान्, 'दुरितात्' परलोकविरोधिनः पापात्, 'अवद्यात्', इह लोके निन्दादोषाच्च 'मुञ्चातु' मुक्तान् करोतु॥

अथ द्वितीयामाह। (२)"वैश्वानरः ० सुवामि"(२) इति। 'वैश्वानरः', देवः, 'नः' अस्मान्, 'पवित्रैः' शुद्धिहेतुभिः

---

* षष्ठानुवाके प्रथमामाहेति तै० पाठः।

यत् सङ्करमभिधावाम्याशां । अनाजानन् मनसा याचमानो यदत्रैनो अव तत् सुवामि(१)। (२)अमी ये सुभगे दिवि विचृतौ नाम तारके । प्रेहामृतस्य यच्छतामे-

होमादिभिः, 'पवयात्' शोधयतु । 'यत्' येन शोधनेन, 'सङ्करं' अत्युक्तां प्रतिज्ञामृणचयरूपां, 'आशां' मयापि प्रत्यर्पणीयत्वेन शासनीयां, 'अभिधावामि' आभिमुख्येन शीघ्रं प्राप्नोमि, तादृशं प्रपातनं* कुर्यादित्यर्थः । 'अनाजानन्' ऋणनिर्मोचनोपायान् सर्वान् अपि अजानन्, 'मनसा याचमानः' अनृणो भूयासमिति सर्वदा प्रार्थयमानोऽस्मि । 'अत्र' उपायापरिज्ञाने, 'यत्' 'एनः' पापं, अस्ति तत् पापं 'अवसुवामि' वैश्वानरप्रसादेन विनाशयामि ॥

अथ तृतीयामाह । (२)"अमी ये ० तद्बद्धकमोचनं"(२) इति । 'दिवि' आकाशे, 'विचृतौ नाम' विचृन्नामयुक्ते, द्वे 'तारके' लोके मघाशब्देन व्यवह्रियमाणे, 'सुभगे' सौभाग्ययुक्ते, 'अमी' अमू प्रत्यक्षेणास्माभिर्दृश्यमाने ये विद्येते ते उभे, 'इह' कर्मणि, 'अमृतस्य' ऋणापाकरणरूपममृतं सुखं, 'प्रयच्छतां', 'एतत्' तारकाभ्यां दत्तममृतं सुखं, बद्धकस्य मम मोचनं ऋणमोचनसाधनं, ऋणत्रयेण यो बद्धः स एव वा

* तादृशं पावनमिति तै॰ पाठः ।

तद्वदुक्रमोचनं(३)। (४)विजिहीर्षं लोकान् कृधि बन्धान् मुञ्चासि बद्धकं। योनेरिव प्रच्युतो गर्भः सर्वान् पथो अनुष्व(४)। (५)स प्रजानन् प्रतिगृभ्णीत विद्वान् प्रजाप-

---

अत्यन्तकुत्सितत्वाद्बद्धक इत्युच्यते। पितृदेवताकाभ्यां मघाभ्यां तारकाभ्यामामन्त्र्यादिप्रकाशनेन तस्मादृणत्रयात् मुक्तो भवामीत्यभिप्रायः॥

अथ चतुर्थीमाह। (४)"विजिहीर्ष्व लोकान् ० अनुष्व"(४) इति। अत्र मन्त्रद्रष्टा कश्चिदृषिरधमर्षं सम्बोध्य ब्रूते। हे अधमर्ष 'विजिहीर्ष्व' विहर्तुमिच्छ, पारतन्त्र्यराहित्येन सुखसञ्चारो विहारः, तत्सिद्ध्यर्थं 'लोकान् कृधि' पुण्यानुष्ठानेनोत्तमलोकान् सम्पादय, 'बद्धकं' ऋणेन कुत्सितेन बद्धं आत्मानं, 'बन्धात्' ऋणत्रयरूपात्, 'मुञ्चासि' मुक्तं कुरु। बन्धाद्विमोके दृष्टान्तः। 'योनेः प्रच्युतो गर्भ इव' उदरमध्ये सर्वावयवसङ्कोचेन निर्बध्यमानो गर्भो योनेर्बहिः पतितो यथा निर्बन्धात् मुक्तो भवति। तद्वत् तदृणत्रयात् मुक्तस्त्वं 'सर्वान्', 'पथः' पुण्यलोकमार्गान् 'अनुष्व' सेवस्वेत्यर्थः॥

अथ पञ्चमीमाह। (५)"स प्रजानन् ० तन्तुमनुसञ्चरेम"(५) इति। 'सः' 'प्रजापतिः', अस्माभिर्दत्तं हविः 'प्रतिगृभ्णीत' प्रतिगृह्णीत, स्वीकरोतु। कीदृशः प्रजापतिः। 'ऋतस्य प्रथमजाः' सत्यस्य परब्रह्मणः प्रथमः पुत्रः। किं कुर्वन्, 'प्रजानन्' अस्मत्-

तिः प्रथमजा ऋतस्य। अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनुसञ्चरेम[५] ॥ १ ॥

[१]ततं तन्तुमन्वेके अनुसञ्चरन्ति येषां दत्तं पित्र्यमायनवत्। अबन्ध्वेके ददत प्रयच्छाद्दा-

---

प्रार्थनां प्रकर्षेण निरूपयन्। 'विद्वान्' सर्वार्थसाधनाभिज्ञः, तस्य प्रजापतेः प्रसादेन 'जरसः परस्तात्' वयोहानेरूर्ध्वं, 'अच्छिन्नं' तन्तुवच्छेदनरहितं पुत्रपौत्रादिसन्तानं, 'अनुसञ्चरेम' अनुप्रविश्य सम्यग्गणनिर्भीका विश्रम्भेण चरेम ॥

अथ षष्ठीमाह। [१]"ततं तन्तुमन्वेके ० स्वर्ग एषां"[१] इति। 'एके' पुरुषाः केचित्, 'ततं' पुत्रपौत्रादिरूपेण विस्तीर्णं, 'तन्तुमनु' स्वकीयं सन्तानमनुप्रविश्य 'अनुसञ्चरन्ति' पुण्यलोकाननुक्रमेण प्राप्नुवन्ति। द्विविधो हि पितुर्विग्रहः पुत्ररूपः स्वात्मरूपश्चेति। तयोर्मध्ये पुत्ररूपेणेह लोके पुण्यं कुर्वन्नेवास्ते। पितृरूपेण लोकान्तरेषु सञ्चरति। एतदेवाभिप्रेत्य तैत्तिरीयोपनिषद्युक्तं। सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते। अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैतीति। अत आकारभेदेन तन्तुमनुप्रविश्येति पुण्यलोकाननुसञ्चरतीत्युभयमप्युपपद्यते। 'येषां' पुरुषाणां, 'पित्र्यं', ऋणं, 'आयनवद्दत्तं' आयनमागमः शास्त्रं तदस्यास्तीत्यायनवत् यथा शास्त्रं दत्तमित्यर्थः। पित्र्यमित्येतत्, अन्ययोरपि द्वयोर्ऋणयोरुपलक्षणं

तुन्वेच्छन्नुवाꣳसः स्वर्ग एषाम्(१)। (७)आरभेथाम-
नुसꣳरभेथाꣳ समानं पन्थामवथो घृतेन। यद्वां
पूर्तं परिविष्टं यदग्नौ तस्मै गोत्रायेह जायापती सꣳ-

---

तत् ऋणत्रयं यैर्दत्तं तादृशाः केचिदनुसञ्चरन्तीति पूर्वत्रान्वयः।
'एके' अपरे केचित् पुरुषाः, 'अबन्धु' पुत्रपौत्रादिबन्धुरहिताः
सन्तः, पितृऋणमपाकर्त्तुमशक्ता अपि, 'ददतः' धनदायिन
उत्तमर्णस्य, 'प्रयच्छात्' प्रयच्छन्ति, तद्धनं प्रत्यर्पयन्ति। ते
पुरुषाः 'दातुं', 'शक्नुवांसः' शक्नुवन्तश्चेत्, 'एषां' पुरुषाणां,
'स स्वर्गः', भवति 'एव'। पुत्रोत्पत्तेर्दैवाधीनत्वेऽपि* गृहीतं
धनमवश्यं प्रत्यर्पणीयमेवेत्यर्थः॥

अथ सप्तमीमाह। (७)"आरभेथामनुसꣳ० संरभेथां"(७)
इति। हे 'जायापती' कर्माधिकारिणौ, 'इह' जन्मनि, 'घृतेन',
द्रव्येण, 'आरभेथां' कर्मारम्भं कुरुतं, 'अनुसंरभेथां' परस्पर-
मनुकूलौ सक्तौ कदाचिदप्यवियुक्तावेव† भवतं। तयोरुभयोः
'समानं' साधारणं, 'पन्थां' पुण्यलोकमार्गं, 'अवथः' रक्षतं।
'वां' युवयोः, 'यत् पूर्त्तं' पितृभ्यो दत्तमन्नादि, 'यदग्नौ', 'परि-
विष्टं' परिप्रापितं हविः, 'तस्मै' तदविच्छेदेन यथा क्रियेते-
त्येवमर्थं, 'संरभेथां' त्वरेथां, न तु तूष्णीमासाथां। तच्च

---

* पुत्रोत्पत्तित्वेऽपीति तै० पाठः।

† सक्तौ परस्परमवियुक्तौ इति तै० पाठः।

रंभेया(७)। (८)यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम। अग्निर्मा तस्मादेनसो गार्हपत्य उन्नो नेषद्दुरिता यानि चकृम(८)। (९)भूमिर्मातादितिर्नो जनित्रं भ्रातान्तरिक्षमभिशस्त्या नः।

---

'गोत्राय', उपयुज्यते, गोत्रसम्भवाः पूर्वे परे च ये सन्ति तेषां सर्वेषामिदमनुष्ठानमुपयुक्तं॥

अथाष्टमीमाह। (८)"यदन्तरिक्षं॰ यानि चकृम"(८) इति। वयं ये 'अन्तरिक्षं', 'जिहिꣳसिम' हिंसितवन्तः, इति 'यत्' पापं, अस्ति तथा 'पृथिवीं', 'जिहिंसिम', इति 'यत्', अस्ति 'उत' अपि च, 'द्यां', 'जिहिंसिम', इति 'यत्', अस्ति। लोकत्रयवर्त्तिनां प्राणिनां अपकारः हिंसा। तथा 'मातरं पितरं वा', 'जिहिंसिम', इति 'यत्', अस्ति 'तस्मात्' सर्वस्मात्, 'एनसः', 'नः' अस्मान्, 'गार्हपत्यः अग्निः' गृहपतेर्यजमानस्य सम्बन्धी अग्निः, 'उन्नेषत्' उन्नयतु, पापादुद्गताम् करोतु। 'यानि' चान्यानि, 'दुरितानि चकृम', तेभ्योऽप्युन्नयतु॥

अथ नवमीमाह। (९)"भूमिर्मातादितिः • लोकाम्"(९) इति। येयं 'भूमिः', सेयं 'नः' अस्माकं, 'माता' लोकानां सर्वेषां निर्मात्री 'अदितिः', देवी, 'जनित्रं' जननीस्थानीया, भूमिरचेतना निवासाधिकारणभूता, तदभिमानिनी देवता

द्यौर्नः पिता पितृयाच्छम्भवासि जामि मित्वा मा विविित्स लोकान्[९]। [१०]यत्र सुहार्दः सुकृतो मदन्ते विहाय रोगं तन्वा३ँ स्वायां। अश्लोणाङ्गैरह्रुता स्वर्गे

अदितिः। यदिदं 'अन्तरिक्षं' तदस्माकं 'भ्राता' भ्रातृस्थानीयं, यत् 'एनः', अस्माभिः कृतं तत् 'अभिशस्तः' शत्रुस्थानीयं। येयं 'द्यौः', सेयं 'नः', 'पिता' पितृस्थानीया, यथा परमेश्वरेण सम्पादितः सर्वसाधारणोऽयं बन्धुवर्गः, तथा हे यजमान बन्धुवर्गसम्पादनार्थं त्वं 'पितृयात्' पितृत्वमिच्छन्, 'शम्भवासि' सुखं प्राप्नोषि, ऐहिकामुष्मिकसुखसिद्ध्ये पुत्रानुत्पादयेत्यर्थः। 'जामि मित्वा' आलस्येन पुत्रोत्पत्तिरहित एव सन् मृत्वा 'लोकान्' ऋणत्रयरहितानां योग्यं लोकं, 'माविवित्सि' नैव लप्स्यसि॥

अथ दशमीमाह। [१०]"यत्र सुहार्दः ० पितरं च पुत्रं"[१०] इति। 'यत्र' यस्मिन् पुण्यलोके स्थिताः, 'सुहार्दः' शोभनहृदयोपेताः, 'सुकृतः' पुण्यकर्माणः, 'स्वायान्तन्वां' स्वकीये शरीरे, 'रोगं', 'विहाय' परित्यज्य, 'मदन्ते' हृष्यन्ति, 'अश्लोणाङ्गैः' श्लोणो रोगविशेषः तद्रहितैरङ्गैः युक्ताः, 'अह्रुताः' कौटिल्यरहिताः केनचिदप्यवस्थिताः सर्वे वयं, 'तत्र स्वर्गे', स्थित्वा 'पितरं पुत्रञ्च', 'पश्येम', तादृशं जन्म भूयादित्यर्थः॥

तच्च पश्येम पितरं च पुत्रं(१०) ॥ (११)यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत वा करिष्यन्। यद्देवानां चक्षुष्यागो अस्ति यदेव किञ्च प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु(११)। (१२)यदन्नमद्मि बहुधा विरूपं वासो हिरण्यमुत गामजामविं। यद्देवानां चक्षुष्यागो

---

अथैकादशीमाह। (११)"यदन्नमद्म्यनृतेन ॰ कृणोतु"(११) इति। हे 'देवाः', अहं 'दास्यन्नदास्यन्' प्रत्यर्पणं चिकीर्षुरचीकीर्षुर्वा, तत्कालिकेन सर्वथा प्रत्यर्पयिष्यामीत्येतादृशेन 'अनृतवचनेन,' धनमादाय 'यदन्नं', 'अद्मि' भक्षयामि, अथवा किञ्चित्कार्यं परकीयं करिष्यामीत्यनेनानृतेन वचनेन धनमादाय तत्कार्यं 'अकरिष्यन्', 'यदन्नमद्मि', 'यत्', अपि 'देवानां', 'चक्षुषि' दृष्टिविषये, मयाकृतं 'आगः', पापं, 'अस्ति', आदित्याभिमुख्येन मूत्रविसर्गादि। तथा च स्मर्यते, प्रत्यादित्यं प्रत्यनिलं प्रतिगाञ्च प्रतिद्विजं। मेहन्ति ये च पापिष्ठास्ते भवन्ति गतायुष इति। 'किञ्च,' 'यदेव' किञ्चिच्छूद्रादिधनं, 'प्रतिजग्राह' प्रतिगृहीतवानस्मि, 'तस्मात्' सर्वस्मादेनसः, विमुच्यायं 'अग्निः', 'अनृणं' ऋणरहितं, करोतु ॥

अथ द्वादशीमाह। (१२)"यदन्नमद्मि ॰ कृणोतु"(१२) इति। 'बहुधा विरूपं' द्रव्यदोषात् कर्तृदोषाद्देशकालदोषादिना वा

अस्ति यद्देव किल्बिषं प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु[११]। [१२]यन्मया मनसा वाचा कृतमेनः कदाचन। सर्वस्मात् तस्मान् मेडितो मोग्धि त्वꣳ हि वेत्थ यथातथं[१२] ॥ २ ॥

चरेम, पुत्रꣳ, षट् च ॥ ६ ॥

---

बहुप्रकारेण शास्त्रनिषिद्धं, 'यदन्नमद्मि', तथा वस्त्रादीनपि निषिद्धान् स्वीकरोमि। यद्देवानामित्यादि पूर्ववत् ॥

अथ चयोदशीमाह। [१२]"यन्मया ० यथातथं"[१२] इति। 'मया' कर्त्रा। 'कदाचन' इह जन्मनि जन्मान्तरे वा यदा कदाचिदपि,'मनसा वाचा',वा 'यदेनः कृतं', हे अग्ने अस्माभिः 'ईडितः' स्तुतस्त्वं, मां 'तस्मात् सर्वस्मात्', एनसः 'मोग्धि' मुञ्च, 'हि' यस्मात् कारणात्, हे अग्ने त्वं 'यथातथं', 'वेत्थ' वस्तुनस्तथात्वमनतिक्रम्य यथातथं यस्य पापस्य यः प्रतीकारस्तस्य तत् सर्वं जानासि, तस्मान्मां पापान्मुञ्च ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ सप्तमोऽनुवाकः ।

(१)वातरशना ह्वा ऋषयः श्रमणा ऊर्ध्वमन्थिनो बभूवुस्तान्दषयोऽर्थमायꣳस्तेऽनिलायमचरꣳस्तेऽनुप्रविशुः कूश्माण्डानि ताꣳस्तेष्वन्वविन्दञ्छ्रद्धया च तपसा

---

अथ सप्तमोऽनुवाकः ।

षष्ठेऽनुवाके कूश्माण्डहोमाङ्गमन्त्राः समापिताः । सप्तमे स होमो विधीयते* । तदर्थमाख्यायिकामाह । (१)"वातरशना ० तपसा च"(१) इति । पूर्वप्रपाठके ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन्निति त्रिविधा ऋषयो ये आख्याताः, तन्मध्ये ये 'वातरशनाख्या ऋषयः', 'श्रमणाः' तपस्विनः, 'ऊर्ध्वमन्थिनः' ऊर्ध्वरेतसः, 'बभूवुः', 'तान्' वातरशनाख्यानृषीन्, प्रत्यन्ये केचित् 'ऋषयः', 'अर्थमायन्' अर्थयितुमागताः, तं वृत्तान्तमादावेवागत्य किमशक्यमेते करिष्यन्ति इति निश्चयरहितास्ते 'वातरशनाः', 'अनिलायं' कुत्रचिदन्तर्हिताः, 'अचरन्' अन्तर्द्धानस्थानं विचार्य योगसामर्थ्यात् सूक्ष्मशरीरा भूत्वा कूश्माण्डाख्यानि मन्त्रवाक्यानि अनुप्रविष्टाः, इतरे तु महर्षयः श्रद्धापूर्वकेन 'तपसा', शुद्धचित्ताः† सन्तः

---

* कूश्माण्डगणहोममन्त्राः समाम्नाताः । सप्तमे होमविधिरुच्यते इति तै० पाठः ।

† युक्तचित्ता इति तै० पाठः ।

च[१] [२]तान्वृषयोऽब्रुवन् कया निलायं चरथेति त ऋ-
षीनब्रुवन्नमो वोस्तु भगवन्तोस्मिन्धाम्नि केन वः सप-
र्यामेति तान्वृषयोऽब्रुवन् पवित्रन्नो ब्रूत येनारेपसः स्या-
मेति त एतानि सूक्तान्यपश्यन्[२] [१]यद्देवा देव हेडनं

---

ध्यानेनाग्वीच्य ते 'तेषु' कूष्माण्डमन्त्रेषु, अवस्थिताम् वातर-
शनाख्यान् 'तान्' ऋषीन्, प्रत्यक्षेण किल अपश्यन्॥

अथ तेषामुभयेषां परस्परसंवादं दर्शयति। [१]"तानृ-
षयः॰सूक्तान्यपश्यन्"[१] इति। 'तान्' वातरशनान्,'ऋषयः',
इतरे 'अब्रुवन्', हे वातरशनाः 'कया' केन हेतुना, 'निला-
यं' निलीय, 'चरथेति', 'ते' च वातरशनाः, तैः पृष्टाः सन्त-
स्तानुपचरितुमिदं 'अब्रुवन्', हे 'भगवन्तः' ऐश्वर्य्यादिषड्गुण-
युक्ताः, 'वः' युष्मभ्यं, नमस्कारः 'अस्तु',महात्मानो यूयमस्मदीये
'धाम्नि' समागताः, अतोऽत्र 'केन' साधनेन, युष्मान् परिच-
रेमेति ततः 'तान्' वातरशनान्, इतरे 'अब्रुवन्', 'येन'
साधनेन, 'अरेपसः' पापरहिताः, 'स्याम', तादृशं 'पवित्रं'
शुद्धिकारणं, अस्मभ्यं 'ब्रूतेति', 'ते' वातरशनाः, अप्रया-
सेन सहसा शुद्धिप्रदं विचार्य 'एतानि' वक्ष्यमाणानि, 'सूक्ता-
नि' तेषां कथनयोग्यानीति निश्चितवन्तः॥

अथ तदुक्तं प्रयोगक्रमं दर्शयति। [१]"यद्देवा॰मोऽक्ष्यध्व

यद्दीव्यन् नृणमहं बभूवायुष्टे विश्वतो दधदित्येतै-
राज्यं जुहुत वैश्वानराय प्रतिवेदयाम इत्युपतिष्ठत य-
दर्वाचीनमेनो भ्रूणहत्यायास्तस्मान् मोक्ष्यध्व इति(१)
(४)त एतैरजुहवुस्ते ऽरेपसोऽभवन्(४) (५)कर्मादिष्वेतै-
र्जुहुयात् पूतो देवलोकान्त्समश्नुते(५) ॥ ७ ॥*

---

इति"(१) इति। अदनुवाकत्रयेण होमः। चतुर्थानुवाकेनोप-
स्थानं। वेदत्रयविद्ब्राह्मणः 'भ्रूणः', तदीयहत्याया अर्वाचीनं
यत् पापं, 'तस्मात्' सर्वस्मात्, मुक्ता भविष्यथेति॥

इतरमहर्षिवृत्तान्तमाह। (४)"त एतैरजुहवुस्तेऽरेपसो-
ऽभवन्"(४) इति। 'अरेपसः' पापरहिताः॥

इदानीं विधत्ते। (५)"कर्मादिष्वेतैः॰समश्नुते"(५) इति।
प्रारभ्यमाणकर्मप्रारम्भेषु कूश्माण्डहोमेन पूतस्य देवलोकप्राप्ति-
र्भवति॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-
रण्यके द्वितीयप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

* मद्दृष्टपुस्तकत्रयेषु दशतिसङ्ख्यायिका रेखा न सन्ति। प्रतीक-
सङ्ग्रहोऽपि नास्ति।

अथाष्टमोऽनुवाकः।

(१)कूष्माण्डैर्जुहुयाद्यो पूत इव मन्येत(१) (२)यथा स्तेनो यथा भ्रूणहैवमेष भवति योऽयोनौ रेतः सिञ्चति(२) (३)यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्

---

अथाष्टमोऽनुवाकः।

सप्तमे कूष्माण्डहोमः कर्मादिषु विहितः। अष्टमे दीक्षादिकं विधीयते। तत्रादौ कर्मादिव्यतिरिक्तस्थले होमं विधत्ते। (१)"कूष्माण्डैः ० इव मन्येत"(१) इति। 'यः' पुमान्, सन्दिग्धेन पापेन स्वस्य पूतत्वं नास्तीति मनसि शङ्कते स पुमान् कूष्माण्डहोमेन पूतो भवति॥

अथ महापातकसमस्य पापस्य निवृत्त्यर्थं होमं विधत्ते। (२)"यथास्तेनः ० रेतः सिञ्चति"(२) इति। 'अयोनौ' प्रतिषिद्धयोनौ, 'यो रेतः सिञ्चति', 'एषः' सुवर्णस्तेयकारिणा* भ्रूणहत्याकारिणा च समो भवति, सोऽपि 'कूष्माण्डैर्जुहुयात्'॥

तेनोक्तेन होमेन यथोक्तपापनिवृत्तिं दर्शयति। (३)"यदर्वाचीनं ० मुच्यते"(३) इति। भ्रूणहत्यासमस्यापि मुख्यभ्रूणहत्याया अर्वाचीनत्वात्तेन होमेन निवृत्तिर्युज्यते॥

---

* सुवर्णहारिणा इति तै० पाठः।

मुच्यते॒(३) (४)याव॑दे॒नो दी॒क्षामु॒पैति॑ दी॒क्षि॒त ए॒तैः संत॑ति जु॒होति॒(४) (५)सं॒व॒त्स॒रं दी॑क्षि॒तो भ॑वति सं॒व॒त्स॒रा दे॒वात्मानं॑ पुनी॒ते॒(५) (६)मा॒सं दी॑क्षि॒तो भ॑वति॒ यो मा॒सः स सं॑वत्स॒रः सं॒व॒त्स॒रादे॒वात्मानं॑ पुनीते॒ चतु॑र्विꣳश॒तिꣳ रात्री॑र्दीक्षि॒तो भ॑वति॒ चतु॑र्विꣳशतिरर्धमा॒साः सं॑वत्स॒रः सं॑वत्स॒रादे॒वात्मानं॑ पुनीते॒ द्वाद॑श॒ रात्री॑-

---

तेन भ्रूणहत्याद्या अर्वाचीनानामपि तारतम्योपेतत्वात् कथमेकेन होमेन* निवृत्तिरित्याशङ्क्य दीक्षातारतम्येनेत्युत्तरं दर्शयति। (४)“यावदेनः॰जुहोति”(४) इति। अल्पं महद्वा ‘यावदेनः’, भवति तदनुसारेणाल्पां महतीं वा ‘दीक्षां’, कृत्वा तस्मिन्नेव उपचिते काले प्रतिदिनं ‘जुहोति’, तत्र तारतम्येन बहुभेदाः† ॥

तत्र प्रथमं दीक्षाभेदं दर्शयति। (५)“संवत्सरं ॰ पुनीते” (५) इति। न माꣳसमश्नीयादिति नियमाचरणं दीक्षायाः, पापाधिक्ये सति ‘संवत्सरं दीक्षितः’, भूत्वा तस्मिन् संवत्सरे प्रतिदिनं जुहुयात्। तया संवत्सरदीक्षया स्वात्मानं शोधयति॥

पापह्रासानुसारेण दीक्षायाः पक्षान्तराणि विधत्ते।(६)“मासं दीक्षितः॰पुनीते”(६) इति। पापबाहुल्ये सति संवत्सरनियमेन

---

* कथमेकविधहोमेन इति तै॰ पाठः।

† षड्विधा दीक्षाः इति तै॰ पाठः।

दीक्षितो भवति द्वादश मासाः संवत्सरः संवत्सरा-देवात्मानं पुनीते षड्रात्रीर्दीक्षितो भवति षड्वा ऋतवः संवत्सरः संवत्सरादेवात्मानं पुनीते तिस्रो रात्रीर्दीक्षितो भवति त्रिपदा गायत्री गायत्र्या एवात्मानं पुनीते(६) (७)नमांऽसमश्नीयान्न स्त्रियमुपेयान्नोपर्यासीत जुगुप्सेतानृतात्(७) (८)पयो ब्राह्मणस्य व्रतं यवागूराजन्यस्यामिक्षा वैश्यस्य(८) (९)अथो सौम्ये-

---

या शुद्धिः पापाल्पत्वे सा शुद्धिर्मासमात्रेण समाप्यते। एवमुत्तरेष्वपि। अतः सर्वेषां संवत्सरसाम्यं। गायत्रीपादानां त्रित्वसाम्येन त्रिरात्रदीक्षाया गायत्रीत्वात् तयैव शुद्धिर्भवति॥

अथ नियमान् विधत्ते। (७)"नमांऽसमश्नीयात् • जुगुप्सेतानृतात्"(७) इति। 'उपरि' खट्वादौ। स्पष्टमन्यत्॥

अथ वर्णभेदेन दीक्षादिनेषु* भोजनद्रव्यविशेषं विधत्ते। (८)"पयो ब्राह्मणस्य • वैश्यस्य"(८) इति। 'व्रतं' भोजनमित्यर्थः॥

तदेतद्व्रतं प्रशंसति। (९)"अथो सौम्ये • ब्रूयात्"(९) इति। अपि च न केवलं कूष्माण्डहोमकर्मण्येवैतद्व्रतं, किन्तु

---

* अथ जातिभेदेन दीक्षादिवसेषु इति तै॰ पाठः।

प्यध्वर एतद्व्रतं ब्रूयात्[९] [१०]यदि मन्येतोपदस्यामीत्योदनं धानाः सक्तून् घृतमित्यनुव्रतयेदात्मनोनुपदासाय[१०] ॥ ८ ॥

---

सोमयागेऽपि 'एतत्', एव दीक्षा 'व्रतं',* कर्त्तव्यमित्येव 'ब्रूयात्'। यस्मान् महत्यपि यज्ञे व्रतमिदमपेक्षितं तस्मादिदं प्रशस्तं ॥

अशक्तं प्रति कञ्चिद्विशेषं विधत्ते। [१०]"यदि मन्येत ० आत्मनोनुपदासाय"[१०] इति। दीक्षितो यथोक्तव्रतेन 'उपदस्यामि' उपक्षीणो भवामि, इति 'यदि मन्येत', तदानीं यथोक्तदीक्षादिव्रतमनुशरीरस्योपक्षयपरिहारार्थमोदनादिकं यत्किञ्चित् 'अनुव्रतयेत्' भुञ्जीत, 'धानाः' भृष्टयवतण्डुलाः, 'सक्तवः' तत्पिष्टानि, 'इति'शब्देन ईदृशमन्यदपि विवक्ष्यते ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

* सोमयागेऽप्येतद्व्रतं दीक्षान्तमिति ते० पाठः।

अथ नवमोऽनुवाकः।

(१)अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयं स्वयम्भ्वभ्यानर्षत् तदृषयोऽभवन्तदृषीणामृषित्वन्तां देवतामुपातिष्ठन्त यज्ञकामास्त एतं ब्रह्मयज्ञमपश्यन्त-

---

अथ नवमोऽनुवाक।

अस्य प्रपाठकस्य स्वाध्यायब्राह्मणमिति समाख्यानात् स्वाध्याय एवात्र प्राधान्येन विधेयः। तस्मिंश्च शुद्धः पुमानधिकारी। अतः शुद्धिहेतून् यज्ञोपवीतसन्ध्यावन्दनकूश्माण्डहोमानभिधाय स्वाध्यायं विधातुमुपाख्यानमाह। (१)"अजान् • तेनायजन्त"(१) इति। कल्पादावेव ब्रह्मणा सृष्टाः न त्वस्मदादिवत् कल्पमध्ये पुनः पुनर्जायन्ते तस्मात् 'अजाः'। ते च 'पृश्नयः' शुक्लाः, स्वरूपेणैव निर्मलाः सन्तोऽपि, पुनस्तप आचरन्। तदीयेन तपसा तुष्टं 'स्वयम्भू', 'ब्रह्म' जगत्कारणत्वेन स्वतः सिद्धं परब्रह्मवस्तु, काञ्चिन्मूर्त्तिं धृत्वा 'तपस्यमानान्', तानृषीननुग्रहीतुं* 'अभ्यानर्षत' आभिमुख्येन प्रत्यक्षमागच्छत्। ततस्ते मुनयः ऋषिधात्वर्थविषयत्वात् 'ऋषयोऽभवन्'। तस्मादन्येषामपि 'ऋषीणां', अनयैव व्युत्पत्त्या 'ऋषित्वं', सम्पन्नं। ततस्ते मुनयः सर्वकामप्रदं कञ्चिद्यज्ञं कामयमानाः स्वयम्भू ब्रह्मरूपां 'तां देवतां', उपासितवन्तः†। तद्देवतानुग्रहात्ते

---

* अनुग्रहेतोरिति तै० पाठः। † उपस्थितवन्त इति तै० पाठः।

माहरन्तेनायजन्त[१]। [२]यदृचोध्यगीषत ताः पय आ-
हुतयो देवानामभवन्यद्यजूꣳषि घृताहुतयो यत्सामा-
नि सोमाहुतयो यदथर्वाङ्गिरसो मध्वाहुतयो यद्ब्रा-
ह्मणानीतिहासान् पुराणानि कल्पान् गाथा नारा-

---

मुनयः 'एतं' वक्ष्यमाणं, 'ब्रह्मयज्ञं', सर्वकामहेतुं 'अपश्यन्' दृष्ट्वा च, 'तं' यज्ञं, 'आहरन्' अनुष्ठितवन्तः। 'तेन' यज्ञेन, देवानपूजयन्त॥

ब्रह्म वेदः तस्या*ध्ययनमेव सम्पादितं। न तु यज्ञत्वमिति †मतिं वारयितुं तत्राहुतीः सम्पादयति। (२)"यदृचोध्यगीषत ० सायुज्यमृषयोऽगच्छन्"(२) इति। पादबद्धमन्त्राः 'ऋचः', 'ता अध्यगीषत' ये ते ऋषयोऽधीतवन्त इति यदस्ति ता अध्ययनक्रियाः, 'देवानां', क्षीरद्रव्याहुतयः 'अभवन्', तदाहुत्या या तुष्टिः सा तेषामृगध्ययनेन सम्पन्ना। एतदन्यत्रापि योज्यं‡। अथर्वभिरङ्गिरोभिश्च दृष्टा मन्त्राः 'अथर्वाङ्गिरसः'। 'ब्राह्मणानि' कर्मचोदना, वायव्यꣳ श्वेतमालभेतेत्यादयः। 'इतिहासाः' महाभारतादयः§। देवासुराः संयत्ता आसन् इत्यादयः। आत्मा वा इदमेक एवाग्र आसीन्नैवेह किञ्चनाग्र

---

* ब्रह्मयज्ञस्या- इति तै॰ पाठः।
† यज्ञानिवारयितुमिति तै॰ पाठः।
‡ एवमुत्तरत्रापि योज्यमिति तै॰ पाठः।
§ ब्रह्माण्डादिनियमा इति तै॰ पाठः।

शꣳसीर्मेदाहुतयो देवानामभवन्ताभिः क्षुधं पाप्मानमपाघ्नन्नपहतपाप्मानो देवाः स्वर्गं लोकमायन् ब्रह्मणः सायुज्यमृषयोऽगच्छन्(१) ॥ ९ ॥

---

इत्यादीनि सृष्ट्यादिप्रतिपदकानि* 'पुराणानि' । 'कल्पाः' कल्पसूत्राणि प्रयोगप्रतिपादकानि। 'गाथाः' गायति† चोदिता मन्त्रविशेषाः, योऽस्य कौष्ठ्येत्यादयः । यज्ञगाथाभिः परिगायतीति विधानात् । 'नाराशंसीः' नाराशंस्यः, होता यक्षन्नराशंसमित्याद्याः । ब्राह्मणाङ्गपठितानामपि पुनरुक्तिः फलातिशयद्योतनार्थं । 'मेदाहुतयः' मांसाहुतयः, 'ताभिः' आहुतिभिः, देवाः क्षुद्रूपं 'पाप्मानं', विनाशितवन्तः । स्वाध्यायजन्यदृष्ट्या‡ क्षुधं विस्मृतवन्तः ततः क्षुद्रूपपापरहिताः 'देवाः', सुखमनुभवितुं 'स्वर्गं', गताः । 'ऋषयः' च पूर्वोक्ताः, अध्ययनेन ब्रह्मयज्ञेन जगत्कारणस्य 'ब्रह्मणः',§ 'सायुज्यं', प्राप्ताः । ब्रह्मज्ञानोत्पादनद्वारा मुक्तिहेतुत्वं ब्रह्मयज्ञस्य युक्तं । अतएव ज्ञानसाधनेषु प्राथम्येन वेदानुवचने वाजसनेयिनः समामनन्ति, तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन न तपसा नाशकेनेति ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

* इदं वा अग्रे नैव किञ्चनासीदित्यादिसृष्टिप्रतिपादकानि इति [तै० पाठः ।

† गायन्ति इति तै० पाठः ।

‡ स्वाध्यायस्वत्तिजन्यदृष्ट्या इति तै० पाठः ।

§ परब्रह्मण इति तै० पाठः ।

अथ दशमोऽनुवाकः ।

(१)पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति सन्तिष्ठन्ते देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति(१) । (२)यदग्नौ जुहोत्यपि समिधं तद्देव

---

अथ दशमोऽनुवाकः ।

नवमे ब्रह्मयज्ञविधिप्रस्तावार्थमुपाख्यानमुक्तं । इदानीं तद्विधिप्रसङ्गेन पञ्च महायज्ञान् विधत्ते । (१)"पञ्च वा॰ ब्रह्मयज्ञ इति"(१) इति । एवं* यज्ञानां पाठतः पञ्चत्वं† । न तु स्वरूपविस्तारेण । 'सतति' सततं दिने दिने, 'प्रतायन्ते' अनुष्ठीयन्ते‡ 'सतति' प्रतिदिनं, 'सन्तिष्ठन्ते' समाप्यन्ते, यस्मिन् दिन उपक्रमस्तस्मिन्नेव दिने तत्समाप्तिः न तु यज्ञान्तरवद्दिनान्तरापेक्षा । देवयज्ञ इत्यादीनि तेषां नामानि ॥

तत्र देवयज्ञस्य लक्षणमाह । (२)"यदग्नौ॰ सन्तिष्ठते"(२) इति । 'तत्' पुरोडाशादिहविः,§ मुख्यं तदलाभे 'समिधं',

---

* एषामिति तै॰ पाठः ।

† यज्ञानां पञ्चतो महत्त्वमिति तै॰ पाठः ।

‡ अनुतिष्ठन्ते इति तै॰ पाठः ।

§ घृतपुरोडाशादिहविरिति तै॰ पाठः ।

यज्ञः सन्तिष्ठते[२]। [३]यत् पितृभ्यः स्वधाकरोत्यप्यप-
स्तत् पितृयज्ञः सन्तिष्ठते[३]। [४]यद्भूतेभ्यो बलिꣳ हरति
तद्भूतयज्ञः सन्तिष्ठते[४]। [५]यद्ब्राह्मणेभ्योऽन्नं ददाति तन्म-
नुष्ययज्ञः सन्तिष्ठते[५]। [६]यत्स्वाध्यायमधीयीतैकामप्यृचं

---

अपि 'अग्नौ', देवानुद्दिश्य 'जुहोति', इति 'यत्', सोयं 'देवयज्ञः', स च तद्धोममात्रेण समाप्यते* ॥

पितृयज्ञस्य लक्षणमाह। [३]"यत् पितृभ्यो ॰ सन्तिष्ठते"[३] इति। तत्र पिण्डदानासम्भवे† जलमात्रमपि पितृभ्यः स्वधास्त्विति स्वधाशब्देन 'यत्', ददाति सोऽयं 'पितृयज्ञः', तावतैव समाप्यते ॥

भूतयज्ञस्य लक्षणमाह। [४]"यद्भूतेभ्यो ॰ सन्तिष्ठते"[४] इति। वैश्वदेवानुष्ठानादूर्ध्वं बहिर्देशे वायसादिभ्यः 'भूतेभ्यः', 'यत्', बलिप्रदानं सोऽयं 'भूतयज्ञः', तावतैव समाप्यते ॥

मनुष्ययज्ञस्य लक्षणमाह। [५]"यद्ब्राह्मणेभ्योऽन्नं ॰ मनुष्ययज्ञः सन्तिष्ठते"[५] इति। वैश्वदेवादूर्ध्वं हन्तकारार्थान्न‡व्यतिरिक्तमन्नं अतिथिभ्यस्त्ववरेभ्यः 'ब्राह्मणेभ्यः', 'यत्', दीयते स 'मनुष्ययज्ञः', तावतैव समाप्यते ॥

---

* सन्तिष्ठते इति तै॰ पाठः।

† श्राद्धपिण्डदानाभावेऽपि इति स॰ पाठः।

‡ चतुर्थांश इति तै॰ पाठः।

यजुः साम वा तद्ब्रह्मयज्ञः सन्तिष्ठते[१]। [७]यदृचोऽधीते पयसः कूल्या अस्य पितॄन् स्वधा अभिवहन्ति यद्यजूꣳषि घृतस्य कूल्या यत्सामानि सोम एभ्यः पवते यदथर्वाङ्गिरसो मधोः कूल्या यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथानाराशꣳसीर्मेदसः कूल्या अस्य पितॄन् स्वधा अभिवहन्ति[७]। [८]यदृचोऽधीते

---

ब्रह्मयज्ञस्य लक्षणमाह। [१]"यत् स्वाध्यायं ० ब्रह्मयज्ञः सन्तिष्ठते"[१] इति। स्वस्यासाधारणत्वेन पितृपितामहादिपरम्परया प्राप्ता वेदशाखा 'स्वाध्यायः'। तत्र विद्यमानमृगादीनामन्यतममेकमपि वाक्यमधीयीत इति 'यत्', सोऽयं 'ब्रह्मयज्ञः', तावतैव समाप्यते॥

तत्र विशेषाकारेणाध्ययनं पृथक् पृथक् प्रशंसति। [७]"यदृचोऽधीते ० अभिवहन्ति"[७] इति। कूलमर्हन्तीति 'कूल्याः' महानद्यः, ऋगध्ययनेन क्षीरपूर्णा महानद्यः स्वधाकारेण दत्तं हविर्भूत्वा 'पितॄन्', अभिलक्ष्य 'प्रवहन्ति'। तथा यजुरध्ययनेन घृतपूर्णो महानदीप्रवाहः सामाध्ययनादिभ्यः पितृभ्यः सोमो धारया युक्तः 'पवते' प्रवहति, एवमथर्वाङ्गिरसामध्ययनेन मधुपूर्णा नद्यः 'प्रवहन्ति'॥

ब्राह्मणाद्यध्ययनेन मांससम्बन्धि नीरसप्रवाहः पितृतृप्त्या

पय आहुतिभिरेव तद्देवाꣳस्तर्पयति यद्यजूꣳषि घृताहुतिभिर्यत्सामानि सोमाहुतिभिर्यदथर्वाङ्गिरसो मध्वाहुतिभिर्यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशꣳसीर्मेदाहुतिभिरेव तद्देवाꣳस्तर्पयति त एनं तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनान्नाद्येन च तर्पयन्ति(८) ॥ १० ॥

---

ब्रह्मयज्ञं प्रशंस्य देवतृप्त्यापि प्रशंसति । (८)"यदृचोधीते ० तर्पयन्ति"(८) इति । ऋगध्ययनं यदस्ति तेन क्षीराहुतिसमाना देवानां तृप्तिर्भवति । एवमुत्तरत्रापि योज्यं । 'ते' देवाः, 'तृप्ताः', सन्तः 'एनं' यजमानं, आयुरादिभिः 'तर्पयन्ति' 'तेजः' शरीरकान्तिः, 'वर्चः' बलं ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

अथ एकादशोऽनुवाकः ।

(१)ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि ग्रामादच्छदिर्दर्श उदीच्यां प्रागुदीच्यां वोदित आदित्ये दक्षिणत उपवीत्युपविश्य हस्ताववनिज्य त्रिराचामेद्द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य(१) (२)यत्त्रिराचामति तेन ऋचः प्रीणाति यद्द्विः परिमृजति तेन यजूंषि यत्सकृदुपस्पृशति तेन सामानि यत्सव्यं पाणिं पादौ प्रोक्षति यच्छिरश्चक्षुषी ना-

अथ एकादशोऽनुवाकः ।

दशमे ब्रह्मयज्ञोऽभिहितः । एकादशे तत्प्रयोगोऽभिधीयते । (१)"ब्रह्मयज्ञेन ० हृदयमालभ्य"(१) इति । यः पुमान् ब्रह्मयज्ञं करिष्यति सोऽयं 'ग्रामात्', प्राचीमुदीचीं ऐशानीं वा दिशं गच्छेत्* । गृहस्योपरि आच्छादनार्थानि तृणकटादीनि छदींषि यावति दूरे तानि न दृश्यन्ते तावद्दूरम् 'अच्छदिर्दर्शः', तत्र गत्वा सूर्ये अभ्युदिते सति प्रथमानुवाकोक्तप्रकारेण यज्ञोपवीतं कृत्वा† शुद्धप्रदेशे 'उपविश्य', हस्तद्वयं पूर्वं शुद्धमध्येतदङ्गुलेन पुनः प्रक्षाल्योदकं त्रिः पिबेत्‡ 'द्विः परिमृज्य',

* गच्छन् इति तै॰ पाठः । † गृहीत्वा इति तै॰ पाठः ।
‡ ततः ओष्ठौ इत्यधिकः तै॰ पाठः ।

सिके श्रोषे हृदयमालभते तेनाथर्वाङ्गिरसो ब्राह्मणा- नीतिहासान् पुराणानि कल्पान् गाथा नाराशꣳसीः प्रीणाति(१) (१)दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङा-

शुद्ध्यर्थमुदकेन तदा हस्तं प्रक्षालयेत्, तत श्रोष्ठौ 'सकृदुपस्पृश्य', शिरःप्रभृतीन् हृदयपर्यन्तानवयवान् क्रमेण स्पृष्ट्वा दर्भाणां महदित्यादिना वक्ष्यमाणेन सहान्वयः॥

अथाचमनादीन् प्रशंसति। (१)"यत् त्रिराचामति ॰ प्री-णाति"(१) इति। अत्र सव्यपाणिपादयोः प्रोक्षणकथनादेव* प्रोक्षणविधिरुन्नेतव्यः॥

हृदयस्पर्शनोत्तरभाविकर्त्तव्यं विधत्ते। (१)"दर्भाणां ॰ कुरुते"(१) इति। 'दर्भाणां', सम्बन्धि 'महत्' प्रभूतं, यथा भवति तथाऽऽसनं 'आस्तीर्य', तस्योपरि 'उपस्थं कृत्वा', उपस्थ-शब्द आसनविशेषं ब्रूते, आकुञ्चितस्य सव्यजानुन उपरि दक्षिणपादप्रक्षेपे सति यत् सुखावस्थानं भवति तत् कृत्वा। प्राङ्मुखः 'आसीनः', स्वकीयां शाखामधीयानः† दर्भाणामपां-रसत्वमन्यत्राम्नातं, तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत्, तद-पोदक्रामत् ते दर्भा अभवन्निति। 'श्रोषधीनां', मध्ये शुद्धि-हेतुत्वात् सत्त्वारत्वं ततो दर्भासनत्वादधीयानं‡ 'ब्रह्म सरसं', भवति॥

* प्रशंसाबलादेवेति तै॰ पाठः। † शाखामधीयीत इति तै॰ पाठः।
‡ शुद्धिहेतुत्वादपारक्यं तद्दर्भासनेऽधीयमानमिति तै॰ पाठः।

सोनः स्वाध्यायमधीयीतापां वा एष ओषधीनाꣳ रसो यद्भाः सरसमेव ब्रह्म कुरुते(२) (४)दक्षिणोत्तरौ पाणी पादौ कृत्वा सपवित्रावोमिति प्रतिपद्यत एत-

---

अत्रोपक्रमे कञ्चिद्विशेषं विधत्ते। (४)"दक्षिणोत्तरौ ० परममक्षरं"(४) इति। दक्षिणः पाणिरुत्तरो ययोस्तौ 'दक्षिणोत्तरौ' वामं पाणिं दक्षिणजानुन ऊर्ध्वमुत्तानं कृत्वा तस्योपरि दक्षिणहस्तमवाञ्चं कुर्यात्, तादृशौ च* 'पाणी', पवित्रयुक्तौ कार्यौ†, तथा दक्षिणपादोऽपि वामपादस्योपरिस्थापनीयः। एवं कृत्वा 'ॐमिति' प्रणवोच्चारणेनोपक्रमं कुर्यात्, योऽयमोमित्येवं रूपो यजुर्मन्त्रः स 'त्रयीं विद्यां', 'प्रति' वेदत्रयस्य प्रतिनिधिरूपः अतएव प्रणवगतानामकारोकारमकारमात्राणां‡। वेदत्रयरूपेणाध्ययनं§ आथर्वणिका आमनन्ति, तस्य ह वै प्रणवस्य पूर्वा मात्रा पृथिव्यकारः, स ऋग्भि ऋग्वेदोऽथ द्वितीयान्तरिक्षं|| स उकारः, स यजुर्भिर्यजुर्वेदस्तृतीया द्यौः, स मकारः, स सामभिः सामवेदैरिति। किञ्च 'एषा' प्रणवरूपा, सर्वा 'वाक्', अपि। अतएव छन्दोगा आमनन्ति, तद्यथा शङ्कुना सर्वाणि पर्णानि

---

* तावुभौ चेति तै० पाठः।

† 'कृत्वा', इति तै० पाठः।

‡ प्रणवगताकारोकारमकारार्द्धमात्राणां इति तै० पाठः।

§ रूपत्वेन ध्यानं इति तै० पाठः।

|| स ऋग्भिर्यान्तरिक्षं इति तै० पाठः।

है यजुस्त्रयीं विद्यां प्रत्येषा वागेतत् परममक्षरं(४) (५)तदेतदृचाभ्युक्तं(५) (६)ऋचो अक्षरे परमे व्योमन् य-

संहृणान्येवमोङ्कारेण सर्वा वाक् संहृणेति अश्वत्थपर्णे हृष्ट-मानास्तन्तुसदृशावयवाः शङ्कवः, तैर्यथा कृत्स्नानि पर्णानि व्याप्तानि, तद्वदोङ्कारेण सर्वा अपि वाग्व्याप्ता। ऐतरेयास्तु प्रणवादेरकारस्यैव सर्ववाग्व्याप्तिमामनन्ति। अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति। अतएव मातृकामन्त्रे सर्वानपि ककारादीन् वर्णानकारशिर-स्कानेव* पठन्ति। यस्मादुक्तं प्रणवस्य सर्वात्मकत्वं, किञ्चैतत् प्रणवस्वरूपमुत्कृष्टमक्षरमविनश्वरं सर्ववेदान्तवेद्यं परब्रह्म वस्तु। अतएव पिप्पलादशाखायामधीयते, एतद्वै सत्यकामं परं चापरञ्च ब्रह्म यदोङ्कार इति। कठाश्च पठन्ति, एतदेवाक्षरं ब्रह्म एतदेवाक्षरं परमिति। तस्मात् प्रणवेनैव स्वाध्यायप्रा-रम्भो युक्तः॥

प्रणवं प्रशंसापरामृचमवतारयति। (५)"तदेतदृचाभ्युक्तं"(५) इति। 'तदेतत्' परब्रह्मस्वरूपं प्रणवाक्षरं, कयाचित् 'ऋचा', स्पष्टम्, 'उक्तं'॥

तामृचं दर्शयति। (६)"ऋचो अक्षरे ० समासत इति"(६) इति। या एताः 'ऋचः', ताः सर्वाः 'परमे' उत्कृष्टे, 'व्योमन्'

* अकारादिशिरस्कानिति ते० पाठः।

स्मिन् देवा अधि विश्वे निषेदुर्यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति(१) (७)नी-

विशेषेण रक्षके, 'अक्षरे' प्रणवे, 'निषेदुः' आश्रिताः। अत एव कठशाखायामधीयते। सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतदिति। न केवलमृच एव तस्मिन् प्रणवे समाश्रिताः किन्तु 'विश्वे' सर्वे, 'देवाः', अपि 'यस्मिन्' प्रणवाक्षरे, 'अधिनिषेदुः' अधिकत्वेन निषण्णाः। अतएवोत्तरतापनीये देवानां परमात्मध्यानार्थं प्रणवपर्यवसानमुक्तं, आत्मानमनुष्टुभाग्विष्य प्रणवेनैव तस्मिन्नवस्थिता इति। अनेनैव प्रकारेण ऋचो देवाश्च 'यस्मिन्' प्रणवे, 'निषेदुः', 'तत्' प्रणवाक्षरं, 'यो न वेद' स पुमानधीयानोऽपि* 'ऋचा किं करिष्यति', न खलु तृषरहितां केवलां कृषिं केचित् प्रार्थयन्ते। 'य इत्' ये पुनर्महात्मानः, 'तत्' प्रणवाक्षरं, 'विदुः', 'ते' महर्षयः, 'इमे' परिदृश्यमानाः परमहंसाः, 'समासते' सम्यगवतिष्ठन्ते। ऐहिकामुष्मिकविषयक्लेशरहिताः सुखिनो वर्त्तन्ते। तांस्तु परमहंसान् जाबालशाखाध्यायिन उदाहरन्ति। तत्र परमहंसा नाम संवर्त्तकारुणिश्वेतकेतुदुर्वासामुनिदाद्यजडभरतदत्तात्रेयरैवतकप्रभृतय

* सप्रणवमधीतयापि इति तै॰ पाठः।

मेव प्रायुङ्क्त भूर्भुवः स्वरित्याहैतद्वै वाचः सत्यं यदेव वाचः सत्यं यदेतत् प्रायुङ्क्त(७) (८)अथ सावित्रीं गायत्रीं त्रिरन्वाह पच्छोऽर्द्धर्चशोऽनवानꣳ सविता श्रियः प्रस-

---

इति। इत्याङ्गिरसमन्त्रेण प्रशस्तत्वात् प्रणवस्य वेदत्रयप्रतिनिधित्वं युक्तं॥

तेन प्रणवेन प्रारभ्य पश्चात् पठनीयान् मन्त्रान् दर्शयति। (७)"त्रीणेव ० तत् प्रायुङ्क्त"(७) इति। 'भूर्भुवः स्वः' इति यद्व्याहृतित्रयं, तल्लोकत्रयात्मकब्रह्मप्रतिपादकं, तत् 'आह' पठेत्। तेन त्रीनेव वेदान् प्रयुक्तवान् भवति। व्याहृतीनां वेदत्रयसारत्वेन प्रोक्तत्वात्*। एतच्च छन्दोगा अधीयते, स एतां त्रयीं विद्याम् अभ्यतपत् एतस्यास्तप्यमानाया रसान्यावहत्† भूरित्यृग्भ्यो भुव इति यजुर्भ्यः स्वरिति सामभ्य इति वेदत्रयसारत्वेन वाचः-सम्बन्धि सत्यस्वरूपमित्युच्यते। अतस्तत् सत्यमेव प्रयुक्तवान् भवति॥

व्याहृतित्रयादूर्ध्वं पठनीयं दर्शयति। (८)"अथ सावित्रीं ० प्रतिपद्यते"(८) इति। इति 'अथ' व्याहृत्यनन्तरं, 'सावित्रीं' सवितृदेवताकां, गायत्रीच्छन्दस्कां तत्सवितुरित्यादिकामृचं च त्रिः पठेत्। तत्रायं प्रकारः, प्रथमं 'पादशः' पादे पादे

---

* प्रजापतिप्रोक्तत्वात् इति ते० पाठः।

† रसान् प्राप्तवान् इति ते० पाठः।

विता श्रियमेवाप्नोत्यथो पृष्ठातयैव प्रतिपदा छन्दाꣳसि प्रतिपद्यते(८) ॥ ११ ॥

---

विरम्य, पठेत्। ततः 'अर्धर्चशः' एकैकस्मिन्नर्द्धे विरम्य, पठेत्। ततः 'अनवानं' विरामरहितं यथा भवति, तथा पठेत्। तस्यामृचि प्रतिपाद्यो यः 'सविता', सोऽयं 'श्रियः', 'प्रेरकः', अतो ब्रह्मयज्ञानुष्ठायी 'श्रियं प्राप्नोति', एव। एवमेकस्मिन्नहनि विधानमुक्तं 'अथो' अनन्तरं, तदा दिवसेषु प्रज्ञातयैव 'प्रतिपदा' पूर्वस्मिन् दिवसे किञ्चित् पठित्वा परेद्युरनुष्ठानायायमुपक्रम इति या प्रतिपत् प्रज्ञाता यः प्रारम्भप्रदेशो बुद्धौ स्थापितः तयैव प्रतिपदा प्रारम्भप्रदेशेन, 'छन्दांसि' वेदावयवान्, परेद्युः 'प्रतिपद्यते' प्रारभते। पूर्वेद्युर्यावद्व्यवसितं तत एवारभ्योत्तरेद्युरधीयीत न तु विप्रयुक्तं कञ्चिद्वेदभागं॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

अथ द्वादशोऽनुवाकः ।

(१)ग्रामे मन॑सा स्वाध्याय॑मधी॑यीत दि॒वा नक्तं॑ वा(१) (२)इति॑ ह॒ स्माह॒ शौच॒ आह्ने॒यः(२) (३)उ॒तार॑ण्येऽब॒ले

अथ द्वादशोऽनुवाकः ।

यत् पूर्वमुक्तं प्राच्यां दिशि ग्रामाद्बहिरित्यादि । तत्राशक्तस्यानुकल्पं विधत्ते । (१)"ग्रामे मनसा ० नक्तं वा"(१) इति । यदा बहिर्गन्तुमशक्तः 'ग्रामे', अधीते तदा 'मनसा', एव 'अधीयीत', उदित आदित्ये प्रारब्धुमशक्तश्चेत् 'दिवा नक्तं अधीयीत' ॥

कस्यचिन्महर्षेर्मते मुख्य एवायं पक्षोऽपीति दर्शयितुमेतमृषिमुदाहरति । (२)"इति ह स्माह ० आह्नेयः"(२) इति । शुचिनामकस्य महर्षेः पुत्रः 'शौचः', इति । अह्निसंज्ञिताया मातुः पुत्रः 'आह्नेयः', महर्षिः 'इति ह स्माह' ग्रामे मनसेत्यादिकमपि मुख्यपक्षमेवेत्याह ॥

नियमान्तरेष्वशक्तस्यानुकल्पान् विधत्ते । (३)"उतारण्ये ० स्वाध्यायमधीते" (३) इति । ग्रामे मनसाध्ययनमुक्तं* 'अरण्ये', अपि 'अबलः' अशक्तश्चेत्, मनसाधीयीत† । तमेवाबलं प्रति उत वाच इति पक्षान्तरमुच्यते । उच्चैरध्येतुमशक्तः केवलेन मनसा यदा निद्रालस्यचिन्तादिकं भवति तदानीं 'वाचा'

* मनसा स्वाध्यायमुक्तमिति तै० पाठः ।

† अशक्तश्चेद्ग्रामेधीयीतेति तै० पाठः ।

उत वा॒चोत तिष्ठ॑न्नु॒त व्र॒जन्नु॒तासी॑न उ॒त श॒या॑नो॒ऽधी-
यी॒तैव स्वा॒ध्या॒यं तप॑स्वी पु॒ण्यो॑ भवति य ए॒वं वि॒द्वा-
न्त्स्वा॒ध्याय॒मधी॒ते(१) (५)नमो॒ ब्रह्म॑णे॒ नमो॑ अ॒स्त्वग्न॒ये॒
नमः॑ पृथि॒व्यै नम॒ ओष॑धीभ्यः। नमो॑ वा॒चे नमो॑ वा॒-
चस्पत॑ये॒ नमो॒ विष्ण॑वे बृह॒ते क॑रोमि(४) ॥ १२ ॥

---

जिह्वास्पन्दनमात्रेण,'अधीयीत'। दर्भेष्वासीन इति* यदुक्तं त-
चासननिर्बन्धे शक्तिरहितस्य उत व्रजन्नित्यादयः पक्षाः। आलस्य
परिहारार्थेतस्ततः शनैः 'व्रजन्', वा क्वचिदेव तिष्ठन्वा नियम-
मन्तरेण स्वेच्छयैवोपविश्य वा 'शयानः', वा स्वशक्त्यनुसारेण
'स्वाध्यायमधीयीतैव'। न लङ्गोपाङ्गानुसारेण प्रधानस्य लोपो
न्याय्यः, तादृशस्वाध्याययुक्तोऽपि 'तपस्वी भवति', अध्ययनफलं
प्राप्नोति, 'पुण्यः' पङ्क्तिपावनस्य, 'भवति' ॥

एतस्य ब्रह्मयज्ञस्याङ्गभूतं कञ्चिन् मन्त्रं प्रदर्शयति। (५)
'नमो ब्रह्मणे ० बृहते करोमि"(४) इति। ब्रह्मशब्देन वेदः
प्रजापतिर्वोच्यते। वाक्शब्देन सरस्वती, 'वाचस्पतिः', बृह-
स्पतिः। प्रशस्तत्वात् 'विष्णुः', 'बृहत्'। अस्य मन्त्रस्य विनियोग
उपरिष्टाद्भविष्यति† ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजु-
रारण्यके द्वितीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

* प्रागासीन इति तै० F च पाठ।
† विनियोगमुपरिष्टाद्वक्ष्यति इति तै० पाठः।

अथ त्रयोदशोऽनुवाकः।

(१)मध्यन्दिने प्रबलमधीयीतासौ खलु वा वैष आदित्यो यद्ब्राह्मणस्तस्मात्तर्हि तेक्ष्णिष्ठं तपति तदेषाभ्युक्ता(१)। (२)चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य

---

अथ त्रयोदशोऽनुवाकः।

तत्रैव ब्रह्मयज्ञे कञ्चिदन्यं विशेषं विधत्ते। (१)"मध्यन्दिने॰ तदेषाभ्युक्ता"(१) इति। मध्यन्दिनकाले 'प्रबलं' उच्चतरं यथा भवति तथा, 'अधीयीत'। योयं ब्रह्मयज्ञानुष्ठाता ब्राह्मणोस्ति स: 'एषः', 'असौ' दिवि दृश्यमानः,* 'आदित्यः', एव तत्प्राप्तियोग्यत्वात्, यस्मादादित्यरूपः 'ब्राह्मणः','मध्यन्दिने प्रबलमधीयीत', 'तस्मात्', तदात्मक आदित्योपि 'तर्हि' मध्यन्दिने काले, 'तेक्ष्णिष्ठं' अतिशयेन तीक्ष्णं यथा भवति, तथा 'तपति'। 'तत्' एतदादित्यमाहात्म्यं प्रति, काचित् ऋक् 'अभ्युक्ता'† ॥

तामेतामृचं दर्शयति। (२)"चित्रं देवानामुदगादनीकं॰ जगतस्तस्थुषश्चेति"(२)इति। 'देवानां' दीप्यमानानां रश्मीनाम्, 'अनीकं' समूहं नानारूपमादित्यमण्डलं, 'चित्रं' कालभेदेना-

---

* दिवि विद्यमान इति तै॰ पाठः।

† काचित् ऋगप्युदीरिता इति तै॰ पाठः।

आत्मा जगतः स्तस्थुषश्चेति(२) (३)स वा एष यज्ञः सद्यः प्रतायते सद्यः सन्तिष्ठते तस्य प्राक्सायमवभृथः(३) (४)नमो ब्रह्मण इति परिधानीयां चिरन्वाह(४) (५)अप

---

रुणशुक्लादिवर्णोपेतत्वात् चित्रं, तादृशं मण्डलम् 'उदगात्' पूर्वस्यां दिश्युदयं प्राप्नोत्, तच्च मण्डलमन्धकारनिवारणोपयुक्तत्वात्* मित्रादीनां चक्षुस्थानीयं। तदर्थमेव लोकत्रयम् 'आप्राः' रश्मिभिरापूर्य वर्त्तते, तन्मण्डलवर्त्ती सूर्य्यरूपः परमात्मा 'जगतः' जङ्गमस्य,'तस्थुषः' स्थावरस्य,'आत्मा' जीवरूपेण शरीरेष्ववस्थितः। 'इति' अनेन मन्त्रेण, आदित्यमाहात्म्यमवगन्तव्यं॥

ब्रह्मयज्ञस्य इतरयज्ञवैलक्षण्यं दर्शयति। (३)"स वा एषः० प्राक्सायमवभृथः"(३) इति। अयं ब्रह्मयज्ञः यस्मिन्नहनि प्रारभ्यानुष्ठीयते तस्मिन्नेवाहनि समाप्यते नतु यज्ञान्तरवदितरदिनेष्वनुगच्छति तस्मात् 'प्राक्' प्रातःकाले, प्रारब्धस्य तस्य यज्ञस्य 'सायं', 'अवभृथः' समाप्तिः॥

समाप्तिकाले मन्त्रविशेषं विधत्ते। (४)"नमो ब्रह्मणे० चिरन्वाह"(४) इति। परिधीयते समाप्यते यया सेयमृक् 'परि-

---

* निवारणेनोपकारित्वात् इति तै० पाठः।

उपस्पृश्य गृहाणेति ततो यत्किञ्च ददाति सा दक्षिणा[५] ॥ १३ ॥

---

अथ चतुर्दशोऽनुवाकः।

[१]तस्य वा एतस्य यज्ञस्य मेघो हविर्धानं विद्युदग्निर्वर्षं हविस्तनयित्नुर्वषट्कारो यदवस्फूर्जति सोऽनु-

---

धावनीया', सा चाच पूर्वानुवाके आम्नाता, ॐनमो ब्रह्मण इत्येषा, तां 'त्रिः', पठेत् ॥

तत्पाठादूर्ध्वं कर्त्तव्यतां दर्शयति। [५]"अप उपस्पृश्य ॰ सा दक्षिणा"[५] इति। सेयं 'दक्षिणा', गृह एव मधारण इत्यर्थः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके चयोदशोऽनुवाकः ॥ १३ ॥

---

अथ चतुर्दशोऽनुवाकः।

ग्रहणाध्ययने यान्यनध्यायकारणानि* तानि ब्रह्मयज्ञाध्ययने स्वाध्यायं न निवारयन्तीति वक्तुन्तेषामनध्यायकारणानां यज्ञाङ्गतामुपचरति। [१]"तस्य वा एतस्य ॰ स्विष्टकृत्"[१]

---

* अनध्ययनकारणानि इति तै॰ पाठः।

वषट्कारो वायुरात्माऽमावास्या स्विष्टकृत्[१] [२]य एवं विद्वान्मेघे वर्षति विद्योतमाने स्तनयत्यवस्फूर्जति पवमाने वायावमावास्यायाꣳ स्वाध्यायमधीते* तप एव तत् तप्यते तपो हि स्वाध्याय इति[२] [१]उत्तमं नाकꣳ

---

इति। अनध्यायहेतूनापस्तम्बो दर्शयति। विद्युत् स्तनयित्नुर्वृष्टिश्चापर्त्तौ यत्र सन्निपतेयुस्त्र्यहमनध्याय इति। सोऽयमकालमेघो ग्रहणाध्ययने निषिद्धोऽपि ब्रह्मयज्ञाध्ययने स्वीकार्य एव। यथा सोमयागे 'हविर्धानं', न यागविरोधि तथा तत्र 'मेघः', अपि। एवं विद्युदादौ द्रष्टव्यं। † अकाले महानुत्पातरूपो'वायुः'। 'आत्मा' यजमानस्थानीयः। स्पष्टमन्यत्॥

अनध्यायहेतूनां‡ वर्जनीयत्वं निवार्य उपादेयत्वं दर्शयति। (२)"य एवं ० स्वाध्याय इति"(२) इति। मेघादयो विरोधिनो न भवन्तीति 'यो विद्वान्', सोऽयं सत्स्वपि मेघादिनिमित्तेषु 'स्वाध्यायमधीयीत',तदा 'तपः',तप्तं भवति। यस्मादयं ब्रह्मयज्ञः 'स्वाध्यायः' कृच्छ्रचान्द्रायणादिवत्तपोरूपः, तस्मान्न सन्त्यनध्यायाः। नहि चान्द्रायणादिकं मेघादिषु वर्ज्यते॥

कदाचिदप्यवर्जनेनानुष्ठितस्य ब्रह्मयज्ञस्य फलं दर्शयति। (१)"उत्तमं ० सायुज्यं गच्छति" (१) इति। अनेन ब्रह्मयज्ञेन

---

* स्वाध्यायमधीयीतेति तै० पाठः।

† "अग्निः" ग्रामगृहादिदाहकः, इति तै० F च अधिकः पाठः।

‡ अथ अनध्ययनहेतुना इति तै० पाठः।

रोहत्युत्तमः समानानां भवति यावन्तᳪं ह वा इमां वित्तस्य पूर्णां ददत् स्वर्गं लोकं जयति तावन्तं लोकं जयति भूयाᳪंसं चाक्षय्यं चाप पुनर्मृत्युञ्जयति ब्रह्मणः सायुज्यं गच्छति(१) ॥ १४ ॥

---

मरणादूर्ध्वं 'उत्तमं' स्वर्गम्, 'आरोहति', जीवनवेलायां पङ्क्तिपावनत्वात् 'समानानां', मध्ये 'उत्तमो भवति'। उक्तमः स्वर्ग एव प्रपञ्च्यते। वित्तेन 'पूर्णां', पृथिवीं ब्राह्मणेभ्यः 'ददत्', पुरुषः 'यावन्तं', 'स्वर्गं', अनेकभोगोपेतं प्राप्नोति, 'तावन्तं', असौ प्राप्नोति। ततो 'भूयाᳪंसं' अधिकमपि, प्राप्नोति 'अक्षय्यं' पुनरावृत्तिरहितञ्च, 'लोकं', प्राप्नोति। तत्प्राप्तेरूर्ध्वं 'पुनः', 'मृत्युं', न प्राप्नोति। किन्तु परब्रह्मणः 'सायुज्यं' मोक्षं, 'गच्छति' ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

अथ पञ्चदशोऽनुवाकः ।

(१)तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः(१) । (२)समृद्धिर्देवतानि(२) । (१)य एवं विद्वान् मेघवर्ष्ये विद्योतमाने स्तनयत्यवस्फूर्जति पवमाने वायावन्तरिक्षे वा यावन्तरस स्वाध्यायमधीते सर्वां

---

अथ पञ्चदशोऽनुवाकः ।

ग्रहणस्वाध्याये यानि कारणान्यनध्यायस्य तान्यत्रापोद्य कारणान्तरमनध्यायस्य दर्शयति । (१)"तस्य ० यद्देशः" (१) इति । उक्तस्य ब्रह्मयज्ञस्य 'द्वावनध्यायौ', विद्येते 'आत्मा' ब्रह्मयज्ञस्य कर्त्ता, स्वयं 'अशुचिः', यदा भवति तदानीमेकोऽनध्यायः । 'देशः', वा मूत्रपुरीषादिभिः 'अशुचिः', भवति, स द्वितीयोऽनध्यायः । न तु कश्चित् तृतीयोनऽध्यायहेतुरस्ति ॥

अथ तस्य यज्ञस्य सुलभत्वं दर्शयति । (२)"समृद्धिर्देवतानि" (२) इति । 'समृद्धिः' सामग्री, सा च यज्ञान्तरेषु द्रव्यार्जनादिना सम्पाद्यते । इह तु 'देवतानि,' एव सामग्री, नतु वाह्यसाधनं किञ्चिदपेक्षितमस्ति ॥

ब्रह्मयज्ञेन तुष्टेषु देवतेषु फलं भवत्येव तस्मादेवं भूते कालादिवैकल्यशङ्कां* परित्यज्य यज्ञानुष्ठाने फलसिद्धिं दर्शयति । (१)"य एवं ० एषाभ्युक्ता"(१) इति । अस्य यज्ञनिमित्तद्वयव्यति-

---

* तस्मादङ्गभूतकालादिशङ्कामिति तै० पाठः ।

लोकान् जयति सर्वान् लोकाननृणोनुसञ्चरति तदे-
षाभ्युक्ता[१] । [४]अनृणा अस्मिन्ननृणाः परस्मिꣳस्तृ-
तीये लोके अनृणा स्याम । ये देवयाना उत पितृया-

रेकेणानध्यायकारणं नास्ति, सामग्री च न प्रयाससम्पाद्या विद्यते इति 'एवं', 'विद्वान्', पुमान् कालविषये आसना-दिनियमविषये देशविषये च श्रद्धाजाड्यं परित्यज्य 'याव-त्तरसं' यावद्बलं यथाशक्ति, 'स्वाध्यायं', अधीयानः स्वापे-क्षितान् 'सर्वान् लोकान्', प्राप्नोति, तत्र तत्र लोके पुरु-षान्तरवदृणयुक्तो न भवति । किन्तु 'अनृणः', एव 'अनु-सञ्चरति', 'तत्' तस्मिन्ननृणस्यानुसञ्चारे, काचिदृक् च 'उक्ता', विद्यते ॥

तामेतामृचं दर्शयति । [४]"अनृणा० आचीयेमेति"[४] इति । 'अस्मिन्' भूलोके, 'परस्मिन्' अन्तरीक्षे च, 'तृतीये' द्युलोके च, ब्रह्मयज्ञबलात्* 'अनृणा स्याम' । ऋणेऽपाकृते सति 'देव-यानाः' पन्थानः उत्तरमार्गविशेषाः, 'पितृयाणाः' पन्थानः दक्षिणमार्गविशेषाः, ऋणाभावेन प्रतिबन्धाभावात् 'सर्वान्', अपि मार्गान् सर्वतः प्राप्नुयाम । ऋणेऽपामृणं ब्रह्मयज्ञेनापो-द्यत इति तावत् सर्वेषां सम्मतं । देवपितृकार्ययोरसमर्थस्य तदुभयविषयमनृणमनेनैवापोद्यते । अत एव स्मर्यते । जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यात्

* फलात् इति ते० पाठः ।

णाः सर्वान् पथो अनृणा आक्षीयेमेति(४)। (५)अग्निं वै जातं पाप्मा जग्राह तं देवा आहुतिभिः पाप्मानमपाघ्नन्नाहुतीनां यज्ञेन यज्ञस्य दक्षिणाभिर्दक्षिणानां

मेवो ब्राह्मण* उच्यत इति। ततः सर्वान् पथो अनृणा आक्षीयेमेत्येतदुपपन्नं॥

तदेतदनृणत्वं सम्भावयितुं पापसम्बन्धराहित्येन स्वाध्यायं प्रशंसति। (५)"अग्निं वै ० तदेषाभ्युक्ता"(५) इति। योयं 'अग्निः', सृष्ट्यावुत्पन्नः तमुत्पन्नमात्रमेव सर्वः 'पाप्मा', 'जग्राह', अग्निर्हि पापिनां पापशोधनाय समुत्पन्नः। अत एव स्मृतिकाराः भाण्डादीनां पुनःपाकेन शुद्धिं ब्रुवते। यथा लोकेऽत्यन्तमलिनं वस्त्रं अल्पजलेन यदा प्रक्षाल्यते तदानीं वस्त्रमालिन्यं सर्वं जले प्रविशति, तथा शोधनीयवस्तुगतः पाप्मा शोधकेऽग्नौ† प्रविष्टः 'तं' अग्निगतं पापं, 'देवा आहुतिभिः', विनाशितवन्तः। तदाहुतिगतं पापं कृत्स्नं 'यज्ञेन', यज्ञगतञ्च पापं 'दक्षिणाभिः', दक्षिणागतञ्च पापं प्रतिगृहीत्रा 'ब्राह्मणेन', ब्राह्मणगतञ्च पापं तत्तन्मन्त्रगतैर्गायत्र्यादिच्छन्दोभिः, छन्दोगतञ्च पापं स्वकीयशाखारूपेण 'स्वाध्यायेन'। न चास्य स्वाध्यायगतस्य पाप्मनो निवर्त्तकान्तरमन्वेष्टव्यं। तस्मात् 'अपहतपाप्मा स्वाध्यायः,' न खलु कश्चिदपि पाप्मा स्वाध्यायं स्पृष्टु-

* मन्त्रब्राह्मण इति तै० पाठः। † शोधनेऽग्नौ इति तै० पाठः।

ब्राह्मणेन ब्राह्मणस्य छन्दोभिश्छन्दसाꣳ स्वाध्यायेना-
पहतपाप्मा स्वाध्यायो देवपवित्रं वा एतत् तं योऽनूत्-
सृजत्यभागो वाचि भवत्यभागो नाके तदेषाभ्युक्ता(५)।
(१)यस्तित्याज सखिविदꣳ सखायं न तस्य वाच्यपि

मोष्टे* यस्मात् 'एतत्' स्वाध्यायस्वरूपं, देवानामपि शोधकं। देवा हि पूर्वस्मिन् जन्मनि मनुष्या भूत्वा स्वाध्यायमधीत्य तदर्थमनुष्ठाय शुद्धाः सन्तो देवत्वं प्राप्ताः। 'तं' ईदृशं स्वाध्यायं, 'योऽनुऽत्सृजति' यः पुरुषः प्रारभ्य पश्चात् त्यजति, स पुमान् 'अभागो वाचि भवति' वाङ्मात्रनिष्पाद्यत्वेनाप्रयाससिद्धं स्वाध्यायाध्ययनं तथाविधायां प्रयासरहितायां महाफलहेतुभूतायां वाच्यपि भाग्यं तस्य परित्यक्तुर्नास्ति, महाप्रयासनिष्पाद्ये ज्योतिष्टोमादिसाध्ये स्वर्गे भागं नास्तीति किमु वक्तव्यं। यो हि पाणिसम्बन्धितामणिमग्निमध्ये प्रक्षिपति स भाग्यहीन इत्यस्मिन्नर्थे न कोपि विप्रतिपद्यते। 'तत्' तस्मिन्, चिन्तामणिपरित्यागसदृशोऽयं स्वाध्यायपरित्याग इत्यस्मिन्नर्थे, काचिदृक् 'अभ्युक्ता'॥

तामेतामृचं दर्शयति। (१)"यस्तित्याज ० पन्थामिति"(१) इति। 'यः' पुमान्, वेदस्य वाङ्मात्रनिष्पाद्यमध्ययनं करोति तं पुमांसं वेदः समस्तपापक्षयद्वारेण मोक्षपर्यन्तो-

* मृष्टुमोष्ट इति तै॰ पाठः।

भा॒गो अ॑स्ति। यदी॑ꣳ शृ॒णोत्य॒लक॑ꣳ शृणोति॒ न॒हि

त्तमगतिप्रदानेन* प्रियं 'सखायं', इवातिस्नेहेन पालयति, तस्मादध्येतारं सखायं वेत्तीति 'सखिवित्' स्वाध्यायः, स्वयञ्च 'तस्य' पुरुषस्य, सखा अत्यन्तस्नेहेन कदाचिदप्यनपायात्। नहि निरन्तराध्यायिनं स्वाध्यायः कदाचिदपि परित्यजति, किन्तु दिने दिनेऽतिशयेन तस्याधीनो भवति†। तादृशं 'सखिविदं', अपि 'सखायं', 'यस्तित्याज' परित्यक्तवान्, 'तस्य' परित्यक्तुः, 'वाच्यपि', 'भागो नास्ति' आयासरहिते महाफले पाठेऽपि भाग्यं नास्ति, किमु वक्तव्यं महाप्रयाससाध्येऽनुष्ठाने‡ तत्फले वा। 'यदीं' यद्यपि, स्वाध्यायत्यागी कदाचिदिदत्सभायामुपविश्य बहूनि शास्त्राणि 'शृणोति', तदानीं 'अलकं' अलीकमनृतमेव, 'शृणोति', पुरुषार्थपर्यवसानाभावात्। नहि काव्यनाटकालङ्कारादिश्रवणेन वृथायुःक्षयमन्तरेण कञ्चित् पुरुषार्थं पश्यामः। अत एव वाजसनेयिनः समामनन्ति। नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तदिति। वेदव्यतिरिक्तस्य शब्दजालस्य कण्ठशोषमात्रपर्यवसायित्वमेव§ उपपाद्यते। यस्मादयं वेदत्यागी 'सुकृतस्य पन्थां' पुण्यानुष्ठानमार्गं, न जानाति तस्मात् कण्ठशोषमात्रपर्यवसानं।

* मोक्षपर्यन्तोत्तरोत्तरगतिप्रदानेनेति तै॰ पाठः।

† दिने दिने ह्यतिशयो भवति इति तै॰ पाठः।

‡ महाप्रयाससाध्ये स्वर्गे इति तै॰ पाठः।

§ कण्ठशोषमात्रपर्यवसानत्वमेव इति तै॰ पाठः।

प्रवेद सुकृतस्य पन्थामिति[१]। [७]तस्मात् स्वाध्यायोध्येत-

द्विविधं हि पुरुषेणार्थ्यते ऐहिकजीवनमामुष्मिकौ च भोग-मोक्षौ। तत्र जीवनस्य कार्य्यादेरपि कृषिवाणिज्यादिकमेव महत् साधनं, आमुष्मिकमार्गन्तु वेदमन्तरेण सर्वतो न जानाति, अतः शास्त्रान्तराणि पठतः कण्ठशोष एव परिशिष्यते। न केवलं सुकृतज्ञानमात्राभावः, प्रत्युत दुरितञ्च महत् सम्पद्यते। अत एव मनुना स्मर्यते। योऽनधीत्य द्विजो वेदानन्यत्र कुरुते मतिं। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वय इति॥

इत्थं स्वाध्यायपरित्यागे बाधं दर्शयित्वा तदनुष्ठाने श्रेयो दर्शयति। [७]"तस्मात् ० तदेषाभ्युक्ता"[७] इति। यस्मात् स्वाध्यायव्यतिरेकेण सुकृतमार्गो न ज्ञायते 'तस्मात्', 'स्वाध्या-योऽध्येतव्यः', इति ग्रहणाध्ययनं ब्रह्माध्ययनञ्च* कर्त्तव्यं। एत-च्चोभयं परमपुरुषार्थत्वेन साधनमिति उपनिषदि पुरुषोप-निषदि बहूनामृषीणां मतभेदोपन्यासप्रसङ्गेन विस्पष्टमा-म्नातं। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः, तद्धितपस्तद्धि तपः इति। सत्यवदनमेव परमपुरुषार्थसाधनमिति राथी-तरस्य मतं। कृच्छ्रचान्द्रायणादिरूपं तप एव तत्साधनमिति पौरुशिष्टेर्मतं। मौद्गल्यस्त्वत्यन्तरहस्यदर्शी रहस्यार्थत्वात् तदे-तदुभयमुवाच। तत्र ग्रहणार्थमध्ययनं† गृहीतस्य वेदस्य

* इत्यध्ययनं ब्रह्मयज्ञाध्ययनञ्चेति तै० पाठः।
† स्वाध्यायो ग्रहणार्थमध्ययनं इति तै० पाठः।

**व्यौ यँ यँ क्रतुमधीते तेन तेनास्येष्टं भवत्यग्नेर्वायोरा-**

---

प्रकर्षेण प्रतिदिनं ब्रह्मयज्ञरूपेण वचनं प्रवचनं। उभे एवो- त्तमे पुरुषार्थसाधने सत्यादीनामन्यार्थसिद्धत्वात्। यो हि नि- रन्तरं स्वाध्यायं पठति तस्यामृतवद्गमे कः प्रसङ्गः। तपोऽप्य- न्यार्थसिद्धं निषिद्धविषयप्रवणानामिन्द्रियाणां* ब्रह्मचर्यद्वारे- णोद्धतत्वं वारयितुं कृच्छ्रचान्द्रायणादिना शरीरशोषरूपं तपः क्रियते। स्वाध्यायपरस्य तु विषयमात्रचिन्तैव नास्ति कुतो दुष्टविषयेषु प्रवृत्तिः। तच्चिन्तापूर्व्वकत्वं प्रवृत्तेर्भगवतोक्तं। ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते। सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते। क्रोधाद्भवति सम्मोहः सम्मो- हात् स्मृतिविभ्रमः। स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रण- श्यतीति। विषयध्याननिवृत्त्यर्थमेव चित्तवृत्तिनिरोधरूपं योगं वक्तुं कृत्स्नं योगशास्त्रं प्रवृत्तं। सा च स्वविषयध्याननिवृत्तिः स्वाध्यायनिरतस्याप्रयासेनैव सिद्धा। तत्र किमनेन योग- शास्त्रेण कृच्छ्रचान्द्रायणादिना तपसा वा। अत एवाभिज्ञा आहुः। अर्के चेन्मधु† विन्देत किमर्थं पर्वतं व्रजेत्। इष्टस्या- र्थस्य संसिद्धौ‡ को विद्वान् यत्नमाचरेत् इति। एतत् सर्वमभि- प्रेत्य मौद्गल्यस्तद्धि तपस्तद्धितप इति प्रसिद्धिवाचकेन हिशब्देन वीप्सया च स्वाध्यायप्रवचनयोरत्यादरं दर्शयति। न च स्वा-

---

* निषिद्धविषयध्यानामिति तै॰ पाठः।

† अत्र चेन्मधु इति तै॰ पाठः। ‡ संसिद्धेरिति तै॰ पाठः।

दित्यस्य सायुज्यं गच्छति तदेषाभ्युक्ता(७)। (८)ये अर्वाङुत वा पुराणे वेदं विद्वाꣳसमभितो वदन्त्यादित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हꣳस-

ध्यायपाठमात्रेण योगानुष्ठानाभावात्* न पुरुषार्थ इति मन्तव्यं। अयमध्येता अग्निष्टोमवाजपेयराजसूयाश्वमेधादीनां मध्ये 'यं यं' क्रतुभागं 'अधीते', तस्याध्येतुः पुरुषस्य 'तेन तेन' क्रतुना, 'इष्टं भवति',। त्रिविधो हि यागः। कायिको वाचिको मानसिकश्चेति, तत्राध्येतुर्वाचिकस्य निष्पन्नो नास्त्येव विवादः। यद्यध्येतार्थमपि जानाति तदाध्ययनकाले तदनुसन्धानात् मानसोऽपि निष्पद्यते। कायिकस्य नास्ति† मास्तु नाम द्रव्यार्जनरहितस्याधिकाराभावात्। यस्य त्वधिकारः कायिकमप्यसौ करोति इतरस्य तु वाचिकेनैव तत् फलं लभ्यते। तस्मादयमध्येताग्न्यादीनां सायुज्यं गच्छति। 'तत्' तस्मिन् वेदविदो माहात्म्ये, काचिदृक् 'अभ्युक्ता'॥

तामेतामृचं दर्शयति। (८)"ये अर्वाङुत वा ० हꣳसमिति"(८) इति। 'अर्वाङ्' अर्वाचीनं, इदानींतनमनुष्यं अध्येतृरूपं, 'उत वा पुराणे' अथवा पुरातनं व्यासवसिष्ठादिरूपं, 'वेदं विद्वांसं' पाठादर्थाच्च वेदतत्त्वाभिज्ञं महात्मानं, 'ये' मूर्खाः, 'अभितो वदन्ति' तत्र तत्र निन्दन्ति, 'ते' मूर्खाः, 'सर्वे', अपि 'आदित्य-

* यज्ञानुष्ठानाभावात् इति तै० पाठः।
† कायिकस्त्वेन्नास्ति इति तै० पाठः।

मिति(८)। (९)यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्रा-
ह्मणे वसन्ति तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे
नमस्कुर्यान्नाश्लीलङ्कीर्त्तयेदेता एव देवताः प्रीणाति(९) ॥
॥ १५ ॥

---

मेव', भिन्दन्ति। ततो 'द्वितीयमग्निं', भिन्दन्ति ततः 'तृतीयं', 'हंसं' गमनशीलं, 'वायुं,' भिन्दन्ति। अस्य वेदविदोऽग्निवाय्वादित्यसायुज्ययोग्यत्वादेतस्मिन्नेव निन्दा। तेषां निन्दा इत्यनेनैव मन्त्रेणादित्यादिरूपलक्षणं वेदविन्माहात्म्यं दर्शितं॥

अस्य मन्त्रस्य तात्पर्यं दर्शयति। (९)"यावतीः ० प्रीणाति" (९) इति। अग्निरवमो देवतानां विष्णुः परम इत्युक्तत्वादग्निप्रभृतयो विष्णुपर्यन्ता यावत्यो देवताः सन्ति ताः सर्वाः पाठतोऽर्थतश्च वेदविदि 'ब्राह्मणे वसन्ति' एकैकस्मिन् मन्त्रे एको देवः प्रतिपाद्यते। ते च मन्त्राः सर्वेऽध्येतुर्वाचि अध्येतुर्मनसि च वर्त्तन्ते अतो वेदविदां ब्राह्मणानां सर्वदेवतात्मकत्वात् तेभ्यः प्रतिदिनं 'नमस्कुर्यात्', 'अश्लीलं' तदीयमशुभं किमपि* विद्यमानमविद्यमानं वा न कीर्त्तयेत्। एतेन वेदविदः ब्राह्मणस्य सत्कारेण सर्वा अप्येता 'देवताः' परितोषयति॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

* किञ्चिदपि इति तै० पाठः।

अथ षोडशोऽनुवाकः।

(१)रिच्यत इव वा एष प्रेव रिच्यते यो याजयति प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वानश्नन्त्रिः स्वाध्यायं वेदमधीयीत(१)। (२)चिरात्रं वा सावित्रीं गा-

---

अथ षोडशोऽनुवाकः।

अथ कस्यचिदयाज्यस्य याजने तथा कस्यचिदयोग्यस्य पुरुषस्य द्रव्यप्रतिग्रहे च प्रायश्चित्तत्वेन स्वाध्यायं विधत्ते। (१)"रिच्यत इव॰ वेदमधीयीत"(१) इति। 'यः' पुमान्, स्वयमापद्रहितोऽपि द्रव्यलोभादयाज्यं 'याजयति', निषिद्धं द्रव्यं 'वा प्रतिगृह्णाति', स पुमानिह लोके 'रिच्यत इव' कीर्त्तिशून्य इव भवति, अहो दुरात्मायमेवन्धनिकोऽपि सन् द्रव्यलोभादन्यायं करोतीति सर्वे जनास्तं निन्दन्ति तदिदमिह लोके रिक्तत्वं। तथा 'प्रेव रिच्यते' परलोकेऽपि प्रकर्षेण रिक्त इव भवति, पुण्यलोकाभाव एव रिक्तत्वं, याजनप्रतिग्रहयोर्जीविकारूपेण शास्त्रेऽभ्युपगतत्वात्, निषिद्धयाजनप्रतिग्रहविषयमिदं द्रष्टव्यं। अतो द्रव्यलोभात् 'याजयित्वा प्रतिगृह्य वा', 'अनश्नन्' भोजनरहितः, 'स्वाध्यायं' त्रिवारं स्वशाखाध्ययनरूपं वेदं, जपेत्* ॥

तत्राशक्तस्य पक्षान्तरमाह। (२)"चिरात्रं वा॰ रेचयति

---

* अधीयीतेति ते॰ पाठः।

य॒श्चीम॒न्वाति॑रेचयति॒(१)। (२)वरो॑ द॒क्षि॒णा॒वरे॑णै॒व वर॑ꣳ स्पृ॒णोत्या॒त्मा हि वरः॑(२) ॥ १६ ॥

---

(१) इति। पूर्वोक्तप्रकारेण रिक्तं स्वमात्मानं अरिक्तं करोति अपकीर्त्तिं पुण्यक्षयञ्च निवर्त्तयेदित्यर्थः* ॥

पक्षद्वयेऽपि दक्षिणां विधत्ते। (२)"वरो दक्षिणा ० स्पृणोत्यात्मा हि वरः"(२) इति। गौर्वै वर इति सूत्रकारेणोक्तत्वात् गौरेवा† 'दक्षिणावरेण', श्रेष्ठेन गोद्रव्येण, 'वरं' श्रेष्ठं ब्राह्मणं, 'स्पृणोति' प्रीणयति, यस्मात् 'वरः' गौरात्मैव, तस्मात् स्वेन समानत्वात् तया दक्षिणया स्वात्मानमेव दत्तवानिति कृत्वा तत्पापनिवृत्तिर्युक्ता ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

* गायत्रीच्छन्दस्कां सवितृदेवताकां तत्सवितुर्वरेण्यमित्येतां ऋचं भोजनरहितो दिनत्रयं 'रेचयति', पूर्वोक्तप्रकारेणावर्त्तयेदित्यर्थः। इति तै० पाठः।

† गौरत्रेति तै० पाठः।

अथ सप्तदशोऽनुवाकः।

(१)दुहे ह्वा एष छन्दांसि यो याजयति स येन यज्ञक्रतुना याजयेत् सोऽरण्यं परीत्य शुचौ देशे स्वाध्यायमेवैनमधीयन्नासीत(१)। (२)तस्यानशनं दीक्षा स्थानमुप-

अथ सप्तदशोऽनुवाकः।

पूर्वमनापदि दुष्टयाजनस्य प्रायश्चित्तमुक्तं। इदानीमापदि तद्याजनस्य पूर्वस्मादन्यं प्रायश्चित्तं विधत्ते। (१)"दुहे ह्वा • अधीयन्नासीत"(१) इति। 'यः' पुमान्, धनाभावे जीवनाभावात् प्राणरक्षणाय* अयाज्यमपि पुरुषं 'याजयेत्'। एतच्च वाजसनेयके दर्शितं, प्राणस्य वै सम्राट् कामेभ्य अयाज्यं† याजयत्यप्रतिगृह्यस्य प्रतिगृह्णातीति। ईदृशः पुमान् 'छन्दांसि', तत्र प्रतिग्रहे क्रियान् मन्त्रान् रिक्तीकरोति फलरहितान् करोति तत्परिहारार्थं 'येन', 'यज्ञक्रतुना', याजितवान् 'एनमेव' क्रतुभागं, 'स्वाध्यायं', स पुमानरण्ये गत्वा पठन् 'आसीत', तेन प्रायश्चित्तं सम्पाद्यते तत् सम्भावनार्थं ध्यानार्थं वा॥

तत्र यज्ञावयवान् सम्पादयति। (२)"तस्यानशनं • समृद्धतरः"(२) इति। 'तस्य' प्रायश्चित्तार्थं वेदभागमध्येतुः पुरुषस्य, तावति काले यो भोजनपरित्यागः सैव 'दीक्षा'। यदेतच्छुद्ध-

* अन्नाभावे प्राणरक्षणाय इति F पाठः।

† सम्राट् समायायायाज्यं इति तै॰ पाठः।

सद् आसनꣳ सुत्या वाग्जुहूर्मन उपभृद्धृतिर्ध्रुवा प्राणो हविः सामाध्वर्युः स वा एष यज्ञः प्राणदक्षिणोऽनन्तदक्षिणः समृद्धतरः[२] ॥ १७ ॥

---

देहरूपं 'आसनं', ता एव 'उपसदः', यत् तत्रोपवेशनं सैव 'सुत्या' सोमाभिषवः, येयमस्य 'वाक्', सेयं 'जुहूः', यत् 'मनः', सैव 'उपभृत्', या 'धृतिः', अनुष्ठेयार्थावधारणा, सैव 'ध्रुवा', यः 'प्राणः' तदेव 'हविः', यत् 'साम' गायनं, स एव 'अध्वर्युः', सोऽयं भावनारूपः 'यज्ञः', प्राणदक्षिणः' देहान्ते प्राणपरित्याग एव दक्षिणास्थानीयः, अतोऽनन्तदक्षिणत्वादयं यज्ञोऽतिशयेन समृद्धः,* उक्तयज्ञसमाप्तौ प्रभूतमन्नं देयमिति तात्पर्य्यार्थः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

* सेयं भावना याग एव दक्षिणस्थानीयः 'प्राणः', अतो अनन्तदक्षिणत्वादयं 'यज्ञः समृद्धतरः'। प्राणो ह्यनन्तः सर्वेभ्योऽपि वस्तुभ्यः अतिशयेन प्रियत्वात् सेयं भावनारूपसम्पन्नस्य दक्षिणोक्ता। अथवा प्रायश्चित्तार्थं पाठरूपत्वस्य 'स एष यज्ञः', 'प्राणदक्षिणः', प्राणस्थितिहेतुरन्नमेव तत्र दक्षिणा एतत् सर्वैरपेक्षितत्वादनन्तमित्युच्यते। अनन्तदक्षिणत्वादेव अयमतिशयेन समृद्धः, उक्तयज्ञसमाप्तौ च प्रभूतमन्नं देयमिति तात्पर्यार्थः। इति तै० पाठः।

अथ अष्टादशोऽनुवाकः ।

(१)कतिधाऽवकीर्णी प्रविशति चतुर्धेत्याहुर्ब्रह्मवादिनो मरुतः प्राणैरिन्द्रम्बलेन बृहस्पतिं ब्रह्मवर्चसेनाऽग्निमेवेतरेण सर्वेण तस्यैतां प्रायश्चित्तिं विदाञ्चकार सुदेवः काश्यपः(१)। (२)यो ब्रह्मचार्यवकिरेदमा-

---

अथ अष्टादशोऽनुवाकः ।

प्रायश्चित्तार्थस्वाध्यायप्रसङ्गादवकीर्णिप्रायश्चित्तमुच्यते । तद्विधानार्थमादौ प्रश्नोति । (१)"कतिधावकीर्णी ० सुदेवः-काश्यपः"(१) इति । अवकीर्णं भग्नव्रतं ब्रह्मचारिणो रेतस्कन्दनादिकं तद्यस्यास्ति सः 'अवकीर्णी', तादृशः पुमान् स्वकीयैरेवावयवैर्देवान् 'प्रविशति' देवास्तदीयानवयवान् विनाशयन्ति, तत्र कतिभिः प्रकारैरेवं प्रविशतीत्येवमभिज्ञस्य प्रश्नः । तत्राभिज्ञाः 'ब्रह्मवादिनः', चतुर्भिः प्रकारैरित्युत्तरमाहुः । त एव प्रकाराः स्पष्टीक्रियन्ते । स्वकीयैः 'प्राणैर्मरुतः', देवान् 'प्रविशति' । 'बलेनेन्द्रं प्रविशति', 'ब्रह्मवर्चसेन', 'बृहस्पतिं', 'प्रविशति' । 'इतरेण 'सर्वेण' वागादिना 'अग्निमेव प्रविशति' । मरुदादयोऽस्य प्राणानपहरन्तीत्यर्थः । कश्यपस्य पुत्रः सुदेवाख्यः कश्चिदृषिरस्यैतस्य दोषस्य प्रायश्चित्तं निश्चितवान् ॥

तदिदं प्रायश्चित्तं विधत्ते । (२)"यो ब्रह्मचार्य ० आत्मन-

वास्यांयाꣳरात्र्यामग्निं प्रणीयोपसमाधाय द्विराज्य-
स्योपघातं जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि काम
कामाय स्वाहा कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि काम
कामाय स्वाहेत्यमृतं वा आज्यममृतमेवात्मन्धत्ते(१)।
(२)हुत्वा प्रयताञ्जलिः कवातिर्यङ्ङग्निमभिमन्त्रयेत(३)।
(४)सं मासिञ्चन्तु मरुतस्समिन्द्रः सं बृहस्पतिः। सं मा-
यमग्निः सिञ्चत्वायुषा च बलेन चायुष्मन्तं करोत

---

धत्ते"(१) इति। 'आज्यस्योपघातं' आज्यमुपहत्योपहत्य सकृत् सकृदादाय 'द्विर्जुहोति'। तत्र प्रथममन्त्रस्यार्थः। हे 'काम-देव', 'अवकीर्णोऽस्मि' त्वत्प्रेरणया व्रतभ्रंशलक्षणमवकरं प्राप्तोऽस्मि। पुनरुक्तिरनुतापप्रकटनार्था। अवकरपरिहारार्थं 'कामाय', देवाय स्वाहुतमिदमस्तु। 'अभिद्रुग्धः' व्रतभ्रंशलक्ष-णमभिद्रोहं कृतवान्, 'अस्मि', अन्यत् प्रथममन्त्रवत्। आज्य-प्रशंसनमत्र आज्यस्य देवप्रियत्वेन अमृतत्वात् तद्धोमेनावकर-परिहाररूपं 'अमृतं', स्वात्मनि सम्पादयति॥

उत्तरकर्त्तव्यं विधत्ते। (२)"हुत्वा प्रयताञ्जलिः • मन्त्र-येत"(३) इति। करयोः सम्पुटीकरणमञ्जलिः तस्य प्रयतत्व निश्छिद्रत्वं 'कवातिर्यक्' ईषत्तिरश्चीनशरीरः, नात्यन्तमभि-मुखो नापि पराङ्मुखः अपि तु पार्श्वे स्थितः॥

अभिमन्त्रणे मन्त्रं दर्शयति। (४)"सं मासिञ्चन्तु • करोत

मेति(४)। (५)प्रतिहास्मै मरुतः प्राणान् दधति प्रतीन्द्रो बलं प्रति बृहस्पतिर्ब्रह्मवर्चसं प्रत्यग्निरितरः सर्वं सर्वतनुर्भूत्वा सर्वमायुरेति(५)। (६)त्रिरभिमन्त्रयेत त्रिषत्या हि देवाः(६)। (७)यो पूत इव मन्येत स इत्थं जुहुयादित्यमभिमन्त्रयेत पुनीत एवात्मानमायुरेवात्मन् धत्ते(७)।

---

मेति"(४) इति। 'मरुतः', देवाः प्राणैर्विशीर्णं 'मां', 'आविशन्तु', पुनः सम्भूय सिक्तमाप्यायितं कुर्वन्तु। एवमिन्द्रादिषु योज्यं। किञ्च 'आयुषा', 'बलेन', वयःसंयोज्य सम्पूर्णायुर्युक्तं कुर्वन्तु॥

अनेनोपस्थानेन पूर्वोक्तदोषसमाधानं दर्शयति। (५)"प्रतिहास्मै ० सर्वमायुरेति"(५) इति। 'अस्मै' यजमानार्थं, 'मरुतः', देवाः 'प्राणान् प्रतिदधति' प्रतिष्ठापयन्ति* एवमिन्द्रादयोऽपि। ततोऽयं 'सर्वतनुः' सम्पूर्णसर्वावयवः, 'भूत्वा', सम्पूर्णम् 'आयुः', प्राप्नोति॥

अभिमन्त्रणस्यावृत्तिं विधत्ते। (६)"त्रिरभिमन्त्रयेत ० त्रिषत्या हि देवाः"(६) इति। त्रिवारानुष्ठाने सत्यमिदं न तु कपटरूपमिति विश्वासो येषां देवानान्ते 'त्रिषत्याः'॥

उक्तं प्रायश्चित्तं पापान्तरेऽप्यतिदिशति। (७)"योपूतः ० आत्मन्धत्ते"(७) इति। निश्चितस्यावकरस्याभावे कस्यापि पापस्य सम्भावनयाहं 'अपूतः', इति 'यः', शङ्कते 'सः', अपि पूर्वो-

---

* पुनरर्पयन्ति इति तै० पाठः।

(८)वरो दक्षिणा वरेणैव वरं स्पृणोत्यात्मा हि वरः(८)॥ ॥ १८ ॥

अथ एकोनविंशोऽनुवाकः।

(१)भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये भूर्भुवः स्वः प्रपद्ये ब्रह्म प्रपद्ये ब्रह्मकोशं प्रपद्येऽमृतं प्रपद्येऽमृतकोशं प्रपद्ये

---

कहोमाभिमन्त्रणे कुर्यात्, स पुमान् स्वात्मानं शोधयित्वा स्वात्मनि सर्व्वं 'आयुः', सम्पादयति॥

तत्रोभयत्र दक्षिणां विधत्ते। (८)"वरो दक्षिणा ० स्पृणोत्यात्मा हि वरः"(८) इति। पूर्ववद्व्याख्येयं॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठकेऽष्टादशोऽनुवाकः॥ १८॥

अथ एकोनविंशोऽनुवाकः।

इदानीं सर्वयागारम्भेषु आयुष्करं ब्रह्मोपस्थानं विधित्सुस्तन्मन्त्रमाह। *अथवा सायङ्कालीनसन्ध्यावन्दनादूर्ध्वं भुवमण्डले परब्रह्मोपस्थानार्थं मन्त्रमाह। (१)"भूः प्रपद्ये ० कश्यपस्य"(१) इति। य एते पृथिव्यादयस्त्रयो लोका यश्च येषां

---

* अथवेत्यादिपाठो तै० पुस्तके नास्ति।

चतुर्जालं ब्रह्मकोशं यं मृत्युर्नावपश्यति तं प्रपद्ये देवान् प्रपद्ये देवपुरं प्रपद्ये परीवृतो वरीवृतो ब्रह्मणा वर्म-

---

'लोकानां त्रयाणां* तत् सर्वं 'प्रपद्ये' प्राप्नोमि, लोकानां† सप्त: तत् सर्वं 'प्रपद्ये' प्राप्नोमि, 'ब्रह्म प्रपद्ये ब्रह्मकोशं प्रपद्येऽमृतं प्रपद्येऽमृतकोशं प्रपद्ये'। ब्रह्मशब्देन चतुर्मुखस्य शरीरमुच्यते तस्य कोशः स्थानं जनलोकः, अमृतशब्देन विराट्कारणभूतं सूत्रात्मरूपमुच्यते, तस्य कोशः स्थानमव्यक्तं एतच्चतुर्विधं 'प्रपद्ये' भजामीत्यर्थः। 'चतुर्ज्जालं' चतुर्विधा अन्नमयप्राणमयमनोमयविज्ञानमयाः कोशाः जालवत् आवरका यस्य, पञ्चकोशं 'यं' आनन्दमयं, 'मृत्युर्नावपश्यति' नहि तस्य कारणरूपस्य कार्यवद्विनाशोऽस्ति, तादृशं कोशमहं 'प्रपद्ये'। 'देवान्', इन्द्रादीन्, तेषां पुरं 'देवपुरं', च 'प्रपद्ये', 'अहं', तेन 'ब्रह्मणा', 'वर्मणा' कवचरूपेण परमात्मना, 'परीवृतः' परितो वेष्टितः, 'वरीवृतः' पुनः पुनर्वेष्टितः, तथा 'कश्यपस्य तेजसा' कश्यपस्य प्रेचकस्य कश्यपः को भवतीति न्यायेन सर्वसाक्षिण ईश्वरस्य तेजसा, 'परिवृतः', 'अहं', ईदृशो रचकोयं ब्रह्मा तदुपस्थानेन मृत्युन्तरामीत्यर्थः‡॥

---

* F पुस्तके 'त्रयाणां' पदस्थाने सप्त: इति पाठो वर्त्तते।

† लोकानां त्रयाणामिति तै॰ पाठः।

‡ मृत्युन्तरामीत्यभिप्रायः इति F पुस्तकपाठः।

णाहन्तेजसा कश्यपस्य[१]। [२]यस्मै नमस्तच्छिरो धर्मो मूर्धानं ब्रह्मोत्तराहनुर्यज्ञोऽधरा विष्णुर्हृदयꣳ संवत्सरः प्रजननमश्विनौ पूर्वपादावत्रिर्मध्यं मित्रावरुणावपरपादावग्निः पुच्छस्य प्रथमं काण्डं तत इन्द्रस्ततः प्रजापतिरभयं चतुर्थꣳ[२]। [३]स वा एष दिव्यः शा-

---

अन्नोपस्थानकाले सर्वात्मकस्य परमेश्वरस्य शिशुमारास्यजलग्रहरूपत्वं ध्यानार्थं दर्शयति। [१]"यस्मै नमस्तच्छिरो • प्रजापतिरभयश्चतुर्थं"[२] इति। 'यस्मै' परब्रह्मणे, 'नमः' सर्वैः नमस्कारः क्रियते, 'तत्' परं ब्रह्म, अत्र शिशुमाराख्यध्यातव्यस्य जलग्रहस्य 'शिरः' उत्तमाङ्गस्थानं, योऽयमनुष्ठेयः 'धर्मः', सः 'मूर्द्धानं' मूर्द्धस्थानीयः, शिरसो मूर्भस्यैकस्मिन्नेवायतने ऊर्ध्वाधोभागभेदेन भिदाऽयं चतुर्मुखः 'ब्रह्मा', सोऽयं तस्य ग्रहस्य 'उत्तरा हनुः', यः 'यज्ञः', सः 'अधरा हनुः'। यः 'विष्णुः', सोऽयं हृदयस्थानीयः। यः 'संवत्सरः', तत् 'प्रजननं' इन्द्रियस्थानीयं,* यौ 'अश्विनौ', तौ तस्य ग्रहस्य 'पूर्वपादौ', योऽयमत्रिमुनिः, सोऽयं मध्यशरीरं, यौ 'मित्रावरुणौ' देवौ तौ 'अपरपादौ', शिशुमारस्य पुच्छे बहवो भागाः, तत्र 'अग्निः पुच्छस्य', 'प्रथमं काण्डं' प्रथमो भागः, 'ततः' तदूर्ध्वं, 'इन्द्रः',

---

* तत्प्रजननमित्यादिस्थाने सोऽयं प्रजननेन्द्रियस्थानीयः इति F पुस्तकपाठः।

करः शिशुमारस्तꣳह[२]। [४]य एवं वेदाप पुनर्मृत्युञ्जयति जयति स्वर्गं लोकं नाध्वनि प्रमीयते नाग्नौ प्रमीयते नाप्सु प्रमीयते नानपत्यः प्रमीयते लघ्वान्नो भवति[४]। [५]ध्रुवस्त्वमसि ध्रुवस्य क्षितमसि त्वं भूतानामधिपतिरसि

---

द्वितीयो भागः, 'ततः' अप्यूर्ध्वं, 'प्रजापतिः', तृतीयो भागः, ततोऽपि परतः 'अभयं' भयरहितं, परं ब्रह्म *चतुर्थो भागः॥

एवं ध्यातव्यानवयवान् समाध्यावयविनं सन्दर्शयति। [१] "स वा ० शिशुमारस्तꣳह"[१] इति। यस्मै नमस्तच्छिर इत्यादिना अभयं चतुर्थमित्यन्तेन वाक्येन योऽयं निरूपितः 'एषः', 'दिव्यः' दिवि भवः, 'शाक्करः' अत्यन्तशक्तिमान्, शिशून् मारयति मुखेन निगरतीति 'शिशुमारः' जलग्राहविशेषः, सहि जलमध्येऽत्यन्तविवृतेन मुखेन मनुष्यान् गृह्णातीति॥

यदेवं †ध्यातव्यो ग्राहो निरूपितः, तद्ध्यानं तत्फलञ्च दर्शयति। [४]"य एवं ० लघ्वान्नो भवति"[४] इति। 'यः' पुमान्, दिव्यं शिशुमारं 'वेद' मनसा ध्यायति, स 'पुनः', 'अपमृत्युञ्जयति' मार्गादिमरणरूप अपमृत्युविशेषस्तु न भवति, दुर्मरणमस्य न भवतीत्यर्थः। 'लघ्वान्नः' सर्वत्र सुलभान्नो भवति॥

अथ ध्यानानन्तरमनुमन्त्रणमन्त्रमाह। [५]"ध्रुवस्त्वमसि ०

---

* चतुर्थं ब्रह्मेति तै० पाठः।
† तदेव इति तै० पाठः।

त्वं भूतानाꣳ श्रेष्ठोसि त्वा भूतान्युपपर्यावर्तन्ते नमस्ते नमः सर्वन्ते नमो नमः शिशुकुमाराय* नमः(५) ॥ १९ ॥

---

शिशुकुमाराय नमः"(५) इति। अनेन मन्त्रेणोदङ्मुखो भूत्वा ध्रुवमण्डलं पश्यन् शिशुमाररूपेण तमुपतिष्ठेत्। हे शिशुमार 'त्वं ध्रुवोऽसि' विनाशरहितोऽसि। तथा 'भुवस्य' जगत आकाशादेः, 'चितं' निवासस्थानं,'असि'। 'भूतानां' सर्वेषां प्राणिनां, 'त्वं अधिपतिरसि',अत एव 'भूतानां', मध्ये 'श्रेष्ठोऽसि'। 'भूतानि', सर्वाणि त्वामुपेत्य परितः सेवन्ते, तस्मात् 'ते' तुभ्यं,'नमः', अस्तु, यत् 'सर्वं' जगत्, 'ते'† तव अधीनं, तथा सति 'नमः सर्वं' त्वदीयाय सर्वस्मै नमः। तथा 'ते नमः' सर्वस्य स्वामिने तुभ्यमपि नमः। किं बहुना 'नमः शिशुकुमाराय नमः' शिशुमारस्य जलग्रहविशेषस्य कुमारो बालकः तदाकारो यो ध्रुवः तस्मै नमस्कारोऽस्तु। उभयतो नमस्कारद्वयमादरार्थं ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके एकोनविंशोऽनुवाकः ॥ १९ ॥

---

* शिशुमारकुमाराय इति F पुस्तकपाठः।

† जगत् तत् तं इति F पुस्तकपाठः।

अथ विंशोऽनुवाकः ।

(१)नमः प्राच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्ये-
ताभ्यश्च(१) । (२)नमो नमः दक्षिणायै दिशे याश्च देवता
एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमः प्रतीच्यै दिशे
याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम-
उदीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च
नमो नम ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्ये-
ताभ्यश्च नमो नमोऽधरायै दिशे याश्च देवता एतस्यां प्र-
तिवसन्त्येताभ्यश्च नमो नमोऽवान्तरायै दिशे याश्च दे-

---

अथ विंशोऽनुवाकः ।

सन्ध्यावन्दनाङ्गत्वेन शिशुमारोपस्थानमुक्तं अथ दिगुप-
स्थानमुच्यते । तत्र प्रथमं मन्त्रमाह । "(१)नमः प्राच्यै दिशे याश्च
० प्रतिवसन्त्येताभ्यश्च"(१) इति । एते मन्त्राः प्रथममन्त्रवद्व्या-
ख्येयाः ॥

अथ मन्युपस्थानमन्त्रं दर्शयति । (२)"नमो नमो ० मुनि-
भ्यश्च नमः" इति । नमस्कारादिक एको मन्त्र उभयतो नम-
स्कारौ द्वौ मन्त्रौ । 'गङ्गायमुनयोः', मध्ये पुण्यप्रदेशेषु तपोऽ-

वता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो गङ्गायमुनयोर्मध्ये ये वसन्ति ते मे प्रसन्नात्मानश्चिरञ्जीवितं वर्धयन्ति नमो गङ्गायमुनयोर्मुनिभ्यश्च नमो नमो गङ्गायमुनयोर्मुनिभ्यश्च नमः[२] ॥ २० ॥

सह, रक्षाꣳसि, यद्देवाः सप्तदश, यद्दीव्यं पञ्चदश, आयुष्टे चतुर्विꣳशत्*, वैश्वानराय षड्विꣳशतिः, वातरसना ह, कूश्माण्डैः, अजान् ह, पञ्च†, ब्रह्मयज्ञेन, ग्रामे, मध्यन्दिने‡, तस्य वै मेघः, तस्य वै द्वौ§, रिच्यते§, दुह्रे ह§, कतिधावकीर्णी§, भूः§, नमः प्राच्यै विꣳशतिः§ ॥ हरिः ॐ ॥ तत् सत् ॥

---

धिका ये केचन 'मुनयः', वसन्ति, ते सर्वेऽपि प्रसन्नचित्ता भूत्वा मम चिरमायुर्वृद्धिं कुर्वन्तु तेभ्यः 'नमः'। उत्तरौ द्वौ मन्त्रौ भक्त्यतिशयद्योतनार्थौ। तत्रापि नमःशब्दद्वयोपेतत्वमभ्यासार्थं। तदेवमस्मिन् प्रपाठके स्वाध्यायविधिः प्राधान्येन प्रतिपादितः, तत्प्रसङ्गाच्छुद्धिकारणं सन्ध्यावन्दनादिकं सर्वं प्रतिपादितं ॥

---

* आदर्शे दण्डपातभ्रमेण मूले चर्यास्त्रिंशत् कण्डिका दृश्यन्ते।

† पूर्वोक्तकारणेन दशमध्ये सप्तकाण्डिका एव मूले दृश्यन्ते।

‡ एतद्दशतावपि दण्डपातभ्रमो दृश्यते।

§ एतास्वपि दण्डपातभ्रमः।

सह, ब्रह्मयशेन, विंशतिः ॥

नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ ॐ शान्तिः ३ ॥ ओम् ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके द्वितीयप्रपाठके विंशोऽनुवाकः ॥ २० ॥

समाप्तोऽयं द्वितीयः प्रपाठकः ॥

---

## तैत्तिरीये आरण्यके

### तृतीयप्रपाठके प्रथमोऽनुवाकः ।

हरिः ॐ ।

तच्छं योरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजं । शन्नो अस्तु द्विपदे । शं चतुष्पदे ।

॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ओम् ॥

---

## तैत्तिरीये आरण्यके

### तृतीयप्रपाठके प्रथमोऽनुवाकः ।

श्रीगणेशाय नमः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
स्वाध्यायब्राह्मणं प्रोक्तं द्वितीये हि प्रपाठके ।
चातुर्होत्रचितेर्मन्त्रा वक्ष्यन्तेऽस्मिन् प्रपाठके* ॥

---

* तृतीयके इति F पुस्तकपाठः ।

(१)चित्तिः स्रुक्। चित्तमाज्यं। वाग्वेदिः। आधीतं बर्हिः। केतो अग्निः। विज्ञातमग्निः। वाक्पतिर्होता।

---

ब्राह्मणग्रन्थस्य तृतीयकाण्डे द्वादशप्रपाठके ब्रह्म वै चतुर्होतार इत्यस्मिन्ननुवाके चातुर्होत्रचितेर्ब्राह्मणमुक्तं न तु तन्मन्त्रास्तत्रोक्ताः। तेषामरण्येऽध्येतव्यत्वात्। अतोऽस्मिन् प्रपाठके तन्मन्त्रा उच्यन्ते। तत्र प्रथमानुवाकोक्तमन्त्राणां विनियोगो ब्राह्मण एवं समाम्नातः, पुरस्ताद्दशहोतारमुदञ्चमुपदधाति यावत्पदमिति। तत्पाठस्तु। (१)"चित्तिः स्रुक् ० समाध्वर्युः"(१) इति। आदौ सिसृक्षुः प्रजापतिः सृष्ट्यर्थं केन विधानेन* आध्यात्मिकेनेष्टवान्। तद्यागवर्त्तिनः स्रुगादयः एतेषु मन्त्रेषु प्रतिपाद्यन्ते। अत्र 'चित्तिचित्त'शब्दाभ्यां निर्विकल्पकसविकल्पकभेदजनकावन्तःकरणवृत्तिभेदौ विवक्षितौ। 'वाक्', प्रसिद्धा। 'आधीतं' उच्चार्यमाणं। 'केतविज्ञात'शब्दाभ्यां निर्विकल्पकसविकल्पकज्ञानविषयावभिधीयेते। 'वाक्पति'शब्देन वाचः प्रवर्त्तकः कण्ठताल्वादिस्थानेषु संयुज्यमानो वायुरुच्यते। 'मनः प्राणौ' प्रसिद्धौ। 'साम'शब्देन तद्धेतुः स्वरोच्चारणशक्तिरुच्यते†। एवं चित्यादयो दश शरीरगताः पदार्थविशेषाः स्रुगादयो दश पदार्था होमनिष्पादकाः। 'अग्नि'शब्दद्वयेन चाहवनीयगार्हपत्यौ विवक्षितौ। 'उपवक्तृ'शब्देनानुवचनकर्त्तु-

---

* केनचिद्यागेनेति F पुस्तकपाठः।

† तद्धेतुर्वर्णोच्चारणशक्तिरुच्यते इति ते० पाठः।

मन उपवक्ता। प्राणो हविः। सामाध्वर्युः(१)॥ (२)वाच-स्पते विधे नामन्। विधेम ते नाम। विधेस्त्वमस्माकं

होतुः* पुरा प्रेषवक्ता मैत्रावरुणो विवक्षितः। यद्वा प्रोक्षणादिष्वनुज्ञायां पृष्टायां ब्रह्मा समीपे स्थिते ॐ प्रोक्षेत्यादिना तदनुज्ञां वक्ति तस्मादयमुपवक्ता। चित्त्यादयः शरीरगत-पदार्थाः स्रुगादिरूपा इति वाक्यार्थः। अस्मिन् मन्त्रे स्रुगा-दीनां होमसाधनानां दशानामभिहितत्वादयं मन्त्रो दश-होतेत्युच्यते। सोऽयं मन्त्रस्य पूर्वभागः, तस्य चावयवाः पृथ-गिष्टका मन्त्राः, तत्र चित्तिस्रुक्तया देवतयाङ्गिरस्वध्रुवासी-देति। एवमुपधानप्रकारो द्रष्टव्यः। एता दशेष्टका उप-धेयाः॥

मन्त्रस्य योऽयमुत्तरो भागो ग्रहाख्यः तेन ग्रहेष्टकामुप-दधाति। तथा च ब्राह्मणमाम्नातं। यथावकाशं ग्रहानिति। तत्र ग्रहभागमाह। (२)"वाचस्पते • नृम्णन्धात् स्वाहा"(२) इति। हे 'वाचस्पते' वाचः पालक, हे 'विधे' जगद्विधातः, हे 'नामन्' सर्वस्य वशीकर्त्तः, 'ते' तव, 'नाम', 'विधेम'। अस्मदनुग्रहकारी देवोऽयमित्येवं प्रसिद्धिं कुर्मः, यद्वा नमनं प्रह्वीभावं सम्पादयामः। 'त्वं', अपि 'अस्माकं', 'नाम विधः', देवेषु मध्ये यजमानोऽयं यथाशास्त्रं कृतवानिति प्रसिद्धिं कुरु।

---

* अनुवचनकर्तुर्होम इति तै० पाठः।

नाम॑। वा॒चस्पति॒ः सोम॑ं पिबतु। आस्मासु॑ नृ॒म्ण-न्धात् स्वाहा॑(२) ॥ १ ॥

अ॒ध्व॒र्युः पञ्च॑ च ॥ १ ॥

अयं 'वाचस्पतिः', मदीयेषु यागेषु 'सोम'सदृशमाज्यं 'पिबतु', 'अस्मासु' होमकर्तृषु, 'नृम्णं', अपि जितं धनं*, 'अधात्' सम्पादयतु, इमं वृत्तान्तमुद्दिश्य जुहोमीति स्वकीया वागाह। अत्र वाचस्पत इत्यादि नृम्णन्धादित्यन्तो ग्रहभागः। एतेषां मन्त्राणामुपधाने विनियोगः। तत्र तत्र वाचनिकाः† ते च ब्राह्मणे† द्वितीयकाण्डे द्वितीयतृतीयप्रपाठकयोः प्रपञ्चिताः। तेषु होमाहोमविषयभेदेन कश्चिद्विषय आपस्तम्बेन दर्शितः। यत्र होमार्थाः सङ्ग्रहाः स्वाहाकाराः, यत्राहोमार्थाः अग्रहास्त्र अस्वाहाकारा इति। सोऽयं न्याय उत्तरेष्वपि मन्त्रेष्वनुसन्धेयः। तदेवमस्मिन्ननुवाके दशहोतृमन्त्रोऽभिहितः‡ ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

* 'नृम्णं' अपेक्षितं धनमिति तै॰ पाठः।

† मन्त्राणामुपधानब्राह्मणे विनियोगः प्रकरणसिद्धत्वातुर्होत्रब्राह्मणे वाचनिकस्त इतरे वाचनिका इति तै॰ पाठः। F पुस्तके तैत्तिरीयान्तरपुस्तकवत् पाठः केवलं वाचनिकश्चेति शब्दात् परं इतरे तु विनियोगा इत्यधिकः।

‡ ब्राह्मणस्येति तै॰ पाठः।

अथ द्वितीयोऽनुवाकः ।

(१)पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता(१) । (२)वाचस्पते वाचो वीर्येण । सम्भृततमेनायक्ष्यसे । यजमानाय वार्यं । आ सुवस्करस्मै । वाच-

---

अथ द्वितीयोऽनुवाकः ।

अथ चतुर्होतृमन्त्र उच्यते । तस्य च विनियोगो ब्राह्मणे चाभिहितः । दक्षिणतः प्राञ्चं चतुर्होतारमिति । तत्पाठस्तु । (१)"पृथिवी होता ० बृहस्पतिरुपवक्ता"(१) इति । सोऽयं होतृभागः, तत्र पृथिव्यादयः प्रसिद्धाः, तथा होत्रादयश्च । उपवक्तृशब्देन समीपे स्थित्वा तत्तत्कर्मस्वनुजानानो ब्रह्मा विवक्षितः ॥

अथ ग्रहभागमाह । (२)"वाचस्पते ० अजनदिन्द्रमिन्द्रियाय स्वाहा"(२) इति । हे 'वाचस्पते', अत्यन्तसम्पादितेन मन्त्रात्मिकाया 'वाचः', सामर्थ्येन त्वमासमन्तात् 'यक्ष्यसे' । 'अस्मै' यजमानाय, 'वार्यं' वरणीयं, 'सुवः' स्वर्गं, 'आकः' समन्तात्, 'कुरु' । अयं 'वाचस्पतिः', अस्मदीयेषु यागेषु 'सोमं पिबति' । 'इन्द्रं' देवं, इन्द्रियसमृद्ध्यर्थं 'अजनत्' अजनयतु, प्रेरयत्वित्यर्थः । तदेतदुद्दिश्य जुह्रधीति स्वकीया वागाह ॥

स्पतिः सोमं पिबति। अजनदिन्द्रमिन्द्रियाय स्वाहा[२] ॥२॥

पृथिवी होता दश॥२॥

अथ तृतीयोऽनुवाकः।

[१]अग्निर्होता। अश्विनाध्वर्यू। त्वष्टाग्नीत्। मित्र उपवक्ता[१]। [२]सोमः सोमस्य पुरोगाः। शुक्रः शुक्रस्य

---

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके द्वितीयोऽनुवाकः॥ २॥

अथ तृतीयोऽनुवाकः।

अथ पञ्चहोतृमन्त्र उच्यते। तद्विनियोगो ब्राह्मणे एवमाम्नातः। पश्चादुदञ्चं पञ्चहोतारमिति। तत्पाठस्तु। [१]"अग्निर्होता ० मित्र उपवक्ता"[१] इति। अग्न्यादयः प्रसिद्धाः। अध्वर्युः प्रतिप्रस्थाता चेत्येवमध्वर्युद्वित्वेन होतृपञ्चकं पूरणीयं॥

अथ यदभागमाह। [२]"सोमः सोमस्य ० श्रुतः स्वाहा"[२] इति। योऽयं देवतात्मकः 'सोमः', सोऽयं लतात्मकस्य याग-

पुरोगाः। आतास्त इन्द्र सोमाः। वातापेर्हवनश्रुतः स्वाहा[२] ॥ ३ ॥

अग्निर्होताष्टौ ॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः।

[१]सूर्यन्ते चक्षुः। वातं प्राणः। द्यां पृष्ठं। अन्तरिक्ष-

---

देशं प्रत्यागमने पुरतो गच्छति। 'शुक्रः' भासको देवतादि-प्रकाशको मन्त्रः, 'शुक्रस्य' गृह्यमाणतया भासमानस्य सोमस्य, पुरतो गच्छति आदौ मन्त्रं पठित्वा पश्चात् सोमो गृह्यते। हे 'इन्द्र', 'ते' त्वदर्थं, एते 'सोमाः', 'आताः' पक्काः, आश्रिता वा। कीदृशस्य ते। वायुवदाप्नोति सहसा गच्छतीति 'वातापिः', तस्य। हवनमाह्वानं शृणोतीति हवनश्रुत्', तस्य। एतदर्थं जुहोमीति स्वकीया वागाह ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः।

अथ पशूहमन्त्र उच्यते। द्विविधश्चायमन्त्रः। अग्निष-

मात्मा। अन्तरिक्षं यज्ञः। पृथिवीꣳ शरीरैः[१]। [२]वाचस्पते-

तुरनुवाके प्रोक्तः सूर्यन्ते चक्षुरित्येकः। षष्ठानुवाके प्रोक्तो वाग्घोतेत्यपरः। स एव चातुर्होत्रचयने प्रयोक्तव्यः। वाग्घोता षड्ढोतॄणामित्येवं तद्ब्राह्मणे निर्देशात्। सूर्यन्ते इत्यस्य तु पशुबन्धादौ विनियोगः। स च होतृब्राह्मणकाण्डे पठ्यते। पशुबन्धेन यक्ष्यमाणः षड्ढोतारं मनसानुद्रुत्याहवनीये जुहु-यादिति। तन्मन्त्रपाठस्तु। [१]"सूर्यन्ते चक्षुः ० पृथिवीꣳ शरीरैः"[१] इति। हे पशो योयं 'सूर्यः', सः 'ते चक्षुः', यो वायुः सः ते 'प्राणः'। तथा* पशुविषये द्विगुप्रैषे समाम्नायते। सूर्यञ्च-क्षुर्गमयतात्। वातं प्राणमन्ववसृजतादिति। या द्यौः सः पृष्ठ-भागः, उपरिवर्त्तित्वसाम्यात्। यदिदं 'अन्तरिक्षं', तत्त्वदीयो जीवात्मा, मध्यवर्त्तित्वसाम्यात्। यानि हृदयादीन्यङ्गानि तैः 'यज्ञं', सम्पादयतीति शेषः। यान्यन्यान्यस्थ्यादीनि शरीरगता-नि तैः 'पृथिवीं', प्राप्नुहीति शेषः। सूर्यन्ते चक्षुरित्यादा-वपि त्वदीयं चक्षुः सूर्यं प्राप्नोत्विति वा योजनीयं। अथ वा वक्ष्यमाणं वाचस्पतिसम्बोधनमनूद्य ते चक्षुः सूर्यरूपं आसी-यादित्येवं वाचस्पतिपरतया मन्त्रो योज्यं। होमनिष्पादकस्य पशोः चक्षुरादीनि षडङ्गान्यत्रोक्तानि इत्यस्य मन्त्रस्य षड्ढो-तृत्वं॥

* तथा चेति F पुस्तकपाठः।

ऽच्छिद्रया वाचा। अच्छिद्रया जुह्वा। दिवि देवावृधꣳ होत्रामेरयस्व स्वाहा[२] ॥ १ ॥

स्रुयन्ते नव॥ अनु० ४ ॥

---

अथ पञ्चमोऽनुवाकः।

[१]महाहविर्होता। सत्यहविरध्वर्युः। अच्युतपाजा

---

अथ यहभागमाह। [१]"वाचस्पतेऽच्छिद्रया ० होत्रामेरयस्व स्वाहा"[२] इति। हे 'वाचस्पते', 'अच्छिद्रया', 'वाचा' स्वराक्षरसम्पूर्णेन मन्त्रेण,'अच्छिद्रया जुह्वा' घृतसम्पूर्णया स्रुचा, 'देवावृधं' देवानां वर्धयित्रीं, 'होत्रां' होमक्रियां, 'दिवि' द्युलोके, 'एरयस्व' सर्वतः प्रेरय, एतमर्थमुद्दिश्य जुहोमीति स्वकीया वागाह ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ पञ्चमोऽनुवाकः।

अथ सप्तहोतृमन्त्र उच्यते। तस्य च विनियोगस्त्वातुर्होत्रब्राह्मण एवमाम्नातः। उपरिष्टात् प्राश्नꣳ सप्तहोतारमिति।

अपात्। अच्युतमना उपवक्ता। अनाधृष्यश्चाप्रतिधृ-
ष्यश्च यज्ञस्याभिगरौ। अयास्य उद्गाता[१]। [२]वाचस्पते
हृद्विधे नामन्। विधेम ते नाम। विधेस्त्वमस्माकं नाम।

---

तत्पाठस्तु। [१]"महाहविर्होता • अयास्य उद्गाता"[१] इति। महाहविः सत्यहविः इत्यादयः अयास्यान्ताः सप्तसङ्ख्याका महर्षयः तन्महर्षिस्वरूपा ऋत्विजो होत्रादयः 'यज्ञस्य' सोमयागस्य, 'अभिगरौ' अभितः उद्गातुः पुरस्तात् पश्चाच्च स्थितौ प्रस्तारप्रतिहारभागौ गायेते इति प्रस्तोतृप्रतिहर्तारावभिगरौ। होताध्वर्युराग्नीध्रो ब्रह्मा प्रस्तोता प्रतिहर्तोद्गातेति सप्तसङ्ख्याका होमनिष्पादका ऋत्विजो इति अयं मन्त्रः सप्तहोतेत्युच्यते॥

अथ ग्रहभागमाह। [२]"वाचस्पते • पृथिव्यै स्वाहा"[२] इति। हे 'वाचस्पते', हे 'हृद्विधे' हृदयस्य विधातः, चित्तप्रेरकेत्यर्थः। हे 'नामन्' सर्वजगत्सम्बन्धप्रमाणयुक्त* 'ते' तुभ्यं, 'नाम' नमनं प्रणतिं, 'विधेम' कुर्मः। 'त्वं', च 'अस्माकं', 'नामविधेः' देवानां मध्ये सम्यक् यष्टवान् इति प्रसिद्धं नामधेयं कुरु। अयं 'वाचस्पतिः', 'सोमं', 'अपात्' पीतवान्। 'दिव्यस्तन्तुः' मद्गृहे हविःस्वीकारार्थं आगतो देवसम्बन्धी सन्तानः, 'माच्छेदि' कदा-

---

* सर्वजगत्सम्बन्धप्रमाणहेतुयुक्त इति तै० पाठः।

वाचस्पतिः सोमंमपात् ॥ मा दैव्यस्तन्तुश्छेदि मा मंनु-
ष्यंः। नमो दिवे। नमंः पृथिव्यै स्वाहा[२] ॥ १ ॥

अपात्, चीणि च ॥ अनु० ५ ॥

अथ षष्ठोऽनुवाकः ।

[१]वाग्घोता। दीक्षा पत्नी। वातोऽध्वर्युः। आपोऽभि-

---

चिदपि विच्छिन्नो माभूत्। तथा 'मनुष्यस्तन्तुः' ऋत्विक्प्रवा-
होऽपि, विच्छिन्नो माभूत्। द्यावापृथिवीभ्यां 'नमः', अस्तु।
तमिममर्थमुद्दिश्य जुहोमीति स्वकीया वागाह ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-
रण्यके तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

अथ षष्ठोऽनुवाकः ।

अथ द्वितीयः षड्ढोतृमन्त्र उच्यते। तस्य च विनियोग-
श्चातुर्होत्रब्राह्मणे समाम्नातः। उत्तरतः प्राञ्चᳪं षड्ढोतारमि-
ति। तत्पाठस्तु। [१]"वाग्घोता ० तपसि जुहोमि"[१] इति।
येयं यजमानस्य 'वाक्', सेयं होतृस्थानीया। येयं 'दीक्षा', सा

गरः। मनो॑ ह॒विः। तप॑सि जुहोमि[१]। [२]भूर्भुवः॒ सुवः॑। ब्रह्म॑ स्वय॒म्भु। ब्रह्म॑णे स्वय॒म्भुवे॒ स्वाहा॑[२] ॥ १ ॥

वाग्घोता॒ नव॑ ॥ अनु० ६ ॥

---

पत्नीस्थानीया। योऽयं 'वातः', प्राणरूपः, सोऽध्वर्युस्थानीयः। प्रोक्षणाद्यर्थाः 'आपः', ता 'अभिगरः' ब्रह्मस्थानीयाः, अभितो गिरति कर्त्तव्यमनुजानातीति अभिगरः। यत् 'मनः', तद्धविस्थानीयं। 'तपसि' अग्निस्थानीये, तन्मनोहविः 'जुहोमि' स्थापयामि। अत्र वागादीनां षसां होत्रादिरूपेण होमनिष्पादकानां अभिधानात् षड्ढोतृत्वं ॥

अथ यद्भागमाह। [१]"भूर्भुवःसुवः ० स्वयम्भुवे स्वाहा" [२] इति। य एते भूरादयोस्त्रयो लोकास्तेषां यत् कारणं 'स्वयम्भु' स्वतःसिद्धं परं ब्रह्म, तस्मै 'स्वयम्भुवे' परब्रह्मणे, जुहोमीति स्वकीया वागाह ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

अथ सप्तमोऽनुवाकः ।

(१)ब्राह्मण एकहोता। स यज्ञः। स मे ददातु प्रजां पशून् पुष्टिं यशः। यज्ञश्च मे भूयात्(१)। (२)अग्निर्द्विहोता। स भर्ता। स मे ददातु प्रजां पशून् पुष्टिं यशः। भर्ता

---

अथ सप्तमोऽनुवाकः ।

अनन्तरभाविनोऽनुवाकस्य चातुर्मास्येषु केशनिवर्तनेषु तच्छृतं तत् सत्यमिति जपित्वा पश्चाज्जपमापस्तम्ब आह। ब्राह्मण एक होतेति च अनुवाकमिति तथा ब्रह्ममेधे उद्द्रवतोमन्त्रनस्यानुमन्त्रणे विनियोगं भरद्वाज आह। ब्राह्मण एक होतेति चेति। एतदनुवाकगतेषु दशसु पर्यायेषु प्रथमं पर्यायमाह। (१)"ब्राह्मणः ० मे भूयात्"(१) इति। योऽयं वेदविद्ब्राह्मणः सोऽयमेकेन स्वकीयेन तपसा जुहोति सर्वस्य जगत उपकरोतीति 'एकहोता', स एव च ज्योतिष्टोमादिनिष्पादकत्वात् यज्ञस्वरूपस्य। स ईदृशः 'ब्राह्मणः', मह्यं प्रजादिचतुष्टयं 'ददातु'। तत्प्रसादात् 'यज्ञः', अपि मे सर्वदा भूयात्॥

अथ द्वितीयं पर्यायमाह। (२)"अग्निर्द्विहोता ० भूयात्"(२) द्वाभ्यां पाकहविर्हवनाभ्यां उपकरोतीति 'द्विहोता'। अतएव पोषकत्वात् 'भर्त्ता'। अन्यत् पूर्ववद्व्याख्येयं॥

च मे भूयात्[२] । [३]पृथिवी त्रिहोता । स प्रतिष्ठा ॥ १ ॥

स मे ददातु प्रजां पशून् पुष्टिं यशः । प्रतिष्ठा च मे भूयात्[३] । [४]अन्तरिक्षं चतुर्होता । स विष्ठाः । स मे ददातु प्रजां पशून् पुष्टिं यशः । विष्ठाश्च मे भूयात्[४] । [५]वायुः पञ्चहोता । स प्राणः । स मे ददातु प्रजां पशून् पुष्टिं यशः । प्राणश्च मे भूयात्[५] ॥ २ ॥

[६]चन्द्रमाः षड्ढोता । स ऋतून् कल्पयाति । स

---

तृतीयमाह । (३)"पृथिवी त्रिहोता ० प्रतिष्ठा च मे भूयात्" (३) इति । त्रिभिरग्न्यन्नयागैरुपकरोतीति त्रिहोतृत्वं सर्व प्राणाधारत्वेन प्रतिष्ठात्वं ॥

अथ चतुर्थमाह । (४)"अन्तरिक्षं चतुर्होता ० विष्ठाश्च मे भूयात्"(४) इति । चतुर्भिर्वा दृश्याकाशस्थानैः* उपकाराच्चतुर्होतृत्वं । यक्षगन्धर्वादीनां आश्रयत्वाद्विविधं स्थितिहेतुत्वञ्च ॥

अथ पञ्चममाह । (५)"वायुः पञ्चहोता ० प्राणश्च मे भूयात्(५) इति । पञ्चभिः प्राणवृत्तिभिरुपकरोतीति पञ्चहोतृत्वं । वायोः प्राणरूपत्वं प्रसिद्धं ॥

अथ षष्ठमाह । (६)"चन्द्रमाः ० कल्पन्तां"(६) इति । षणामृतूनां निष्पादकत्वेन षड्ढोतृत्वं । 'चन्द्रमाः', अपि वृद्ध्यपचयक-

---

* दृश्यावकाशस्थानैः इति F पुस्तकपाठः ।

मे ददातु प्रजां पशून् पुष्टिं यशः। ऋतवश्च मे कल्पन्तां(६)। (७)अन्नꣳ सप्त होता। स प्राणस्य प्राणः। स मे ददातु प्रजां पशून् पुष्टिं यशः। प्राणस्य च मे प्राणो भूयात्(७)। (८)द्यौरष्टहोता। सोऽनाधृष्यः॥ ३॥

स मे ददातु प्रजां पशून् पुष्टिं यशः। अनाधृष्यश्च भूयासं(८)। (९)आदित्यो नवहोता। स तेजस्वी। स मे ददातु प्रजां पशून् पुष्टिं यशः। तेजस्वी च भूयासं(९)।

---

राभ्यां शुक्लकृष्णपक्षद्वारा 'ऋतून् कल्पयाति'। अत एवान्यत्राम्नातं। ऋतूनन्यो विदधज्जायते पुनरिति॥

अथ सप्तममाह। (७)"अन्नꣳ सप्त ० प्राणो भूयात्" इति। सप्तानां शीर्षण्यानां प्राणवृत्तीनां पोषकत्वेन सप्तहोतृत्वं। अत एव प्राणपोषकत्वात् प्राणस्य प्राण इत्युच्यते॥

अथाष्टममाह। (८)"द्यौरष्ट ० अनाधृष्यश्च भूयासं"(८) इति। आरोगादिभिः कश्यपान्तैरष्टभिः सूर्यैरुपकरोतीति अष्टहोतृत्वं। द्युलोकस्य केनापि निराकर्त्तुमशक्यत्वादनाधृष्यत्वं॥

अथ नवममाह। (९)"आदित्यो ० तेजस्वी च भूयासं"(९) इति। पूर्वोक्तैरष्टभिर्होतृभिस्तत्रानुगतेन सामान्यरूपेण नवधोपकारात् नवहोतृत्वं तेजस्वित्वं चादित्यस्य प्रसिद्धं॥

(१०)प्रजापतिर्दशहोता। स इदꣳ सर्वं। स मे ददातु प्रजां पशून् पुष्टिं यशः। सर्वञ्च मे भूयात्(१०) ॥ ४ ॥

प्रतिष्ठा, प्राणश्च मे भूयात्, अनाधृष्यः, सर्वञ्च मे भूयात् ॥

*ब्राह्मणः, यज्ञः, अग्निः, भर्ता, पृथिवी, प्रतिष्ठा, अन्तरिक्षं, विष्ठा, वायुः, प्राणः, चन्द्रमा, ऋतून्, अन्नꣳ, स प्राणस्य, प्राणः, द्यौः, अनाधृष्यः, आदित्यः, स तेजस्वी, प्रजापतिः, स इदꣳ सर्वं, च मे भूयात् ॥

अनु० ७ ॥

---

अथ दशममाह। (१०)"प्रजापतिः० मे भूयात्"(१०) इति। नव वै पुरुषे प्राणा नाभिर्दशमीतिश्रुतानि शरीरगतानि दशच्छिद्राण्युत्पाद्योपकारित्वाद्दशहोतृत्वं। सर्वजगत्कारणत्वेन सर्वात्मकत्वं प्रजापतेः प्रसिद्धं ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

* एषानुक्रमणिका A चिह्नितपुस्तके वर्त्तते न त्वितरपुस्तकद्वये।

अथाष्टमोऽनुवाकः ।

(१)अग्निर्यजुर्भिः । सवितास्तोमैः । इन्द्र उक्थामदैः । मित्रावरुणावाशिषा । अङ्गिरसो धिष्ण्यैरग्निभिः । मरुतः सदो हविर्धानाभ्यां । आपः प्रोक्षणीभिः । ओषधयो बर्हिषा । अदितिर्वेद्या । सोमो दीक्षया ॥ ॥ १ ॥

त्वष्टेध्मेन । विष्णुर्यज्ञेन । वसव आज्येन । आदित्या दक्षिणाभिः । विश्वे देवा ऊर्जा । पूषा स्वगा-

---

अथाष्टमोऽनुवाकः ।

अथ सम्भारयजूंषि उच्यन्ते । तेषां चेष्टकोपधाने विनियोगश्चातुर्होत्रीयब्राह्मणेऽभिहितः । हृदयं यजूꣳषि पत्न्येति । तेषामेकविंशतिसङ्ख्याकानां यजुषां पाठस्तु । (१)"अग्निर्यजुर्भिः ० अहꣳ श्रद्धया"(१) इति । अत्राग्निसवित्रादयो देवा यजुस्तोमादीनि यज्ञे संवरणीयान्यङ्गानि* एतैर्देवाः तैः संवरणीयैः† सहास्मिन् कर्मण्यागच्छन्तीति‡ वाक्यार्थः । 'उक्थामदः' शस्त्रवाची । यज्ञशब्दो हविःप्रक्षेपवाची । 'स-

---

* सम्भरणीयान्यङ्गानि इति तै॰ पाठः ।
† सम्भरणीयैरिति तै॰ पाठः ।
‡ कर्म्मण्यागच्छन्त्विति तै॰ पाठः ।

कारेण। बृहस्पतिः पुरोधया। प्रजापतिरुद्गीथेन। अन्तरिक्षं पवित्रेण। वायुः पात्रैः॥ अहꣳ श्रद्धया[१]
॥ २ ॥

दीक्षया, पात्रैः, एकञ्च ॥ अनु० ८ ॥

अथ नवमोऽनुवाकः।

[१]सेनेन्द्रस्य। धेना बृहस्पतेः। पथ्या पूष्णः। वाग्वायोः। दीक्षा सोमस्य। पृथिव्यग्नेः। वसूनां गायत्री। रुद्राणां त्रिष्टुप्*। आदित्यानां जगती। विष्णोरनुष्टुप्* ॥ १ ॥

---

गाकारः' शंयुवाकमन्त्रः। पुरोधाग्रहणकाले पठनीया ऋक् पुरोवाक्। 'पवित्र'शब्दो दशापवित्रवाची। 'अहं' यजमानः, 'श्रद्धया', महागच्छामि। स्पष्टमन्यत्॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके अष्टमोऽनुवाकः॥ ८ ॥

अथ नवमोऽनुवाकः।

अथ देवपत्न्याख्या मन्त्रा उच्यन्ते। तेषां च विनियोगः पूर्ववद्द्रष्टव्यः। पत्न्यस्त्वेत्येवं तत्र पत्नीष्टकानामभिधानात्। पा-

---

* आदर्शपुस्तकेषु त्रिष्टुक् अनुष्टुक् इति पाठद्वयं।

वरुणस्य विराट्। यज्ञस्य पङ्क्तिः। प्रजापतेरनुमतिः। मित्रस्य श्रद्धा। सवितुः प्रसूतिः। सूर्यस्य मरीचिः। चन्द्रमसो रोहिणी। ऋषीणामरुन्धती। पर्जन्यस्य विद्युत्। चतस्रो दिशः॥ चतस्रोऽवान्तरदिशाः। अहश्च रात्रिश्च। कृषिश्च वृष्टिश्च। त्विषिश्चापचितिश्च। आपश्चौषधयश्च। ऊर्क्च सूनृता च देवानां पत्नयः[१] ॥ २ ॥

अनुष्टुक्, दिशः, षट् च॥ अनु० ९ ॥

---

ठक्तु। (१)"सेनेन्द्रस्य • देवानां पत्नयः"(१) इति। देवताः इन्द्रादयः तत्पत्न्यः सेनादयः पत्न्यः। दिग्विदिगादयोऽपि केषाञ्चिद्देवानां पत्न्यः। एताः सर्वाः आगत्य यज्ञमविकलं कुर्वन्त्विति वाक्यार्थः। तत्राम्नातैः षड्विंशतिवाक्यैः षड्विंशतिसङ्ख्याकाः पत्नीष्टका उपदध्यात्॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके नवमोऽनुवाकः॥ ९ ॥

---

अथ दशमोऽनुवाकः ।

(१)देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्यां । पूष्णो हस्ताभ्यां प्रतिगृह्णामि । राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यं । तेनामृतत्वमश्यां । वयो दात्रे । मयो मह्यमस्तु प्रतिग्रहीत्रे । क इदं कस्मा अदात् । कामः कामाय । कामो दाता ॥ १ ॥

कामः प्रतिग्रहीता । कामꣳ समुद्रमाविश । कामेन त्वा प्रतिगृह्णामि । कामैतत्ते । एषा ते काम दक्षि-

---

अथ दशमोऽनुवाकः ।

अथ प्रतिग्रहमन्त्रा उच्यन्ते । तेषां प्रतिग्रहैरिष्टकोपधानं चातुर्होत्रीयब्राह्मण एवमाम्नातं । यथावकाशं प्रतिग्रहान् लोकं पृणास्वेति । तत्र प्रथममाह । (१)"देवस्य ० वैश्वानराय रथं"(१) इति । हे प्रतिगृह्यमाणद्रव्य 'सवितुः देवस्य', प्रेरणे सति अश्विसम्बन्धिभ्यां 'बाहुभ्यां', पूषसम्बन्धिभ्यां 'हस्ताभ्यां', त्वां 'प्रतिगृह्णामि'। हे 'दक्षिणे देवि', 'वरुणो राजा', हिरण्यरूपां त्वां 'अग्नये', प्रापयतु । 'तेन' अग्निप्रापणेन, प्रतिग्रहदोषाभावात् । अहं 'अमृतत्वं' नरकाभावरूपं, प्राप्नुयां, इयञ्च दक्षिणादात्रे 'वयः अस्तु' पक्षिरूपिणी भूत्वा दातारं स्वर्गे

णा। उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु। सोमाय वासः। रुद्राय गां। वरुणायाश्वं। प्रजापतये पुरुषं॥ २॥ मनवे तल्पं। त्वष्ट्रेऽजां। पूष्णेऽविं। निर्ऋत्या अश्वतरगर्दभौ। हिमवतो हस्तिनं। गन्धर्वाप्सराभ्यः स्रगलङ्करणे। विश्वेभ्यो देवेभ्यो धान्यं। वाचेऽन्नं। ब्रह्मण ओदनं। समुद्रायापः॥ ३॥

---

नयत्वित्यर्थः। 'प्रतिग्रहीत्रे' 'मह्यं', 'मय': सुखं, 'अस्तु'। 'इदं' द्रव्यं, प्रजापतिः प्रजापतये दत्तवान् अन्तर्यामिरूपेण दातृप्रतिग्रहीत्रोः प्रेरकत्वात्। तथा 'कामः', 'कामाय', दत्तवान्। यथा प्रजापतिः अदृष्टप्रेरकः तथा कामस्य दृष्टप्रेरकत्वात् तस्मात् 'कामः', एव 'दाता', 'प्रतिग्रहीता', च स्वर्गादिफलविषयः कामो दाता, ऐहिकसुखविषयः कामः प्रतिग्रहीता। ततो हे दक्षिणे समुद्रसमं 'कामं' प्रविश 'कामेन', निमित्तेन त्वां 'प्रतिगृह्णामि'। हे मद्धृदयवर्त्ति'काम' तत् 'एतत्' द्रव्यं, तुभ्यं भवति। हे 'काम', 'ते' त्वत्प्रीतये, एव 'एषा' 'दक्षिणा,' प्रदत्ता, अङ्गिरोगोत्रे समुत्पन्न उत्तानाख्यो महर्षिः 'त्वां प्रतिगृह्णातु'। अथ वस्त्रादिद्रव्यविषयान् षोडशमन्त्रानाह। एतेषु सर्वेषु मन्त्रेषु देवि दक्षिण इत्यन्तः पूर्वानुषङ्गः। तेनामृतत्वादिकमित्युत्तरानुषङ्गः* ॥

---

* अमृतत्वादिकमुत्तरवाक्यानुषङ्गः इति तै० पाठः।

उत्तानायाङ्गीरसायानः। वैश्वानराय रथं(१)। (२)वैश्वानरः प्रत्नथा नाकमारुहत्। दिवः पृष्ठं भन्दमानः सुमन्मभिः। स पूर्ववज्जनयज्जन्तवे धनं। समानमज्मा परियाति जागृविः(२)। (१)राजा त्वा वरुणो नयतु देवि दक्षिणे वैश्वानराय रथं। तेनामृतत्वमश्यां। वयो दात्रे। मयोमह्यमस्तु प्रतिगृहीत्रे॥ क इदं कस्मा

---

तस्य रथप्रतिग्रहमन्त्रस्य शेषभूतामुत्तरानुषङ्गात् पूर्वभाविनीं काञ्चिदृचमाह। (१)"वैश्वानरः॰परियाति जागृविः"(२) इति। वैश्वानराख्यो देवः। 'प्रत्नथा' पुरातनशरीरधारी सन्, स्वर्गमारूढवान्। स च 'दिवः पृष्ठं' द्युलोकस्योपरिभागं, 'मन्मभिः' मननविशेषैः, 'भन्दमानः' कल्याणं कुर्वन्वर्त्तते, अयं यजमानः इमां दक्षिणां दत्तवान् इत्येवं वदन् देवानामग्रे स्मारयतीत्यर्थः। 'सः' वैश्वानरः, 'जन्तवे' प्राणिरूपाय यजमानाय, 'धनं', पूर्ववत् 'जनयत्' यजमानः पूर्वं यथा दक्षिणां दत्तवान् तथैव तदनुरूपं फलं जनयति। स वैश्वानरः 'जागृविः' सावधानः सन्, 'अज्मा' स्वर्गगमनशीलः, 'समानं', 'परियाति' यावद्दक्षिणार्थं द्रव्यन्तेन सदृशं तत् योग्यं फलं परिप्रापयति॥

अस्या ऋच उपरितनं रथप्रतिग्रहमन्त्रशेषमाह। (१)"रा-

अदात्। कामः कामाय। कामो दाता। कामः प्रतिग्रहीता। काम<sup></sup>ँ समुद्रमाविश। कामेन त्वा प्रतिगृह्णामि। कामैतत्ते। एषा ते काम दक्षिणा। उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु(२) ॥ ४ ॥

दाता, पुरुषम्, आपः, प्रतिग्रहीत्रे, नव च॥ अनु० १० ॥

---

जाला ० प्रतिगृह्णातु"(२) इति। अत्र तेनामृतत्वमश्यामित्यादि उत्तरानुषङ्गः सर्वत्र* साधारण इति दर्शयति। प्रथममन्त्रे पठितोपि पुनराम्नातः राजा त्वेत्यादिः वैश्वानराय रथमित्यन्तः† पूर्वोक्ता याः ऋचः उपरिरथमन्त्रे‡ पुनः पठनीयः। इत्येतावान् विशेषः। एतैर्मन्त्रैः प्रतिग्रहेष्टका उपदध्यात्॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके दशमोऽनुवाकः॥ १० ॥

---

* सर्व्वमन्त्र इति F पुस्तकपाठः।
† रथमन्त्रः इत्यधिकः तै० पाठः।
‡ उपरितनमन्त्रे इति तै० पाठः।

अथ एकादशोऽनुवाकः।

[१]सुवर्णं घर्मं परि वेद वेनं। इन्द्रस्यात्मानं दशधा चरन्तं। अन्तः समुद्रे मनसा चरन्तं। ब्रह्मान्वविन्द-

अथ एकादशोऽनुवाकः।

अथ होतृहृदयाख्या मन्त्रा अभिधीयन्ते। तेषां चित्युपधाने विनियोगस्तातुर्होत्रीयब्राह्मण एवमाम्नायते। हृदयं यजूंषि पत्न्यश्चेति। तत्र दशहोतृहृदयाख्यं मन्त्रमाह। [१]"सुवर्णं ० देवैः। स मानवीन आत्मा जनानां"[१] इति। चित्तिः स्रुगित्यादीनां होतृमन्त्राणां हृदयं रहस्यं तत्त्वं परमात्मस्वरूपं प्रतिपादयतीत्ययमनुवाको हृदयमित्युच्यते। तत्रानेन मन्त्रेण दशहोतृहृदयं परमात्मतत्त्वमुच्यते। अहं मन्त्रद्रष्टा 'इन्द्रस्य' परमेश्वरस्य, 'आत्मानं' निजस्वरूपं 'परि वेद' परितः सर्वत्रावस्थितं जानामि। कीदृशमात्मानं, 'सुवर्णं' सुवर्णसदृशं, यथा सुवर्णं स्वत एव प्रकाशमानं* भवति तथा स्वयं प्रकाशं। 'घर्मं' अन्यस्य वस्तुनो दीपकं, तस्य भासा सर्वमिदं विभातीति श्रुतेः। 'वेनं' कान्तं, सर्वदुःखराहित्येन तस्य कमनीयत्वं। 'दशधा' चित्तिस्रुगित्यादिदशहोतृमन्त्रे प्रतिपादितैराकारैः, 'चरन्तं' लोके व्यवहरन्तं, 'अन्तः समुद्रे'

* स्वत एव भासमानमिति तै॰ पाठः।

दशहोतारमर्णे। अन्तः प्रविष्टः शास्ता जनानां। एकः सन् बहुधा विचारः। शतꣳ शुक्राणि यत्रैकं भवन्ति।

---

ब्रह्माण्डसृष्टेः पुरा सर्वत्र व्याप्यावस्थितो योयं जलसङ्घः सोऽयं समुद्रः तस्य मध्ये, 'मनसा चरन्तं' इदं सर्वं जगत् सृजेयेत्येवं रूपेण मनोवृत्तिविशेषेण सह प्रवर्त्तमानं। अतएवान्यत्रोक्तं। आपो वा इदमासन् सलिलमेव। स प्रजापतिरेकः पुष्करपर्णे समभवत्। तस्यान्तर्मनसि कामः समवर्त्तत। इदꣳ सृजेयमिति। 'ब्रह्मा' चतुर्मुखप्रजापतिः, 'अर्णे' अर्णवे यथोक्तसमुद्रे, 'दशहोतारं' दशहोतृमन्त्रं तत्प्रतिपाद्यरूपेणाविर्भूतं परमात्मानं, 'अन्वविन्दत्' सृष्टिसाधनत्वेनान्विष्य लब्धवान्। तथा च ब्राह्मणमाम्नातं। प्रजापतिरकामयत प्रजाः सृजेयेति। स एतं दशहोतारमपश्यदिति। सोऽयमेवंविधः परमात्मा 'जनानां' सर्वेषां, 'शास्ता' अन्तर्यामिरूपेण नियामकः सन् हृदये प्रविश्यावस्थितः। तथाच स्मर्यते।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि माययेति॥

सर्वान्तर्यामी* स्वकीयेनेश्वररूपेण 'एकः', एव 'सन्', पुनर्जीवरूपेण 'बहुधा', भूत्वा 'विचारः' विविधचरणवान् भवति। अत एवान्यत्रोपनिषदि श्रूयते।

---

* स चान्तर्यामीति तै॰ पाठः।

सर्वे वेदा यत्रैकं भवन्ति। सर्वे होतारो यत्रैकं भवन्ति। *स मानसीन आत्मा जनानां॥ १॥

---

एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥ इति।

'व्रतं ज्योतींषि' व्रतसङ्ख्योपलक्षितान्यनन्तानि सूर्यचन्द्रनक्षत्रादि ज्योतींषि, 'यत्र' यस्मिन् परमात्मनि, 'एकीभवन्ति' एकत्वं प्राप्नुवन्ति। तथा 'सर्वे वेदाः' ऋग्वेदप्रभृतयश्चत्वारो वेदाः नानाविधशाखोपेताः, विलीय यस्मिन् 'एकीभवन्ति', 'होतारः' च होमकर्त्तारः, 'सर्वे' यजमानाः, इन्द्रहोत्रादिमन्त्रा वा, यस्मिन् परमात्मनि एकत्वं प्राप्नुवन्ति। यथा बुद्बुदा जलमध्ये समुत्पद्य कञ्चित् कालमवस्थाय विलीयमाना जल एवैक्यं प्राप्नुवन्ति। तथा सर्वे भावाः परब्रह्मण एवोत्पद्य तत्रैव स्थित्वा विलीयमाना एकतां गच्छन्ति। अतएवोपनिषद्धि श्रूयते। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति। 'सः' तादृश ईश्वरः, सर्वेषां 'जनानां', 'आत्मा' स्वरूपभूतः सन्,† 'मानसीनः' योगयुक्तेन मनसोपलभ्यो भवति। तथाच

---

* 'स मानसीन' इत्याद्यः 'अमोन्नं' इत्यन्तः पाठः B चिह्नितपुस्तके पतितः।

† सन् इति शब्दः D, E, पुस्तकद्वये नास्ति।

अन्तः प्रविष्टः शास्ता जनानाꣳ सर्वात्मा सर्वाः प्रजा यत्रैकं भवन्ति। चतुर्होतारो यत्र सम्पदं गच्छन्ति देवैः। स मानसीन आत्मा जनानां(१)। (२)ब्रह्मेन्द्र-

---

कठा अधीयन्ते। मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चनेति। ततो योगिनां मानसप्रत्यक्षगम्यत्वात्। अन्तःप्रविष्टः शास्ता जनानामिति योऽयमुक्तः सोऽयं 'सर्वात्मा' सर्वेषां प्राणिनामात्मा स्वरूपभूतः, तं हि जनाः* योगेन निरुद्धचित्ताः सन्तो जगदीश्वरं स्वस्वरूपत्वेनैव साक्षात् कुर्वन्ति न तु भेदेन पश्यन्ति, अतः पूर्वोक्तः सर्वात्मत्वर्थ उपपन्न इत्युपसंह्रियते। 'सर्वाः प्रजाः', देवमनुष्यादयः, 'यत्र' यस्मिन् योगिप्रत्यक्षगम्ये चैतन्यैकरसे परमात्मनि, 'एकीभवन्ति', चतुर्होतृमन्त्राश्च सर्वे यस्मिन् स्वप्रतिपाद्यैः 'देवैः', सह यस्मिन् ब्रह्मणि 'सम्पदं' सम्यगेकीभावं, प्राप्नुवन्ति। 'सः' तादृशो ब्रह्मस्वरूपः, 'मानसीनः' मानसप्रत्यक्षः, सर्वेषां 'जनानामात्मा'। ऋचां भेदादपुनरुक्तिर्द्रष्टव्या। द्वितीया द्विपदा, इतरास्तिस्रश्चतुष्पदा, इत्यृचां विवेकः। अत्र चतुर्होतृशब्देन दशहोत्रादयः सर्वेऽपि मन्त्रा विवक्ष्यन्ते। तथा च ब्राह्मणे चतुर्होतृदेवं प्रति प्रजापतिर्वरन्दत्तवान्। त्वं वै मे नेदिष्ठं हूतः प्रत्यश्रौषीः। त्वयैतानाख्यातार इति। तस्मान्नु हैनांश्चतुर्होतार इत्याचक्षत इति॥

---

* सर्वे हि जना इति E, F, पुस्तकद्वयपाठः।

मग्निं जगतः प्रतिष्ठां। दिव आत्मानꣳ सवितारं बृह-
स्पतिं। चतुर्होतारं प्रदिशोनुक्लृप्तं। वाचो वीर्यं

तदेवं दशहोतृहृदयाख्यो मन्त्रोभिहितः। अथ चतुर्होतृहृदयाख्यो मन्त्रोभिधीयते। तत्र तिसृ ऋचस्तासु प्रथमामाह। (१)"ब्रह्मेन्द्रमग्निं ० तपसान्वविन्दत्"(१) इति। 'ब्रह्मा' चतुर्मुखः, 'इन्द्रं' परमैश्वर्ययुक्तं परमात्मानं, 'तपसा', 'अन्वविन्दत्' अन्विष्य लब्धवान्, तद्दर्शपूर्णमासं सृष्टिसाधनं किमिति विचार्य चतुर्होतृमन्त्ररूपेणावस्थितं परमात्मानं निश्चितवान् इत्यर्थः। तथा च ब्राह्मण* आम्नायते। प्रजापतिरकामयत दर्शपूर्णमासौ सृजेयेति। स एतं चतुर्होतारमपश्यदिति। कीदृशमिन्द्रं, 'जगतः प्रतिष्ठां', 'अग्निं' सर्वस्य जगत आधाररूपो योयं चातुर्होत्रियचितिरूपोग्निः तत्स्वरूपं, 'दिव आत्मानं सवितारं' द्युलोकस्य प्रकाशकत्वेनात्मवदवस्थितोयः सविता तद्रूपं, तथा 'बृहस्पतिः, योयं देवगुरुस्तद्रूपेणावस्थितं, 'प्रदिशः' सर्वान् प्रदेशान्, 'अनुक्लृप्तं' सर्वेषु प्रदेशेष्ववस्थितं, 'चतुर्होतारं' पृथिवीहोतेत्यादिमन्त्रस्वरूपं, 'वाचः', 'वीर्यं' सर्वस्वं, वेदरूपायाः वाचः सारभूतं॥

अथ द्वितीयामृचमाह। (२)"अन्तः प्रविष्टः कर्त्तारमेतं ० कवयो निचिक्युः"(२) इति। 'कवयः' विद्वांसः वेदशास्त्रपारं

* ब्राह्मणमिति F पुस्तकपाठः।

तपसाऽन्वविन्दत्[२]। [३]अन्तः प्रविष्टं कर्तारमेतं। त्व-
ष्टारꣳ रूपाणि विकुर्वन्तं विपश्चिं ॥ २ ॥
अमृतस्य प्राणं यज्ञमेतं। चतुर्होतृणामात्मानं

---

गताः, 'चतुर्होतॄणां' चतुर्होतृशब्देनाभिधीयमानानां सर्वेषां होतृमन्त्राणां, 'आत्मानं' स्वरूपभूतं परमेश्वरं, 'निचिक्युः' निश्चितवन्तः। कीदृशमात्मानं, 'अन्तःप्रविष्टं' जीवरूपेण शरीरेषु प्रविश्यावस्थितं। अतएवाम्नायते। अनेन जीवतात्मनानुप्रविश्येति। 'कर्त्तारमेतं' अहमित्यनेन मानसप्रत्यक्षेण प्रतीयमानं लौकिकवैदिकसर्वक्रियानिष्पादकं। एतच्चान्यत्राम्नातं। एष हि द्रष्टा श्रोता स्प्रष्टा घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष इति। 'रूपाणि विकुर्वन्तं', विपश्चितं 'त्वष्टारं' गर्भेषु देवतिर्यङ्मनुष्यादिरूपेण 'रूपाणि', विविधं निष्पादयन्तं त्वष्टृदेवस्वरूपं। एतदप्याम्नातं। यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत् प्रजायत इति। 'विपश्चिं' विपश्चितं, तत्तद्रूपनिर्माणप्रकाराभिज्ञं, 'अमृतस्य प्राणं' मरणरहितस्य परमात्मनो व्यवहारहेतुभूतप्राणोपाधिस्वरूपं*। एतदप्याथर्वणिका आमनन्ति। कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति। यज्ञमेव सर्वैरनुष्ठीयमानत्वेन

---

* हेतुभूतप्राणापानस्वरूपमिति तै॰ पाठः।

कवयो निचिक्युः(३)। (४)अन्तः प्रविष्टं कर्त्तारमेतं। देवानां बन्धु निहितं गुहासु। अमृतेन क्लृप्तं यज्ञमेतं। चतुर्होतॄणामात्मानं कवयो निचिक्युः(४)। (५)शतं नियुतः परिवेद विश्वा विश्ववारः। विश्वमिदं वृणाति।

---

दृश्यमानमेतं दर्शपूर्णमासयज्ञस्वरूपं चतुर्होतृमन्त्रस्य तद्यज्ञसहितसाधनत्वात् तद्रूपत्वं युक्तं। तद्यज्ञसाधनत्वं ब्राह्मणे समाम्नातं। स एतं चतुर्होतारमपश्यत्। तं मनसानुद्रुत्याहवनीये जुहोत्। ततो वै स दर्शपूर्णमासावसृजतेति॥

अथ तृतीयामाह। (४)"अन्तः प्रविष्टं कर्त्तारमेतं॰ कवयो निचिक्युः"(४) इति। योऽयं परमात्मा सोऽयं 'देवानां' बन्धुवत् प्रियः। तादृशं, तेषु* पक्षपातत्वेन विजयहेतुत्वं तत्रत्वकाराः† आमनन्ति। ब्रह्मा ह देवेभ्यो विजिग्ये इति। 'गुहसु' बुद्धिषु, 'निहितं' साक्षित्वेनावस्थितं, यो वेद निहितं गुहायामित्यादिश्रुतेः। 'अमृतेन' स्वर्गफलनिमित्तेन, 'क्लृप्तं' सम्पादितं, 'एतं' 'यज्ञं' इत्यादीनामिति‡॥

तदेवमृक्चयरूपं चतुर्होतृहृदयमुक्तं। अथ पञ्चहोतृहृदयाख्यो मन्त्रो अभिधीयते। तत्र प्रथमामाह। (५)"शतं नि-

---

* तेषु देवेषु पक्षपातत्वेनेति तै॰ पाठः।

† कठा आमनन्तीति तै॰ पाठः।

‡ इत्यादि पूर्ववदिति तै॰ पाठः।

इन्द्रस्यात्मा निहितः पञ्चहोता। अमृतं देवानामायुः प्रजानां[५] ॥ ३ ॥

[६]इन्द्रꣳ राजानꣳ सवितारमेतं। वायोरात्मानं कवयो निचिक्युः। रश्मिꣳ रश्मीनां मध्ये तपन्तं। ऋतस्य पदे कवयो निपान्ति[६]। [७]य आण्डकोशे भुवनं बि-

---

युतः ० प्रजानां"[५] इति। 'पञ्चहोता' अग्निर्होता इत्यादि पञ्चहोतृमन्त्ररूपः, आत्मा सः 'विश्ववारः' सर्वैर्वरणीयो वायुरूपः सन्, 'शतं नियुतः', शतसङ्ख्याकान् स्वकीयान् स्वान्, 'परिवेद' परितः सञ्चारित्वेन जानाति, अत एव 'इदं विश्वं' जगत्, 'इ-णाति' व्याप्नोति, सोयं 'इन्द्रस्यात्मा' परमेश्वरस्य स्वरूपभूतः सन्, 'निहितः' सर्वत्रावस्थितः, स च 'देवानाममृतं', प्रयच्छति। 'प्रजानां', वा 'आयुः', प्रयच्छतीति शेषः ॥

अथ द्वितीयामाह। [६]"इन्द्रꣳ राजनꣳ ० निपान्ति"[६] इति। एवं चतुर्होतृदेवं 'कवयः' पण्डिताः, 'निचिक्युः' विनिश्चितवन्तः। कीदृशं, 'इन्द्रं' परमैश्वर्ययुक्तं, 'राजानं' दीप्यमानं, 'सवितारं' प्रेरकं, 'वायोः', 'आत्मानं' स्वरूपभूतं, ते कवय एतं चतुर्होतृदेवं 'ऋतस्य पदे' ब्रह्मणः स्थाने, 'निपान्ति' नितरां पालयन्ति, तद्रूपत्वेन पश्यन्तीत्यर्थः। कीदृशं, 'रश्मीनां' दृश्यमानानां किरणानां, 'मध्ये' स्थित्वा 'तपन्तं' जगतस्तापं कुर्वन्तं, 'रश्मिं' प्रौढरश्मिरूपं, आदित्यमित्यर्थः ॥

र्भर्ति। अनिर्मिषः सन्नथो लोकान् विचष्टे। यस्याण्ड-कोशꣳ शुष्ममाहुः प्राणमुल्बं। तेन क्लृप्तोऽमृतेनाहमस्मि(७)। (८)सुवर्णं कोशꣳ रजसा परीवृतं। देवानां वसुधानीं विराजं ॥ ४ ॥

---

अथ तृतीयामाह। (७)"य आण्डकोशे॰ अमृतेनाहमस्मि"(७) इति। 'यः' पञ्चहोतृदेवः, 'आण्डकोशे' ब्रह्माण्डमध्ये, 'अनिर्मिषः' अभेदेनावस्थितः सन्, 'भुवनं' कृत्स्नं भूतजातं, 'बिभर्ति' धारयति। 'अथ' ब्रह्माण्डभेदानन्तरं, तदन्तःस्थितान् भूरादि-'लोकान्','विचष्टे' विशेषेण प्रख्यापयति, 'यस्य' चतुर्होतृरूपस्य परमात्मनः, 'शुष्ममाण्डकोशं' प्रबलं ब्रह्माण्डावकाशस्थं, 'प्राणं', वायुविशेषं, 'उल्बमाहुः' गर्भवेष्टनस्थानीयमाहुः, यथा लोके गर्भं उल्बेन वेष्ट्यते तथा सूक्ष्मशरीरेण प्राणवायुना ब्रह्माण्डं वेष्टितं भवति। 'तेनामृतेन' पञ्चहोतृरूपेण परमात्मना, 'अहं', 'क्लृप्तः' व्यवहारसमर्थत्वेनोत्पादितः, 'अस्मि'* ॥

अथ पञ्चहोतृहृदयमन्त्राः। तत्र प्रथमामृचमाह। (८)"सुवर्णं ॰ विविक्ते"(८) इति। वाग्घोतेति मन्त्रोऽत्र पञ्चहोता, स च ब्रह्माण्डकोशमध्ये चन्द्ररूपेणावस्थितः। चन्द्ररूपं पञ्चहोतृदेवं विराजं अभिज्ञाः †सुवर्णत्वादिगुणयुक्तमाचक्षते। 'सुवर्णं' शोभन-

---

* 'यस्य' पञ्चहोतृदेवस्य, 'आण्डकोशं' ब्रह्माण्डं, 'शुष्ममुल्बं' प्राणस्वरूपं 'आहुः', 'तेन' पञ्चहोतृरूपेण परमात्मना, 'अहं', 'क्लृप्तः' व्यवहारसमर्थत्वेन उत्पादितः, 'अस्मि'। इति तैत्तिरीयपुस्तकधृतपाठेन यस्य चतुर्होतृरूपस्येत्यारभ्य अस्मीतिशेषपर्यन्तस्य विनिमये बोद्धव्यः।

† देवरहस्याभिज्ञा इति तै॰ पाठः।

अमृतस्य पूर्णां तामु कलां विचक्षते। पाद२ षड्ढो-तुर्न किलाविवित्से(८)। (९)येनर्त्तवः पञ्चधोत क्लृप्ताः। उतवा षड्ढा मनसोत क्लृप्ताः। त२ षड्ढोतारमृतुभिः

---

वर्णं, एतं चन्द्रमण्डलं हिरण्मयवर्णोपेतं,* 'कोशं' ब्रह्माण्डकोश-मध्यगं,'रजसा' रञ्जनात्मकेनामृतेन,'परीवृतं' सर्वतो व्याप्तं,तथा-विधं चन्द्रं,'तामु कलां' तादृशीमेव भागरूपां, 'आचक्षते'। कीदृशीमिति तदुच्यते। 'देवानां वसुधानीं' वह्निरव्यादीनां देवतानामपेक्षितं यद्वसु अमृतरूपं तस्य धारयित्रीं। अत एव स्मर्यते। प्रथमां पिबते वह्निर्द्वितीयां पिबते रविरित्यादि। 'विराजं' विशेषेण राजमानां, 'अमृतस्य पूर्णां' पीयूषेण पूरितां, एवं रूपं षड्ढोतृदेवमभिज्ञा आचक्षते। प्राकृतस्तु जनः 'षड्ढोतुः', 'पादं' षड्ढोतृदेवस्यांशभूतं चन्द्रं,'न किलाविवित्से', नैव जानाति॥

अथ द्वितीयामाह। (९)"येनर्त्तवः ० कवयो निपान्ति" (९) इति। 'येन' चन्द्ररूपेण षड्ढोतृदेवेन, वसन्ताद्यृतवः पञ्चप्रकाराः 'क्लृप्ताः' सम्पादिताः, हेमन्तशिशिरयोः समासेन पञ्चत्वं। 'उत वा' अथवा, हेमन्तशिशिरयोर्विभागेन षट्प्रकाराः 'क्लृप्ताः', 'उत' अपि च, 'मनसा क्लृप्ताः' सङ्कल्पमात्रेण सम्पादि-

---

* भासते इति E, F चिह्नितपुस्तकद्वयपाठः।

कल्पमानं। ऋतस्य पदे कवयो निपान्ति[९]। [१०]अन्तः प्रविष्टं कर्तारमेतं। अन्तश्चन्द्रमसि मनसा चरन्तं। स

---

ताः, 'तं'*पञ्चषड्ढोतृदेवं, 'ऋतुभिः', 'कल्पमानं' पञ्चधा षोढा वा भिन्नैः वसन्तादिभिः, सर्वव्यवहारसमर्थं, 'ऋतस्य पदे' सत्यस्य परब्रह्मणःस्थाने, 'कवयः' वेदरहस्याभिज्ञाः, 'निपान्ति' नितरां पालयन्ति, परब्रह्मैवायं चन्द्ररूपः षड्ढोतेत्येवमुपासत इत्यर्थः॥

अथ तृतीयामाह। [१०]"अन्तः प्रविष्टं॰शतधा चरतं"[१०] इति। 'देवाः', सर्वे 'सहैव सन्तं' स्वकीयहृदये स्वेन जीवात्मना सहैवावस्थितं, 'एतं' षड्ढोतृदेवं परमात्मानं, 'न विजानन्ति' वेदान्ताभ्यासमन्तरेण हृदयेऽवस्थितोऽयं परमात्मैवेति विशेषेण न जानन्ति। कीदृशं परमात्मानं। 'अन्तःप्रविष्टं' अन्तर्यामिरूपेण सर्वेषां पृथिव्यादिपदार्थानां मध्येऽवस्थितं। एतच्च वाजसनेयिनोऽन्तर्यामिब्राह्मणे यः पृथिव्यान्तिष्ठन्नित्यादिना बहुप्रपञ्चेनामनन्ति। 'कर्तारं' नियामकत्वेन सर्वस्य निष्पादकं, 'अन्तश्चन्द्रमसि' चन्द्रमण्डलमध्ये, 'मनसा' सङ्कल्पमात्रेण, 'चरन्तं', एतच्चोपलक्षणं सर्वेष्वपि वस्तुषु चरन्तमित्यर्थः। एत-

---

* "तं" चन्द्ररूपं षड्ढोतृदेवं इति F पुस्तकपाठः।

हैव सन्तं न विजानन्ति देवाः। इन्द्रस्यात्मानꣳ शतधा चरन्तं(१०) ॥ ५ ॥

(११)इन्द्रो राजा जगतो य ईशे। सप्तहोता सप्तधा विक्लृप्तः(११)। (१२)परेण तन्तुं परिषिच्यमानं। अन्तरा-

---

हैव स्पष्टीकर्त्तुं, शतधा चरन्तमित्युक्तं। 'इन्द्रस्य' परमैश्वर्ययुक्तस्य देवादेः, आत्मभूतं स्वरूपं* ॥

अथ सप्तहोतृहृदयाख्यो मन्त्रः। तत्र प्रथमां ऋचमाह। (११)"इन्द्रो राजा ० सप्तधा विक्लृप्तः"(११) इति। सप्तहोतृविद्यो-तेत्ययं मन्त्रः 'सप्तहोता'। स च 'सप्तधा क्लृप्तः' होत्रध्वर्युप्रमुखैः सप्तभिः प्रकारैः सम्पादितः। स किंरूप इति तदुच्यते। 'इन्द्रः' परमैश्वर्ययुक्तः, 'राजा' दीप्यमानः 'यः' परमात्मा, 'जगतः', 'ईशे' स्वामी भवति। स एवायं सप्तहोतृरूप इत्यर्थः ॥

अथ द्वितीयामाह। (१२)"परेण तन्तुं ० ब्रह्मान्वविन्दत्"(१२) इति। 'ब्रह्मा' प्रजापतिः, 'देवानां' इन्द्रादीनां, 'हृदयं' हृदयस्थितं परमात्मानं, 'अन्वविन्दत्' अन्विष्य लब्धवान्, कीदृशं, 'तन्तुं', 'परेण' अविच्छिन्नस्य यज्ञस्य परस्तात् फल-दशायां, 'परिषिच्यमानं' वृष्टिरूपेण परितः सिच्यमानं,

---

* 'आत्मानं' स्वरूपभूतं, इति तै० पाठः।

दित्य मनसा चरन्तं। देवानाꣳ हृदयं ब्रह्मान्वविन्दत्
(१२)। (१३)ब्रह्मैतद्ब्रह्मण उज्जभार। अर्कꣳ श्चोतन्तꣳ स-
रिरस्य मध्ये(१३)। (१४)आ यस्मिन् सप्त पेरवः। मेहन्ति
बहुलाꣳ श्रियं। बह्वश्वामिन्द्र गोमतीं(१४) ॥ ६ ॥

---

"अन्तरादित्ये" आदित्यमण्डलमध्ये, 'मनसा' सङ्कल्पमात्रेण, 'चरन्तं', ॥

अथ तृतीयामाह। (१३)"ब्रह्मैतद्ब्रह्मणः ० सरिरस्य मध्ये" (१३)इति। 'ब्रह्मा' चतुर्मुखः प्रजापतिः, 'ब्रह्मणः', वेदस्य सकाशात् 'एतत्' सप्तहोतृस्वरूपं, 'उज्जभार' सारत्वेनोद्धृतवान्। कीदृशं, 'अर्कं' सूर्यरूपेणावस्थितं, 'सरिरस्य' मेघस्थजलस्य, 'मध्ये', रश्मिद्वारा प्रविश्य, 'श्चोतन्तं' वर्षयन्तं ॥

अथ चतुर्थीमाह। (१४)"आ यस्मिन् ० बह्वश्वामिन्द्रगोमतीं"(१४) इति। 'यस्मिन्' सप्तहोतृरूप आदित्ये, 'पेरवः' वृष्टिप्रदानेन लोकस्य पातारः, सप्तसङ्ख्याका रश्मयः प्रापिताः* रश्मिसप्तकस्य, साकञ्जानां सप्तधमाहुरेकजमित्यत्र प्रपञ्चितं। ते च सप्तरश्मयो, 'बहुलां श्रियं' प्रभूतां धनादिसम्पदं, 'मेहन्ति' वृष्टिसेचनद्वारेण सम्पादयन्ति। हे 'इन्द्र' सप्तहोतृदेवरूप परमेश्वर, 'बह्वश्वां' बहुभिरश्वैरुपेतां, 'गोमतीं' बहुभिर्गोभिरुपेतां, तां श्रियं प्रयच्छेति शेषः ॥

---

* आश्रिता इति E,F पुस्तकद्वयपाठः।

(१५)अच्युतां बहुलाꣳ श्रियं। स हरिर्वसुवित्तमः। पेरु-रिन्द्राय पिन्वते(१५)। (१६)बह्वश्वामिन्द्र गोमतीं। अच्युतां बहुलाꣳ श्रियं। मह्यमिन्द्रो नियच्छतु(१६)। (१७)शतꣳ शता अस्य युक्ता हरीणां। अर्वाङायातु वसुभी रश्मिरिन्द्रः।

---

अथ पञ्चमीमाह। (१५)"अच्युतां ० पेरुरिन्द्राय पिन्वते" (१५) इति। 'सः' देवः सप्तहोताख्यः, 'इन्द्राय' कर्मस्वामिने यजमानाय, 'श्रियं', 'पिन्वते' सिञ्चति, प्रयच्छतीत्यर्थः। कीदृशः स देवः, 'हरिः' पापहरणशीलः, 'वसुवित्तमः' अतिशयेन धनस्य लब्धा, 'पेरुः' पालकः। कीदृशीं श्रियं, 'अच्युतां' विनाशरहितां, 'बहुलां' गवाश्वादिभिः प्रभूतां॥

अथ षष्ठीमाह। (१६)"बह्वश्वामिन्द्र गोमतीं ० नियच्छतु" (१६) इति। 'इन्द्रः' परमैश्वर्ययुक्तः सप्तहोतृदेवः। स्पष्टमन्यत्॥

अथ सप्तमीमाह। (१७)"शतꣳ शता ० नियच्छतु"(१७) इति। 'अस्य' आदित्यरूपस्य सप्तहोतृदेवस्य, 'हरीणां' अन्धकारहरणशीलानां रश्मीनां, 'शतꣳ शता' शतसङ्ख्याकानि शतानि, अयुतसङ्ख्याकानीत्यर्थः। 'युक्ता' युक्तानि, सम्पादितानि, 'इन्द्रः' परमैश्वर्ययुक्तः 'रश्मिः' बहुविधरश्मियुक्तः आदित्यः, 'वसुभिः' धनैः, सह 'आयातु' आभिमुख्येनागच्छतु। आगतश्च सविता 'बहुलां श्रियं' प्रभूतां धनादिसम्पदं, 'मे' मह्यं, 'नियच्छतु

प्रमꣳहमाणो बहुलाꣳ श्रियं। रश्मिरिन्द्रः सविता मे नियच्छतु(१७) ॥ ७ ॥

(१८)घृतन्तेजो मधुमदिन्द्रियं। मय्ययमग्निर्दधातु(१८)। (१९)हरिः पतङ्गः पटरी सुपर्णः। दिविक्षयो नभसा य एति। स न इन्द्रः कामवरं ददातु(१९)। (२०)पञ्चारं चक्रं परिवर्त्तते पृथु। हिरण्यज्योतिः सरिरस्य मध्ये। अजस्रं

---

नितरां ददातु। कीदृशः सविता, 'प्रमꣳहमाणः' अस्मदीयस्तुतिभिः प्रकर्षेण वर्द्धमानः, 'रश्मिः' बहुविधरश्मियुक्तः, 'इन्द्रः' परमैश्वर्य्ययुक्तः ॥

अथाष्टमीमाह। (१८)"घृतन्तेजो ० मय्ययमग्निर्दधातु"(१८) इति। 'अयं' सप्तहोतृदेवः, इन्ध्यात्मकः सन् 'मयि' यजमाने, 'मधुघृतं' मधुररसोपेतं घृतादिद्रव्यं, 'तेजः' कान्तिं, 'इन्द्रियं' चक्षुरादिसामर्थ्यं च, 'दधातु' सम्पादयतु ॥

अथ नवमीमाह। (१९)"हरिः पतङ्गः ० ददातु"(१९) इति। 'हरिः' अन्धकारहरणशीलः, 'पतङ्गः' सूर्यरूपः, 'पटरी' तेजःपटलवान्, 'सुपर्णः' पक्षिसदृशः, 'दिविक्षयः' स्वर्गनिवासी, 'यः' सप्तहोतृदेवः, 'नभसा' आकाशमार्गेण, 'एति' गच्छति। 'सः' देवः, 'नः' अस्माकं, 'कामवरं' कामानां मध्ये श्रेष्ठं, 'ददातु' ॥

अथ दशमीमाह। (२०)"पञ्चारं चक्रं ० कामवरं ददातु"

ज्योतिर्नभसा सर्पदेति। स न इन्द्रः कामवरं ददातु(२०)।
(२१)सप्त युञ्जन्ति रथमेकचक्रं ॥ ८ ॥
एको अश्वो वहति सप्तनामा। त्रिनाभि चक्रमजर*म-

(२०) इति। ऋतुपञ्चात्मका आरा यस्य कालचक्रस्य तत् 'पञ्चारं', 'पृथु' विस्तृतं, 'चक्रं' संवत्सरात्मकं कालचक्रं,'परिवर्त्तते' परितः प्रवर्त्तते। 'सरिरस्य मध्ये' मेघवर्तिजलस्य मध्ये, 'हिरण्यज्योतिः' रश्मिसञ्चारणविद्युद्रूपपरिणामे सति सुवर्णसमानं ज्योतिर्यस्य मण्डलस्य तद्धिरण्यज्योतिः, तादृशं 'ज्योतिः' आदित्यमण्डलं संवत्सरचक्रनिष्पादकं, 'अजस्रं' निरन्तरं 'नभसा' आकाशमार्गेण, 'सर्पदेति' शनैः सञ्चरति गच्छति। 'सः' ज्योतिर्मण्डलात्मा 'नः' अस्माकं 'कामवरं ददातु' ॥

अथ एकादशीमाह। (२१)"सप्त युञ्जन्ति ० भुवनानि तस्थुः"

(२१) इति। सप्तसङ्ख्याकाः साकञ्जानामित्यत्रोक्ताः मुख्यरश्मिविशेषाः अश्वसदृशाः 'एकचक्रं' एकप्रकारपरिवर्त्ति कालचक्रं, 'युञ्जन्ति'। प्रवर्तयन्ति। तदेव स्पष्टीक्रियते। 'सप्तनामा' सप्तसङ्ख्यानि नामानि नमनयोग्यानि कंशानि †रश्मिरूपाणि य-

* अजरमिति E पुस्तकपाठः।
† वश्यानीति तै० पाठः।

नर्वां। येनेमा विश्वा भुवनानि तस्थुः(२१)। (२२)भद्रं पश्य-न्त उपसेदुरग्रे। तपो दीक्षामृषयः सुवर्विदः। ततः क्षत्र बलमोजश्च जातं। तदस्मै देवा अभिसन्नमन्तु(२२)।

---

ख्यातो सप्तनामा। 'अश्वः' व्यापकः 'एकः' सूर्यः तत्कालचक्रं 'वहति'। कीदृशं चक्रं, 'त्रिनाभि' तिस्रः सत्वरजस्तमोगुणरूपाः भूतभविष्यद्वर्तमानरूपा वा नाभयो यस्य तत्त्रिनाभि, 'अजरं' विनाशरहितं, न हि कालः संसारमध्ये कदाचिद्विनश्यति। 'अन-र्वां' अर्वा विरोधी विनाशको भ्रातृव्यो वा अर्वेति श्रुतेः, तद्रहितं, न हि कालचक्रस्य कश्चिन्नाशकोऽस्ति। 'येन' कालचक्रेण, 'इमा विश्वा भुवनानि' दृश्यमानानि सर्वाणि भूतजातानि, तिष्ठन्ति, सुखेन वर्तन्ते तस्य कालचक्रस्य निर्वाहकोऽयं सप्तहोतृदेव आदित्यः॥

अथ द्वादशीमाह। (२२)"भद्रं पश्यन्त॰ अभिसन्नमन्तु"(२२) इति। 'सुवर्विदः' स्वर्गमार्गाभिज्ञाः,ऋषयः 'भद्रं' कल्याणं सप्त-होतृरूपमादित्यं, 'पश्यन्तः' प्राप्यत्वेन निश्चिन्वानाः, 'तपः' अन-शनादिरूपं,'दीक्षां' नियमविशेषं च, 'उपसेदुः' अनुष्ठितवन्तः। 'ततः' आदित्यसकाशात्, 'क्षत्रं' क्षतात् त्राणं अनिष्टनिवारणं। 'बलं' शरीरशक्तिः, 'ओजः' कान्तिः, इत्येतत् सर्वं 'जातं' सम्पन्नं। 'तत्' च स क्षत्रादित्रयं, 'अस्मै' यजमानाय, 'देवाः', अभिसन्नमन्तु। अभितः सम्पादयन्तु॥

(२१)श्वेतꣳरश्मिं बोभुज्यमानं। अपान्नेतारं भुवनस्य गोपां। इन्द्रं निचिक्युः परमे व्योमन्(२१)॥ ६॥
(२४)रोहिणीः पिङ्गला एकरूपाः। क्षरन्तीः पिङ्गला

---

अथ त्रयोदशीमाह। (२१)"श्वेतꣳ रश्मिं ० परमे व्योमन्" (२१) इति। 'परमे व्योमन्' उत्कृष्टे हृदयाकाशे, 'इन्द्रं' परमैश्वर्ययुक्तं सप्तहोतृदेवमादित्यं, 'निचिक्युः' निश्चितवन्तः, ध्यातवन्त इत्यर्थः। कीदृशमिन्द्रं, 'श्वेतं' प्रकाशरूपत्वेन* शुक्लवर्णं। 'रश्मिं' रश्मियुक्तं, 'बोभुज्यमानं' सर्वैः प्राणिभिः दृष्टिद्वारेण पुनः पुनः भुज्यमानं। एतदेव स्पष्टीक्रियते, 'अपां नेतारं' आदित्याज्जायते वृष्टिरिति स्मृत्या सूर्यो जलस्य नेता तादृशं, 'भुवनस्य गोपां' भुवनस्य पालकं†॥

अथ चतुर्दशीमाह। (२४)"रोहिणीः ० नाव्यानां"(२४) इति। 'रोहिणीः' रोहितवर्णाः,‡ 'पिङ्गलाः' पिङ्गलवर्णाश्च, या आपस्तत्तद्भूमिसम्बन्धेन बहुविधा दृश्यन्ते। ताः सर्वा अपि सप्तहोतृरूपस्य आदित्यस्य रश्मिसम्बन्धे सति मेघेषु नानारूपत्वपरित्यञ्जकरूपाः,§ भवन्ति। तथा 'क्षरन्तीः' वृष्टिरूपेण

---

* प्रकाशमानत्वेनेति तै० पाठः।

† भूतजातपालकमिति तै० पाठः।

‡ लोहितवर्णा इति तै० पाठः।

§ नानारूपत्वं परित्यज्यैकरूपा इति तै० पाठः।

एकरूपाः। शतꣳसहस्राणि प्रयुतानि नाव्यानां[२४]।
[२५]अयं यः श्वेतो रश्मिः। परि सर्वमिदं जगत्। प्रजां
पशून् धनानि। अस्माकं ददातु[२५]। [२६]श्वेतो रश्मिः
परि सर्वं बभूव। सुवन् मह्यं पशून् विश्वरूपान्[२६]।
[२७]पतङ्गमक्तमसुरस्य मायया॥ १०॥

---

भूमौ पतन्त्यः ताः पिङ्गलादिवर्णा आपः, 'एकरूपाः', भवन्ति। वृष्टिबाहुल्येन भूमौ 'नाव्यानां' नावा तरणीयानां अपां, 'शतं सहस्राणि' प्रयुतानि शतसङ्ख्याबहुविधसहस्रलक्षसङ्ख्याकाश्च सम्पद्यते। वृष्टिकाले तत्र तत्रानेकप्रवाहा भवन्ति। तदेतत् सर्वं सप्तदशमाहात्म्यं॥

अथ पञ्चदशीमाह। [२५]"अयं यः ० अस्माकं ददातु"[२५] इति। 'यः' आदित्यः, श्वेतवर्णो रश्मियुक्तोऽस्ति सोऽयं 'सर्वमिदं' 'जगत्', परिव्याप्य वर्तमानः 'अस्माकं', प्रजादिकं 'ददातु'॥

अथ षोडशीमाह। [२६]"श्वेतो रश्मिः ० विश्वरूपान्"[२६] इति। 'श्वेतोरश्मिः' शुक्लवर्णरश्मियुक्तः आदित्यः 'सर्वं' जगत्, 'परिबभूव' परितो व्याप्तवान्, तादृश आदित्यः 'मह्यं' 'विश्वरूपान्' गोमहिष्यादिरूपेण बहुविधान्, 'पशून्', 'सुवत्' सौतु, प्रेरयत्वित्यर्थः॥

अथ सप्तदशीमाह। [२७]"पतङ्गमक्तं ० वेधसः"[२७] इति।

हृदा पंश्यन्ति मनंसा मनीषिणंः। समुद्रे अन्तः क-
वयो विचंक्षते। मरीचीनां पदमिच्छन्ति वेधसंः[१७]।
[१८]पतङ्गो वाचं मनंसा बिभर्त्ति। तां गन्धर्वोवदद्गर्भे अ-

---

असून् प्राणान् राति ददातीति 'असुरः' परमात्मा, तस्य 'मायया' अचिन्त्यशक्त्या, 'अक्तं' अभिव्यक्तं, 'पतङ्गं' आदित्यं, 'हृदा' 'मनसा' हृत्पुण्डरीकगतेन नियमितेनान्तःकरणेन, 'मनीषिणः' वेदशास्त्राभिज्ञाः महर्षयः, 'पश्यन्ति' ध्यात्वा साचात् कुर्वन्ति, 'कवयः' लौकिकवार्त्ताभिज्ञाः* पुरुषाः, 'समुद्रे अन्तः' समुद्र-समानेऽन्तरिक्षमध्ये, 'विचक्षते' विशेषेण कथयन्ति, अय-मादित्यः उदितः मध्याह्ने समागत इत्यादिव्यवहारं कुर्वन्ति। 'वेधसः' विधातारोऽनुष्ठानकुशलाः केचिद्यजमानाः, 'मरीचीनां', 'पदं' रश्मीनां स्थानमादित्यं, 'इच्छन्ति' आदित्यसायुज्यप्राप्त्यर्थमनुतिष्ठन्तीत्यर्थः॥

अथाष्टादशीमाह। [१८]"पतङ्गो वाचं ० निपान्ति"[१८] इति। 'पतङ्गः' आदित्यः, 'मनसा', स्वकीयेन, प्राणिनां 'वाचं', 'बिभर्त्ति' धारयति, अन्तर्यामिरूपेण वाचं प्रेरयतीत्यर्थः। तथाच पौराणिका आहुः, योऽन्तःप्रविश्य मम वाचमिमां प्रसुप्तां

---

* कालहस्तान्ताभिज्ञा इति तै० पाठः।

न्तः। तां द्योतमानाꣳ स्वर्यं मनीषाम्। ऋतस्य पदे कवयो निपान्ति(२८)। (२९)ये ग्राम्याः पशवो विश्वरूपाः। विरूपाः सन्तो बहुधैकरूपाः। अग्निस्ताꣳ अग्रे प्रमुमोक्तु देवः॥ ११॥

---

सञ्जीवयत्यखिलशक्तिधरः स्वधावेति। 'तां' आदित्यप्रेरितां वाचं, 'गर्भे अन्तः' शरीरस्य मध्ये, गन्धर्वनामको वायुरवदद्, उच्चारयति। गन्धान् वहतीति व्युत्पत्त्या गन्धर्वशब्दो वायुः 'अवदत्, उच्चारयति*। गन्धान् वहतीति व्युत्पत्त्या गन्धर्वशब्दो वायुमाचष्टे। वायुर्हि ताल्वादिस्थानेषु संयुक्तो वाचमुच्चारयति। 'तां' वायुनोच्चारितां, 'द्योतमानां' प्रकाशमानां, स्वर्यं स्वर्गस्य हेतुभूतां, 'मनीषां' मनसः ईशित्रीं आह्लादकरीमित्यर्थः। तादृशींवाचं 'कवयः' शास्त्राभिज्ञाः,'ऋतस्य पदे' सत्यस्य परब्रह्मणः स्थाने, 'निपान्ति' नितरां पालयन्ति। परब्रह्मविषयाणि वेदवाक्यानि सर्वदा पठन्तीत्यर्थः। तदेतत् सर्वं वाचःप्रेरकस्यादित्यस्य माहात्म्यं॥

अथैकोनविंशीमाह। (२९)"ये ग्राम्याः ० संविदानः"(२९) इति। 'ये' पशवः, 'ग्राम्याः' ग्रामे भवाः गवाश्वादयः, 'विश्वरूपाः' जातिभेदैः बहुविधाः, 'विरूपाः' वर्णादिभेदेन विविधाकाराः, एवं बहुधा दृश्यमानाः 'सन्तः', अपि पुनः पशुत्ला-

---

* एतच्चिह्नक्रोडीकृतपाठः E पुस्तके नास्ति।

प्रजापतिः प्रजया संविदानः(२९)। (३०)वीतꣳ स्तुके स्तु-
के। युवमस्मासु नियच्छतं। प्र प्र यज्ञपतिन्तिरः(३०)।
(३१)ये ग्राम्याः पशवो विश्वरूपाः। विरूपाः सन्तो बहु-
धैकरूपाः। तेषाꣳ सप्तानामिह रन्तिरस्तु। रायस्पो-

---

कारेणैकरूपाः 'तान्' सर्वान्, अग्निरूपः सप्तहोत्रदेवः, 'अग्रे प्रमुमोक्तु' प्रथमं तत्तत्स्थानं मुञ्चतु,* प्रमुच्य अस्मभ्यं ददात्वित्यर्थः। 'प्रजापतिः', च स्वकीयया 'प्रजया', 'संविदानः' एकमत्यङ्गतः, अस्मभ्यं पशून् ददात्विति शेषः॥

अथ विंशीमाह। (३०)"वीतꣳ स्तुके ० प्रयज्ञपतिन्तिरः" (३०) इति। हे अग्निप्रजापती 'युवं' उभौ युवां, 'स्तुके स्तुके' तत्तद्गवाद्यपत्ये, 'वीतं' प्रजननमुत्पत्तिं, 'अस्मासु' 'नियच्छतं' नियमेन सम्पादयतं। 'यज्ञपतिं' यजमानं, 'प्रप्रतिरः' अत्यन्तं प्रकर्षेण वर्द्धयतं॥

अथैकविंशीमाह। (३१)"ये ग्राम्याः ० सुवीर्यायाय"(३१) इति। ग्राम्यादिशब्दाः पूर्ववद्योज्याः। 'तेषां' ग्राम्यपशूनां, 'सप्तानां' गोऽश्वाजाविपुरुषगर्दभोष्ट्ररूपाणां सप्तसङ्ख्याकानां,

---

* तत्तद्भेदेनाऽविमुञ्चत् इति तै० पाठः।

षाय सुप्रजास्त्वाय सुवीर्याय(२१)। (२२)य आरण्याः पशवो विश्वरूपाः। विरूपाः सन्तो बहुधैकरूपाः। वायुस्ताꣳ अग्रे प्रमुमोक्तु देवः। प्रजापतिः प्रजया संविदानः(२२)। (२३)इडायै सृप्तं घृतवच्चराचरं। देवा अन्वविन्दन् गुहाहितं(२३)। (२४)य आरण्याः पशवो विश्वरूपाः। विरूपाः सन्तो बहुधैकरूपाः। तेषाꣳ स-

---

इह अस्मद्गृहे, 'रन्तिः' क्रीडा, 'अस्तु' तच्च धनपुष्टिशोभनापत्यशोभनवीर्यार्थं सम्पद्यते॥

अथ द्वाविंशीमाह। (२२)"य आरण्याः ० संविदानः"(२२) इति। अरण्ये भवाः आरण्याः हिंस्राः श्वापदादयः तान्, अरण्याधिपतिर्वायुः 'प्रमुमोक्तु'। अन्यत् पूर्ववत्॥

अथ त्रयोविंशीमाह। (२३)"इडायै सृप्तं ० गुहाहितं"(२३) इति। 'इडायै' गोसम्पादनार्थं, 'सृप्तं' प्राप्तं, 'घृतवत्' घृतयुक्तं, घृताकारमित्यर्थः। तादृशं 'चराचरं' स्थावरजङ्गमरूपं जगदनुग्रहहेतुं, 'गुहाहितं' प्राणिनां बुद्धाववस्थितं, सम्पद्दोग्धदेवं देवाः 'अन्वविन्दन्' अन्विष्य लब्धवन्तः॥

अथ चतुर्विंशीमाह। (२४)"य आरण्याः ० सुवीर्याय"(२४)

स्नानामिह रन्तिरस्तु। रायस्पोषाय सुप्रजास्त्वाय सु-
वीर्याय(२४) ॥ १२ ॥

आत्माजनानां, विकुर्वन्तं विपश्चिं, प्रजानां, वसुधा-
नीं विराजं, चरन्तं, गोमतीं, मे नियच्छतु, एकं चक्रं,
व्योमन्, मायया, देव, एकरूपा, अष्टौ च ॥ अनु०।
॥ ११ ॥

---

इति। 'सप्तानां' द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनामधे-
यानां। अन्यत् पूर्ववत्॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-
रण्यके तृतीयप्रपाठके एकादशोऽनुवाकः॥ ११॥

---

अथ द्वादशोऽनुवाकः।

(१)सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्।

---

अथ द्वादशोऽनुवाकः।

एतैरेकादशभिरनुवाकैश्चातुर्होत्रचयनमन्त्रा उक्ताः*। अथ नारायणनाम्ना पुरुषसूक्तनाम्ना च व्यवह्रियमाणोऽनुवाक उच्यते। तस्य विनियोगं महाग्नावापस्तम्ब आह। पुरस्तात् प्रतीचीं पुरुषाकृतिं चिनोति पुरुषशिरो भवति, सहस्रशीर्षा पुरुष इत्युपहितां पुरुषेण नारायणेन यजमान उपतिष्ठतेति। ब्रह्ममेधेऽपि प्रेतदाहोपस्थाने विनियोगं भरद्वाज आह। नारायणाभ्यामुपस्थानमिति। अयं चोत्तरश्चेत्युभावनुवाकौ नारायणसञ्ज्ञौ नारायणाख्येन केनचित् ऋषिणा दृष्टत्वात्, जगत्कारणस्य नारायणाख्यस्य पुरुषस्य प्रतिपादकत्वात्†। तत्रास्मिन् द्वादशेऽनुवाके प्रथमामृचमाह। (१)"सहस्रशीर्षा ० अत्यतिष्ठद्दशाङ्गुलम्"(१) इति। सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः 'पुरुषः', सोऽयं 'सहस्रशीर्षा', सहस्रशब्दस्योपलक्षणत्वात् अनन्तैः शिरोभिर्युक्त इत्यर्थः, यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात् तदीयान्येवेति सहस्रशीर्षत्वं। एवमक्षिषु पादेष्वपि योजनीयं। 'सः' पुरुषः, 'भूमिं'

---

* अभिहिता इति F, G चिह्नित-पुस्तकद्वयपाठः।

† प्रतिपादकत्वाच्चेति G चिह्नित-पुस्तकपाठः।

स भूमिं विश्वतो वृत्वा। अत्यतिष्ठद्दशाङ्गुलम्[१]। [२]पुरुष एवेदꣳ सर्वम्। यद्भूतं यच्च भव्यम्। उतामृतत्वस्येशानः। यदन्नेनातिरोहति[२]। [३]एतावानस्य महिमा। अतो ज्यायाꣳश्च पुरुषः॥ १॥

---

ब्रह्माण्डगोलकरूपां 'विश्वतो वृत्वा' सर्वतः परिवेष्ट्य, दशाङ्गुलपरिमितं देशं 'अत्यतिष्ठत्' अतिक्रम्य स्थितः। दशाङ्गुलमित्युपलक्षणं, ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः॥

अथ द्वितीयामाह। [२]"पुरुष एवेदꣳ० यदन्नेनातिरोहति"[२] इति। 'यद्भूतं' अतीतं जगत्, 'यच्च भव्यं' भविष्यज्जगत्, यदपि 'इदं' वर्तमानं जगत्, तत् 'सर्वं', 'पुरुष एव'। यथाऽस्मिन्* कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः, तथा एवातीतागामिनोरपि कल्पयोर्द्रष्टव्यं। 'उत' अपि च, 'अमृतत्वस्य' देवत्वस्य, अयं 'ईशानः' स्वामी, यस्मात् कारणात् 'अन्नेन' प्राणिनां भोग्येनान्नेन निमित्तभूतेन,'अतिरोहति',स्वकीयकारणावस्थामतिक्रम्य परिदृश्यमानं जगदवस्थां प्राप्नोति। तस्मात् प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारात् नेदन्तस्य वस्तुतत्त्वमित्यर्थः॥

अथ तृतीयामाह। [३]"एतावानस्य० त्रिपादस्यामृतं दिवि"

---

* यदा यस्मिन्निति तै० पाठः।

पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृतं दिवि[१]।
[४]त्रिपादूर्ध्व उदैत् पुरुषः। पादोऽस्येहाऽऽभवात् पुनः।

---

(१) इति। अतीतानागतवर्तमानरूपं जगद्यावदस्ति 'एतावान्' सर्वोऽपि, 'अस्य' पुरुषस्य, 'महिमा'। स्वकीयसामर्थ्यविशेषः, न तु तस्य वास्तवं स्वरूपं वास्तववस्तुपुरुषः 'अतः' महिम्नोऽपि, 'ज्यायान्' अतिशयेनाधिकः। एतच्च* स्पष्टीक्रियते। 'विश्वाभूतानि'† कालत्रयवर्त्तीनि प्राणिजातानि, 'अस्य' पुरुषस्य, 'पादः' चतुर्थोंऽशः। 'अस्य', अवशिष्टं 'त्रिपात् स्वरूपं' 'अमृतं' विनाशरहितं सत्, 'दिवि' द्योतनात्मके स्वप्रकाशरूपे, अवतिष्ठते। यद्यपि सत्यं ज्ञानमनन्तं ब्रह्मेत्याम्नातस्य परब्रह्मण इयत्ताया अभावात् अंशचतुष्टयं न निरूपयितुं शक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाऽत्यल्पमिति विवक्षितत्वात् पादत्वोपन्यासः॥

अथ चतुर्थीमाह। (४)"त्रिपादूर्ध्व उदैत्पुरुषः० साशनानशने अभि"(४) इति। योऽयं 'त्रिपात्','पुरुषः' संसारस्पर्शरहितब्रह्मस्वरूपः‡। सोऽयं 'ऊर्ध्व उदैत्' अस्मादज्ञानकार्यात्

---

* एतच्चोभयमिति F, G चिह्नित-पुस्तकद्वय-पाठः।

† सर्वाणि भूतानि इति G चिह्नित-पुस्तकपाठः।

‡ संसारस्पर्शरहितब्रह्मस्वरूप इति तैत्तिरीयाचारपुस्तकस्य G चिह्नित-पुस्तकस्य च पाठः।

ततो विष्वङ्व्यक्रामत्। साशनानशने अभि[४]। [५]त-

संसारादहिर्भूतः सन् अज्ञत्वैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवान्। तस्य योऽयं 'पादः' लेशः, सोऽयं 'इह' मायायां, 'पुनराभवत्'। सृष्टिसंहाराभ्यां पुनः पुनरागच्छति। अस्य सर्वस्य जगतः, परमात्मांशत्वं* भगवताप्युक्तम्, विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति। 'ततः' मायया आगत्यानन्तरं† 'विष्वङ्' देवतिर्यगादिरूपेण‡ विविधः सन्, 'व्यक्रामत्' व्याप्तवान्। किं कृत्वा। 'साशनानशने' 'अभि,' लक्ष्य साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणिजातं अनशनं तद्रहितमचेतनं गिरिनद्यादिकं तदुभयं यथास्यात् तथा स्वयमेवंविधो भूत्वा व्याप्तवानित्यर्थः॥

अथ पञ्चमीमाह। [५]"तस्माद्विराडजायत॰ पश्चाद्भूमिमथोपुरः"[५] इति। विष्वङ्व्यक्रामदिति यदुक्तं तदेव प्रपञ्च्यते। 'तस्मात्' आदिपुरुषात्, 'विराट् अजायत' ब्रह्माण्डदेह उत्पन्नः, विविधं राजन्ते वस्तून्यत्रेति विराट्, 'विराजो अधि' विराड् देहस्योपरि स्थितमेव देहमधिकरणं कृत्वा,

* परमात्मोपदेशत्वमिति तै॰ पाठः।

† माययागत्यनन्तरमिति तै॰ पाठः। मायायामागत्यनन्तरमिति G चिह्नित-पुस्तकपाठः।

‡ देवतिर्यगादिरूपेणेति तै॰पाठः। G चिह्नित पुस्तकस्य च पाठः।

स्मांद्विराडंजायत । विराजो अधि पूरुषः । स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः(५) ॥ २ ॥

(१)यत् पुरुषेण हविषा । देवा यज्ञमतन्वत । वसन्तो

---

'पुरुषः' तद्देहाभिमानी कश्चित् पुमान्, 'अजायत' । योऽयं सर्ववेदान्तवेद्यः परमात्मा स एव स्वकीयया मायया विराड्देहं ब्रह्माण्डं सृष्ट्वा तत्र जीवः* अभवत् । एतच्चाथर्वणिका उत्तरतापनीये समामनन्ति† । स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैवेति । 'स जातः' विराट् पुरुषः 'अत्यरिच्यत' अतिरिक्तोऽभूत्, विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् । 'पश्चात्' देवादिजीवभावादूर्ध्वं, 'भूमिं' ससर्जेति शेषः । 'अथो' भूमिसृष्टेरनन्तरं, तेषां जीवानां 'पुरः' 'ससर्ज', आपूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥

अथ षष्ठीमाह । (१)"यत् पुरुषेण० ग्रीष्म इध्मः शरद्धविः" (१) इति । पूर्वोक्तक्रमेण देवशरीरेषूत्पन्नेषु ते 'देवाः', उत्तरसृष्टिसिध्यर्थं तत्साधनत्वेन 'यज्ञमतन्वत' कञ्चिद्यज्ञमन्वतिष्ठन् ।

---

* तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोभवत् इति F पुस्तकपाठः । तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवताऽभवत् इति ते० पाठः । तत्र जीवरूपेण ब्रह्माण्डाभिमानी देवतात्मा जीवोभवत् इतिG चिह्नित-पुस्तकस्य पाठः ।

† साधु समामनन्तीति F, G चिह्नित पुस्तकद्वयपाठः ।

अस्यासीदाज्यं। ग्रीष्म इध्मः शरद्धविः[६]। [७]सप्तास्यासन् परिधयः। त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वा-

---

बाह्यद्रव्यस्याप्यनुत्पन्नत्वेन हविरन्तरासम्भवात् पुरुषस्वरूपमेव मनसा हविष्ट्वेन सङ्कल्प्य तेन 'पुरुषाख्येन', 'हविषा', 'यत्' यदा, मानसं 'यज्ञं', अकुर्वत तदानीं 'अस्य' यज्ञस्य, वसन्तर्त्तुरेव 'आज्यं', अभूत्, तमेवाज्यत्वेन सङ्कल्पितवन्तः, एवं 'ग्रीष्मः', इध्मत्वेन स-ङ्कल्पितः। 'शरत्', पुरोडाशादिहविष्ट्वेन सङ्कल्पिता। पूर्वं पु-रुषस्य हविःसामान्यरूपत्वेन सङ्कल्पः। वसन्तादीनां त्वाज्या-दिविशेषरूपत्वेनेति द्रष्टव्यं॥

अथ सप्तमीमाह। [७]"सप्तास्यासन् परिधयः० अबध्नन् पु-रुषं पशुं"[७] इति। 'अस्य' साङ्कल्पिकयज्ञस्य, गायत्र्यादीनि 'सप्त', छन्दांसि 'परिधयः', 'आसन्', ऐष्टिकस्याहवनीयस्य, त्रयः परिधयः औत्तरवेदिकास्त्रयः, आदित्यश्च सप्तमः परि-धिप्रतिनिधिरूपः। अत एवाम्नायते, न पुरस्तात् परिदधा-त्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्तीति। त एत आदि-त्यसहिताः* सप्त परिधयोऽत्र सप्तच्छन्दोरूपाः। तथा 'समिधः', 'त्रिःसप्त' त्रिगुणितसप्तसङ्ख्याकाः एकविंशतिः, 'कृताः' द्वादश

---

* तेष्वादित्यसहिता इति G चिह्नित-पुस्तकपाठः।

नाः। अबध्नन् पुरुषं पशुम्(७)। (८)तं यज्ञं बर्हिषि प्रौक्षन्। पुरुषं जातमग्रतः॥ ३॥

तेन देवा अयजन्त। साध्या ऋषयश्च ये(८)। (९)तस्माद्यज्ञात् सर्व्वहुतः। सम्भृतं पृषदाज्यं पशूꣳस्ताꣳ-

मासाः, पञ्चर्तवः, त्रय इमे लोकाः, असावादित्य एकविंश इति श्रुताः पदार्था एकविंशतिदारुयुक्तेध्मत्वेन भाविताः। यः पुरुषो* वै राजोऽस्ति तं 'पुरुषं', 'देवाः' प्रजापतिप्राणेन्द्रियरूपाः, 'यज्ञं तन्वानाः' मानसयज्ञं कुर्वाणाः, 'पशुमबध्नन्' विराट्पुरुषमेव पशुत्वेन भावितवन्तः। एतदेवाभिप्रेत्य पूर्वत्र पुरुषेण हविषेत्युक्तं॥

अथाष्टमीमाह। (८)"तं यज्ञं बर्हिषि प्रौक्षन्॰साध्या ऋषयश्च ये"(८) इति। 'यज्ञं' यज्ञसाधनभूतं, 'तं' पुरुषं, पशुत्वभावनया यूपे बद्धं 'बर्हिषि' मानसे यज्ञे, 'प्रौक्षन्' प्रोक्षितवन्तः। कीदृशं 'अग्रतः' सर्वसृष्टेः पूर्वं, 'पुरुषं जातं' पुरुषत्वेनोत्पन्नं। एतच्च पूर्वमेवोक्तं। तस्माद्विराडजायत विराजो अधिपूरुष इति। 'तेन' पुरुषरूपेण पशुना, 'देवाः' 'अयजन्त' मानसयागं निष्पादितवन्तः। के ते देवा इति त एवोच्यन्ते। 'साध्याः' सृष्टिसाधनयोग्याः, प्रजापतिप्राणरूपाः तदनुकूलाः, 'ऋषयः' मन्त्रद्रष्टारश्च, 'ये', सन्ति ते सर्वेऽपि 'अयजन्त'॥

अथ नवमीमाह। (९)"तस्माद्यज्ञात् सर्वहुत ॰ ग्राम्याश्च ये"

* सत् यः पुरुष इति G चिह्नित-पुस्तकपाठः।

स्तांश्चक्रे वायव्यान्। आरण्यान् ग्राम्याश्च ये[९]। [१०]तस्मा-
द्यज्ञात् सर्वहुतः। ऋचः सामानि जज्ञिरे। छन्दाꣳसि
जज्ञिरे तस्मात्। यजुस्तस्मादजायत[१०]॥ ४ ॥

[११]तस्मादश्वा अजायन्त। ये के चोभयादतः। गा-

---

(९) इति। 'सर्वहुतः' सर्वात्मकः पुरुषो यस्मिन् यज्ञे हूयते सोयं सर्वहुतः तादृशात्, पूर्वोक्तात् मानसात् 'यज्ञात्', 'पृषदाज्यं', 'सम्भृतं' सम्पादितं, दधि चाज्यं चेत्येवमादिभोग्यजातं सम्पादितमित्यर्थः। तथा 'वायव्यान्' वायुदेवताकान्, लोकप्रसिद्धान्, 'आरण्यान्', 'पशून्', 'चक्रे' उत्पादितवान्। आरण्याः हिंस्रादयः तथा ये 'ग्राम्याः' गवाश्वादयं, तानप्युत्पादितवान्। पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं मन्त्रान्तरव्याख्याने समाम्नातं। वायवस्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षाः। अन्तरिक्षदेवत्याः खलु वै पशवः। वायव एवैनान् परिददातीति॥

अथ दशमीमाह। [१०]"तस्माद्यज्ञात् ॰ यजुस्तस्मादजायत"[१०] इति। 'छन्दांसि' गायत्र्यादीनि। स्पष्टमन्यत्॥

अथैकादशीमाह। [११]"तस्मादश्वा अजायत॰तस्माज्जाता अजावयः"[११] इति। अश्वव्यतिरिक्ता गर्दभा अश्वतराश्च ये

यो ह जज्ञिरे तस्मात्। तस्माज्जाता अजावयः(११)। (१२)
यत् पुरुषं व्यदधुः। कतिधा व्यकल्पयन्। मुखं किमस्य
कौ बाहू। कावूरू पादावुच्येते(१२)। (१३)ब्राह्मणोऽस्य मु-
खमासीत्। बाहू राजन्यः कृतः॥ ५॥

---

केचिदूर्ध्वाधोभागयोरुभयोर्दन्तयुक्ताः सन्ति तेऽप्यश्ववत् 'अजा-
यन्त'। तथा 'गावः', अजाश्चावयश्च ते सर्वेऽप्युत्पन्नाः॥

अथ द्वादशीमाह। (१२)"यत् पुरुषं॰ कावूरू पादावुच्येते"
(१२) इति। प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुमत्र ब्रह्म-
वादिनां प्रश्ना उच्यन्ते। प्रजापतेः प्राणरूपा देवाः 'यत्' यदा,
'पुरुषं' विराड्रूपं,'व्यदधुः' सङ्कल्पेनोत्पादितवन्तः। तदानीं 'क-
तिधा' कतिभिः प्रकारैः, 'व्यकल्पयन्' विविधं कल्पितवन्तः।
एष सामान्यरूपः प्रश्नः। मुखं किमित्यादयो विशेषप्रश्नाः॥

अथ त्रयोदशीमाह। (१३)"ब्राह्मणोऽस्य ॰ अजायत"(१३)
इति। योऽयं ब्राह्मणजातिविशिष्टः पुरुषः सोऽयं 'अस्य' प्रजा-
पतेः, 'मुखमासीत्', मुखादुत्पन्न इत्यर्थः। योऽयं 'राजन्यः' क्ष-
त्रियजातिः, स बाहुत्वेन निष्पादितः, बाहुभ्यामुत्पादित
इत्यर्थः। 'तत्' तदानीं, यो प्रजापतेः 'ऊरू', तद्रूपः 'वैश्यः',
सम्पन्नः* ऊरुभ्यामुत्पन्न इत्यर्थः। तथा 'पद्भ्यां शूद्रः', उत्पन्नः।

---

* उत्पन्न इति तै॰ पाठः।

ऊरू तद॑स्य यद्वैश्यः॑। प॒द्भ्याꣳ शू॒द्रो अ॑जायत[१३]।
[१४]चन्द्र॒मा म॒न॑सो जा॒तः। चक्षोः॒ सूर्यो॑ अ॑जायत।
मु॒खादिन्द्र॑श्चा॒ग्निश्च॑। प्रा॒णाद्वा॒युर॑जायत[१४]। [१५]ना-
भ्या॑ आसीद॒न्तरि॑क्षं। शी॒र्ष्णो द्यौः सम॑वर्त्तत। प॒द्भ्यां
भूमि॒र्दिशः॒ श्रोत्रा॑त्। तथा॑ लो॒काꣳ अ॑कल्पयन्[१५]॥ ६॥

इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिः सप्तमकाण्डे च मुखतस्त्रिवृतं निरमिमीतेत्यादौ विस्पष्टमाम्नाता। अतः प्रश्नोत्तरे उभे अपि तत्परत्वेनैव* योजनीये॥

अथ चतुर्दशीमाह। [१४]"चन्द्रमा मनसो जातः॰ प्राणाद्वायुरजायत"[१४] इति। यथा दध्याज्यादिद्रव्याणि गवादिपशवः ऋगादिवेदाः ब्राह्मणादिमनुष्याश्च तस्मादुत्पन्नाः, एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्नाः। 'चक्षोः' चक्षुषः॥

अथ पञ्चदशीमाह। [१५]"नाभ्या आसीदन्तरिक्षं॰ अकल्पयन्"[१५] इति। यथा देवास्तस्मादुत्पन्नाः। तथा लोकानप्यन्तरिक्षादीन् प्रजापतेः नाभ्याद्यवयवात्† 'अकल्पयन्' उत्पादितवन्तः॥

* तत्पारत्वेनैव तयोरिति F पुस्तकपाठः।
† नाभ्याद्यवयवेभ्य इति तै॰ पाठः।

[१६]वेदाहमेतं पुरुषं महान्तं। आदित्यवर्णं तमसस्तु पारे। सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाभिवदन् यदास्ते[१६]। [१७]धाता पुरस्ताद्यमुदाज-

---

अथ षोडशीमाह। [१६]"वेदाहमेतं ० यदास्ते"[१६] इति। यथोक्तविराट्पुरुषध्यानमत्र प्रतिपाद्यते। तत्र मन्त्रद्रष्टा स्वकीयं ध्यानानुभवं प्रकटयति। 'यत्' यः पुरुषः, 'सर्वाणि रूपाणि' देवमनुष्यशरीराणि, 'विचित्य' विशेषेण निष्पाद्य, 'नामानि' च देवोऽयं पशुरयमित्यादीनि, 'कृत्वा', 'अभिवदन्' तैर्नामभिरभितो व्यवहरन्, 'आस्ते', 'एतं' 'पुरुषं' विराजं, 'महान्तं' सर्वगुणैरधिकं, 'आदित्यवर्णं' आदित्यवत् प्रकाशमानं, 'वेद' 'अहं', जानामि, ध्यानेन सर्वदा अनुभवामीत्यर्थः। स च पुरुषः 'तमसः पारे' अज्ञानात्परस्ताद्वर्त्तते। अतो गुरुशास्त्रोपदेशरहितैर्मूढैरनुभवितुमशक्य इत्यर्थः॥

अथ सप्तदशीमाह। [१७]"धाता ० अयनाय विद्यते"[१७] इति। 'धाता' प्रजापतिः, 'यं' विराट्पुरुषं, 'उदाजहार' अस्मदादीनामुपकारार्थं प्रख्यापितवान्। 'चतस्रः प्रदिशः' चतुर्दिक्षु वर्तिनः सर्वान् प्राणिनः, 'प्रविद्वान्' प्रकर्षेण जानन्, 'शक्रः' इन्द्रः, तदनुग्रहार्थं प्रख्यापितवान्। धातुरिन्द्रस्योपदेशात् 'तं'

हार॑। शक्रः प्रवि॒द्वान् प्र॒दिश॒श्चत॑स्रः। तमे॒वं वि॒द्वा-
न॒मृत॑ इ॒ह भ॑वति। नान्यः पन्था॒ अय॑नाय विद्यते(१७)।
(१८)य॒ज्ञेन॑ य॒ज्ञम॑यजन्त दे॒वाः। तानि॒ धर्मा॑णि प्रथ॒मान्या॑-

विराट्पुरुषं 'एवं' उक्तप्रकारेण, 'विद्वान्' साक्षात् कुर्वन्, 'इह' अस्मिन्नेव जन्मनि, 'अमृतः' मरणरहितः, 'भवति'। यदा विराट्पुरुषोऽहमिति साक्षात् करोति तदानीं वर्त्तमानदेहस्य तत्स्वरूपत्वाभावात् तन्मरणेन *अयमुपासको न म्रियते 'अयनाय' अमृतत्वप्राप्तये, 'अन्यः पन्थाः' यथोक्तविराट्पुरुषसाक्षात्कारमन्तरेणान्यो मार्गः, 'न विद्यते'। न हि कर्मसहस्रैरप्यमृतत्वं सम्पादयितुं शक्यते। न कर्मणा न प्रजया धनेनेत्यादि शास्त्रात्॥

अथाष्टादशीमाह। (१८)"यज्ञेन ० सन्ति देवाः"(१८) इति। अत्र कृत्स्नानुवाकतात्पर्यं सङ्क्षिप्योपन्यस्यति। 'देवाः' प्रजापतिप्राणरूपाः,'यज्ञेन' यथोक्तेन मानसेन सङ्कल्पेन,'यज्ञं' यथोक्तयज्ञस्वरूपं प्रजापतिं, 'अयजन्त' पूजितवन्तः, तस्मात् पूजनात् 'तानि' प्रसिद्धानि, 'धर्माणि' जगद्रूपविकाराणां धारकाणि, 'प्रथमानि' मुख्यानि भूतानि,†'आसन्', एतावता सृष्टिप्रतिपा-

* तत्स्वरूपत्वाभावात् अन्यमरणेनेति G चिह्नितपुस्तकपाठः।
† मुख्यभूतानीति G चिह्नितपुस्तकपाठः।

सन्॥ ते ह नाकं महिमानः सचन्ते। यत्र पूर्वे साध्याः सन्ति देवाः(१८)॥ ७॥*

पूरुषः, पुरः, अग्रतः, अजायत, कृतः, अकल्पयन्, आसन्, द्वे च॥ १२॥

---

इत्येकोनुवाकभागार्थः† सङ्गृहीतः। अथोपासनतत्फलरूपेऽनुवाकभागार्थः सङ्गृह्यते, 'यत्र' यस्मिन् विराट्प्राप्तिरूपे, नाके, 'पूर्वे साध्याः' पुरातना विराडुपास्तिसाधकाः,‡ 'देवाः', 'सन्ति' तिष्ठन्ति। तं 'नाकं' विराट्प्राप्तिरूपं स्वर्गं, 'ते महिमानः' तदुपासका महात्मानः, 'सचन्ते' समवयन्ति प्राप्नुवन्ति॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके द्वादशोऽनुवाकः॥ १२॥

---

* एतत्पुरुषसूक्ते ऋग्वेदीयपुरुषसूक्तात् पाठभेदो दृश्यते। एतदीया सप्तमी ऋक् 'तथा लोकाꣳ अकल्पयन्' इत्यतः परं पठिता। तथा षोडशी सप्तदशी च द्वे ऋचे ऋग्वेदीयसूक्ते न दृश्येते।

† सृष्टिप्रतिसृष्टिप्रतिपादका इति तै॰ पाठः।

‡ विराड्रूपोपास्तिसाधका इति G चिह्नितपुस्तकपाठः।

अथ त्रयोदशोऽनुवाकः।

[1]अद्भ्यः सम्भूतः पृथिव्यै रसाच्च। विश्वकर्मणः समवर्तताधि। तस्य त्वष्टा विदधद्रूपमेति। तत् पुरुषस्य

---

अथ त्रयोदशोऽनुवाकः।

अथोत्तरनारायणाख्यः कश्चिदनुवाकस्तस्य च विनियोगं पुरुषमेधे आपस्तम्ब आह। उत्तरनारायणेनादित्यमुपस्थायेति। तत्र प्रथमामृचमाह। [1]"अद्भ्यः सम्भूतः • विश्वमाजानमग्रे"[1] इति। योऽयं विराड्रूपो नारायणाख्यः पुरुषः सोऽयं 'अद्भ्यः सम्भूतः' सर्वत्र* व्याप्तेषु जलेषु क्षीरमध्ये मण्डवत् ब्रह्माण्डगोलकमुत्पन्नं। न केवलमद्भ्य एव किन्तु 'पृथिव्यै रसाच्च' भूम्याः सम्बन्धी योऽयं रसः सारः तस्मादप्युत्पन्नः। मण्डस्य योऽयं घनीभावः स पार्थिवः, स च तन्मध्यद्रव्यांशाः† ते आप्याः, यत् कठिनं सा पृथिवी, यद्द्रवं तदाप इत्यादिश्रुतेः। 'विश्वकर्मणः' जगत्कर्तुः परमेश्वरात्, 'अधिसमवर्तत' आधिक्येन निष्पन्नः' योऽयं ब्रह्माण्डाभिमानी चेतनः पुमान् सोऽयमीश्वरांशः 'तस्य' विराट्पुरुषस्य, 'रूपं' चतुर्दशलोकरूपावयवसंस्थानं 'विदधत्' निष्पादयन्। 'त्वष्टा' विश्वकर्मा जन-

---

* सर्वत इति F चिह्नितपुस्तकपाठः।

† ये च तन्मध्ये द्रवांशा इति F, G, चिह्नितपुस्तकद्वयपाठः।

विश्वमाजानमग्रे[१]। [२]वेदाहमेतं पुरुषं महान्तं। आ-
दित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह
भवति। नान्यः पन्था विद्यतेऽयनाय[२]। [३]प्रजापति-
श्चरति गर्भे अन्तः। अजायमानो बहुधा विजायते॥
॥ १ ॥
तस्य धीराः परिजानन्ति योनिं। मरीचीनां पद-

---

दीश्वरः, 'एति' प्रवर्तते, 'पुरुषस्य' विराडाख्यस्य, सम्बन्धि 'तत्' विश्वं, प्रसिद्धं* देवमनुष्यादिरूपं सर्वं, जगत् 'अग्रे' सृष्ट्यादौ, 'आजानं' सर्वत उत्पन्नं॥

अथ द्वितीयामाह। (२)"वेदाहमेतं • विद्यतेयनाय"(२) इति। पूर्ववत् व्याख्येयं॥

अथ तृतीयामाह। (३)"प्रजापतिश्चरति• पदमिच्छन्ति वेधसः"(३) इति। ब्रह्माण्डरूपे 'गर्भे', 'अन्तः' मध्ये, 'प्रजापतिः', विग्रहवान् भूत्वा 'चरति'। स च वास्तवेन रूपेण सत्यं ज्ञानमनन्तं ब्रह्मेत्येतादृशत्वात् 'अजायमानः,' एव तथापि मायिकेन रूपेण 'बहुधा' स्थावरजङ्गमादिबहुप्रकारः, विशेषेण 'जायते'। 'तस्य' प्रजापतेः, 'योनिं' जगत्कारणरूपं वास्तवं स्वरूपं, 'धीराः' धैर्यवन्तो योगेन निरुद्धेन्द्रियाः महात्मानः, 'जानन्ति', 'वेध-

---

* तद्विश्वप्रसिद्धमिति G चिह्नितपुस्तकपाठः।

मिच्छन्ति वेधसः(३)। (४)यो देवेभ्य आतपति। यो देवानां पुरोहितः। पूर्वो यो देवेभ्यो जातः। नमो रुचाय ब्राह्मये(४)। (५)रुचं ब्राह्मं जनयन्तः। देवा अग्रे त-

---

सः' विधातारः, सृष्टिकर्तारः*। तमेवोपास्यं 'मरीचीनां' मरीच्यत्रिप्रमुखानां महर्षीणां, 'पदं' जगदुत्पादकलक्षणं, 'इच्छन्ति'॥

अथ चतुर्थीमाह। (४)"यो देवेभ्यः • रुचाय ब्राह्मये" (४) इति। 'यः' परमेश्वरः, 'देवेभ्यः' देवार्थं, 'आतपति' सर्वत्र प्रकाशते, देवानां देवत्वसिद्धये तत्तद्धृदयेषु चैतन्यरूपेण प्रविश्याविर्भवति। 'यः', च देवानां 'पुरोहितः' बृहस्पतिः, बभूव। बृहस्पतिर्देवानां पुरोहित इति श्रुतेः। 'यः' च 'देवेभ्यः', 'पूर्वो जातः' प्रथमभावी हिरण्यगर्भरूपेणोत्पन्नः, हिरण्यगर्भः समवर्त्तताग्रे इति श्रुतेः। तादृशाय 'रुचाय' रोचमानाय स्वयम्प्रकाशाय, 'ब्राह्मये' परब्रह्मस्वरूपाय, ब्रह्मणा वेदेन प्रतिपाद्याय वा, 'नमः' नमस्कारोऽस्तु॥

अथ पञ्चमीमाह। (५)"रुचं ब्राह्मं • देवा अब्रुवन्"(५) इति। 'देवाः', सर्वे 'अग्रे' सृष्ट्यादौ, ब्रह्मविद्यासम्प्रदायप्रवर्त्तनकाले, 'ब्राह्मं रुचं' परब्रह्मसम्बन्धि चैतन्यं, 'जनयन्तः'

---

* कर्त्तार इति G चिह्नितपुस्तकपाठः।

दब्रुवन्। यस्त्वैवं ब्राह्मणो विद्यात्। तस्य देवा अ-
सन् वशे[५]। [६]ह्रीश्च ते लक्ष्मीश्च पत्न्यौ। अहोरात्रे पार्श्वे।

---

विद्यया प्रादुर्भावयन्तः, 'तत्' ब्रह्मतत्त्वं, सम्बोध्य 'अब्रुवन्' वक्ष्यमाणं वाक्यमुक्तवन्तः। किं तद्वाक्यमिति तदुच्यते। हे परमात्मन् 'यः', कश्चित् 'ब्राह्मणः', पुमान् 'त्वां', 'एवं' यथोक्तप्रकारेण, 'विद्यात्', 'तस्य' ब्रह्मविदः, सर्वे 'देवाः', 'वशे असन्', अधीना भवन्ति, स्वयं हि तेषां देवानामन्तर्यामी परमात्मा भवति, तस्माद्देवा एतदधीना नतस्य देवा ईश्वराः। एतमेवार्थं वाजसनेयिनो विस्पष्टमामनन्ति। य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति तस्य देवाश्च नाभूत्या ईशते। आत्मा ह्येषां सभवतीति॥

अथ यजुरात्मानं कश्चिन्मन्त्रमाह। (६)"ह्रीश्च ते ० सर्वं मनिषाण"(६) इति। 'ह्रीः' लज्जाभिमानिनी देवता। 'लक्ष्मीः' ऐश्वर्याभिमानिनी देवता। हे परमात्मन्। 'ह्रीश्च', 'लक्ष्मीश्च' 'ते' तव, 'पत्न्यौ' भार्यास्थानीये। ये च 'अहोरात्रे', ते 'पार्श्वे' पार्श्वद्वयस्थानीये। 'नक्षत्राणि' आकाशे दृश्यमानानि, 'रूपं' तव शरीरस्थानीयं*। 'अश्विनौ', द्योर्देवौ तौ तव 'व्यात्तं' विवृतमुखस्थानीयं। तथाविध हे विराट्पुरुष 'इष्टं' अस्मदपेक्षितं 'आत्मबोधं' 'मनिषाण' अनुमन्यस्व, देवी-

---

* तवरूपस्थानीयानीति G चिह्नितपुस्तकपाठः।

नक्षत्राणि रूपं। अश्विनौ व्यात्तं। इष्टं मनिषाण। अमुं मनिषाण। सर्वं मनिषाण(६) ॥ २ ॥

जायते, वर्षं, सप्त च ॥ अनु० १३ ॥

---

अथ चतुर्दशोऽनुवाकः।

(१)भर्त्ता सन् भ्रियमाणो विभर्त्ति। एको देवो बहु-

---

त्यर्थः। 'अमुं' लोके दृश्यमानं गवाश्वादिकं, 'मनिषाण' प्रयच्छ, किं बहुना 'सर्वं मनिषाण' ऐहिकमामुष्मिकं वा सर्वं दृष्टं देहि॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके त्रयोदशोऽनुवाकः॥ १३ ॥

---

अथ चतुर्दशोऽनुवाकः।

अथ भर्तृसूक्ताख्यः कश्चिदनुवाकोऽभिधीयते। तस्य च मृत्यवे देवतमित्यस्मिन् पशौ नारिष्टहोमानन्तरमुपहो-

धा निविष्टः। यदा भारन्तन्द्रयते स भर्तुं। निधाय

मार्थत्वेन विनियोगो द्रष्टव्यः। तथा चापस्तम्ब आह। स्त्यते वेष्टतं तच भर्त्तारमुपजुहुयादिति। तच प्रथमामाह। (१)"भर्त्ता सन् ० पुनरस्तमेति"(१) इति। योऽयं प्राणाभिमानी देवः सोऽयं 'भर्त्ता' पोषकः, 'सन्', 'भ्रियमाणः' अन्तर्यामिणा परमेश्वरेण स्वयं धार्यमाणः सन्, 'बिभर्त्ति' देहान् धारयति। स च सूत्रात्मरूपेण स्वयं 'एकः', एव 'देवः', तत्तच्छरीरेषु 'बहुधा' शरीरानुसारेण बहुप्रकारः, 'निविष्टः' अवस्थितः। अतएव प्राणविद्याप्रकरणे तत्तच्छरीरानुसारेण प्राणस्यावस्थितिं कात्वा आमनन्ति। मनः सुषिणा* समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैरित्यादि। 'सः' प्राणः, 'यदा', 'भारं' देहरूपं, 'भर्तुं' धारयितुं, 'तन्द्रयते' तन्द्रीमालस्यं,† 'प्राप्नोति', आयुषोऽवसाने हि तस्यालस्यं भवति। तदानीं 'भारं' देहरूपं, 'निधाय' क्वचिदुत्सृज्य, 'पुनः', 'अस्तमेति'। अदर्शनं गच्छति। यथा देहोत्पत्तेः पूर्वमदर्शनं गतः तथा देहपातादूर्ध्वं अतीत्याभिप्रेत्य‡ पुनरित्युक्तं॥

* समःसुषिणा इति G चिह्नितपुस्तकपाठः।

† तन्द्रियमालस्यमिति ते० पाठः।

‡ देहपातादूर्ध्वमपीत्यभिप्रेत्येति G चिह्नितपुस्तकपाठः।

भारं पुनरस्तमेति(१)। (२)तमेव मृत्युममृतन्तमाहुः। तं भर्त्तारं तमु गोप्तारमाहुः। स धृतो भ्रियमाणो वि-

---

अथ द्वितीयामाह। (२)"तमेव ० वेद सत्येन भर्त्तुं"(२) वेदरहस्याभिज्ञाः पुरुषाः 'तमेव' प्राणं, 'मृत्युमाहुः', यदा प्राणो देहात् निर्गच्छति तदैव देहो म्रियते अतो मृत्युहेतुत्वात् मृत्युत्वं। तथा देहेऽवस्थिते अमृतो देह इत्यमृतत्वहेतुत्वात् 'तं' प्राणं, 'अमृतमाहुः', शरीरस्थापनहेतुत्वात् 'तं' एव प्राणं, 'भर्तारं' देहस्य धारयितारमाहुः। तथा च कौषीतकिनः समामनन्ति। अथ खलु प्राण एव प्रज्ञात्मेदं* शरीरं परिगृह्योत्थापयतीति। तथा तमेव प्राणं अन्नपानादिस्वीकारहेतुत्वात् 'गोप्तारं' पोषकं, 'आहुः'। तथा च छान्दोगा अन्नपानस्वीकारसाधनत्वं† प्राणस्यामनन्ति। यदश्नाति यत् पिबति तेनेतरान् प्राणानवतीति‡। 'यः' पुमान्, 'एनं' प्राणं, 'सत्येन' श्रुतिस्मृत्युदितेन सम्यङ्मार्गेण, 'भर्तुं' ध्यानकाले चित्ते धारयितुं 'वेद' जानाति, 'सः' उपासकः पुमान्, 'धृतः' परमेश्वरेणादौ पोषितः भ्रियमाणः, अनेन प्रा-

---

* प्राजापत्येदमिति तै० पाठः।

† अन्नपानादिस्वीकारसाधनत्वमिति G चिह्नितपुस्तकपाठः।

‡ प्राणानभिभवतीति तै० पाठः।

भर्त्ति। य एनं वेद सत्येन भर्त्तुं(२)। (३)सद्योजातमुत ज-
हात्येषः। उतो जरन्तं न जहात्येकं॥ १॥

उतो बहूनेकमहर्जहार। अतन्द्रो देवः सदमेव
प्रार्थः(३)। (४)यस्तद्वेद यत आबभूव। सन्धां च याꣳसं-

---

प्राणवायुना धार्यमाणः सन् 'बिभर्ति' स्वयमितरान् प्राणिनश्च पोषयितुं समर्थो भवति ॥

अथ तृतीयामाह। (३)"सद्योजातमुत ० सदमेव प्रार्थः"(३) इति। 'एषः' प्राणदेवः, स्वतन्त्रः सन् 'सद्योजातमुत' तदानीं चोत्पन्नमपि* पुरुषमल्पायुषं, 'जहाति' परित्यजति। 'एकं' अन्यं वा कञ्चित् पुरुषं, 'उतो जरन्तं' यतो दीर्घायुषा† जरां प्राप्तमपि, 'न जहाति'। 'एकमहः' एकस्मिन्नेव दिने, 'उत', 'बहून्' लोकानपि‡ पुरुषान्, 'जहार' संहरति, सोऽयं प्राणदेवः 'सदमेव' सर्वदैव 'अतन्द्रः' उच्छासनिश्वासमरणामरणसञ्चरणविषयव्यापारेषु आलस्यरहितः, अतोऽयं 'प्रार्थः' अस्माभिः प्रार्थनीयः, उपास्य इत्यर्थः ॥

अथ चतुर्थीमाह। (४)"यस्तद्वेद यतः ० स पूर्व्येषु"(४) इति। 'यतः' यस्मात् कारणात्, अयं प्राणः 'आबभूव' आविर्बभूव।

---

* तदानीमेवोत्पन्नमिति E, G चिह्नितपुस्तकद्वयपाठः।
† दीर्घमायुषेति G चिह्नितपुस्तकपाठः।
‡ अनेकानपि इति G चिह्नितपुस्तकपाठः।

न्दधे ब्रह्मणैषः। रमते तस्मिन्नुत जीर्णे शयाने। नैनं जहात्यहस्सु पूर्व्येषु(४)। (५)त्वामापो अनु सर्वाश्चरन्ति जानतीः। वत्सं पयसा पुनानाः। त्वमग्निꣳ हव्यवाहꣳ समिन्त्से त्वं भर्त्ता मातरिश्वा प्रजानां(५) ॥ २ ॥

---

'तत्' कारणं, यः पुमान् 'वेद' जानाति। तथा 'सन्धां च' सम्बन्धमपि, यो वेद। कीदृशी सन्धेति सैव विशेष्यते, 'एषः' प्राणः, 'ब्रह्मणा' आत्मना सह, 'यां सन्धां', 'सन्दधे' यं स-म्बन्धं प्राप्तवान्, इत्यमिह देहे वक्तव्यं इयन्तं कालमिह वस्तव्यं इत्येतादृशी सन्धा तां 'यो वेद', 'तस्मिन्' पुरुषे, प्राणाकारं प्राणात्मसम्बन्धं वा अभिजानीते 'उतजीर्णे शयाने' तादृशे पुरुषे जरां प्राप्य शयाने सत्यपि, तत्रायं प्राणो 'रमते' क्रीड-ते। 'पूर्व्येषु' पूर्वकृतैः कर्मभिः सम्पादितेषु, 'अहस्सु' बहुष्वपि दिवसेषु, 'नैनं जहाति' एनं जीर्णं पुरुषं स प्राणो न परि-त्यजति ॥

अथ पञ्चमीमाह। (५)"त्वामापो ० प्रजानां"(५) इति। हे प्राण 'त्वां' वायुरूपं, 'सर्वा आपोऽनुसञ्चरन्ति' यत्र वायुः प्रबलं वाति तत्रैव वाय्वधीनं सत् वृष्टिजलं प्रवर्तते। तत्र दृष्टान्तः, यथा 'जानतीः' स्वस्ववत्साभिज्ञा गावः, 'पयसा पुनानाः' स्वकीयेन क्षीरेण स्रवन्त्यः पोषयन्त्यः, 'वत्समनुसञ्च-रन्ति'। तद्वदिति द्रष्टव्यं। हे प्राण, 'त्वं', 'हव्यवाहं' ह-

(६)त्वं य॒ज्ञस्त्वमु॒वे वासि॒ सोमः। तव॑ दे॒वा हव॒मायन्ति॒ सर्वे॑। त्वमेको॑सि ब॒हूनन॒प्रवि॑ष्टः। नम॑स्ते अस्तु सु॒हवो॑ म एधि(६)। (७)नमो॑ वामस्तु शृण्व॒तꣳ हवं॑ मे। प्राणा॑-

---

विषां वोढारं, 'अग्निं', 'समीन्से' सम्यग्दीपयसि। वायुना अग्निर्दीप्यते तथा 'त्वं', एव 'मातरिश्वा' वायुरूपः सन्, 'प्रजानां', 'भर्त्ता' धारयितासि॥

अथ षष्ठीमाह। "(६)त्वं यज्ञः॰ सुहवो म एधि"(६) इति। हे प्राण 'त्वं', यज्ञप्रवर्त्तकत्वेन यज्ञरूपोऽसि। प्राणस्य वायुरूपत्वाद्यज्ञप्रवर्तकत्वं। एतच्चान्यत्राम्नातं। वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्त इति। 'सोमः उ' सोमयागोऽपि, त्वमेव सर्वक्रियाणां वायुप्रेरितत्वात्। किञ्च 'सर्वे देवाः', 'तव हवं', त्वदीयमाह्वानं प्रति, 'आयन्ति' आगच्छन्ति। वायुना यागक्रियायां प्रवर्त्तितायां हविरर्थं देवा आगच्छन्ति। किञ्च देवतारूपेण 'त्वमेकोसि', तथापि 'बहून्' देहान्, 'अनुप्रविष्टः' तत्तद्देहानुकूल्येन पृथग्रूपाणि धृत्वा तत्र तत्र स्थितः, हे प्राण 'ते' तुभ्यं, 'नमोस्तु'। 'मे', मम, 'सुहवः एधि' आह्वातुं सुलभो भव॥

अथ सप्तमीमाह। (७)"नमो वामस्तु ॰ युवाना"(७) इति। 'अजिरं' अजरनशीलं* गमनस्वभावं शरीरं, 'सञ्चरन्तौ' सम्यक्

---

* अजनशीलमिति F, G चिह्नितपुस्तकद्वयपाठः।

पानावजिरꣳ सञ्चरन्तौ। ह्वयामि वां ब्रह्मणा तूर्तमेतं। यो मां द्वेष्टि तं जहितं युवाना(७)। (८)प्राणापानौ संविदानौ जहितं। अमुष्यासुना मा सङ्गसाथां ॥ ३ ॥

तं मे देवा ब्रह्मणा संविदानौ। बधाय दत्तन्तमहꣳ हनामि(८)। (९)असज्जजान स त आबभूव। यं यज्ञ-

---

प्रवर्त्तयन्तौ, हे 'प्राणापानौ' 'वां' युवाभ्यां, 'नमोस्तु' नमस्कारोस्तु, 'मे हवं' मदीयमाह्वानं, 'शृणुतं'। 'ब्रह्मणा' मन्त्रेण, 'वां ह्वयामि' युवामाह्वयामि। 'तूर्त्तं' तूर्णं शीघ्रं, 'एतं' आगच्छतं, 'युवाना' नित्यं तरुणौ, युवां 'यः' शत्रुः, 'मां', 'द्वेष्टि', तं जहितं विनाशयतं ॥

अथाष्टमीमाह। (८)"प्राणापानौ ० हनामि"(८) इति। हे 'प्राणापानौ' वायू, 'संविदानौ' परस्परमैकमत्यं गतौ, 'जहितं' अस्मच्छत्रुं परित्यजतं, 'अमुष्य' मदीयशत्रोः, 'असुना' प्राणेन, 'मा सङ्गसाथां' सङ्गतौ माभूतां, 'मे ब्रह्मणा' मदीयेन मन्त्रेण, 'संविदानौ' ऐकमत्यङ्गतौ, 'देवाः' प्राणापानदेवौ युवां, 'तं' मदीयं शत्रुं, 'बधाय' बधार्थं, 'दत्तं' मह्यं प्रयच्छतं 'तं' शत्रुं, 'अहं', 'हनामि' विनाशयामि ॥

अथ नवमीमाह।(९)"असज्जजान ० पुनरस्तमेति"(९) इति। 'असत्' अव्यक्तं जगत्कारणं, 'जजान' प्रथममाकाशात्मनाऽव्यक्तरूपेणोत्पन्नं तस्मात् सतोव्यक्तलेन सद्रूपादाकाशाद्वायुरूपो 'यः' प्राणः, 'आबभूव' आभिमुख्येनोत्पन्नः। स च वायु-

जान् सर्व गोपो अस्य। यदा भारं तन्द्रयते स भर्तुम्।
परास्य भारं पुनरस्तमेति[९]। [१०]तद्वै त्वं प्राणो अभ-
वः। महान् भोगः प्रजापतेः। भुजः करिष्यमाणः।
यद्देवान् प्राणयो नव[१०] ॥ ४ ॥

एकं, प्रजानां, गसाणां, नव ॥ अनु० १४ ॥

---

रूपः प्राणः, 'यं यं' देवमनुष्यादिदेहं, 'अजान' उत्पादितवान्, 'सर्व' सर्वोपि देहः, 'अस्य' प्राणस्य, 'गोपः' रक्षकोऽभवत्। प्राणो हि शरीरे प्रविश्य गुप्तोवर्तते। यावदायुस्तावन्तं कालं तथावस्थाय 'यदा', देहरूपं 'भारं', 'भर्तुं तन्द्रयते' धारयितुं अलसो भवति, तदानीमेव तं 'भारं', 'परास्य' परित्यज्य, 'पुनः', अपि देहोत्पत्तेः प्रागवस्थायां 'अस्तमेति' अदर्शनं गच्छति ॥

अथ दशमीमाह। [१०]"तद्वै त्वं ० प्राणयोनव"[१०] इति। 'यत्' यदा, त्वं 'भुजः' भोगान्, 'करिष्यमाणः', सन् 'नव देवान्' नवच्छिद्रवर्तिनश्चक्षुरादीन् दीप्यमानान् पदार्थान् प्रकर्षेण चेष्टितवानसि। 'तद्वै' तदानीमेव, 'त्वं प्राणो अभवः' प्राणयति प्रकर्षेण चेष्टयतीति व्युत्पत्त्या च प्राणनामको अभूः। कीदृशस्त्वं, 'प्रजापतेः', 'महान् भोगः' अत्यन्तभोगहेतुः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

अथ पञ्चदशोऽनुवाकः ।

(१)हरिꣳ हर॑न्तमनु॑यन्ति दे॒वाः । विश्व॑स्येशा॑नं वृष॒भं म॑ती॒नां । ब्रह्म॒ सरू॑पमनु॒ मे॒दमागा॑त् । अय॑नं॒ मा

अथ पञ्चदशोऽनुवाकः ।

अथ मृत्युसूक्ताख्योऽनुवाकोऽभिधीयते । इत आरभ्य सप्तानामनुवाकानां ब्रह्ममेधे विनियोगं भारद्वाज आह । मृत्युसूक्तेनानुशासनं सौम्या सङ्गाहनं सौर्येणादित्योपस्थानं हो पुण्यावगाहनं*ज्योतिष्मतीभिरुपोषणं चित्तꣳ सन्तानेनेति हविराहुतीः प्रयासाय स्वाहेति स्रुवाहुतीरिति । तत्र मृत्युसूक्ते प्रथमामृचमाह । (१)"हरिꣳ ० विवधीर्विक्रमस्व"(१) इति । 'हरिं' हरणशीलं प्राणापहर्तारं मृत्युदेवं, सर्वे 'देवाः', 'अनुयन्ति' आनुकूल्येन गच्छन्ति, न कोपि देवो मृत्युमुल्लङ्घयितुं क्षमते । कीदृशं हरिं, 'हरन्तं' आयुषोऽवसाने प्राणाद्युत्क्रमपहरन्तं, अत एव 'विश्वस्येशानं' सर्वस्य जगतः स्वामिनं, 'मतीनां' मननीयानां देवानां मध्ये, 'वृषभं' श्रेष्ठं, अस्मिंश्च कर्मणि 'सरूपं' समानरूपमनुकूलं 'इदं ब्रह्म' मन्त्रजातं, 'मामनु' यजमानमनुलक्ष्य, 'आगात्' आभिमुख्येन प्राप्नोत् । अतो हे मृत्यो ब्रह्मणा तुष्टः सन् 'अयनं', 'मा 'विवधीः' म-

* मृत्युसूक्तेनाशंसनं सौर्येणादित्योपस्थानं सौम्यासङ्गाहनमोपुण्यावगाहनमिति G चिह्नितपुस्तकपाठः ।

विबधीर्विक्रमस्व[१]। [२]मा च्छिदो मृत्यो मा वधीः। मा मे बलं विवृहो मा प्रमोषीः। प्रजां मा मे रीरिष आयुरुग्र। नृचक्षसन्त्वा हविषा विधेम[२]। [३]सद्यश्चक-मानाय। प्रवेपनाय मृत्यवे॥ १॥

दीयं मार्गं मा विनाशय, किन्तु 'विक्रमस्व' मच्छत्रुविनाशार्थं पराक्रमं कुरु॥

अथ द्वितीयामाह। [२]"मा च्छिदः ० हविषा विधेम"[२] इति। हे 'मृत्यो', त्वं 'मा च्छिदः' मदीयस्य कस्याप्यवयवस्य छेदं मा कार्षीः, 'मा वधीः', मम किमपि* 'मा कार्षीः'। 'मे' मदीयं, 'बलं', 'मा विवृहः' मा विनाशय। 'मा प्रमोषीः' अन्यदपि मदीयं वस्तु चौर्येण मापहर। 'मे' मदीयां, 'प्रजां' पुत्रपौत्रादिकां, 'मा रीरिषः' हिंसितां मा कुरु। हे 'उग्र', देव मदीयं 'आयुः', च 'मा रीरिषः' मा विनाशय। 'नृचक्षसं' मनुष्येषु प्रख्यातं, 'त्वां', 'हविषा', 'विधेम' परिचरेम॥

अथ तृतीयामाह। [३]"सद्यश्चकमानाय ० कामेनाजनयन् पुनः"[३] इति। 'सद्यः' तस्मिन्नेव क्षणे, 'चकमानाय' भयहेतवे, 'प्रवेपनाय' तेन भयेन प्राणिनां कम्पयित्रे, प्राणिनो हि मृत्योर्नामग्रहणेनैव भीताः कम्पन्ते। 'अस्मै', ईदृशाय, 'मृत्यवे', 'आशाः' सर्वा दिशः, 'अशृण्वन्' शृण्वन्ति। सर्वा

* मम बधमपि इति F, G चिह्नितपुस्तकद्वयपाठः।

प्राणा आशा अस्रुवन् । कामेनाजनयन् पुनः[३] । [४]कामेन मे काम आगात् । हृदयाद्धृदयं मृत्योः । यदमीषामदः प्रियं । तदैतूपमामभि[४] । [५]परं मृत्यो अनुपरेहि पन्थां । यस्ते स्व इतरो देवयानात् । चक्षु

हिम्बर्त्तिनः प्राणिनो मृत्युदेवस्य महिमानं शास्त्रेभ्यः प्रकर्षेण शृण्वन्ति । 'कामेन' मृत्योरिच्छया, 'पुनरजनयन्' पुनः पुनरपत्यानि जनयन्ति । मृत्यौ प्रतिकूले सत्युत्पादितान्यप- पत्यानि तदानीमेव म्रियन्ते अतो मृत्युमाराध्य तदिच्छानुव- र्त्तिनोपत्यान्युत्पादयन्ति ॥

अथ चतुर्थीमाह । [४]"कामेन मे ० तदैतूपमामभि"[४] इति । 'कामेन' मृत्योरिच्छया, 'मे काम आगात्' मदी- यमभीष्टं वस्त्वागच्छत्* । मदीयं 'हृदयं', 'मृत्योः', 'हृद- यात्' मृत्युचित्तानुकूल्येन वर्त्ततामिति शेषः । अतः 'मृत्योः' अनुग्रहे सति 'अमीषां' मदीयानामिन्द्रियाणां 'यदद: प्रियं' यदिदं वस्त्वभीष्टं तदस्तु मामभिलक्ष्य 'उप' समीपे, 'एतु' आगच्छतु ॥

अथ पञ्चमीमाह । [५]"परं मृत्यो • प्रजाᳲरीरिषोमोत वीरान्"[५] इति । हे 'मृत्यो', 'देवयानादितरः', 'यः' पन्थाः, 'ते स्वः' तव स्वभूतः, यः तं 'परं पन्थां' देवयानादितरं तं मार्गं, 'अनुपरेहि' अनुक्रमेण प्राप्नुहि । 'चक्षुष्मते' साधुदर्शिने, 'शृण्वते'

* वस्त्वागच्छतु इति F, G चिह्नितपुस्तकद्वयपाठः ।

ष्मते शृण्वते ते ब्रवीमि। मा नः प्रजाꣳ रीरिषो मोत वीरान्[५]॥ [१]प्र पूर्व्यं मनसा वन्दमानः। नाधमानो वृषभं चर्षणीनां। यः प्रजानामेकराण्मानुषीणां। मृत्युं यजे प्रथमजामृतस्य ॥ २ ॥

मृत्यवे, वीरान्, चत्वारि च ॥ अनु० १५ ॥

---

अस्मदिष्टफलानां श्रोत्रे, 'ते' तुभ्यं, एकं वचनं 'ब्रवीमि', 'नः' अस्मदीयां, 'प्रजां' पुत्रादिरूपां, 'मारीरिषः' मा विनाशय, 'उत' अपि च, 'वीरान्' शूरान् भृत्यानपि, 'मारीरिषः' ॥

अथ षष्ठीमाह। [१]"प्र पूर्व्यं ० प्रथमजामृतस्य"[१] इति। यो मृत्युः 'मानुषीणां' मनुष्यजातियुक्तानां,'प्रजानां', 'एक राट्' एक एव राजा, तादृशं 'मृत्युं' अहं 'यजे' पूजयामि। कीदृशोऽहं, 'मनसा वन्दमानः' प्रकर्षेण नमस्कुर्वाणः, 'नाधमानः' अपेक्षितं फलं याचमानः। कीदृशं मृत्युं, 'प्रपूर्व्यं' प्राणिभ्यः पूर्वस्मिन् कल्पे भवं। 'चर्षणीनां' मनुष्याणां,'वृषभं' कामादिवर्षणक्षमं। 'ऋतस्य प्रथमजां' सत्यस्य परब्रह्मणः प्रथमोत्पन्नकार्यं ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

अथ षोडशोऽनुवाकः।

(१)तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य। विश्वमाभासि रोचनं। उपयामगृहीतोसि सूर्याय त्वा भ्राजस्वत एष ते योनिः सूर्याय त्वा भ्राजस्वते(१)। अनु० १६ ॥

---

अथ षोडशोऽनुवाकः।

अथ सूर्योपस्थाने विनियुक्तं मन्त्रमाह। (१)"तरणिर्विश्वदर्शतो० त्वा भ्राजस्वते"(१) इति। हे 'सूर्य', त्वं 'तरणिः' अन्धकारोत्तरणहेतुः, 'विश्वदर्शतः' विश्वैः सर्वैः प्राणिभिः दर्शनीयः, 'ज्योतिष्कृत्' सर्वस्मिंल्लोके प्रकाशकृत्वासि। 'विश्वं' सर्वं जगत्,'रोचनं' दीप्यमानं यथा भवति तथा, 'आभासि' सर्वतः प्रकाशयसि। अग्निष्टोमे योयमतिग्राह्यरूपो ग्रहोस्ति तादृश हे ग्रह* 'भ्राजस्वते' दीप्तियुक्ताय यथोक्तमहिमोपेताय, 'सूर्याय', 'त्वां', गृह्णामि अतस्त्वं तदर्थं 'उपयामगृहीतः' उपयामेन पृथिवीकार्येण पात्रेण गृहीतः, 'असि'। 'एषः' हविर्धानमण्डपस्थः खरप्रदेशः 'ते' तव, 'योनिः' स्थानं, अतः 'भ्राजस्वते' दीप्तिमते सूर्याय, 'त्वां', तत्र प्रदेशे सादयामि ईदृशोयमतिग्राह्यो यस्मै सूर्याय गृह्यते किमु वक्तव्यं तस्य मा-

---

* तादृशं ग्रहमिति G चिह्नितपुस्तकपाठः।

अथ सप्तदशोऽनुवाकः ।

[१]आप्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः ।
भवा नः सप्रथस्तमः[१] ॥ अनु० १७ ॥

श्राव्यमित्येवमुपस्थानकाले स्तुत्यर्थो यद्योपन्यासो लिङ्गवशा-त्तस्य अतिग्राह्यस्य ग्रहणेप्ययं मन्त्रो विनियुज्यते ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-रण्यके द्वितीयप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

अथ सप्तदशोऽनुवाकः ।

प्रेतदाहस्थानसमीपे अवटं खात्वा जलं प्रक्षिप्य तेन सेचनं सङ्गाहनं तत्र विनियुक्तां सौमीमृचमाह । [१]"आप्यायस्व० स प्रथस्तमः"[१] इति । हे 'मदिन्तम' अतिशयेन हर्षयुक्तसोम, 'विश्वाभिरूतिभिः' सर्वप्रकारैरस्मदीयरक्षणैः,'आप्यायस्व' सर्वतो वर्धस्व । 'नः' अस्मान् प्रति, 'सप्रथस्तमः' अतिशयेन प्रथा-युक्तः, 'भव' ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-रण्यके तृतीयप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

अथाष्टादशोऽनुवाकः ।

(१)ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः । अस्माभिरूनु प्रतिचक्ष्याभूदोते यन्ति ये अपरीषु पश्यान्(१) ॥ अनु० १८ ॥

---

अथाष्टादशोऽनुवाकः ।

अवगाहनेष्टादशीमाह* । (१)"ईयुष्टे ये ० अपरीषु पश्यान्" (१) इति । 'ये', 'मर्त्यासः' मनुष्याः, 'व्युच्छन्तीं' प्रभातं कुर्वन्तीं, 'उषसं' उषःकालदेवतां,'पूर्वतरां' इतरेभ्योत्यन्तं पूर्वां, 'अपश्यन्' पश्यन्ति, 'ते' मनुष्याः,'ईयुः' तां देवतां प्राप्नुवन्ति,'अस्माभिरूनु' अस्माभिरनुक्षिप्रं,† 'प्रतिचक्ष्याभूत्' प्रत्यचं दर्शनीयाभूत् । 'ये' अन्येपि,'अपरीषु' अपररात्रिषु, रात्रीणामवसानेषु, 'पश्यान्' पश्यन्ति । 'ते ओ यन्ति' तेपि तां देवतां सर्वथा प्राप्नुवन्ति ।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके अष्टादशोऽनुवाकः ॥ १८ ॥

---

* अवगाहने विनियुक्तामीमामर्षी द्वितीयामृचमाहेति G चिह्नितपुस्तकपाठः ।

† अस्माभिः सा अनुच्छपमिवि G चिह्नितपुस्तकपाठः ।

अथ एकोनविंशोऽनुवाकः।

(१)ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा सादयामि ज्योतिर्विदं त्वा सादयामि भास्वतीं त्वा सादयामि ज्वलन्तीं त्वा सादयामि मल्मलाभवन्तीं त्वा सादयामि दीप्यमानां त्वा सादयामि रोचमानां त्वा सादयाम्यजस्रां त्वा सादयामि बृहज्ज्योतिषं त्वा सादयामि बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा सादयामि(१) ॥ अनु० १९ ॥

---

अथ एकोनविंशोऽनुवाकः।

अथोपोषणे दाहे विनियुक्तानि यजूंष्याह। (१)"ज्योतिष्मतीं • जाग्रतीं त्वा सादयामि"(१) इति। प्रेतं दग्धुं या समित् प्रक्षिप्यते तां सम्बोध्योच्यते। हे समित् त्वां अस्य प्रेतस्योपरि 'सादयामि' स्थापयामि। ज्योतिष्मतीमित्यादिभिर्विशेषणैस्तत् समिधनिष्ठाया ज्वालायाः उत्तरोत्तराभिवृद्ध्या अवस्थाविशेषा उच्यन्ते। अत्यल्पप्रकाशोपेता 'ज्योतिष्मती'। ईषदधिकप्रकाशोपेता 'ज्योतिष्कृत्'। अतोऽप्यधिकप्रकाशोपेता 'ज्योतिर्वित्'। एवं भास्वत्यादिषु योजनीयं। मल्मलेति दह्यमानकाष्ठध्वनेरनुकरणं। लिङ्गानुसारेणायं मन्त्र इष्टकोपधानेऽपि विनियोक्तव्यः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके एकोनविंशोऽनुवाकः ॥ १९ ॥

अथ विंशोऽनुवाकः ।

(१)प्रयासाय स्वाहाऽऽयासाय स्वाहा वियासाय स्वाहा संयासाय स्वाहोद्यासाय स्वाहाऽवयासाय स्वाहा शुचे स्वाहा शोकाय स्वाहा तपत्यै स्वाहा तपते स्वाहा ब्रह्महत्यायै स्वाहा सर्वस्मै स्वाहा(१) ॥ अनु० २० ॥

---

अथ विंशोऽनुवाकः ।

अथ स्रुवाहुतिमन्त्रा उच्यन्ते। तत्र द्वादश मन्त्रा पाठः। (१)"प्रयासाय • सर्वस्मै स्वाहा"(१) इति। प्रेतस्य यमलोके बाधका देवताविशेषाः प्रयासादिशब्दवाच्याः, तन्निर्वचनानि तु यथायोगमूह्यानि। तस्यै तस्यै देवतायै स्रुवेण गृहीतमिदमाज्यं स्वाहुतमस्तु ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके विंशोऽनुवाकः ॥ २० ॥

अथ एकविंशोऽनुवाकः।

(१)चित्तꣳ संतानेन भवं यक्ना रुद्रन्तनिम्ना पशुपतिꣳ स्थूलहृदयेनाग्निꣳ हृदयेन रुद्रं लोहितेन शर्वं

---

अथ एकविंशोऽनुवाकः।

अथ राजगवीयो होमार्थोऽयमनुवाक उच्यते। तत्र नवमन्त्रानाह। (१)"चित्तꣳ सन्तानेन ० श्लिक्नीनिकोशाभ्यां"(१) इति। अत्र द्वितीयान्ताश्चित्तादिशब्दा देवताविशेषवाचिनः, तृतीयान्ताः सन्तानादिशब्दाः पशोर्मांसविशेषवाचिनः, सन्तानाख्येन मांसविशेषेण चित्ताख्यं देवताविशेषं परितोषयाम इति वाक्यशेषः। एवं सर्वत्र योजनीयं। तदेवमस्मिन् प्रपाठके शकुचितिशकुमेधयोरङ्गभूता मन्त्रा उक्ताः। चातुर्होत्रीयचितिर्ब्रह्मचितिः। ब्रह्म वै चतुर्होतार इत्याम्नातत्वात्। तस्यां ब्रह्मचितौ चित्तिस्रुगित्यादयः सुवर्णं घर्ममित्येवमन्ता अनुवाका विनियुक्ताः। ब्रह्ममेधे तु कृत्स्नोऽपि प्रपाठको विनियुक्तः। आहिताग्नेर्यो दहनादिसंस्कारः सोऽयं पितृमेधः। आहिताग्नित्वे सति यो ब्रह्मतत्त्वं जानाति तस्य दहनादिसंस्कारो ब्रह्ममेध इत्युच्यते। तस्मिन् ब्रह्ममेधेऽस्य प्रपाठकस्य विनियोगं भरद्वाज आह, अथात उत्तरं पितृमेधं व्याख्या-

मतस्ताभ्यां महादेवमन्तःपार्श्वेनौषिष्ठहनꣳ शिङ्गीनिकोशाभ्यां(१) ॥ १ ॥

चित्तमेकम् ॥ अनु॰ २१ ॥

चित्तिः, पृथिवी, अग्निः, सूर्यन्ते चक्षुः, महाहविर्होता, वाग्घोता, ब्राह्मण एकहोता, अग्निर्यजुर्भिः, सेनेन्द्रस्य, देवस्य, सुवर्णं घर्मं, सहस्रशीर्षा,

---

स्यामो ब्रह्ममेध इत्याचचते। तथाप्युदाहरन्ति द्विजातीनामपवर्गार्थः तत्त्वदर्शिभिः, ऋषिभिः तपसो योमाद्देष्टितं पुरुषोत्तमं। दोषस्य* पितृमेधस्य संहृत्य विधिरुत्तरः। विहितस्तु समासेन क्रतूनामुत्तमः क्रतुरिति। तस्य सप्तर्हैर्होतृभिर्होमो भर्तृसूक्तेन भरणं पत्नीभिरुपसादनं दक्षिणाप्रतिग्रहैर्निर्मार्गैर्हृदयैर्हिरण्यशलाकान् सम्भारयजुर्भिः पात्रचयनं ज्योतिष्मतीभिरुपोषणं नारायणाभ्यामुपस्थानं ब्राह्मण एकहोतृभिस्यानुमन्त्रणं चित्तꣳ सन्तानेनेति हविराहुतीः प्रयासाय स्वाहेति स्रुवाहुतीर्मृत्युसूक्तेनानुशंसनं सोम्या सन्नाहनं सोर्येणादित्योपस्थानमीयुष्णावगाहनं† समानमत ऊर्ध्वं‡ पैतृमेधिक-

---

* होतृंस्येति G चिह्नितपुस्तकपाठः।

† -मीयुष्वावगाहनमिति G चिह्नितपुस्तकपाठः।

‡ समानमेतदूर्ध्वं इति G चिह्नितपुस्तकपाठः।

अङ्ग्यः, भर्त्ता, हरिँ, तरणिः, आप्यायस्व, ईयुष्टे ये, ज्योतिष्मतीं, प्रयासाय, चित्तं, एकविंꣳशतिः ॥ ११ ॥

चित्तिः, अग्निर्यजुर्भिः, अन्तःप्रविष्टः, प्रजापतिः प्रजया, भर्त्ता*, प्रयासाय, द्विपञ्चाशत् ॥ ५२ ॥

तच्छं योरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये। दैवी स्वस्तिरस्तु नः। स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजं। शन्नो अस्तु द्विपदे। शं चतुष्पदे। ॐ शान्तिः शान्तिः शान्तिः। हरिः ओम् ॥ तत् सत् ॥

---

सायवोदनप्राशनात्परं ब्रह्मेत्याचक्षते तामसाधारणे श्मशाने प्रयुञ्जीत तामाचार्याय† द्विजातीनामेवं सन्तिष्ठते ब्रह्ममेधः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके तृतीयप्रपाठके एकविंशोऽनुवाकः ॥ २१ ॥

समाप्तश्च तृतीयप्रपाठकः।

---

* भर्त्तेत्यादिपाठस्थाने संविदानस्तस्य धीरा ज्योतिष्मतीं त्रिपञ्चाशत् इति पाठः B चिह्नितपुस्तके वर्त्तते। परन्तु दशतिगणनया त्रिपञ्चाशत्सङ्ख्या नोपलभ्यते। दशमानुवाकस्य चतुर्थदशत्यामुद्धृतनवकण्डिका अपि एकदशतित्वेन ग्राह्याः।

† तामाचार्यो य इति G चिह्नितपुस्तकपाठः।

## तैत्तिरीये आरण्यके

चतुर्थप्रपाठके प्रथमोऽनुवाकः ।

श्रीगणेशाय नमः ।

(१)नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्र-

---

## तैत्तिरीये आरण्यके

चतुर्थप्रपाठके प्रथमोऽनुवाकः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
तृतीये कथिता मन्त्रा ब्रह्माग्निब्रह्ममेधयोः ।
प्रवर्ग्यमन्त्राः प्रोच्यन्ते चतुर्थेऽस्मिन् प्रपाठके ॥
तद्ब्राह्मणं पञ्चमे स्यात्तावन्योन्याभिकाङ्क्षिणौ ।
तेन प्रपाठकावेतौ व्याख्यास्ये सह सर्वशः ॥

तत्र चतुर्थस्य प्रथमेऽनुवाके शान्तिपाठार्थो मन्त्रोऽभिधीयते, तस्य च प्रवर्ग्यकर्मादौ महावीरनिष्पत्तेः पूर्वं पाठं बो-

ऋषिभ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माहमृषीन् मन्त्रकृतो मन्त्रपतीन् परादाम्[१]।

धावन आह। अथामावास्येन वो हविर्ज्येष्ठानचत्रे वा *पूर्वां शान्तिमुपयन्ति नमो वाच इति। आपस्तम्बस्तु प्रवर्ग्यप्रचारादौ महावीरनिष्पत्तेरूर्ध्वं शान्तिपाठमाह। प्रवर्ग्येण प्रचरिष्यन्तः प्रवणन्ति† द्वाराणि परिश्रयन्ति पत्न्याः पश्चाद्धोतोपविशति पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा यजमानः प्रस्तोता चोत्तरतः प्रतिप्रस्थाताग्नीध्रश्च महन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कुर्वन्तीति। तस्यानुवाकस्य प्रथमभागे स्वाभीष्टानां देवतानामृषीणाञ्च नमस्कारमाह। "(१)नमो वाचे • परादाम्"(१) इति। अनुष्ठेयस्य कर्मणो मन्त्राधीनत्वान्मन्त्राणाञ्च वाग्देवताशरीरस्वरूपत्वात् तस्यै देवतायै प्रथमं नमस्काराः क्रियन्ते। वाक् च द्विविधा, काचित् पूर्वमुदिता व्यवहृता काचित् अनुदिता व्यवहरिष्यमाणा, तयोर्मध्ये 'या च वागुदिता', तस्या अपि 'नमः', अस्तु। 'या च', पूर्वं 'अनुदिता', तस्यै वाचेऽपि 'नमः', अस्तु। विभज्य नमस्कृत्य पुनः समुदायाकारेण नमस्क्रियते। 'वाचे' भागद्वयेऽप्यनुगदितायै वाग्देवतायै 'नमः', अस्तु। सेयं वाग्देवता येन बृहस्पतिरूपेण पाल्यते तस्मै 'वाचस्पतये', 'नमः', अस्तु। यथा देवतानमस्कारः, तद्वत्

* अमावास्येन वा हविषेष्ट्वा नचत्रे वा इति E, G चिह्नितपुस्तकद्वयपाठः।

† संवृणन्ति इति E चिह्नितपुस्तकपाठः।

(२)वैश्वदेवीं वाचमुद्यासꣳ शिवामदस्तां जुष्टां देवेभ्यः(२)।
(१)शर्म मे द्यौ शर्म पृथिवी शर्म विश्वमिदं जगत्। शर्म

'ऋषिभ्यः', अपि नमस्कारोस्तु। कीदृशेभ्यः, 'मन्त्रकृद्भ्यः' मन्त्रं कुर्वन्तीति मन्त्रकृतः, यद्यप्यपौरुषेये वेदे कर्त्तारो न सन्ति, तथापि कल्पादावीश्वरानुग्रहेण मन्त्राणां लब्धारो मन्त्रकृत इत्युच्यन्ते। तल्लाभश्च स्मर्यते। 'युगान्ते तर्हिं तान् वेदान् सेतिहासान् महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाता स्वयम्भुवेति'। त एव महर्षयः सम्प्रदायप्रवृत्त्या मन्त्राणां पालनात् 'मन्त्रपतयः', इत्युच्यन्ते। तथाविधा महर्षयः 'मां' यजमानं, 'मा परादुः' परादानमवज्ञां मा कुर्वन्तु, किन्त्वनुगृह्णन्तु। 'अहं', अपि तान् महर्षीन् 'मा परादां' अवज्ञां न करोमि, किन्त्वादरेण भजामि॥

द्वितीयभागेन नमस्कारप्रयोजनं दर्शयति। (२)"वैश्वदेवीं • देवेभ्यः"(२) इति। अहं 'वाचमुद्यासं' तत्तद्रूपाया वाचो* वदिता भूयासं। कीदृशीं वाचं, 'वैश्वदेवीं' सर्वदेवविषयां, 'शिवां' स्तुतिरूपेण देवेभ्यः सुखप्रदां, 'अदस्तां' अनुपक्षीणां, सम्पूर्णां, 'देवेभ्यो जुष्टां' देवानां प्रियां॥

तृतीयभागे देवतानुग्रहप्रार्थनारूपामृचं दर्शयति। (१)"शर्म मे द्यौः • प्रजापती"(१) इति। द्यौर्लोकात्मको देवः 'मे' मम, 'शर्म' सुखरूपः, भवतु, अनुष्ठेये कर्मणि विघ्नपरिहारेण अनुग्र-

* मन्त्ररूपाया वाच इति तै० पाठः।

चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती⁽³⁾।⁽⁴⁾भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये⁽⁴⁾।⁽⁵⁾तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं

---

स्तात् इत्यर्थः। एवं पृथिव्यादिषु योज्यं। 'ब्रह्म' जगत्कारणं वस्तु, 'प्रजापतिः' चतुर्मुखः॥

यदुक्तं पूर्वत्र वैश्वदेवीं वाचमुद्यासमिति तस्या वाचो विषयभूतानर्थांस्तस्य चतुर्थभागे* दर्शयति। ⁽⁴⁾"भूतं वदिष्ये ० सत्यं वदिष्ये"⁽⁴⁾ इति। 'भूतं' आकाशादिपञ्चमहाभूतरूपं, 'भुवनं' पृथिव्यादिलोकस्वरूपं, 'तेजः' शरीरकान्तिः, 'यशः' कीर्त्तिः, 'तपः' व्रतादिनियमविशेषः, 'ब्रह्म' स्वाध्यायः, 'सत्यं' यथार्थकथनं, एतत् सर्वं 'वदिष्ये' ममानुकूलं भवत्वित्येतत् प्रार्थयिष्ये॥

यथोक्तं मन्त्राभिवदनसिद्ध्यर्थं तदाधारभूतं कर्म पञ्चमभागेन प्रार्थयते†। ⁽⁵⁾"तस्मा अहमिदमुपस्तरणं ० पशूनां भूयासं"⁽⁵⁾ इति। 'तस्मै' पूर्वोक्तभूतादिवेदनसिद्ध्यर्थं, 'अहं', 'इदं' प्रवर्ग्याख्यं कर्म, 'उपस्तरणं' मदाधारभूतं, 'उपस्तृणे'

---

* विषयभूतानस्मिंश्चतुर्थभागे इति तै० पाठः।

† पञ्चमभागेभिप्रार्थयते इति तै० पाठः।

प्रजायै पशूनां भूयासं(५)। (६)प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं(६)। (७)मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु

---

सम्पादयामि। 'मे' मदीयानां प्रजानां, 'पशूनां', च 'उपस्तरणं' आधारभूतं वस्तु, 'भूयात्'। अन्याधारासम्भवेऽपि 'अहं', एव प्रजानां 'पशूनां', च 'उपस्तरणं' आधारः, 'भूयासं'॥

यथोक्तकर्मसिद्ध्यर्थं विघ्नरूपात् मृत्योः परिपालनं षष्ठभागे प्रार्थयते। (६)"प्राणापानौ ० मा मा हासिष्टं"(६) इति। हे 'प्राणापानौ' उभौ वायू, 'मृत्योः', सकाशात् 'मां', पालयतं। तस्मिन् पालनेऽयमुपायः, हे 'प्राणापानौ', 'मां' यजमानं, 'मा हासिष्टं' मा परित्यजतं॥

अथ मृत्युपरिहारे सति प्रयोजनं सप्तमभागे दर्शयति। (७)"मधु मनिष्ये ० पितरोनुमदन्तु"(७) इति। अपमृत्युपरिहारेण लब्धायुरहं 'मधु' मधुरं समीचीनफलसाधनं प्रवर्ग्याख्यं कर्म, 'मनिष्ये' मनसि सङ्कल्पयिष्ये। सङ्कल्पादूर्ध्वं 'मधु' तन्मधुरं कर्म, 'जनिष्ये' प्रादुर्भावयिष्ये, अनुष्ठातुं प्रारप्से, प्रारम्भादूर्ध्वं तत् मधुरं कर्म 'वक्ष्यामि' वहनं करिष्यामि, समाप्तिपर्यन्तं निर्वहिष्यामि। तत्सिद्ध्यर्थं 'मधु' मधुरं, मन्त्रजातं, 'वदिष्या-

शोभायै पितरोऽनुमदन्तु(७) ॥ (८)ओम् शान्तिः शान्तिः शान्तिः(८) ॥ हरिः ओम् ॥ अनु० १ ॥

---

मि' कथयिष्यामि। न केवलं मन्त्रपाठं किन्तु 'वाचं' अपि उद्देशत्यागरूपां, 'उद्यासं' वाचो वदिता भूयासं। कीदृशीं वाचं, 'देवेभ्यो मधुमतीं' देवानामतिप्रियां, 'मनुष्येभ्यः शुश्रूषेण्यां' मनुष्योपलक्षितानां पितॄणां श्रोतुमत्यन्तमधुरां, 'तं' एतादृशं, 'मां' यजमानं, 'शोभायै' शोभनफलप्राप्त्यै, 'देवाः', सर्वे 'अवन्तु' रक्षन्तु। 'पितरः', अपि 'अनुमदन्तु' अनुजानन्तु ॥

अथाष्टमभागेन स्वाभीष्टसिद्धिहेतुं परमात्मानं प्रणवेनानुस्मृत्य विघ्नत्रयपरिहारार्थत्वेन शान्तिं पठति। (८)"ओम् शान्तिः शान्तिः शान्तिः"(८) इति। आध्यात्मिकानां विघ्नानां ज्वरादिरूपाणां 'शान्तिः', अस्तु। आधिभौतिकानां रोगोपद्रवादीनां 'शान्तिः', अस्तु। आधिदैविकानां यक्षराक्षसोपद्रवादीनां 'शान्तिः', अस्तु ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ द्वितीयोऽनुवाकः।

(१)युञ्जते मन उत युञ्जते धियः। विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेक इत्। मही देवस्य सवितुः परिष्टुतिः(१)।——

---

अथ द्वितीयोऽनुवाकः।

प्रथमानुवाके शान्त्यर्थं मन्त्रमुक्त्वा द्वितीयानुवाके महावीरनिर्माणार्था मन्त्रा उच्यन्ते। कल्पः। प्रवर्ग्यꣳ सम्भरिष्यन्नमावास्यायां पौर्णमास्यामापूर्यमाणपक्षस्य वा पुण्ये नक्षत्रे तूष्णीं काष्टकीं समिधमाधाय युञ्जते मन इति चतुर्गृहीतं जुहोत्यथ यदि दीक्षितः काष्टकीमेवैतया समिधमादध्याद्यजुरेव वदेदित्येक इति। पाठस्तु। (१)"युञ्जते मन ० परिष्टुतिः"(१) इति। 'विप्रस्य' ब्राह्मणस्य यजमानस्य, सम्बन्धिनः 'विप्राः' ऋत्विजः, 'मनो युञ्जते' प्रथमं स्वकीयं मनो विषयेभ्यो निवर्त्य समाहितं कुर्वन्ति, 'उत' अपि च, 'धियः' प्रवर्ग्यविषयाणि ज्ञानानि, 'युञ्जते' सम्पादयन्ति। कीदृशस्य विप्रस्य, 'बृहतः' प्रभूताग्निचयनोद्योगेन प्रवर्ग्योद्योगेनातिवृद्धस्य, 'विपश्चितः' विदुषः प्रयोगाभिज्ञस्य। कीदृशा विप्राः, 'होत्राः' होमशीलाः, कर्मण्यालस्यरहिता इत्यर्थः। 'एकइत्' एक एव सवि-

ता, 'विदधे' सर्वमिदं निर्मितवान्। कीदृशः, 'वयुनावित्' ऋत्विग्यजमानाभिप्रायाभिज्ञः। कथमेक एव सर्वमिदं कृतवानिति न विस्मेतव्यं। ततः 'सवितुः', 'देवस्य', 'परिष्टुतिर्मही' परितः सर्वेषु वेदेषु श्रूयमाणा स्तुतिर्महती॥

अथ ब्राह्मणप्रपाठकस्य द्वितीयानुवाके सोऽयं मन्त्रो विनियुज्यते। तत्रोपोद्घातत्वेन प्रथमानुवाके प्रवर्ग्यनिष्पत्तिर्निरूप्यते। तत्रादौ स्तुत्यर्थमुपाख्यानमाह। "देवा वै सत्रमासत। ऋद्धिपरिमितं यशस्कामाः। तेऽब्रुवन्। यन्नः प्रथमं यश ऋच्छात्। सर्वेषान्नस्तत्सहासदिति। तेषां कुरुक्षेत्रं वेदिरासीत्। तस्यै खाण्डवो दक्षिणार्द्ध आसीत्। तूर्घ्नमुत्तरार्द्धः। परीणज्जघनार्द्धः। मरव उत्करः॥१॥ तेषां मखं वैष्णवं यश आर्च्छत्"। (५प्र०।१अ०।१म०) इति। पुरा कदाचित् 'देवाः', 'यशस्कामाः', सन्तः 'ऋद्धिपरिमितं' साधनद्रव्यसमृद्ध्या परितो निर्मितं, प्रौढं 'सत्रं', अनुष्ठितवन्तः, अनुष्ठातुं प्रवर्त्तमानाः 'ते' देवाः, परस्परं समयरूपमिदं वाक्यं 'अब्रुवन्'। 'प्रथमं' यज्ञफलस्योपक्रमे, 'यशः' कीर्त्तिरूपं, 'नः' अस्मान्, 'ऋच्छात्'* प्राप्नुयात्। 'तत्' यशः, 'नः' अस्माकं, 'सर्वेषां', 'सहासत्' साधारणमेवास्तु, नत्वेकस्यैव साधारणम्, 'इति' एवं परस्परं भाषां कृत्वा, प्रवृत्तानां 'तेषां' देवानां, यत् 'कुरुक्षेत्रं' पुराणप्रसिद्धं, सैव 'वेदिरासीत्'। 'तस्यै' कुरुक्षेत्र-

* सोऽस्मानार्च्छत् इति तै० पाठः।

रूपायास्तथा वेद्ेः, 'खाण्डव'तूर्घ्नपरीणच्छब्दवाच्याः,* पुरु-देशविशेषाः दक्षिणदिग्भागाः अभवन्, 'मरवः' जलरहिता भूप्रदेशाः, उत्कररूपा अभवन्। वेदेरुत्तरभागे पांशुतृणा-दयो यत्र प्रक्षिप्यन्ते† सोऽयम् 'उत्करः', तस्यां वेद्यामुपतिष्ठतां 'तेषां' देवानां मध्ये, 'वैष्णवं मखं' विष्णुस्वामिकं सत्रं, 'यशः', प्राप्नोत्। तस्मिन् सत्रे विष्णुशब्दवाच्यो यज्ञाभिमानी देवो गृहपतित्वेन दीक्षितः, अतो विष्णुः सत्रं कृतवानित्येवं विष्णु-नाम्ना यश आसीत्॥

तस्मिन् सत्रे विष्णुनामकस्य पुरुषस्येतरदेवैः सह ‡यशो-निमित्तं कलहं दर्शयति। "तन्न्यकामयत। तेनापाक्रामत्। तं देवा अन्वायन्। यशोऽवरुरुत्समानाः। तस्यान्वागतस्य। सव्याद्धनुरजायत। दक्षिणादिषवः। तस्मादिषुधन्वं पुण्यजन्म। यज्ञजन्मा हि॥ २॥ तमेकꣳ सन्तं। बहवो नाभ्यधृष्णुवन्। तस्मादेकमिषुधन्विनं। बहवोऽनिषुधन्वा नाभिधृष्णुवन्ति"। (५प्र०।१अ०।२म०) इति। विष्णुः सत्रं कृतवानित्येतावन्मात्रं यद् यशस्तस्मिन् सत्र आसीत्। 'तत्' यशः, ममैवास्तु ना-न्येषामित्येवं विष्णुर्नितरां 'अकामयत'। कामयित्वा च 'तेन' यशसा, सहेतरदेवसकाशात् स्वयं 'अपाक्रामत्', तदानीमन्ये 'देवाः', तत् 'यशः', अवरोद्धुमिच्छन्तः, 'तं' विष्णुं, अन्वग-

---

* तूर्घ्नपरिणच्छब्दवाच्या इति तै० पाठः।

† परित्यज्यन्ते इति तै० पाठः।

‡ यशोनिमित्तमिति तै० पाठः।

च्छन्। तैर्देवैः 'अभ्यागतस्य', विष्णोः सव्यहस्तादेकं 'धनुः' उत्पन्नं, दक्षिणहस्ताद् बहवो बाणा उत्पन्नाः, विष्णोः सङ्कल्पमात्रेण तदुत्पत्तिः। यस्मात् कारणात् 'यज्ञजन्मा' यस्माज्जन्म उत्पत्तिर्यस्येषुधन्वसमूहस्य सोऽयं यज्ञजन्मा। यज्ञो वै विष्णुरिति श्रुतेः, यज्ञस्यैव विष्णुरूपत्वात् विष्णोरुत्पन्नयज्ञादेवोत्पन्नं भवति। 'तस्मात्' यज्ञजन्मत्वात्, 'इषुधन्व'स्वरूपं 'पुण्यजन्म', इत्युच्यते यज्ञस्य पुण्यरूपत्वात्। वामहस्ते इषुधनुर्दक्षिणहस्ते बाणान् धृत्वावस्थितं 'तं' यज्ञपुरुषं, 'एकं', एव 'सन्तं', इतरे इषुधन्वरहिता देवाः 'बहवः', सन्तोऽपि 'नाभ्यधृष्णुवन्' अभिभवितुमशक्नुवन्, यस्मादेवमत्र 'तस्मात्', लोकेपीषुभिर्धनुषा चोपेतं 'एकं' पुरुषं, तद्रहिताः 'बहवः' पुरुषाः, अभिभवितुं न शक्नुवन्ति॥

अथ यज्ञपुरुषस्य गर्वप्रसङ्गेन दीक्षितनियमं विधत्ते। "सोऽस्मयत। एकं मा सन्तं बहवो नाभ्यधर्षिषुरिति। तस्य सिष्मियाणस्य तेजोऽपाक्रामत्। तद्देवा ओषधीषु न्यमृजुः। ते श्यामाका अभवन्। स्मयाका वै नामैते॥ २॥ तत् स्मयाकानाꣳ स्मयाकत्वं। तस्माद्दीक्षितेनापि स्मेतव्यं। तेजसो धृत्यै" (५प्र०।१अ०।३म०) इति। 'सः' धन्वी यज्ञपुरुषः, 'अस्मयत' स्मयं हास्यं कृतवान्। हास्याभिप्रायस्तेनैवोच्यते। अहमेक एव एते तु देवाः शतसहस्रसङ्ख्याकाः तथापि मामभिभवितुं न शक्ताः, 'इति' एवं, 'सिष्मियाणस्य' गर्वेण स्मयं कृतवतः, 'तस्य' यज्ञपुरुषस्य सकाशात्, तदीयं 'तेजोपा-

क्रामत्' गर्वेण प्रयत्ने शिथिले सति सामर्थ्यमपगतं। पुनरपि कथञ्चित् तत् स्वीकरिष्यतीति मत्वा ते 'देवाः', 'तत्' तेजः, अन्यत्र नीत्वा तेन यथा न ज्ञायते तथा गूढं कर्त्तुं कासुचित् 'ओषधीषु', निम्टष्टवन्तः। 'ते' चौषधिविशेषाः यज्ञसम्बन्धिना तेजसा युक्ताः, 'श्यामाकाभिधाः' धान्यविशेषाः, 'स्वयाकाः', इत्येतादृशं 'नाम', अर्हन्ति। यस्मादेतस्य नाम्नो योग्याः 'तस्मात्', 'स्वयाकानां' स्वयादुत्पन्नानां धान्यानां 'स्वयाकत्वं' स्वयाकनामाभिज्ञव्यवहारेण प्रसिद्धं, यस्माच्च स्वयं कुर्वतो यज्ञपुरुषात् तेजोपक्रान्तं 'तस्मात्' कारणात्, 'तेजसः', स्वस्मिन्नेवावधारणार्थं मुखमपिधाय दीचितेन 'स्मेतव्यं'। यद्यपि दीचाप्रकरणे कृष्णविषाणया कण्डूयतेऽपि 'रुद्य', स्मयत इति विधिरस्ति तथापि प्रसङ्गाच्च स एवानूद्यत इत्यवगन्तव्यम्॥

अथ प्रवर्ग्यघर्ममहावीरसम्राट्शब्दानां निर्वचनानि प्रस्तोष्यमाणहविःप्रशंसार्थं दर्शयति। "स धनुः प्रतिष्कभ्यातिष्ठत्। ता उपदीका अब्रुवन् वरं वृणामहै। अथ व इमꣳ रन्धयाम। यत्र क्व च खनाम। तदपोऽभितृणदामेति। तस्मादुपदीका यत्र क्व च खनन्ति। तदपोऽभितृन्दन्ति॥ ४॥ तस्यै वृतꣳ स्नावाः। तस्य ज्यामप्यादन्। तस्य धनुर्विप्रवमाणꣳ शिर उदवर्त्तयत्। तद् द्यावापृथिवी अनुप्रावर्त्तत। यत् प्रावर्त्तत। तत् प्रवर्ग्यस्य प्रवर्ग्यत्वं। यद्घ्रां इत्यपतत्। तद्घर्मस्य घर्मत्वं। महतो वीर्यमपप्तदिति। तन्महावीरस्य महावीरत्वं॥ ५॥

यद्यशः समभरन्। तत्सर्वाश्च समाद्दत्तं।” (५प्र०।१अ०। ४म०) इति। ‘सः’ यज्ञपुरुषः, युयुत्सून् देवानितस्ततः प्रतीक्षमाणः ‘धनुः’ प्रविष्टभ्य स्वकीयस्य धनुष ऊर्ध्वकोटिं चिबुकस्याधस्तात् कण्ठसमीपे दृढमवष्टभ्य तथैव स्थितवान्। तदानीमेतस्य प्रतीकारमन्विष्यतः* देवान् प्रति ‘ताः’ प्रसिद्धाः, ‘उपदीकाः’ पिपीलिकासमानाः क्षुद्रजन्तवो वल्मीकस्य निर्मातारः, इदं ‘अब्रुवन्’, हे देवाः प्रथमं तावद्वयमिममेकं ‘वरं’, प्रार्थयामहे। ‘अथ’ अनन्तरं, ‘वः’ युष्मदर्थं, ‘इमं’ यज्ञपुरुषं, ‘रन्धयामः’ साधयामः। कोऽसौ वर इति सोऽभिधीयते। भूमौ ‘यत्र’, क्वापि वयं सुखेन ‘खनाम’, तत्र ‘अपः’, अभिप्राप्य ‘तृणदाम’ द्रवीकरवाम,‘इति’। ‘तस्मात्’ कारणात्, ‘उपदीकाः’ वल्मीकनिष्पादका जीवाः† ‘यत्र’, क्वापि ‘खनन्ति’, ‘तत्’ क्षेत्रं, ‘अपः’, अभिप्राप्य ‘तृन्दन्ति’ द्रवीकुर्वन्ति। ‘हि’ यस्मात् कारणात्, ‘आसां’ उपदीकानां, तद्द्रवीकरणसामर्थ्यं ‘वारे वृतं’ वरेण सम्पादितं, तस्मात् तद्युक्तं, ततो लब्धवरा उपदीकाः शनैर्भूमौ तत्समीपे समागत्य ‘तस्य’ धनुषः, अधः क्वापि स्थितां ‘ज्यामपि’ गुणस्य, ‘अदन्’ भक्षितवत्यः‡ ततस्तद्धनुः च ‘विप्रवमाणं’ विस्तारेणोर्ध्वं प्रवर्त्तमानं, ‘धनुः’,

* अन्विच्छत इति तै० पाठः।

† जन्तव इति तै० पाठः।

‡ अपिशब्दो धनुषः कोटिमपि भिषितीकृतवत्यः। तथाश्चसेतुके यस्मिन्निन्द्रो वम्रिरूपेण धनुर्ज्यामच्छिनत् स्वयमित्युक्तं। तत्रोपदीकाभिः खादितत्वात् ज्यायां त्रुटितायां विप्रवमाणं विक्षेपेणोर्द्ध्वं प्रवर्तमानं धनुरिति तै० पाठः।

'तस्य' यज्ञपुरुषस्य, 'शिरः', 'उदवर्त्तयत्' छिन्नोर्ध्वं प्रावर्त्तयत्। 'तत्' चापि शिरः, ऊर्ध्वं द्युलोकपर्यन्तं गत्वा ततो भारेण भूमावधः पतितं, तस्मादिदं शिरः 'द्यावापृथिवी', उभे अपि अनुक्रमेण 'प्रावर्त्तत'। तस्मादनयैव व्युत्पत्त्या तस्य यज्ञशिरसः प्रवर्ग्यनाम सम्पन्नं। भूमौ पतनवेलायामुत्पन्नस्य ध्वनेरनुकरणे यः 'घर्मं', इति शब्दः, तथाविधशब्दोपेतत्वात् अस्य शिरसो घर्मनाम सम्पन्नं। 'महतः' यज्ञपुरुषस्य सकाशात्, 'वीर्यमपतत्' सारभूतं शिरः पतितं, ततोऽनयैव व्युत्पत्त्या 'महावीर'नाम सम्पन्नं। 'यत्' यस्मात् कारणात्, 'अस्याः' पृथिव्याः, सकाशात् 'समभरन्', देवास्तच्छिरःसमादाय प्रेषितवन्तः तस्मात् सम्यग्भ्राजमानत्वात् सम्राडिति नाम सम्पन्नम्॥

एवं यज्ञशिरसो नामचतुष्टयनिर्वचनमुक्त्वाऽवशिष्टस्य यज्ञशरीरस्य फलप्रयोजनत्वकथनेन तच्छिरः प्रशंसति। "तᳪ स्तृतं देवतास्त्रेधा व्यगृह्णत। अग्निः प्रातःसवनं। इन्द्रो माध्यन्दिनᳪ सवनं। विश्वे देवास्तृतीयसवनं। तेनापशीर्ष्णा यज्ञेन यजमानाः। नाशिषोऽवारुन्धत। न सुवर्गं लोकमभ्यजयन्।" (५प्र०।१अ०।५म०) इति। 'तं स्तृतं' शिरोराहित्येन हिंसितं तं यज्ञपुरुषदेहं, अग्न्यादयो देवाः 'त्रेधा', गृहीतवन्तः। तत्र 'अग्निः', 'प्रातःसवनं', जग्राह। 'इन्द्रः', तु 'माध्यन्दिनं सवनं', गृहीतवान्। 'विश्वे देवाः', 'तृतीयसवनं', अगृह्णः। 'अपशीर्ष्णा' प्रवर्ग्याख्यशिरोरहितेन पूर्वोक्तसवनत्रययुक्तेन, 'तेन यज्ञेन', 'यजमानाः' अग्न्यादयो देवाः, 'आशिषः' स्वापेक्षि-

तानि कर्मफलानि, 'अवारुन्धत' 'न', प्राप्तवन्तः, 'स्वर्गलोकं', अपि 'नाभ्यजयन्' ॥

अथ प्रवर्ग्यसहितस्य यज्ञस्य फलहेतुत्वं दर्शयति। "ते देवा अश्विनावब्रुवन् ॥ ६ ॥ भिषजौ वै स्थः। इदं यज्ञस्य शिरः प्रतिधत्तमिति। तावब्रूतां वरं वृणावहै। ग्रह एव नावत्रापि गृह्यतामिति। ताभ्यामेतमाश्विनमगृह्णन्। तावेतद्यज्ञस्य शिरः प्रत्यधत्तां"। (५प्र०।१अ०।६म०) इति। प्रवर्ग्यरहितेन यज्ञेन फलमलभमानाः 'ते देवाः', 'अश्विनौ', प्रत्येतत् 'अब्रुवन्', हे अश्विनौ युवामस्माकं मध्ये चिकित्सकौ 'स्थः', तस्मात् 'इदं यज्ञस्य शिरः', 'प्रतिधत्तं' पुनरपि यज्ञशरीरे प्रवर्त्तयतं,* 'इति', 'तौ' अश्विनौ, प्रत्यर्पणार्थं 'वरं' उत्कोचरूपं लाभविशेषं, 'वृणावहै'। इत्युक्ता कोऽसौ वर इत्याशङ्क्य तं वरमुक्तवन्तौ। 'अत्र' अस्मिन् सोमयागे, 'नावपि' चिकित्सकयोरावयोरपि, युष्मत्साम्येन 'ग्रह एव', 'गृह्यतां', न तु यत्किञ्चित्तुच्छं लेपादिकं,† 'इति'। ततः 'ताभ्यां' अश्विभ्यां, 'एतं' आश्विनं ग्रहं, 'अगृह्णन्', 'तौ' चाश्विनौ, चिकित्सया 'यज्ञस्य शिरः', प्रत्यर्पयतां‡। प्रतिधानं नाम शरीरे पुनः सन्धानं। प्रवर्ग्य इत्येतन्नामकं यत् कर्म तदेव यज्ञशरीरे प्रतिष्ठितं शिरः। तेन तादृशेन शीर्ष्णा प्रवर्ग्याख्यशिरोयुक्तेन यज्ञेन यजमाना देवाः स्वापेक्षितान्यन्यफलानि स्वर्गञ्च प्राप्नुवन् ॥

* प्रवर्त्तयतमिति तै० पाठः।

† तल्लेपादिकमिति तै० पाठः।

‡ प्रत्यधत्तामिति तै० पाठः।

देवा वै सत्रमासतेत्यारभ्यैतावता मइता प्रबन्धेन प्रवर्ग्याख्यं कर्म प्रशस्य* तदेव कर्म विधत्ते। "यत् प्रवर्ग्यः। तेन स शीर्ष्णा यज्ञेन यजमानः। अवाशिषो रुन्धत। अभि सुवर्गं लोकमभ्यजयन्॥ यत् प्रवर्ग्यं प्रवृणक्ति। यज्ञस्यैव तच्छिरः प्रतिदधाति। तेन स शीर्ष्णा यज्ञेन यजमानः। अवाशिषो रुन्धे। अभि सुवर्गं लोकं जयति। तस्मादेष आश्विनप्रवया इव। यत् प्रवर्ग्यः॥ ७॥" (५प्र०।९अ०।७म०) इति। यदि प्रवर्ग्याख्यं कर्मानुतिष्ठेत्। तर्हि यज्ञस्य शिर एव प्रतिसमाहितवान् भवति। ततः 'सशीर्ष्णा' शिरःसहितेन, 'यज्ञेन', 'यजमानः' पुमान्, आशासनीयानि अन्यान्यफलानि† प्राप्नोति स्वर्गं वाभिजयति। यस्मादश्विभ्यां समाधानं कृतं 'तस्मात्' कारणात्, यः प्रवर्ग्याख्यः कर्मविशेषोऽस्ति, स 'एषः', आश्विनप्रवया इति आश्विनमन्त्राः प्रवयसः प्रवृद्धा यस्मिन् प्रवर्ग्ये सोऽयं 'आश्विनप्रवयाः'। 'इव'शब्द एवकारार्थः॥

एतदेव ब्राह्मणरूपे प्रपाठके प्रथमानुवाके प्रवर्ग्याख्यं कर्म विधाय द्वितीयानुवाकादौ युञ्जते मन इत्येतन्मन्त्रसाध्यं होमं विधत्ते। "सावित्रं जुहोति प्रसूत्यै। चतुर्गृहीतेन जुहोति। चतुष्पादः पशवः। पशूनेवावरुन्धे। चतस्रो दिशः। दिक्ष्वेव प्रतितिष्ठति"। (५प्र०।२अ०।१म०) इति। मन्त्रे देवस्य त्वा सवितुः परिष्टुतिरित्युक्तत्वान्मन्त्रः 'सावित्रः,'तद्धोमः

---

* प्रशंस्येति तै० पाठः।

† यानि फलानि तानि इति तै० पाठः।

'प्रसूत्यै' प्रसवाय सम्पद्यते। स्रुवेण जुह्वां चतुर्वारं गृहीतं यदाज्यं तेन जुहुयात्। चतुःसङ्ख्यासाम्यात् पशुप्राप्तिर्दिक्षु प्रतिष्ठा च॥

पुनरपि चतुःसङ्ख्यां प्रकारान्तरेण प्रशंसति। "छन्दाꣳसि देवेभ्योऽपाक्रामन्। न वो भागानि हव्यं वक्ष्याम इति। तेभ्य एतच्चतुर्गृहीतमधारयन्। पुरोऽनुवाक्यायै याज्यायै॥ १॥ देवतायै वषट्काराय। यच्चतुर्गृहीतं जुहोति। छन्दाꣳस्येव तत् प्रीणाति। तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति।" (५ प्र०।२ अ०।२ म०) इति। नानाविधछन्दोयुक्तपुरोऽनुवाक्याद्यभिमानिनो देवा हविर्भाग्भ्यो 'देवेभ्यः', उपरताः सन्तोऽन्यत्रागच्छन्। किं ब्रुवन्तो गता इति, तदुच्यते। हे देवा भागरहितानि वयं 'छन्दांसि', 'वः' युष्मदीयानि, हवींषि 'न वक्ष्यामः' हविर्वहनं न करिष्यामः, 'इति', ब्रुवन्तः तदानीं देवा विचार्य होमकाले यत् चतुर्ग्रहणं तच्छन्दसां प्रीतिकरं भवति इति तेषां भागमकल्पयन्। तत्र प्रथमग्रहणं पुरोऽनुवाक्याख्याया गायत्रीदेवताया*स्तुष्टिकरं। द्वितीयग्रहणं याज्याख्यायास्त्रिष्टुब्देवतायास्तुष्टिकरं। देवताख्याया जगतीदेवतायास्तुष्टिकरं†। चतुर्थग्रहणं वषट्काराख्याया अनुष्टुब्देवतायास्तुष्टिकरं। अतश्चतुर्गृहीतेन होमे सति छन्दोदेवताः प्रीणन्ति। ताश्च प्रीताः सत्यः 'हव्यं वहन्ति'॥

---

* पुरोऽनुवाक्याख्याया देवताया इति तै० पाठः।

† पुष्टिकरमिति तै० पाठः।

तत्र द्वौ पक्षौ। सोमयागे महत्त्वादिकं ज्ञात्वा दीक्षणीयेष्टेः प्रागेव प्रवर्ग्यसाधनं महावीरादिकं सम्पादनीयमित्येकः पक्षः। दीक्षायां समाप्तायां प्रवर्ग्यानुष्ठानकाल एव सम्पादनीयमित्यपरः पक्षः। तत्र प्रथमपक्षे सावित्रहोमो विहितः। द्वितीयपक्षे मीमांसया होमं निवार्य केवलमन्त्रपाठं विधत्ते। "ब्रह्मवादिनो वदन्ति। होतव्यं दीक्षितस्य गृहा३इ न होतव्या३मिति। हविर्वै दीक्षितः। यज्जुहुयात्। हविष्कृतं यजमानमग्नौ प्रदध्यात्। यन्न जुहुयात्॥ २॥" (५ प्र०।२ अ०।२ म०) इति। यन्न जुहुयात् पुनः* तत्र होमपक्षो न युज्यते। 'दीक्षितः', हविःसम्पादकत्वात् 'हविः', एव। तथा सति यदि 'हविर्जुहुयात्', तदानीं हविःसम्पादकं 'यजमानं', एव 'अग्नौ', प्रक्षिपेत्॥

अहोमपक्षे तु। "यज्ञपरुरन्तरियात्। यजुरेव वदेत्। न हविष्कृतं यजमानमग्नौ प्रदधाति। न यज्ञपरुरन्तरेति" (५ प्र०।२ अ०।२ म०) इति। यज्ञस्य होमलक्षणमङ्गमन्तरितं भवेत्। †ततो दोषद्वयपरिहारायाहुतिप्रक्षेपं परित्यज्य 'यजुरेव', पठेत्। यद्यपि युञ्जते मन इत्येषा ऋगेव तथापि यजुर्वेदे पठितत्वात् युज्यतेऽनुष्ठान इति व्युत्पत्त्या वा यजुरित्युच्यते।

---

* दीक्षणीयेष्ट्या संस्कृतो सोऽयं दीक्षितः तस्य सावित्रमन्त्रेण 'होतव्यं', न वा इत्येवं ब्रह्मवादिनां मीमांसा विचारार्था प्रवर्त्तितेति तैलङ्गपुस्तकपाठः।

† तद्दोषपरिहारायेति तै० पाठः।

(१)देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्यां। पूष्णो हस्ताभ्यामाददे(१)।——

अत्र होमाभावाद्यजमानस्य प्रक्षेपो न भवति। मन्त्रस्य पठितत्वाद्यजमानस्य प्रक्षेपो न भवति। मन्त्रस्य पठितत्वाद्यन्त्राङ्गमपि नान्तरितं भवति॥

कल्पः। देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्त इति। पाठस्तु। (१)"देवस्य त्वा ० हस्ताभ्यामाददे"(१) इति। हे अभ्रे प्रेरकस्यान्तर्यामिणः 'देवस्य', प्रेरणे सति 'अश्विनोः', सम्बन्धिभ्यां बाहुदण्डाभ्यां 'पूष्णः', सम्बन्धिभ्यां 'हस्ताभ्यां', च 'त्वामाददे' स्वीकरोमि॥

तस्याभ्रेः खादिरत्वं विधत्ते। "गायत्रीच्छन्दाꣳस्यत्यमन्यत। तस्यै वषट्कारोऽभ्यद्य शिरोऽच्छिनत्। तस्यै द्वेधा रसः परापतत्। पृथिवीमर्धः प्राविशत्। पशूनर्धः। यः पृथिवीं प्राविशत्॥ २॥ स खदिरोऽभवत्। यः पशून्। सोऽजां। यत् खादिर्यभ्रिर्भवति। छन्दसामेव रसेन यज्ञस्य शिरः सम्भरति।" (५प्र०।२अ०।३म०) इति। गायत्रीदेवता सोमाहरणगर्वेणेतराणि 'छन्दांसि' त्रिष्टुबादीनि, अहमतिशयितवतीति 'अमन्यत'। तदा वषट्काराभिमानी देवः क्रुद्धः सन् 'अभ्यद्य' आभिमुख्येन प्राप्य, तस्याः गायत्र्याः 'शिरोऽच्छिनत्'। तस्माच्छिन्नप्रदेशान्निर्गतः 'रसः', 'द्वेधा', भूत्वा 'पृथिवीं', 'पशून्', च 'प्राविशत्'। पृथिव्यां प्रविष्टः 'सः' भागः, खदिरवृक्षोऽभूत्। पशुषु प्रवेष्टुं गतो भागः 'अजां', 'प्राविशत्'। अतो-

ऽभ्रिः 'खादिरी' कर्तव्या। तथा सति 'छन्दसां', सम्बन्धिना 'रसेन', 'यज्ञस्य', 'शिरः' प्रवर्ग्यरूपं, सम्पादितं भवति। गायत्र्यां हि त्रिष्टुप्सम्बद्धं जगतीसम्बद्धं चाक्षरद्वयं मन्तर्भूतमिति कद्रूसुपर्ण्याख्यानप्रसङ्गे प्रतिपादितं। ततो गायत्रीरसः सर्वछन्दसां रसो* भवति। महावीराख्यं पात्रं निष्पादयितुं मृत्खननार्थोभयतस्तीक्ष्णा व्यायाममात्री काष्ठकुद्दालरूपा अभ्रिरित्युच्यते। व्यायाममात्रलादिलक्षणानि पञ्चमकाण्ड उखासम्भरणप्रस्तावे दर्शितानि। अतएव सूत्रकारेण तल्लक्षणमतिदिश्यते। साग्निक्या व्याख्यातेति॥

खदिरेण सह विकल्पार्थं पक्षत्रयं विधत्ते। "यदौदुम्बरी। ऊर्ग्वा उदुम्बरः। ऊर्जैव यज्ञस्य शिरः सम्भरति। यद्वैणवी। तेजो वै वेणुः॥ ४॥ तेजसैव यज्ञस्य शिरः सम्भरति। यद्वैकङ्कती। भा एवावरुन्धे।" (५प्र०।२अ०।४-५म०) इति। औदुम्बरफलस्योपदंशरूपेण भक्ष्यत्वात् ऊर्ग्रूपत्वं। अग्निर्देवेभ्यो ऽनिलायत स वेणुं प्राविशदित्युक्तत्वात् वेणोस्तेजोरूपत्वं। अग्नेः सृष्टस्य यतो विकङ्कतं भा आर्च्छदित्युक्तत्वाद्वैकङ्कतत्वेन 'भाः' दीप्तिः, प्राप्नोति॥

अभ्यादाने मन्त्रं विनियुज्य व्याचष्टे। "देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्तां। पूष्णो हस्ताभ्यामित्याह यत्यै।" (५प्र०।२अ०।५म०) इति।

---

* सार इति तै० पाठः।

(१)अभ्रिरसि नारिरसि। अध्वरकृद्देवेभ्यः(२)। (४)उत्तिष्ठ ब्रह्मणस्पते ॥ १ ॥

---

कल्पः। (१)"अभ्रिरसि नारिरसि" इत्यभ्रिमन्त्रयत इति। "अध्वरकृद्देवेभ्यः"(२) इत्येतावान्मन्त्रशेषः। हे खननहेतो त्वं केनापि न क्षियसे* न भज्यसे इति 'अभ्रिः', 'असि'। नृणां महावीरार्थिनामुपकारत्वात् 'नारिरसि'। 'देवेभ्यः' देवार्थं, 'अध्वरकृत्' यागनिष्पादिका, असि ॥

अस्मिन् मन्त्रे पूर्वभागस्य तात्पर्यं दर्शयति। "वज्र इव वा एषा। यदभ्रिः। अभ्रिरसि नारिरसीत्याह शान्त्यै ॥ ५ ॥" इति (५प्र०।२अ०।५म०)। तीक्ष्णाग्रत्वाद्वज्रसमानत्वम्। न क्षीयसे नृणामुपकर्त्री चेत्युपलालनाद्वज्रस्य शान्तिः। अथवा अरिः न भवसीति 'नारिः' इत्युपलालनम् ॥

उत्तरभागस्य तात्पर्यं दर्शयति। "अध्वरकृद्देवेभ्य इत्याह। यज्ञो वा अध्वरः। यज्ञकृद्देवेभ्य इति वा वैतदाह"। (५प्र०। २अ०।६म०) इति ॥

कल्पः। उत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणमामन्त्रयत उपोत्तिष्ठति ब्रह्मोभावुत्तरमर्द्धर्चं क्रियत इति। तस्या ऋचः पाठस्तु। (४)"उत्तिष्ठ ब्रह्मणस्पते ० इन्द्र प्राशूर्भवा सचा"(४) इति। हे 'ब्रह्मणस्पते' मन्त्रस्य पालक, मृत्खननदेशं प्रति

---

* न क्षियसे इति तै० पाठः।

देवयन्तस्त्वेमहे। उपप्रयन्तु मरुतः सुदानवः। इन्द्र प्राशूर्भवा सचा⁽⁴⁾। ⁽⁵⁾प्रैतु ब्रह्मणस्पतिः। प्र देव्येतु सूनृता। अच्छा वीरन्नर्यं पङ्क्तिराधसं। देवा यज्ञं नयन्तु

---

गन्तुमस्मात् स्थानात् 'उत्तिष्ठ', 'देवयन्तः' देवानिच्छन्तः, वयं 'त्वां' ब्रह्माणं, 'ईमहे' प्रार्थयामहे। 'सुदानवः' शोभनस्य फलस्य दातारः, 'मरुतः' देवाः, 'उपप्रयन्तु' समीपे प्रकर्षेण गच्छन्तु। हे 'इन्द्र', 'सचा' अस्माभिः सह, 'प्राशूः' प्रकर्षेण शीघ्रगामी, 'भव'॥

मन्त्रस्य तात्पर्यं दर्शयति। "उत्तिष्ठ ब्रह्मणस्पत इत्याह। ब्रह्मणेव यज्ञस्य शिरोऽच्छैति" इति। (५प्र०।२अ०।६म०)। ऋत्विजा ब्रह्माख्येनैव सह यज्ञस्य शिरोरूपं प्रवर्ग्यपात्रं 'अच्छ' प्राप्तुं, 'एति' गच्छति॥

कल्पः। आददते कृष्णाजिनमनुनयन्त्यूर्जा पृञ्चगस्त्वामस्थं वृषाणमिति प्रैतु ब्रह्मणस्पतिरिति प्राञ्चोऽभिप्रथमामभिप्र-व्रजन्ति यत्र मृदं खनिष्यन्तः स्युरिति। पाठस्तु। ⁽⁵⁾"प्रैतु ब्रह्म-णस्पतिः ० नयन्तु नः"⁽⁵⁾ इति। 'ब्रह्मणस्पतिः' मन्त्रस्य पालकः, ऋत्विक् ब्रह्मा, 'प्रैतु' प्रथमतो गच्छतु। 'सूनृता' यज्ञसम्बन्धिनी मन्त्रगतप्रियवाक्यरूपा, 'देवी', प्रकर्षेण 'एतु' गच्छतु। किमर्थमिति तदुच्यते। 'नर्यं' नृभ्यः यजमानेभ्यो हितं, 'पङ्क्तिराधसं' पाङ्क्तस्य यज्ञस्य साधकं, 'वीरं' महावीराख्यं पात्रं, 'अच्छ' प्राप्तुं, 'देवाः', सर्वे 'नः' अस्मदीयं, यज्ञं 'नयन्तु'॥

नः[५] । [६]देवी द्यावापृथिवी अनु मेऽमꣳसाथां[६] ।

---

प्रथमपादे प्रैतुशब्दस्य तात्पर्यं दर्शयति । 'प्रैतु ब्रह्मणस्पतिरित्याह । प्रैत्येव यज्ञस्य शिरोच्छैति" इति । (५प्र०।२अ०।७म०) । 'प्रैत्येव' प्रथमतो गत्वैव ॥

द्वितीयपादे सूनृताशब्देन प्रियवाक्ययुक्तस्य यज्ञस्य विवक्षां दर्शयति । "प्र देव्येतु सूनृतेत्याह । यज्ञो वै सूनृता" इति । (५प्र०।२अ०।८म०) ।

तृतीयपादे पङ्क्तिराधसशब्देन धानाकरम्भादिपञ्चहविर्युक्तस्य यज्ञस्य विवक्षां दर्शयति । "अच्छा वीरं नर्यं पङ्क्तिराधसमित्याह ॥६॥ पाङ्क्तो हि यज्ञः" इति । (५प्र०।२अ०।९म०) ॥

चतुर्थपादे देवा यज्ञं नयन्त्वित्यस्य तात्पर्यं दर्शयति । "देवा यज्ञं नयन्तु न इत्याह । देवानेव यज्ञनियः कुरुते" इति । (५प्र०।२अ०।१०म०) । 'यज्ञनियः' यज्ञस्य नेतॄन् प्रवर्त्तकान् ॥

कल्पः । उत्तरेण मृत्खननं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य । [६]"देवी द्यावापृथिवी" इति मृत्खननमभिमन्त्रयत इति । अनु मेऽमꣳसाथां"[६] इति मन्त्रशेषः । हे 'द्यावापृथिव्यौ', 'मे' मदीयं, व्यापारं 'अन्वमꣳसाथां' युवयोरनुमतं कुरुतां ॥

मन्त्रस्य देवतयोरभ्यनुज्ञायां तात्पर्यं दर्शयति । "देवी द्यावापृथिवी अनु मेऽमꣳसाथामित्याह । आभ्यामेवानुमतो यज्ञस्य शिरः सम्भरति" इति । (५प्र०।२अ०।११म०) ॥

(७)ऋध्यासमद्य। मखस्य शिरः(७) ॥ २ ॥

(८) मखाय त्वा। मखस्य त्वा शीर्ष्णे(८) ।—

---

कल्पः। (७)"ऋध्यासमद्य" इति मृत्खनेऽभ्रिया प्रहृत्य "मखस्य शिरः"(७) इत्युपादायेति। 'अद्य' अस्मिन् दिने, 'ऋध्यासं' कर्मणा समृद्धो भूयासं। इदं मृद्रूपं 'मखस्य शिरः' यज्ञस्य शिरःस्थानीयं प्रवर्ग्यपात्ररूपं ॥

मन्त्रद्वयं ब्राह्मणमेव व्याचष्टे। "ऋध्यासमद्य मखस्य शिर इत्याह। यज्ञो वै मखः। ऋध्यासमद्य यज्ञस्य शिर इति वा वैतदाह" इति। (५ प्र०।२ अ०।१२ म०) ॥

कल्पः। (८)"मखाय त्वा" इति हरति "मखस्य त्वा शीर्ष्णे"(८) इति कृष्णाजिने निर्वपतीति। हे मृत्तिके, त्वां 'मखाय' यज्ञार्थं, हरामीति शेषः। तथा त्वां 'मखस्य' यज्ञस्य, 'शीर्ष्णे' शिरोरूपप्रवर्ग्यार्थं, निर्वपामीति शेषः ॥

मन्त्रद्वयं ब्राह्मणमेव व्याचष्टे। "मखाय त्वा मखस्य त्वा शीर्ष्णे इत्याह। निर्दिश्यैवैनद्धरति ॥ ७ ॥" इति। (५ प्र०।२ अ०।१३ म०) 'निर्दिश्यैव' यज्ञार्थं इह हरणनिर्वपने कथयित्वैव, 'एनत्' मृत्स्वरूपं, 'हरति' निर्वपति, चेति द्रष्टव्यं ॥

यदुक्तं सूत्रकारेण, एवं द्वितीयं तृतीयञ्च हरति तूष्णीं चतुर्थं यावतीं मृदं प्रवर्ग्यपात्रेभ्यः आप्तां मन्यत इति। तदिदं विधत्ते। "त्रिर्हरति। त्रय इमे लोकाः। एभ्य एव लोकेभ्यो

(९)इयत्यग्र आसीः(९)। (१०)ऋध्यासमद्य। मखस्य

---

यज्ञस्य शिरः सम्भरति। तूष्णीं चतुर्थꣳ हरति। अपरिमिताद्देव यज्ञस्य शिरः सम्भरति” इति। (५प्र०।२अ०।१४म०)॥

वक्ष्यमाणसम्भारेभ्यो मृदः प्राथम्यं विधत्ते। “मृत्खनादग्रे हरति। तस्मान् मृत्खनः करुणतमः” इति (५प्र०।२अ०।१५म०)। ये च वराहविहतादयः सम्भाराः तेभ्यः ‘अग्रे’ प्रथममेव, मृदं खात्वा तस्मात् ‘मृत्खनात्’ गर्त्तात्, मृदं हरेत्। यस्मादयं ‘मृत्खनः’, स्वकीयां वेदनामगणयित्वा यजमानोपकारार्थं मृदं प्रयच्छति। तस्मादयमतिशयेन ‘करुणः’ कृपालुः, ततो मृत्खनादेव मृदं हरेत्। न त्वन्यतो यतः कुतश्चित् मृदानेया॥

कल्पः। एवमितरसम्भारानभिमन्त्रणेऽधिकारः, इयत्यग्र आसीरिति वराहविहतमिति। येन प्रकारेण मृदो हरणमुक्तं। तेनैव प्रकारेणेतरे सर्वे सम्भाराः सम्पादनीयाः। अभिमन्त्रणे तु तत्र तत्र मन्त्रविशेषोऽस्ति। ‘देवी द्यावापृथिवी’ इति पूर्वत्र मृदोऽभिमन्त्रणं। (९)“इयत्यग्र आसीः”(९) इति मन्त्रः। वराहो दंष्ट्रया यं मृद्विशेषं सम्पादयति तन्मृत्स्वरूपं वराहविहतं। हे वराहविहत ‘इयत्यग्रे’ एतावति पुरोदेशे त्वं ‘आसीः’॥

अभिमन्त्रितस्य वराहविहतस्याहरणे मन्त्रान् दर्शयति।

शिरः। मखाय त्वा। मखस्य त्वा शीर्ष्णे(१०)।
(११)देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीः(११)।
(१२)ऋध्यासमद्य। मखस्य शिरः(१२) ॥ ३ ॥

---

(१०)"ऋद्ध्यासमद्य ० त्वा शीर्ष्णे"(१०) इति। एते मन्त्राः पूर्ववद्व्याख्येयाः ॥

एतेषां वराहविहतसम्भारमन्त्राणां तात्पर्यं दर्शयति। "इयत्यग्र आसीरित्याह। अस्यामेवाच्छम्बट्कारं यज्ञस्य शिरः सम्भरति" इति। (५प्र०।२अ०।१६म०)। यावद्वराहविहतमस्ति एतावती सर्वा भूमिर्वराहेणोद्धृतत्वात्। एतच्चाधानब्राह्मणे स वराहो रूपं कृत्वेत्यादिना विस्पष्टमाम्नातं। अतो वराहविहतसम्भारेण 'अस्यामेव', सर्वस्यामपि पृथिव्यां, 'अच्छम्बट्कारं' अस्योऽप्यंशो व्यर्थो यथा न भवति तथा कृत्वा, 'यज्ञस्य शिरः', सम्पादितं भवति ॥

कल्पः। देवीर्वम्रीरिति वल्मीकवपामिति अभिमन्त्रयत इति शेषः। पाठस्तु। (११)"देवीर्वम्रीरस्य ० ऋतावरीः"(११) इति। वल्मीकस्य निष्पादिकाः क्षुद्रजन्तुस्वरूपाः 'वम्र्यः', हे वम्र्यो देव्यो यूयं 'अस्य' 'भूतस्य' प्राणिजातस्य, 'प्रथमजाः' प्रथमत उत्पन्नाः, 'ऋतावरीः' यज्ञवत्यः' सम्भाररूपेण यज्ञनिष्पादकत्वात् तादृश्यो भवथेति शेषः ॥

अनेनाभिमन्त्रितान् वल्मीकवपायाः सम्भरणमन्त्रानाह। (१२)"ऋध्यासमद्य ० मखस्य शिरः" (१२)इति। पूर्ववद्व्याख्येयं ॥

(११)ऋध्यासमद्य। मखस्य शिरः। मखाय त्वा। मखस्य त्वा शीर्ष्णे(११)।—

वल्मीकवपायाः सम्भरणं विधत्ते। "ऊर्जं वा एतꣳ रसं पृथिव्या उपदीका उद्दिहन्ति ॥८॥ यद्वल्मीकं। यद्वल्मीकवपा सम्भारो भवति। ऊर्जमेव रसं पृथिव्या अवरुन्धे। अथो श्रोत्र-मेव। श्रोत्रꣳ ह्येतत् पृथिव्याः। यद्वल्मीकः" इति। (५प्र०।२अ०।१७म०)। 'वल्मीकं', 'यत्', विद्यते तदेतत् 'उपदीकाः' पूर्वोक्ता वम्र्यः, 'पृथिव्याः', सकाशादन्नहेतुमेव 'रसं' मृदं, उद्धृत्य निष्पादयन्ति। अतो वल्मीकवपायाः सम्भरणेन भूमिसारं 'ऊर्जमेव', प्राप्नोति। अपि च कर्णशष्कुल्याकारसाम्यात् 'वल्मीकः', भूमेः 'श्रोत्रमेव', तस्माद्वल्मीकवपा प्रशस्ता* ॥

अथैनं प्रशंसति। "अबधिरो भवति। य एवं वेद" इति। (५प्र०।२अ०।१८म०) ॥

कल्पः। इन्द्रस्यौजोऽसीति पूतीकानिति। हे पूतीकसमूह इन्द्रस्यौजो बलमसि अनेन मन्त्रेणाभिमन्त्रितानां पूतीकानां सम्भरणमन्त्रानाह। (११)"ऋध्यासमद्य ० त्वा शीर्ष्णे"(११) इति। पूर्ववद्व्याख्येयं ॥

पूतीकासम्भरणं विधत्ते। "इन्द्रो वृत्राय वज्रमुदयच्छत्। स यत्र यत्र पराक्रमत ॥९॥ तन्नाभ्रियत। स पूतीकस्तम्बे परा-क्रमत। सोऽभ्रियत। ऊतिं वै मे धा इति। तत्पूतीकानां पूतीकत्वं।

---

* तस्माद् वल्मीकवपा प्रशस्ता, श्रोत्रत्वात् इति। तै० पाठः।

अग्निजा असि प्रजापते रेतः ।—

यद्दूतीका भवन्ति। यज्ञायैवोतिं दधति" इति। (५प्र०१२अ०।९८अ०)। पुरा कदाचित् 'इन्द्रः', वृत्रवधार्थं 'वज्रं', तद्यस्य प्रेरितवान्। तदानीं 'सः' इन्द्रः, 'यत्र यत्र' देशे, 'पराक्रमत' वज्रप्रक्षेपलक्षणं पराक्रमं कृतवान्, तत्र सर्वत्र 'नाभ्रियत' पलायनपरो वृत्रस्तेन वज्रेण धृतः प्रहृतो नासीत्। ततः 'सः' इन्द्रः, विचार्य 'पूतीक*स्तम्ब' समीपे कदाचिदवस्थितं वृत्रं प्रति 'पराक्रमत' वज्रप्रक्षेपलक्षणं पराक्रमं कृतवान्। तदानीं 'सः' वृत्रः, पूतीकस्तम्बेनावरुद्धमार्गः पलायितुमशक्तस्तेन वज्रेण 'अभ्रियत' प्रहृतोऽभूत्। तदानीं परितुष्टः स इन्द्रः पूतीकस्तम्बं प्रत्येवमब्रवीत्। हे पूतीकस्तम्ब 'मे' 'ऊतिं' मदीयपराक्रमरक्षां, 'धाः' धृतवानसि, इति ऊतीधारकत्वात् तेषां पूतीकानां 'पूतीकाः', इति नाम सम्पन्नं। तेषां सम्भरणे सति यज्ञस्य रक्षां ते सम्पादयन्ति ॥

कल्पः। अजलोमानि कृष्णाजिनलोमानि च संसृज्याग्निजा असि प्रजापते रेत इति। हे द्विविधलोमसङ्घ त्वमग्निजासि आग्नेयी वा एषा यदजात्यजाया आग्नेयत्वश्रवणात् अग्निर्देवेभ्यो निलायत कृष्णो रूपं कृत्वेति श्रवणाच्चोभयत्राग्नित्वमभिप्रेत्य तयोरुभयोरग्निजत्वमुक्तं महावीरदार्ढ्यहेतुत्वात् प्राजापत्ये सृष्टौ लोम्नां सारत्वं ॥

* पूतिक इति तै॰ पाठः।

छन्धार्समय। मखस्य शिरः॥ ४॥
मखाय त्वा। मखस्य त्वा शीर्ष्णे[१४]। [१५]आयुर्धेहि

[१४]"अग्निजा असि ० मखस्य त्वा शी०र्ष्णे"[१४] इति। पूर्ववद्व्याख्येयम्॥

प्रजापते रेत इत्यनेन प्रजापतिसृष्टाया गायत्र्या रेतोऽग्निं प्राविशत्। स एव विवक्षित इत्येतद्दर्शयति। "अग्निजा असि प्रजापते रेत इत्याह। य एव रेतः पशून् प्राविशत्॥ १०॥ तमेवावरुन्धे," इति। (५प्र०।२अ०।१०म०)॥

पूर्वोक्तानां मृत्तिकावराहविहतवल्मीकवपापूतीकाजकृष्णाजिनलोमरूपाणां सम्भाराणां पञ्चसङ्ख्यां प्रशंसति। "पञ्चैते सम्भारा भवन्ति। पाङ्क्तो यज्ञः। यावानेव यज्ञः। तस्य शिरः सम्भरति," इति। (५प्र०।२अ०।११म)। धानाकरम्भादिहविःपञ्चकयोगात् 'पाङ्क्तो यज्ञो यावान्', अस्ति 'तस्य', सर्वस्य 'शिरः', सम्भारमतया पञ्चसङ्ख्यया सम्भारितं भवति॥

एतेषां सम्भारद्रव्याणां कृष्णाजिने सम्भरणं विधत्ते। "यद्ग्राम्याणां पशूनां चर्मणा सम्भरेत्। ग्राम्यान् पशून् शुचार्पयेत्। कृष्णाजिनेन सम्भरति। आरण्यानेव पशून् शुचार्पयति। तस्मात्समावत् पशूनां प्रजायमानानाम्॥ ११॥ आरण्याः पशवः कनीयाꣳसः। शुचा ह्यताः," इति। (५प्र०।-

प्राणं धेहि। अपानं धेहि व्यानं धेहि। चक्षुर्धेहि श्रोत्रं धेहि। मनो धेहि वाचं धेहि। आत्मानं धेहि प्रति-

---

१अ०।१२म)। 'ग्राम्याणां' गवादिपशूनां, 'चर्मणा', सम्भरणे सति तान् 'पशून्', 'शुचा' शोकेन रोगादिजनितेन, योजयेत्। तन्माभूदिति 'कृष्णाजिनेन', एव सर्वं सम्भरणीयं, कृष्णमृगस्यारण्यजत्वात् 'आरण्यानेव', पशून् महावीरजनितेन सन्तापेन योजयति। यस्मादारण्येष्वेव सम्भरणादारण्याः पशवः शुचा योजिताः 'तस्मात्', 'समावत्प्रजायमानानां' साम्येनोत्पद्यमानानामपि, द्विविधानां 'पशूनां', मध्ये 'आरण्याः', एव 'पशवः', कनिष्ठाः। नहि जना गवाश्वादिषु यावन्तमादरं तावन्तं कृष्णाजिनमृगेषु कुर्वन्ति॥

कृष्णाजिनस्य सलोमके भागे सम्भरणं विधत्ते। "लोमतः सम्भरति। अतो ह्यस्य मेध्यं।" इति। (५प्र०।१अ०।१२म)। 'लोमतः', लोमवति प्रदेशे सम्भरेत्। 'अतः' लोमतः प्रदेशात्, 'अस्य' कृष्णाजिनस्य, 'मेध्यं' यागयोग्यं सम्भारं, सम्पद्यते॥

कल्पः। आयुर्धेहि प्राणं धेहीत्यश्वेनावघ्राप्येति। पाठस्तु। "(१५)आयुर्धेहि ० मां धेहि मयि धेहि"(१५) इति। हे अश्व त्वदमाघ्राय यजमानस्यायुरादीन् सम्पादय। 'मां' यजमानं, 'धेहि' पोषय, अपेक्षितं धनादिकं 'मयि' यजमाने, 'धेहि' स्थापय॥

ष्टां धेहि। मां धेहि मयि धेहि[१५]।[१६]मधु त्वा मधुला करोतु[१६]। [१७]मखस्य शिरोऽसि[१७] ॥ ५ ॥

---

यदुक्तं सूत्रकारेण। बहव आर्याः परिगृह्य हरन्त्युत्तरेण विहारमुद्धते चोक्षिते सिकतोपोप्ते परिश्रिते निदधातीति। तदेतदार्यजनमार्याणाञ्च बहुत्वं स्थापनदेशविशेषञ्च क्रमेण विधत्ते। "परिगृह्यायन्ति। रक्षसामपहत्यै। बहवो हरन्ति। अपचितिमेवास्मिन् दधति। उद्धते सिकतोपोप्ते परिश्रिते निदधति शान्त्यै।" इति। (५प्र०।अ१०।२४म)। 'आयन्ति' आगच्छेयुः, आर्याणां परिग्रहणेन रक्षांस्यपहतानि भवन्ति। तेषां बहुत्वेनास्मिन् द्रव्ये पूजा कृता भवति। भूमेरुद्धननेन सिकतावापेन परितस्तिरोधानकरणेन च तस्मिन् देशेऽवस्थापितस्य द्रव्यस्योपद्रवपरिहाररूपा शान्तिर्भवति ॥

कल्पः। [१६]मधु त्वा मधुला करोतु[१६] इति मदन्तीभिरुपसृजतीति। हे मध्वारसमूहरूप द्रव्य 'मधु त्वा' पूर्वमपि मधुरं महावीरनिष्पादनयोग्यं मृद्रूपं त्वां, अयं मदन्तीसंसर्गः पुनरपि 'मधुला' माधुर्ययुक्तं, सौकार्ययुक्तं, 'करोतु' ॥

अनेन मन्त्रेण साध्यं मदन्तीमेलनं विधत्ते। "मदन्तीभिरुपसृजति ॥ १२ ॥ तेज एवास्मिन् दधाति।" इति। (५प्र०। १अ०।२५म)। तप्ता आपो मदन्त्यः, तन्मेलनादस्मिन् द्रव्ये तेजः सम्पादितं भवति ॥

यद्यपि अश्वमेखनादिव महावीरनिष्पादनसामर्थ्यरूपं तेजः सम्पद्यते। तथापि मन्त्रेणैव सामर्थ्यातिशयाय मन्त्रपाठ इत्येतद्दर्शयति। "मधु त्वा मधुला करोत्वित्याह। ब्रह्मणैवास्मिन् तेजो दधाति।" इति॥

अथास्मिन् द्रव्ये मेलयितव्यं द्रव्यान्तरं विधत्ते। "यद्ग्राम्याणां पात्राणां कपालैः संसृजेत्। ग्राम्याणि पात्राणि शुचार्पयेत्। अर्मकपालैः संसृजति। एतानि वा अनुपजीवनीयानि। तान्येव शुचार्पयति।" इति। (५ प्र०।१अ०।२६म)। गृहेषु पाकाद्यर्थानि भाण्डानि ग्राम्यपात्राणि तदीयकपालैः संसर्गे सति तानि 'शुचा', शोकेन सङ्करूपेण* योजितानि भवन्ति। तस्मात्मूदिति 'अर्मकपालैः', मिश्रयेत। अर्मशब्देन चिरन्तने जीर्णग्रामदेशे अवस्थिता भाण्डांशा उच्यन्ते। तानि प्राणिभिरुपजीवितुमयोग्यानि अतस्तेषां शुचा योजनेऽपि न कश्चित् बाधः॥

द्रव्यान्तरं विधत्ते। "शर्कराभिः संसृजति धृत्यै। अथो शन्त्वाय।" इति। (५ प्र०।१अ०।२७म)। 'शर्कराः' क्षुद्रपाषाणाः, तत्संसर्गे सति महावीरस्य 'धृतिः' दार्ढ्यं भवति। अपि च शं सुखं कुर्वन्तीति शर्करानामनिरुक्तौ तद्योगः 'शन्त्वाय' सुखसिद्धये, भवति। एतच्चाधानप्रकरणे समाम्नातं। शं वै नोऽभूदिति। तच्छर्कराणाꣳ शर्करत्वमिति॥

द्रव्यान्तरं विधत्ते। "अजलोमैः सꣳसृजति। एषा वा

---

* भङ्गरूपेणेति तै० पाठः।

अग्नेः प्रिया तनूः। यदजा। प्रिययैवैनं तनुवा सꣳसृजति। अथो तेजसा।" इति। (५ प्र०।२ अ०।२८म०)। अजाम्नोः प्रजापतिमुखजत्वेन सोदरत्वात् प्रियत्वं। अपि चाग्नेः स्वेनेव तेजोरूपत्वात् 'तेजसा', द्रव्यं संसृष्टं भवति॥

द्रव्यान्तरं विधत्ते। "कृष्णाजिनस्य लोमभिः सꣳसृजति। यज्ञो वै कृष्णाजिनं। यज्ञेनैव यज्ञꣳसꣳसृजति।" ॥ १३ ॥ इति। (५ प्र०।२ अ०।२८ म०)। अवघातप्रस्तावे यज्ञो देवेभ्योऽनिलायत कृष्णोरूपं कृत्वेत्युक्तत्वात् कृष्णाजिनस्य यज्ञत्वं तल्लोमरूपेण 'यज्ञेनैव', महावीरद्रव्यरूपः 'यज्ञः', संसृष्टो भवति॥

महावीरनिर्माणाय देशविशेषं ब्राह्मणगततृतीयानुवाके विधत्ते। "परिश्रिते करोति। ब्रह्मवर्चसस्य परिगृहीत्यै।" इति। (५प्र०।३अ०।१म०)। योऽयं देशः परितः कटादिभिरावृतः तस्मिन् 'परिश्रिते', महावीरं 'करोति' *। तदेतद्ब्रह्मवर्चसपरिग्रहाय भवति॥

तत्र नियमं कञ्चिद्विधत्ते। "न कुर्वन्नभिप्राण्यात्। यत् कुर्वन्नभिप्राण्यात्। प्राणाञ्छुचार्पयेत्। अपहाय प्राणिति। प्राणानां गोपीथाय।" (५प्र०।२अ०।३०म०) इति। सोऽयं तदानीं 'नाभिप्राण्यात्' तदाभिमुख्येन श्वासं न कुर्यात्। तत्करणे स्वकीयाः 'प्राणाः', दुःखेन योजिता भवन्ति। तस्मात् मुखं 'अपहाय', परतो नीत्वा श्वासं कुर्यात्। तच्च 'प्राणानां', रक्षणाय भवति॥

नियमान्तरं विधत्ते। "न प्रवर्ग्यं वादित्यं चान्तरेयात्।

---

* कुर्यादिति तै० पाठः।

ष्टदन्तरेयात्। दुश्चर्मा स्यात्॥१॥ तस्मात् नान्तराय्यं। आत्म-
नो गोपीथाय।" इति। (५प्र०।३अ०।२म०)। यत्र प्रवर्ग्यपा-
त्राणि तिष्ठन्ति। तत्र सूर्यश्चेत् प्राच्यां वसेत् तदानीं स्वयं प्रती-
च्यां तिष्ठेत्। सूर्यस्य प्रतीच्यामवस्थाने स्वयं प्राच्यां तिष्ठेत्।
एवं सति प्रवर्ग्यादित्ययोर्मध्येऽन्तरायो न भवेत्। अन्तराये
तु कुष्ठरोगी 'स्यात्'। अतः स्वशरीररक्षार्थं 'अन्तरायं न',
कुर्यात्॥

मृत्पात्रनिर्माणे साधनं विधत्ते। "वेणुना करोति। तेजो
वै वेणुः। तेजः प्रवर्ग्यः। तेजसैव तेजः समर्धयति।" इति।
(५प्र०।३अ०।४म०)। कुम्भनिर्माणार्थं कुम्भकाराः काष्ठेन यं
व्यापारं कुर्वन्ति तत्र 'वेणुना', कुर्यात् नतु दारुणा। अग्नि-
र्देवेभ्योऽनिलायत स वेणुं प्राविशदिति श्रुत्या वेणोस्तेजस्त्वं तप्त-
घृताधारत्वात् प्रवर्ग्यपात्रमपि 'तेजः'। अतो वेणुरूपेण 'तेजसा',
प्रवर्ग्यरूपं 'तेजः', समृद्धं करोति॥

कल्पः। समिच्छ्य मृदं (१०)"मखस्य शिरोऽसीति"(१०)। पिण्डं
कृत्वेति। हे मृत्पिण्ड त्वं यज्ञस्य शिरःस्थानीयः 'असि'॥

प्रवर्ग्यार्थस्य द्रव्यस्य शिरस्थानीयत्वं विशदयति। "मखस्य
शिरोऽसीत्याह। यज्ञो वै मखः। तस्यैतच्छिरः। यत् प्रवर्ग्यः॥२॥
तस्मादेवमाह।" इति। (५प्र०।३अ०।५म०) प्रथमानुवाके
धनुःकोट्योच्छिन्नं यज्ञपुरुषस्य शिरो द्यावापृथिव्योरनुवर्त्तनात्
प्रवर्ग्यनाम सम्पन्नमित्युक्तं। तस्मात् मखस्य शिरोऽसीति
मन्त्रोक्तमुपपन्नं॥

(१८)यज्ञस्य॑ प॒दे स्थः(१८)। (१९)गाय॒त्रेण॑ त्वा छन्द॑सा करोमि। त्रैष्टु॑भेन त्वा छन्द॑सा करोमि। जाग॑तेन त्वा

कल्पः। (१८)यज्ञस्य पदे स्थ(१८) इत्यङ्गुष्ठाभ्यां निगृह्य इति। आर्द्रस्य पिण्डस्योपरि अङ्गुष्ठद्वयग्रहणेन निष्पन्नविन्दुद्वयाकारे रेखाञ्छने युवां 'यज्ञस्य', पादौ भवथः॥

एतयोर्यज्ञपादत्वे शास्त्रप्रसिद्धिं दर्शयति। "यज्ञस्य पदे स्थ इत्याह। यज्ञस्य ह्येते पदे। अथो प्रतिष्ठित्यै।" इति। (५ प्र०। ३ अ०। ६ म०)। समानरूपत्वेन द्वित्वेन च पादसादृश्यादित्थं कर्त्तव्यं। अपि च पादद्वयसादृश्येन प्रतिष्ठार्थमेतद्भवति* ॥

कल्पः। महावीरं करोति। त्रियुद्धिं पञ्चोद्धिमपरिमितोद्धिं प्रादेशमात्रमूर्ध्वसमानं† उपरिष्टादासेचनवन्तं मध्ये सन्नतं वायव्यप्रकारङ्गायत्रेण त्वा छन्दसा करोमीति प्रथमन्त्रैष्टुभेनेति। द्वितीयं जागतमिति। तृतीयं अपि वा सर्वैरेकैकमिति। पाठस्तु। (१९)"गायत्रेण त्वा ० छन्दसा करोमि"(१९) इति। हे प्रथम महावीर त्वां गायत्रच्छन्दोदेवतासामर्थ्येन निष्पादयामि। एवं द्वितीयतृतीययोर्महावीरयोस्त्रैष्टुभजागतमन्त्रौ व्याख्येयौ॥

मन्त्रेषु गायत्र्यादिपदानामुपयोगं दर्शयति। "गायत्रेण त्वा छन्दसा करोमीत्याह। छन्दोभिरेवैनं करोति" इति।

* प्रतिष्ठार्थमेव भवतीति तै० पाठः।

† मूर्ध्वसानुमिति तै० पाठः।

छन्दसा करोमि(१९)। (२०)मखस्य रास्नासि(२०)। (२१)अ-

(५ प्र०।३ अ०।७ म०)। एतेषां मन्त्राणां पाठेन महावीरस्येदं छन्दो देवतादिभिर्निष्पादितं भवति॥

एकैकस्मिन् महावीरे कर्त्तव्यान्तरं विधत्ते। "त्रियुद्धिं करोति। त्रय इमे लोकाः एषां लोकानामाप्त्यै।" इति। (५ प्र०।३ अ०। ८म०)। भाण्डस्योपरिभागोऽधस्तात् भागे प्रक्षेपे यादृश आकारो भवति। तादृश आकार उद्धिरित्युच्यते। ऊर्ध्वाधोभावेनावस्थितभाण्डत्रयवत् त्रिविधा उधा यस्य* महावीरस्य सोऽयं 'त्रियुद्धिः'। तत्र त्रिलोकाप्राप्तिलोकत्रयप्राप्तिः॥

पूर्वव्याख्यातैः छन्दःप्रतिपादकैर्मन्त्रैः तन्निष्पादनं विधत्ते। "छन्दोभिः करोति॥ ३॥ वीर्यं वै छन्दाꣳसि। वीर्येणैवैनं करोति।" इति। (५ प्र०।३ अ०।९ म०)। वीर्यप्रदत्वात् गायत्र्यादिच्छन्दसां वीर्यरूपत्वं॥

कल्पः। (२०)"मखस्य० रास्नासि"(२०) इति। उपबिलं रास्नां करोतीति। बिलस्य समीपे वर्त्तमान हे वलयाकार त्वं यज्ञस्य 'रास्ना' रशना, 'असि'। यथा काञ्चीदाम, कण्ठाभरणं वा तद्वत्॥

कल्पः। (२१)"अदितिस्ते बिलं गृह्णातु"(२१) इति वेणुपर्वणा बिलं करोतीति। पाङ्क्तेन छन्दसेति मन्त्रशेषः। हे महावीर

* उद्धाया इति तै० पाठः।

दितिस्ते विलँ गृह्णातु । पाङ्क्तेन छन्दसा(२१) ।

---

पङ्क्तिछन्दो देवतया सह 'अदितिः' भूमिर्देवी, 'ते' तव, 'विलं', 'गृह्णातु' स्वीकरोतु ॥

तमेतं मन्त्रं विनियुङ्क्ते। "यजुषा विलं करोति व्यावृत्त्यै" इति। (५प्र०।२अ०।१०म०)। लौकिकेषु मृत्पात्रेषु मन्त्र-मन्तरेणैव कुम्भकारा 'विलं' कुर्वन्ति, अत्र तु मन्त्रेणेति 'व्यावृत्तिः' ॥

महावीरस्य प्रादेशपरिमाणं हस्ताभिनयेन विधत्ते। "इय-न्तं करोति। प्रजापतिना यज्ञमुखेन सम्मितम्" इति। (५प्र०। २अ०।११म०)। यज्ञपुरुषस्य शिरश्चिवुकयोर्मध्यवर्त्ति 'प्रादेश-मात्रं', प्रजापतिश्च वैश्वानरविद्यायां प्राजापत्यत्वेनोपास्यः। यस्त्वेतमेवं प्रादेशमात्रमिति छन्दोगैराम्नातत्वात्। अतः प्रा-देशमात्रो महावीरः 'प्रजापतिना यज्ञमुखेन', च तादृशो भवति ॥

तदेवं परिमाणमनूद्य प्रशंसति । "इयन्तं करोति। यज्ञ-परुषा सम्मितम्" इति। (५प्र०।२अ०।१२म०)। 'यज्ञस्य' परुरङ्गं ऐन्द्रवायवादिग्रहपात्रं, तेन सादृश्यं प्रादेशमात्रत्वे सम्पाद्यते ॥

पुनरप्यनूद्य प्रशंसति। "इयन्तं करोति। एतावद्वै पुरुषे वीर्यं वीर्यसम्मितम्" इति ॥ ४ ॥ (५प्र०।२अ०।१३म०)। पुरुषशरीरे 'वीर्यं' दर्शनश्रवणादिसामर्थ्यं, प्रादेशपरिमिते मुखे विद्यते। अतो वीर्यसादृश्यमेतस्य भवति ॥

(२१)सूर्यस्य हरसा श्राय(२१)। (२२)मखौसि(२२) ॥ ५ ॥

पते, शिरः, कृतावरीकृध्यासमद्य मखस्य शिरः, शिरः, शिरोऽसि, नव च ॥ अनु० २ ॥

यतः *परिमाणाभावरूपं पश्चात्करं विधत्ते। "अपरिमितं करोति। अपरिमितस्यावरुध्यै" इति। (५प्र०।३अ०। १४म०)। परिमाणनियत्यभावेनापि †निमित्तत्वबलं फलं सम्पद्यते ॥

यदुक्तं सूत्रकारेण उपविलं पात्त्राङ्करोतीति तदत्र विधत्ते। "परिग्रीवं करोति धृत्यै" इति। (५प्र०।३अ०।१५म०)। ग्रीवायाः परितः 'परिग्रीवं' तत्र वलयाकारो धारणयोपयुज्यते ॥

कल्पः। (२१)"सूर्य्यस्य हरसा श्राय" (२१) इति। इत्युत्तरतः सिकतासु प्रतिष्ठाप्येति। हे महावीर 'सूर्य्यस्य हरसा' तेजसा आतपेन, 'श्राय' शुष्कप्रयुक्तो भव ॥

मन्त्रस्य स्पष्टार्थतां दर्शयति। "सूर्य्यस्य हरसा श्रायेत्याह। यथा यजुरेवैतत्" इति। (५प्र०।३अ०।१६म०) ॥

कल्पः। "मखोसीत्यनुवीक्षते" इति। हे महावीर त्वं यज्ञसाधनत्वात् 'मखः' यज्ञस्वरूपः, 'असि' ॥

* नियतपरिमाणरूपाभावरूपं तै० पाठः।
† निमित्तेन D चिह्नितपुस्तकपाठः।

अथ तृतीयोऽनुवाकः।

इयतीर्देवीरिन्द्रस्यौजोस्यग्निजा अस्यायुर्धेहि प्राणं पश्चं। [१]वृष्णो अश्वस्य निष्पदसि। वरुणस्त्वा धृतव्रत

---

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

अथ तृतीयोऽनुवाकः।

द्वितीये महावीरनिर्माणमुक्तं तृतीये तत्संस्कारा उच्यन्ते। कल्पः। वृष्णो अश्वस्येति सकृद्गार्हपत्ये प्रदीप्य प्रथमकृतं महावीरं शफाभ्यां परिगृह्य धूपयति। वृष्णो अश्वस्य निष्पदसीति। पाठस्तु। [१]"वृष्णो अश्वस्य ० मित्रावरुणयोर्ध्रुवेण धर्मणा"[१] इति। हे महावीर, त्वं 'वृष्णः' सेचनसमर्थस्य 'अश्वस्य' सम्बन्धि 'निष्पत्' निःसृतं यः शकृत् तद्योगेन तद्रूपोऽसि। तादृशं त्वां 'धृतव्रतः' स्वीकृतनियमो वरुणो देव, 'आधूपयतु' सर्वतो धूपितं करोतु। 'मित्रावरुणयोः' सम्बन्धी ध्रुवो धर्मास्थितः* पुरुषविशेषः। तद्रूपेण द्रव्येण 'धूपयतु' इत्यन्वयः॥

---

* धर्मास्थिरः ते॰ पाठः।

आधूपयतु। मित्रावरुणयोर्ध्रुवेण धर्मणा[१]। [२]अर्चिषे त्वा शोचिषे त्वा। ज्योतिषे त्वा। तपसे त्वा[२]। [३]अभी-

अनेन मन्त्रेण साध्यं धूपनं विधत्ते। "अश्वशकेन धूपयति। प्राजापत्यो वा अश्वः सयोनित्वाय" इति। (५प्र०। ३अ०।१७म०)। शकशब्देन शकृदुच्यते, 'अश्वस्य' प्राजापत्यादिजन्यत्वात् 'प्राजापत्यत्वं'। अतः अश्वसम्बन्धिधूपेन सर्वकारणभूतप्रजापतिसम्बन्धसिद्धेः 'सयोनित्वं' भवति॥

मन्त्रोक्तमश्वं शकृदादित्यरूपेण छन्दोरूपेण च प्रशंसति। "वृष्णो अश्वस्य निष्पदसीत्याह। असौ वा आदित्यो वृषाश्वः। तस्य छन्दांसि निष्पत् ॥५॥ छन्दोभिरेवैनं धूपयति" इति। (५प्र०।३अ०।१८म०)॥

कल्पः। अग्रेण गार्हपत्यमवटं खात्वा लोहितपचनीयैः सम्भारैः अवस्तीर्य तेषु महावीरानुपावहरति। लोहितपचनीयैः सम्भारैः प्रच्छाद्य गार्हपत्येऽमुञ्जानादीप्या* पोषत्यर्चिषेत्येतैः प्रतिमन्त्रं प्रतिदिशमपि वा सर्वैः सर्वत इति। पाठस्तु। [१]"अर्चिषे त्वा शोचिषे त्वा तपसे त्वा"[१] इति। 'अर्चिषे', अर्चिरादयः शब्दाः ज्वालाविशेषवाचिनः। हे महावीर त्वां अर्चिरादिभ्यः समर्पयामि॥

एतैर्मन्त्रैर्यजमानस्य शरीरकान्तिः सम्पद्यते इति दर्श-

* मुञ्जानातीप्यो तै० पाठः।

मं मंहिना दिवं। मित्रो बंभूव सप्रथाः। उत श्रवसा पृथिवीं ॥ १ ॥

मित्रस्यं चर्षणी धृतः। श्रवों देवस्यं सान-

यति। "अर्चिषे त्वा शोचिषे त्वेत्याह। तेज एवास्मिन् दधाति। वारुणाभीद्धः। मैत्रियोपैति शान्त्यै" इति। (५प्र०। ३अ०।१८म०)॥

कल्पः। पच्यमानान् मैत्र्योपचरत्यभीमं महिना दिवमि-त्युत्तरया वेति*। तयोरुभयोः ऋचोः। पाठस्तु। (१)"अभीमं महिना दिवं ० द्युम्नं चित्रश्रवस्तमं"(१) इति। 'दिवं' दीप्य-मानमिमं महावीरमभिलक्ष्य, 'मित्रो' देवः, 'सप्रथाः' वि-स्तारसहितो, बभूव। स्वकीयां मैत्रीं विस्तृतवान् 'उत' अपि च, 'पृथिवीं' अभिलक्ष्य, 'श्रवसा' कीर्त्त्या, 'सप्रथा' बभूव। अस्यां† सर्वस्यां पृथिव्यां महावीरस्य कीर्त्तिं 'विस्तृतवान्' इत्यर्थः। 'दिवं' दिवि द्युलोके इति वा व्याख्येयं। 'चर्षणी-धृतः' मनुष्यान्मैत्र्याधारयतो 'मित्रस्य' देवस्य 'सानसिं' दान-शीलं 'श्रवः' श्रवणं कीर्त्तिरूपं, सर्वे वदन्तीति शेषः। 'द्युम्नं' मित्रेण दत्तं धनं, 'चित्रश्रवस्तमं' अतिशयेन विचित्रकीर्त्ति-युक्तं वर्त्तते ॥‡

* उत्तरया चेति D चिह्नितपुस्तकपाठः।

† अस्यां इति पदं H पुस्तके नास्ति।

‡ मन्त्रयोः फलं दर्शयति चात्वाल इति पाठः D पुस्तकेऽतिरिक्तो वर्त्तते।

सिं । युष्मं चित्रश्रवस्तमं[३] । [४]सिध्यै त्वा[४] । [५]देवस्त्वा सविताद्वपतु । सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्या[५] ।

---

कल्पः । पक्षेषु [४]"सिध्यै त्वा"[४] इति धृष्टी आदाय भस्मापोहति । हे महावीर त्वां 'सिध्यै' समीचीनस्वरूपसिध्यै महावीरगतभस्मापोहनसिध्यर्थं त्वां स्वीकरोमि इति शेषः ॥

मन्त्रस्य स्पष्टार्थतां दर्शयति । "सिध्यै त्वेत्याह । यथा यजुरेवैतत्" इति । (५प्र०।२अ०।२०म०) ॥

कल्पः । प्रथमकृतं महावीरं शफाभ्यां परिगृह्योद्वासयति देवस्त्वा सवितोद्वपत्विति । पाठस्तु । [५]"देवस्त्वा सवितोद्वपतु ० सुबाहुरुत शक्त्या"[५] इति । हे महावीर त्वां 'सविता' देवः, स्व'शक्त्या 'उद्वपतु' इतोऽवटादूर्ध्वं नयतु । कीदृशः सविता, 'सुपाणिः' शोभनाभ्यामुद्यमनकुशलाभ्यां पाणिभ्यां युक्तः, 'स्वङ्गुरिः' शोभनाभिरुद्वपनक्षमाभिरङ्गुलीभिर्युक्तः, 'उत' अपि च 'सुबाहुः' शोभनाभ्यां बाहुभ्यां युक्तः । पाणिशब्देन मणिबन्धादूर्ध्वं अङ्गुल्याधारभाग उच्यते । 'बाहुशब्देन' मणिबन्धादर्वाचीनभागः ॥

सवितृशब्दस्य तात्पर्यं दर्शयति । "देवस्त्वा सवितोद्वपत्वित्याह । सवितृप्रसूत एवैनं ब्रह्मणा देवताभिः उद्वपति" इति । ५प्र०।२अ०।२१म०) । सवित्राप्रेरितः सन् मन्त्रेण 'देवताभिश्च' सहोद्वपनं कृतवान् भवति ॥

(६)अपद्यमानः पृथिव्याम्। आशा दिश आपृण। उत्तिष्ठ बृहन्भव ॥ २ ॥

ऊर्द्ध्वस्तिष्ठ ध्रुवस्त्वं(६)। (७)सूर्यस्य त्वा चक्षुषा-

---

कल्पः। उद्वास्यापद्यमानः पृथिव्यामाशादिश आपृणेत्युत्तरतः सिकतासु प्रतिष्ठाप्येति। पाठस्तु। (६)"अपद्यमानः पृथिव्यां ० उर्ध्वस्तिष्ठ ध्रुवस्त्वं"(६) इति। हे महावीर त्वं 'पृथिव्यां' भूमौ 'अपद्यमानः' अपि भङ्गमप्राप्नुवन्, 'आशा दिशः' प्राच्याद्या मुख्यदिशः, आग्नेय्याद्या मुख्यदिशः, 'आपृण' सर्वतः पूरय, सर्वत्र प्रसिद्धो भव। 'उत्तिष्ठ' उत्सहस्व, 'बृहन् भव' स्वव्यापारेण प्रख्यातो भव, इह सिकतासूर्द्ध्वमुखः स्थिरः 'त्वं' तिष्ठ ॥

दिश आपृणेत्यस्य तात्पर्यं दर्शयति। "अपद्यमानः पृथिव्यामाशा दिश आपृणेत्याह॥६॥ तस्मादग्निः सर्वा दिशोनुविभाति" (५प्र०।३अ०।१२म०) इति। यस्मात् महावीरस्य सर्वदिक्स्फूर्त्तिः* प्रार्थ्यते 'तस्मात्' महावीरेणाभिन्नः 'अग्निः' स्वतेजसा 'सर्वा दिशः' प्रकाशयति ॥

ऊर्द्ध्वस्तिष्ठेत्यस्य तात्पर्यं दर्शयति। "उत्तिष्ठ बृहन् भवोर्द्ध्वस्तिष्ठ ध्रुवस्त्वमित्याह प्रतिष्ठित्यै" इति (५प्र०।३अ०।१२म०) ॥

कल्पः। सूर्यस्य त्वा चक्षुषान्वीक्ष इत्यनुवीक्षत इति। पा-

---

* सर्व्वदिक्पूर्त्तिः तै० पाठः।

न्वीक्षे। ऋजवे त्वा। साधवे त्वा। सुक्षित्यै त्वा भूत्यै त्वा(७)। (८)इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन

ठस्तु। (७)"सूर्यस्य त्वा चक्षुषान्वीक्षे ० भूत्यै त्वा"(७) इति। हे महावीर त्वां 'सूर्यस्य' चक्षुषाहमनुक्रमेण 'ईक्षे'। 'ऋजवे' आर्जवयुक्तायै भूम्यै त्वामीक्षे। 'साधवे' समीचीनायान्तरिक्षाय त्वामीक्षे। 'सुक्षित्यै' शोभननिवासाय द्युलोकाय त्वामीक्षे। 'भूत्यै' ऐश्वर्ययुक्ताभ्यो दिग्भ्यस्त्वामीक्षे। त्वदीक्षणेन सर्वे लोकाः स्वस्वकार्यक्षमा भवन्तीत्यर्थः॥

सूर्यस्य चक्षुषेत्यस्य तात्पर्यं दर्शयति। "ईश्वरो वा एषोऽन्धो भवितोः। यः प्रवर्ग्यमन्वीक्षते। सूर्यस्य त्वा चक्षुषान्वीक्ष इत्याह। चक्षुषा गोपीथाय" इति। (५प्र०।१अ०।२४म०) स्व'चक्षुषा' 'प्रवर्ग्यं' पश्यन् अन्धो भवितुं समर्थो भवति, अतः स्वचक्षुषो 'गोपीथाय' सूर्यस्य, चक्षुषेत्युक्तं॥

ऋज्वादिशब्दैः पृथिव्यादयो वक्ष्यन्ते इत्येतद्दर्शयति। "ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा भूत्यै त्वेत्याह। इयं वा ऋजुः। अन्तरिक्षꣳ साधु। असौ सुक्षितिः॥ ७॥ दिशो भूतिः। इमानेवास्मै लोकान् कल्पयति। अथो प्रतिष्ठित्यै" इति। (५प्र०।१अ०।२५म०)॥

कल्पः। अथैनाम् प्रदक्षिणं सिकताभिः पर्यूहति। (८)"इदमहममुमामुष्यायणं ० पर्यूहामि"(८) इति। राजन्यस्य 'पशुभिरिति' वैश्यस्येति, 'अहं' अध्वर्युः, 'अमुष्यायणं'

पर्य्यूहामि(८)। (९)गायत्रेण त्वा छन्दसाछृणद्मि। त्रैष्टुभेन त्वा छन्दसाछृणद्मि। जागतेन त्वा छन्द-

---

अमुष्य देवदत्तस्य पुत्रं, 'अमुं' यज्ञदत्तनामानं महावीररूपेणावस्थितं, 'विशा' प्रजया, 'पशुभिर्ब्रह्मवर्चसेन' च एतत् त्रितयरूपाभिः सिकताभिः 'इदं' प्रत्यक्षं यथा भवति तथा, 'पर्य्यूहामि' परितः स्थिरं करोमि॥

मन्त्रपाठेन तदर्थस्तथैव फलतीत्येतद्दर्शयति। "इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्य्यूहामीत्याह। विशैवैनं पशुभिर्ब्रह्मवर्चसेन पर्य्यूहति" इति। (५प्र०।२अ०। २६म०)॥

क्षत्रियवैश्ययोर्मन्त्रप्रयोगे विशेषं दर्शयति। "विशेति राजन्यस्य ब्रूयात्। विशैवैनं पर्य्यूहति। पशुभिरिति वैश्यस्य। पशुभिरेवैनं पर्य्यूहति" इति। (५प्र०।२अ०।२७म०)। 'पशुभिर्ब्रह्मवर्चसेन' इत्येतावत् क्षत्रियं प्रति परित्यजेत्। वैश्यं प्रति तु 'विशा' 'ब्रह्मवर्चसेन' इत्येतावत् परित्यजेदित्यर्थः॥

कल्पः। अथैनान् प्रभूतेनाजापयसाछृणत्ति गायत्रेण त्वा छन्दसाछृणद्मि। इत्येतैस्त्रिभिस्त्रिरेकैकं अपि वा सर्व्वैरेकैकमिति। पाठस्तु। (९)"गायत्रेण त्वा ० छृन्धि हविः"(९) इति। हे महावीर त्वां गायत्रच्छन्दोदेवतारूपेणाजक्षीरेण 'आछृणद्मि' सर्व्वतः सिञ्चामि। एवं त्रैष्टुभजागतमन्त्र-

साछृणद्मि। छृणत्तु त्वा वाक्॥ छृणत्तु त्वोर्क्। छृणत्तु त्वा हविः। छृन्धि वाचं। छृन्ध्यूर्जं। छृन्धि

---

योरपि योज्यं। तथा वागन्नहविरभिमानिन्यो देवतास्त्वां सिञ्चन्तु, त्वमपि वागादीन् सिञ्च॥

एतन्मन्त्रसाध्यं सेचनं विधत्ते। "असुर्यं पात्रमनाच्छृणं॥८॥ आछृणत्ति। देवत्राकः" इति। (५प्र०।३अ०।२८म०)। 'अनाच्छृणं' क्षीरसेचनरहितं पात्रं, 'असुर्यं' उष्णत्वेनात्युग्रत्वात् असुरेभ्यो हितं न तु देवेभ्यः, अतो देवार्थमासिञ्चेत् तेन शान्तं शीतलं पात्रं देवेषु करोति॥

तत्र द्रव्यं विधत्ते। "अजक्षीरेणाछृणत्ति। परमं वा एतत्पयः। यदजक्षीरं। परमेणैवेनं पयसाछृणत्ति" इति। (५प्र०।३अ०।२९म०)। सर्वव्याधिहरत्वादजक्षीरस्य परमत्वं॥

तत्र सेचने देवस्त्वासवितेत्यादिकं यजुर्विनियुङ्क्ते। "यजुषा व्यावृत्त्यै" इति। (५प्र०।३अ०।३०म०)। उष्णशान्त्यर्थे लौकिके सेचने मन्त्रो नास्ति। अत्र तु 'यजुषा' मन्त्रेण सिञ्चेदिति तद्व्यावृत्तिः॥

मन्त्रगतान् छन्दोवागूर्क्शब्दान् प्रशंसति। "छन्दोभिराछृणत्ति। छन्दोभिर्वा एष क्रियते। छन्दोभिरेव छन्दांस्याछृणत्ति" इति। (५प्र०।३अ०।३१म०)। पूर्वं गायत्रेण छन्दसा करोमीत्येवं छन्दोयुक्तैर्मन्त्रैरेष महावीरः कृतः,

हविः[९]। [१०]देवं पुरश्चरसघ्यासं त्वा[१०] ॥ ३ ॥

पृथिवीं, भव, वाक्, षट् च ॥ अनु० ३ ॥

---

अतोऽयमेव छन्दांसि अत्रापि छन्दोवागूर्ग्हव्ययुक्तैर्मन्त्रैः सेचने सत्यत्रत्यैश्छन्दोभिरिव पूर्व्वोक्तानि छन्दांसि सिक्तानि भवन्ति ॥

वागादिदेवता महावीरं सिञ्चन्तीत्येतदुक्तं महावीरस्तु वागादीन् सिञ्चतीत्यत्र प्रयोजनं दर्शयति। "ऋन्धि वाचमित्याह। वाचमेवावरुन्धे। ऋन्ध्यूर्ज्जमित्याह। ऊर्ज्जमेवावरुन्धे। ऋन्धि हविरित्याह। हविरेवाकः" इति। (५ प्र०।३ अ०। १२म०)। ते एतैर्मन्त्रैर्वागन्नप्राप्तिर्हविर्ह्हविस्सिद्धिश्च भवति ॥

कल्पः। अथैनान् कृष्णाजिन उपनह्यासजति। [१०]"देवपुरश्चरसघ्यासन्त्वा"[१०] इति। 'पुरश्चर' पुरतोवर्त्तमान, हे महावीर 'देव' द्योतनात्मक, त्वां 'सघ्यासं' कृष्णाजिने बध्वा क्वचिदूर्ध्वदेशे सक्तं कुर्य्यां ॥

मन्त्रस्य स्पष्टार्थतां दर्शयति। "देवपुरश्चरसघ्यासं त्वेत्याह। यथा यजुरेवैतत्" इति ॥८॥ (५ प्र०।३ अ०।१३म०) ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

अथ चतुर्थोऽनुवाकः ।

(१)ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामः । होतर्घर्ममभिष्टु-हि । अग्नी द्रौहिणौ पुरोडाशावधिश्रय । प्रतिप्रस्था-तर्विहर । प्रस्तोतः सामानि गाय(१) । (२)यजुर्युक्तꣳ साम-

अथ चतुर्थोऽनुवाकः ।

तृतीये महावीरसंस्कारा उक्ताः । चतुर्थे प्रैषा उच्यन्ते । कल्पः । प्रोक्षणीनामावृत्या प्रोक्षणीः सꣳस्कृत्य ब्रह्माणमाम-न्त्रयते । ब्रह्मन् प्रवर्ग्येणेति । पाठस्तु । (१)"ब्रह्मन् प्रवर्ग्येण ० सामानि गाय"(५) इति । हे 'ब्रह्मन्' वयं सर्वे, प्रवर्ग्याख्येन क-र्मणा प्रचरं अनुष्ठानं सम्पादयिष्यामः । हे 'होतः' त्वं 'घर्मं' प्रवर्ग्यं ब्रह्मजज्ञानमित्यादिभिर्मन्त्रैरभिष्टुतं कुरु । हे आग्नीध्र रौहिणाख्यौ, 'पुरोडाशावधिश्रय' श्रयणार्थं कपालस्योपरि स्थापय । हे 'प्रतिप्रस्थातः' विहरणं कुरु । तच्च विहरणं बो-धायनेन च दर्शितं । अथ प्रतिप्रस्थाता प्रवर्ग्यं विहरत्याहवनीये *कार्ष्मर्य्यमयान् परिधीन् प्रहरतीत्यादि । हे 'प्रस्तोतः' प्रवर्ग्यार्थानि, सामानि गाय ॥

कल्पः । यजुर्युक्तꣳ सामभिराक्तखमित्युपांशूक्त्वोामिन्द्रवन्तः

* कार्ष्मर्य्यंड इति तै० पुस्तकपाठः ।

भिराक्रखं त्वा। विश्वैर्देवैरनुमतं मरुद्भिः। दक्षिणाभिः प्रततं पारयिष्णुं। स्तुभो वहन्तु सुमनस्यमानं। स नो रुचं धेह्यहृणीयमानः॥ भूर्भुवः सुवः। ओमिन्द्रवन्तः प्रचरत[२] ॥ १ ॥

---

प्रचरतेत्युच्चैरनुजानाति इति। पाठस्तु। [२]"यजुर्युक्तꣳ सामभिराक्रखं त्वा ० इन्द्रवन्तः प्रचरत"[२] इति। हे प्रवर्ग्य त्वां 'स्तुभः' सामसु प्रयुज्यमाना: स्तोभा:, 'वहन्तु' विघ्नपरिहारेण समाप्तिपर्य्यन्तं निर्वहन्तु। कीदृशं त्वां, 'यजुर्युक्तं' यजुरुपलक्षितैर्मन्त्रैः सम्बद्धं, 'सामभिराक्रखं' आक्रान्याप्यायितानि खानीन्द्रियाणि अवयवा यस्य प्रवर्ग्यस्य सोऽयमाक्रखः तादृशं, सामगानेन हि प्रवर्ग्य आप्यायितो भवति, तथा 'विश्वैर्देवैर्मरुद्भिः' 'अनुमतं' अङ्गीकृतं प्रवर्ग्यमुद्वासयिष्यन् अजामग्नीध्रे ददातीत्यादिभिः 'दक्षिणाभिः', 'प्रततं' विस्तीर्णं, 'पारयिष्णुं' निर्विघ्नेन समाप्तिं गन्तुं शक्तं, 'सुमनस्यमानं' यजमाने स्नेहातिशयेन सौमनस्य युक्तं। हे प्रवर्ग्य 'स' त्वं, 'अहृणीयमानः' केनाप्यहिंस्यमानः, 'नः' अस्मदर्थं, 'रुचं धेहि' महतीं ज्वालां धारय। भूरादयस्त्रयो लोका अनुगृह्णन्तु। प्रणवशब्दवाच्यः परमात्माप्यनुगृह्णातु। हे ऋत्विजो यूयं 'इन्द्रवन्तः' इन्द्रदेवतास्वामिकाः सन्तः, 'प्रचरत' प्रवर्ग्यमनुतिष्ठत। अयमनुवाकः स्पष्टार्थबुद्ध्या ब्राह्मणेनोपेक्षितः॥

अहृणीयमानो दे च ॥ अनु० ४ ॥

---

अथ पञ्चमोऽनुवाकः ।

(१)ब्रह्मन् प्रचरिष्यामः। होतर्घर्ममभिष्टुहि(१)।(२)यमाय

---

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ पञ्चमोऽनुवाकः ।

चतुर्थे प्रैषा उक्ताः। पञ्चमे तु स्वरगतेष्वाङ्गारेषु महावीरस्थापनमुच्यते। तत्रादौ पूर्वोक्तप्रैषमन्त्रे पाठान्तरं दर्शयति। (१)"ब्रह्मन् प्रचरिष्यामः। होतर्घर्ममभिष्टुहि"(१) इति। पूर्वमाम्नाते मन्त्रे प्रवर्ग्येणेति शब्दोऽस्ति। अस्मिंस्त्वसौ नास्तीत्येतावान् पाठविशेषः॥

ब्रह्मन्निति सम्बोधनस्य तात्पर्य्यं दर्शयति। "ब्रह्मन् प्रचरिष्यामो होतर्घर्ममभिष्टुहीत्याह। एष वा एतर्हि बृहस्पतिः। यत् ब्रह्मा। तस्मा एव प्रतिप्रोच्य प्रचरति। आत्मनो नार्त्यै" इति। (५प्र०।४अ०।१म०)। 'एतर्हि' कर्मकाले, यो ब्रह्मास्ति, एष एव बृहस्पतिस्थानीयः,'तस्मै' बृहस्पतये 'कथयित्वा' प्रचारे सति, स्वस्यार्त्तिवैकल्यनिमित्ताऽपराधो न भवति॥

त्वा मखाय त्वा। सूर्य्यस्य हरसे त्वा[१]।[२]प्राणाय स्वाहा

---

कल्पः। यमाय त्वा मखाय त्वेति सर्वं परिघर्म्यमभिपूर्वं त्रिः प्रोक्षतीति। पाठस्तु। [१]"यमाय त्वा • हरसे त्वा"[१] इति। हे घर्म्य पात्रसमूह, 'यमाय' नियमार्थं त्वां प्रोक्षामीति शेषः। तथा 'मखाय' यज्ञार्थं त्वां प्रोक्षामि। 'सूर्य्यस्य हरसे' सूर्य्यसम्बन्धितेजोऽर्थं सूर्य्यमण्डलपर्य्यन्तं ज्वालोद्गमार्थं त्वां प्रोक्षामि॥

यममखसूर्य्यशब्दैः सूचिताभिः प्रवर्ग्यदेवताभिः सर्व्वाभिः सम्पादितां प्रवर्ग्यसमृद्धिं दर्शयति। "यमाय त्वा मखाय त्वेत्याह। एता वा एतस्य देवताः। ताभिरेवैनꣳ समर्द्धयति" इति। (५प्र०।४अ०।२म०)॥

प्रोक्षणद्रव्यं विधत्ते। "मदन्तीभिः प्रोक्षति। तेज एवास्मिन् दधाति" इति।१॥ (५प्र०।४अ०।३म०)। तप्ता आपो मदन्त्यः ताभिः प्रोक्षणे यजमाने कान्तिः सम्पद्यते॥

तत्रानुक्रमं विधत्ते। "अभिपूर्व्वं प्रोक्षति। अभिपूर्व्वमेवास्मिन् तेजो दधाति" इति। (५प्र०।४अ०।४म०)। 'पूर्व्वं' प्रथमं महावीरमभिलक्ष्य, 'अभिपूर्व्वं' तदादिकमेव प्रोक्षेत् न तु विपर्य्ययेण। एवं सति यजमाने पितृपुत्रादिक्रमेणैव तेजः सम्पद्यते॥

आवृत्तिं विधत्ते। "त्रिः प्रोक्षति। त्र्यावृद्धि यज्ञः। अथो मेध्यत्वाय" इति। (५प्र०।४अ०।५म०)। अग्निचयसाध्य-

त्वेन सवनत्रयरूपत्वेन वा यज्ञस्यावृत्तित्रयोपेतत्वं, अपि च प्रोक्षणावृत्त्या मेध्यत्वातिशये सति* यज्ञयोग्यता सम्पद्यते ॥

होतर्घर्ममभिष्टुहीति प्रैषस्योक्तत्वाद्धोतृकर्तृकमनुवचनं विधत्ते। "होतान्वाह। रक्षसामपहत्यै" इति। (५ प्र०।४ अ०।६ म०)। होतुरनुवचनं यज्ञविघातिनां रक्षसां वधाय भवति ॥

अथ स्वानुवाकप्रकारो† आश्वलायनेन स्पष्टमभिहितः। स्पृष्टोदकं प्रवर्ग्येण चरिष्यन् उत्तरेण खरं परिव्रज्य पश्चाद्स्योपविश्य प्रेषितोऽभिष्टुयादृगावानं ऋचमृचमन्ववानमुक्त्वा प्रणुत्यावस्येत् ब्रह्मजज्ञानमित्यादिः तत्रैकस्या ऋचोमध्ये श्वासराहित्यं विधत्ते। "अनवानं। प्राणानाꣳ सन्तत्यै" इति। (५ प्र०। ४ अ०।७ म०)। अवानः श्वासः तद्रहितं यथा भवति तथा पठेत्। तच्च यजमानप्राणानामविच्छेदाय भवति ॥

तास्वृक्षु गायत्रीधर्ममतिदिशति। "त्रिष्टुभः सतीर्गायत्रीरिवान्वाह ॥२॥ गायत्रो हि प्राणः। प्राणमेव यजमाने दधाति" इति। (५ प्र०।४ अ०।८ म०)। यद्यपि ब्रह्मजज्ञानमित्यादयस्त्रिष्टुभः तथापि गायत्रीवदनुवचनं कुर्यात्। गायत्रीरूपं ध्यात्वा पठेदित्यर्थः। प्राणस्य गायत्रत्वात्। गायत्रीसमानानुवचनेन यजमाने प्राणं स्थैर्येण स्थापयति, गायत्र्या रक्ष्यमाणत्वात् प्राणस्य गायत्रत्वं। तद्रक्ष्यत्वञ्च प्राणस्य वाजसनेयिनः समामनन्ति। प्राणा वै गयास्तत् प्राणांस्तत्रे तद्यद्गयांस्तत्रे तस्मात् गायत्री नामेति ॥

* सिध्यतीत्याशये सति D चिह्नितपुस्तकपाठः।
† अनुवचनप्रकार इति तै० पुस्तकपाठः।

व्यानाय स्वाहापानाय स्वाहा। चक्षुषे स्वाहा श्रोत्राय स्वाहा। मनसे स्वाहा वाचे सरस्वत्यै

---

अनुवचनकाले व्यापारान्तरेण व्यवधानं निवारयति। "सन्ततमन्वाह। प्राणानामन्नाद्यस्य सन्तत्यै। अथो रक्षसामपहत्यै" इति। (५ प्र०।४ अ०।८ म०)। एकामृचमुक्त्वा प्राणव्यासानं कृत्वापि पुनरप्यन्यामृचमेव ब्रूयात्, न त्वन्यं वाग्व्यापारं कुर्य्यात्। तदिदं सान्तत्यं एतेन प्राणा अविच्छिन्ना भवन्ति, अन्नञ्च न विच्छिद्यते। रक्षांसि चापहन्यन्ते॥

ऋचां बहुत्वं विधत्ते। "यत् परिमिता अनुब्रूयात्। परिमितमवरुन्धीत। अपरिमिता अन्वाह। अपरिमितस्यावरुद्ध्यै" इति। (५ प्र०।४ अ०।१० म०)। ऋचामल्पत्वे फलमप्यल्पं स्यात्। अतः फलबाहुल्याय बह्वीरनुब्रूयात्॥

यदुक्तं सूत्रकारेण अथैतं प्रचरणीयं महावीरं शफाभ्यां परिगृह्याविच्छिन्नाग्रेण वेदेनोपरिष्टात्* सम्मार्ष्टीति। तत्र वेदस्य दर्भमयत्वं वारयितुं मौञ्जत्वं विधत्ते। "शिरो वा एतद्यज्ञस्य॥ २॥ यत् प्रवर्ग्यः। ऊर्ग्मुञ्जाः। यन्मौञ्जो वेदो भवति। ऊर्जैव यज्ञस्य शिरः समर्द्धयति" इति। (५ प्र०।४ अ०।११ म०)। प्रवर्ग्यस्य यज्ञशिरस्त्वं† प्रथमानुवाके प्रपञ्चितं। 'मुञ्जाः' तृणविशेषाः, तेषां पशुभिर्भक्ष्यत्वादूर्ग्रूपत्वं, अतो

---

* वेदेनाहवनीयस्योपरिष्टात् इति तै० पुस्तकपाठः।

† यज्ञस्य शिरस्त्वं इति D चिह्नितपुस्तकपाठः।

स्वाहा। दक्षाय स्वाहा क्रतवे स्वाहा। ओजसे स्वाहा बलाय स्वाहा(२)। (४)देवस्त्वा सविता मध्वानक्तु(४) ॥ १ ॥

---

वेदस्य मौञ्जत्वे सति जटारूपेण वेदेन, 'यज्ञस्य' 'शिरः', सम्टङ्क्ते करोति ॥

कल्पः। प्राणाय स्वाहा व्यानाय स्वाहेति स्रुवेणाहवनीये सप्तैकादश वा प्राणाहुतीर्जुहोतीति। पाठस्तु। (१)"प्राणाय स्वाहा व्यानाय स्वाहापानाय स्वाहा • बलाय स्वाहा"(१) इति। प्राणादिदेवेभ्यः स्वाहुतमिदमस्तु। 'वाचे' इत्यनेन सरस्वती विशेष्यते, शब्दात्मिकाया वाग्देवताया इत्यर्थः। 'दक्षः' उत्साहः, 'क्रतुः' सङ्कल्पः, 'ओजः' अष्टमोधातुः, तत्कार्यं 'बलं' ॥

एतैर्मन्त्रैः साध्यान् होमान् विधत्ते। "प्राणाहुतीर्जुहोति। प्राणानेव यजमाने दधाति" इति। (५प्र०।४अ०।१२म०)।

तत्र सप्तसङ्ख्यापक्षं विधत्ते। "सप्त जुहोति। सप्त वै शीर्षण्याः प्राणाः। प्राणानेवास्मिन् दधाति" इति। (५प्र०।४अ०।१३म०)। शिरोगतसप्तच्छिद्रवर्त्तिप्राणानां सप्तत्वात् सङ्ख्यया तत्प्राप्तिः ॥

कल्पः। देवस्त्वा सविता मध्वानक्त्विति स्रुवेणोपर्य्याहवनीये महावीरमनक्तीति। (४ मन्त्रः)। हे महावीर 'त्वां' 'सविता' 'देवः', 'मध्वा' मधुरेण घृतेन, 'अनक्तु' सक्तं करोतु ॥

(३)पृथिवीं तपसस्त्रायस्व(५)। (६)अर्चिरसि शोचिरसि

---

मध्वेति प्रयोगाद्यजमानस्य तेजो व्याप्तिं दर्शयति। "देवस्त्वा सविता मध्वानक्तित्याह ॥ ४ ॥ तेजसैवैनमनक्ति" इति। (५प्र०।४अ०।१४म०) ॥

कल्पः। पृथिवीं तपसस्त्रायस्वेति अपरस्मिन् खरे राजतं रुक्मं निधायेति। (५मन्त्रः)। हे रुक्म 'पृथिवीं', एतां 'तपसः' 'त्रायस्व' अग्निसन्तापाद्रक्ष ॥

मन्त्रस्य तात्पर्यं दर्शयति। "पृथिवीं तपसस्त्रायस्वेति हिरण्यमुपास्यति। अस्या अनतिदाहाय" इति। (५प्र०।४अ०।१५म०)। 'अस्याः' पृथिव्या इत्यर्थः ॥

रुक्मस्योपरि प्रदीप्तानां मुञ्जानां प्रक्षेपं विधत्ते। "शिरो वा एतद्यज्ञस्य। यत्प्रवर्ग्यः। अग्निः सर्वा देवताः। प्रस्तवानाद्दीप्योपास्यति। देवतास्वेव यज्ञस्य शिरः प्रतिदधाति" इति। (५प्र०।४अ०।१६म०)। अग्नेः सर्व्वदेवतात्वं ते देवा अग्नौ तनूः सन्न्यदधतेति श्रुतेरवगन्तव्यं। 'प्रस्तवाः' प्रकर्षेण लूनाः मुञ्जामुष्टयः, तानग्नौ सर्व्वतः प्रदीप्य रुक्मस्योपरि निदध्यात्। एवं सत्यग्निरूपासु 'देवतास्वेव' प्रवर्ग्यरूपं यज्ञशिरः स्थापनं भवति। प्रदीपनप्रकारस्तु सूत्रकारेण स्पष्टमुक्तः। इयान्मुञ्जप्रलवानादाय दक्षिणेषामग्नि गार्हपत्ये प्रदीपयाभ्यर्चिषे* त्वेति;

---

* प्रदीपयत्वर्चिषे इति तै० पाठः।

ज्योति॑रसि त॒पो॑ऽसि[९]। [१०]सꣳ सी॑दस्व म॒हाꣳ अ॑सि।

---

तेषामग्रैरुत्तरेषां मूलानि शोचिषे त्वेति, तेषां मूलैर्दक्षिणेषां मूलानि ज्योतिषे त्वेति, तेषां मूलैरुत्तरेषामग्राणि तपसे त्वेति ॥

प्रदीप्तमुञ्जस्थापने कञ्चिद्विशेषं विधत्ते। "अप्रतिशीर्णाग्रं भवति। एतत् बर्हिर्ह्येषः" इति ॥ ५॥ (५प्र०।४अ०।१७म०)। दीप्तकुञ्जानां 'अग्रं', 'प्रतिशीर्णं' इतस्ततो विप्रसृतं यथा न 'भवति' तथा समूह्यैव स्थापयेत्। यस्मादयं प्रवर्ग्यः, 'एतत्' 'बर्हिः' मुञ्जरूपबर्हिर्युक्तः, तस्माद्वेद्यास्तरणबर्हिष इवाप्रतिशीर्णत्वं* युक्तं ॥

कल्पः। तान् व्यत्यस्तानुपरि रुक्मे निदधाति। [९]"अर्चिरसि शोचिरसि ज्योतिरसि तपोऽसि"[९] इति। हे दक्षिणमुञ्जाग्रभाग त्वं 'अर्चिः' ज्वालारूपः 'असि', हे उत्तरमुञ्जमूलभाग त्वं 'शोचिः' शुचिरूपः 'असि', हे दक्षिणमुञ्जमूलभाग त्वं 'ज्योतिः' प्रकाशरूपः 'असि', हे उत्तरमुञ्जाग्रभाग त्वं 'तपः' सन्तापरूपः 'असि' ॥

मन्त्रतात्पर्यं दर्शयति। "अर्चिरसि शोचिरसीत्याह। तेज एवास्मिन् ब्रह्मवर्चसं दधाति" इति। (५प्र०।४अ०।१८म०)। शरीरकान्तिः श्रुताध्ययनसम्पत्तिश्चेत्युभयविधप्रकाशस्तेन मन्त्रेण यजमानं सम्पद्यते ॥

---

* शीर्णाग्रत्वं इति तै० पु० पाठः।

शोचस्व देववीतमः। विधूममग्ने अरुषं मियेध्य। सृज प्रशस्त दर्शतं[७]। [८]अञ्जन्ति यं प्रथयन्तो न विप्राः। वपावन्तं नाग्निना तपन्तः। पितुर्न पुत्र उपसि प्रेष्ठः। आघर्मो अग्निमृतयन्नसादीत्[८] ॥ २ ॥

---

कल्पः। सꣳसीदस्व महाꣳ असीति तेषु महावीरं प्रतिष्ठापयेति। पाठस्तु। [७]"सꣳसीदस्व महाꣳ असि॰ प्रशस्तदर्शतम्"[७] इति। हे महावीर 'सꣳसीदस्व' अत एतेषु प्रदीप्तमुञ्जेषु सम्यगुपविश, 'महाꣳअसि' त्वं गुणैरधिकोऽसि, अतः 'देववीतमः' अति शयेन देवैः काम्यो भूत्वा, 'शोचस्व' दीप्यस्व। हे 'मियेध्य' मेधार्ह, 'प्रशस्त' उत्कृष्ट 'अग्ने', 'अरुषं' अरोषणमनुग्रं, 'दर्शतं' द्रष्टुं शक्यं, शान्तं 'धूमं' विशेषेण, 'सृज' ॥

शोढस्य कर्मणो हेतुत्वान्महच्छब्दार्थः प्रसिद्ध इत्येतद्दर्शयति। "सꣳसीदस्व महाꣳ असीत्याह। महान् ह्येषः" इति। (५प्र॰।४अ॰।९८म॰)॥

कल्पः। अञ्जन्ति यं प्रथयन्त इति स्रुवेण महावीरमनक्त्यभिपूरयति चेति। पाठस्तु। [८]"अञ्जन्ति यं प्रथयन्तो न विप्राः ॰ आघर्मो अग्निमृतयन्नसादीत्"[८] इति। 'विप्राः' ब्राह्मणा ऋत्विजः, 'वपावन्तं' मध्ये रन्ध्रयुक्तं, 'यं' महावीरं, 'प्रथयन्तः' 'न', प्रख्यापयन्त इव, 'अञ्जन्ति' घृतेनाक्तं कुर्वन्ति। कीदृशाः 'विप्राः' 'अग्निना तपन्तः' प्रज्वालयात्यन्तं दाहमकुर्वन्तः,

(९)अनाधृष्या पुरस्तात्। अग्नेराधिपत्ये। आयुर्मे दाः। पुत्रवती दक्षिणतः। इन्द्रस्याधिपत्ये। प्रजां मे दाः। सुषदा पश्चात्। देवस्य सवितुराधिपत्ये। प्राणं मे दाः। आश्रुतिरुत्तरतः ॥ ३ ॥

मित्रावरुणयोराधिपत्ये। श्रोत्रं मे दाः। विधृतिरुपरिष्टात्। बृहस्पतेराधिपत्ये। ब्रह्म मे दाः क्षत्रं मे

---

आच्छादनाभावे अतितापेन महावीरस्य भङ्गोऽपि प्रसज्येत। स घर्म्मो, विप्रैरक्तो महावीरः 'स्तनयन्' स्वतं यज्ञं निष्पादयन्, 'अग्निं' एतं 'अयादीत्' आसन्नवान् प्राप्तवान्। तत्र दृष्टान्तः, 'पितुः', 'उपसि' उपान्तिके, 'प्रेष्ठः' 'पुत्रः' 'न', प्रियतमः पुत्र इति ॥

कल्पः। अध्वधि महावीरमसंस्पृशन् यजमानः प्राञ्चं प्रादेशं धारयमाणो जपत्यनाधृष्या पुरस्तादित्येतैर्यथालिङ्गमिति। पाठस्तु। (९)"अनाधृष्या पुरस्तात् • मनो मे धाः"(९) इति। 'पुरस्तात्' पूर्वस्यां दिशि, वर्त्तमाने हे देवते 'अनाधृष्या' केनाप्यतिरस्कार्य्या, त्वं 'अग्नेराधिपत्ये' वर्त्तमाना सती 'आयुर्मे दाः' मे देहि एवं दिगन्तरेषु योज्यं। 'पुत्रवती' पुत्रयुक्ता देवता, 'सुषदा' सुखेनोपविष्टा, 'आश्रुतिः' सर्व्वत्र प्रख्याता, 'विधृतिः' सर्व्वस्य विधारयित्री, 'ब्रह्म' मन्त्रजातं, 'क्षत्रं' बलं, तत् सर्व्वं मे देहि। 'तेजः' शरीरकान्तिः, 'वर्च्चः'

द्राः। तेजो मे धा वर्चो मे धाः। यशो मे धास्तपो मे धाः।

---

दीप्तिः, 'यशः' ख्यातिः, 'तपः' नियमविशेषः, 'मनः' चित्तदार्ढ्यं, एतत्सर्व्वं 'धाः' सम्पादय ॥

मन्त्रस्य तात्पर्य्यं दर्शयितुमादौ तावत् ब्रह्मवादिनां प्रश्नोत्तरमाह। "ब्रह्मवादिनो वदन्ति। एते वाव त ऋत्विजः। ये दर्शपूर्णमासयोः। अथ कथा होता यजमानायाशिषो नाशास्त इति। पुरस्तादाशीः खलु वा अन्यो यज्ञः। उपरिष्टादाशीरन्यः" इति ॥ ६ ॥ (५ प्र०।४ अ०।२०म०)। 'दर्शपूर्णमासयोः' ब्रह्मा होताध्वर्युराग्नीध्रश्चेत्येवमादयो ये 'ऋत्विजः' 'ये' सन्ति ते 'ऋत्विजः' सर्व्वेऽपि 'एते' एव अत्रापि वर्त्तन्ते। 'अथ' एवं सति, तत्र 'होता' यजमानस्यायुराद्याशिषः प्रार्थितवान्, सूक्तवाकं आशास्ते यं यजमानोऽसावित्यादिमन्त्रपाठात्, अत्र तु स एव 'होता', 'कथा' कथं 'आशिषः', 'नाशास्ते', इति ब्रह्मवादिनां प्रश्नः। तत्राभिप्रायैतदुत्तरं द्विविधो हि यज्ञः 'पुरस्तादाशीः' 'उपरिष्टादाशीः' चेति तथा सति यत्र प्रधानकर्म्मण ऊर्द्धमाशीराशासनीया तत्रैव होतुस्तत्कर्त्तव्यता इह तु 'पुरस्तादाशीः' इतिकृत्वा होता नाशास्ते ॥

अथ मन्त्रतात्पर्य्यं दर्शयति। "अनाधृष्या पुरस्तादिति यदेतानि यजूंष्याह। शीर्षत एव यज्ञस्य यजमान आशिषोऽवरुन्धे" इति। (५ प्र०।४ अ०।२१म०)। महावीरस्योपरि प्रादेशधारणेन एतेषु यजुःषु यजमानेन पठितेषु, यज्ञशिरो-

मनो मे धाः[९]। [११]मनोरश्वासि भूरिपुत्रा। विश्वाभ्यो मानाष्ट्राभ्यः पाहि ॥ ४ ॥

सूपसदा मे भूया मा माहिꣳसीः[१०]।

---

रूपमहावीरसकाशादेव, 'यजमानः' सर्व्वा अपि 'आशिषः' प्राप्नोति, एतेषां च यजुषां प्रधानकर्म्मणः पुरा* पठनीयत्वात् अयं यज्ञः पुरस्तादाशीः॥

कास्ता मन्त्रोक्ता आशिष इत्याशङ्क्य दिग्भेदेन व्यवस्थितास्ता दर्शयति। "आयुः पुरस्तादाह। प्रजां दक्षिणतः। प्राणं पश्चात्। श्रोत्रमुत्तरतः। विधृतिमुपरिष्टात्। प्राणानेवास्मै समीचोदधाति" इति। (५प्र०।४अ०।२२म०)। 'विधृति' शब्देन अन्नबलादयः सर्व्वेऽपि विधार्य्यत्वात्† उपलक्ष्यन्ते। अनेन मन्त्रपाठेनायं यजमानः, 'अस्मै' स्वदेहार्थं, 'प्राणान्' 'समीचः' अनुकूलानवस्थापयति॥

"कल्पः। मनोरश्वासि भूरिपुत्रेत्युत्तरतः पृथिवीमभिमृशतीति। पाठस्तु। [१०]"मनोरश्वासि ० माहिꣳसीः"[१०] इति। हे भूमे त्वं 'मनोरश्वा', मनुष्यजातेर्व्यापिका सती, 'भूरिपुत्रा' बहुभिः पुत्रैर्युक्तासि, ये प्राणिनो भूमेरुत्पन्नाः ते सर्व्वेऽपि भूमेः पुत्राः तादृशी त्वं 'विश्वाभ्यः', 'नाष्ट्राभ्यः' विनाशकारणेभ्यः सर्व्वेभ्यः, मां 'पाहि', 'मे' मम 'सूपसदा' सुखेन सेवितुं योग्या 'भूयाः', 'मां' 'माहिꣳसीः' हिंसितं माकुरु॥

---

* पुरस्तात् इति तै० पु० पाठः।

† विधेयत्वात् इति D चिह्नित पु० पाठः।

(११)तपोष्वग्ने अन्तराँ अमित्रान्। तपा शँसमररुषः परस्य। तपा वसो चिकितानो अचित्तान्। वि

अनेन मन्त्रेण साध्यं भूमिस्पर्शं विधत्ते। "ईश्वरो वा एष दिशोऽनून्मदितोः। यं दिशोऽनुव्यास्थापयन्ति॥ ७॥ मनोरश्वासि भूरिपुत्रेतीमामभिमृशति। इयं वै मनोरश्वा भूरिपुत्रा। अस्यामेव प्रतितिष्ठत्यनुन्मादाय" इति। (५ प्र०। ४ अ०। २३ म०)। लोके 'यं' पुरुषं, मनुष्याः 'दिशः' 'व्यास्थापयन्ति' सर्वोर्दिशोऽनुक्रमेण विविधं सञ्चारयन्ति, 'एषः' सञ्चारी पुरुषः, 'दिशः' 'अनु'लक्ष्य 'उन्मदितोः' 'ईश्वरः' उन्मत्तो भवितुं समर्थो भवति दिग्भ्रमं प्राप्नोतीत्यर्थः। तस्मानेन मन्त्रेण भूमिस्पर्शे सति उन्मादो न भवति॥

मा हिँसीरित्यस्य तात्पर्यं दर्शयति। "उपसदा मे भूया मा मा हिँसीरित्याहाहिँसायै" इति। (५ प्र०। ४ अ०। २४ म०)॥

कल्पः। तपोष्वग्ने अन्तराँ अमित्रानिति गार्हपत्यादुदीचोऽङ्गारान्निरूह्येति*। पाठस्तु। (११)"तपोष्वग्ने अन्तराँ ० अजरा अयासः"(११) इति। हे 'अग्ने' 'अन्तरान्' देवयजनमध्ये गूढत्वेन वर्त्तमानान्, 'अमित्रान्' रक्षोरूपान् शत्रून्, 'सुतपः' सुष्ठु तपस्तप्तान् कुरु। 'अररुषः'

* अभ्युपोह्येति इति तै० पुस्तकपाठः।

ते ति॑ष्ठन्ताम॒जरा॑ अ॒यासः॑ ⁽¹¹⁾। ⁽¹²⁾चितः॑ स्थ परि॒ चितः॑।

---

अरह्वैं नामासुर आसीदिति श्रुतस्यारहनामकस्य, 'परस्य' शत्रोः, 'अꣳहं' संस्तवं, 'तप' विनाशय। हे 'वसो' वासहेतो वह्ने, 'चिकितानः' अभिज्ञः, त्वं 'अचित्तान्' अस्मासु चित्तरहितान् विरोधिनः, 'तप' 'ते' सर्व्वेऽप्यमित्राः, 'वि' 'तिष्ठन्तां' परस्परमेलनं परित्यज्य विविधं यथा भवति तथा तिष्ठन्तु। ततो वयं 'अजराः' वयोहानिरहिताः, 'अयासः' आयासरहिताश्च भूयास्मेति शेषः॥

कल्पः। चितः स्थ परिचित इति सहचितमङ्गारैः पर्य्यूहेति। स्वाहा मरुद्भिः परिश्रयस्वेति मन्त्रशेषः। (१२ मन्त्रः)। हे अङ्गाराः यूयं गार्हपत्यात् पृथक्कृताः सन्तः 'चितः' महावीरसमीपे सञ्चिताः, 'परि चितः स्थ' परितः समूहरूपा भवथ। हे महावीर 'मरुद्भिः' अङ्गाररूपैर्देवैः, 'स्वाहा' 'परिश्रयस्व' सुष्ठु परितो व्याप्तो भव। स्वाहाशब्दो निपातत्वादनेकार्थवाची इति॥

मन्त्रे पूर्व्वभागस्य तात्पर्य्यं दर्शयति। "चितः स्थ परि चित इत्याह। अपचितिमेवास्मिन् दधाति" इति। (५ प्र०।४ अ०। २५ म०)। अङ्गारेषु परितः सेवकवत्स्थितेषु मध्ये स्थितस्य महावीरस्य राज्ञ इव पूजा सम्पद्यते॥

उत्तरभागे मरुच्छब्देन विवक्षितमर्थं दर्शयति। "शिरो वा एतद्यज्ञस्य। यत् प्रवर्ग्यः। असौ खलु वा आदित्यः प्रव-

स्वाहा मरुद्भिः परिश्रयस्व(१२)। (१३)मा असि। प्रमा असि। प्रतिमा असि॥ ५॥

---

र्ग्यः। तस्य मरुतो रश्मयः॥ ८॥ स्वाहा मरुद्भिः परिश्रयस्वे-त्याह। अमुमेवादित्यꣳ रश्मिभिः पर्य्यूहति। तस्मादसावा-दित्योऽमुष्मिँल्लोके रश्मिभिः पर्य्यूढः। तस्माद्राजा विशा पर्य्यूढः। तस्मात् ग्रामणीः सजातैः पर्य्यूढः" इति। (५ प्र०। ४ अ०। २६ म०)। यज्ञशिरोरूपः 'प्रवर्ग्यः' आदित्यस्थानीयः, देवतात्वेन भाविता अङ्गारा रश्मिस्थानीयाः अतो महावीर-स्याङ्गारैः पर्य्यूहणेनाच 'आदित्यं' एव 'रश्मिभिः' परितो व्या-पयति, यस्मादेवं 'तस्मात्' स्वर्गे 'लोके' अपि 'आदित्यः' 'रश्मि-भिः' व्याप्तो दृश्यते। तथा भूलोकेऽपि महावीरवन्मुख्यः 'राजा' अङ्गारवत् उपसर्जनभूतया प्रजया व्याप्तो भवति, एकस्मिन् ग्रामे 'ग्रामणीः' मुख्यः पुरुषः, 'सजातैः' सहोत्पन्नैरुपसर्जनैः पुरुषैः, परितो व्याप्तो दृश्यते॥

कल्पः। वैकङ्कतैः परिधिभिः परिधत्तो मा असीति प्रा-ञ्चावध्वर्य्युर्निदधातीति प्रमा असीत्युदञ्चौ प्रति प्रस्थाता एव-मवशिष्टानां पूर्व्वपूर्व्वेण मन्त्रेणाध्वर्य्युरुत्तरेणोत्तरेण प्रति-प्रस्थाताध्वर्य्युरेव दक्षिणतस्तयोरग्रं निदधात्यन्तरिक्षस्यान्तर्द्धि-रसीति। पाठस्तु। (१३)"मा असि ० अन्तरिक्षस्यान्तर्द्धि-रसि"(१३) इति। हे परिधे प्रागग्रत्वेन दक्षिणदिग्वर्त्ती उत्तरदिग्वर्त्ती वा त्वं 'मा असि' महावीरस्थानं मातुमि-

स॒म्मा अ॑सि । वि॒मा अ॑सि । उ॒न्मा अ॑सि । अ॒न्त-

---

सन्तया परिच्छेत्तुं समर्थोऽसि । तथा हे परिधे उदगयलेन प्रागदिग्वर्त्ती उत्तरदिग्वर्त्ती* वा त्वं 'प्रमा असि' प्रकर्षेण मातुं समर्थोऽसि । तृतीयपञ्चममन्त्रौ प्रथममन्त्रवद्व्याख्येयौ । चतुर्थषष्ठमन्त्रौ द्वितीयमन्त्रवद्व्याख्येयौ । एवं त्रिभिर्मन्त्रैर्विसमसङ्ख्योपेतैरध्वर्युर्दिग्द्वये प्रागग्रान् षट्परिधीन् परिदधाति समसङ्ख्योपेतैर्मन्त्रैः प्रतिप्रस्थाता दिग्द्वये उदगग्रान् षट्परिधीन् परिदधाति । हे त्रयोदशपरिधे त्वं 'अन्तरिक्षस्य' लोकस्य, 'अन्तर्द्धिः' 'असि' महावीरात् व्यवधानकरः 'असि' । अनेन मन्त्रेणोर्द्ध्वलोकदिग्व्यवधानबुद्ध्या दक्षिणभागेऽध्वर्युरेकं परिधिं परिदध्यात् ॥

तैर्मन्त्रैः परिधेयानां परिधीनां वृक्षविशेषं विधत्ते । "अग्नेः सृष्टस्य यतः । विकङ्कतं भा आर्च्छत् । यद्वैकङ्कताः परिधयो भवन्ति । भा एवावरुन्धे" इति । (५प्र०।४अ०।१७म०) प्रजापति 'सृष्टस्य' पलायमानस्य, 'अग्नेः' तेजः, 'विकङ्कतं' वृक्षं, प्राविशत् अतो वैकङ्कतपरिधिभिस्तत्तेजः प्राप्नोति ॥

परिधीनां सङ्ख्यां विधत्ते । "द्वादश भवन्ति ॥ ८ ॥ द्वादश मासाः संवत्सरः । संवत्सरमेवावरुन्धे" इति । (५प्र०।४अ०।१८म०) ॥

---

* पश्चिमदिग्वर्त्ती इति तै॰ पुस्तकपाठः ।

रिक्षस्यान्तर्द्धिरसि(१२)। (१४)दिवं तपसस्त्रायस्व(१४)।

---

अधिकमेकं* परिधिं विधत्ते। “अस्ति त्रयोदशो मास इत्याहुः। यत्त्रयोदशः परिधिर्भवति। तेनैव त्रयोदशं मासमवरुन्धे” इति। (५प्र०।४अ०।२८म०)। ज्योतिःशास्त्रविदः कदाचित् कदाचित् सङ्क्रान्तिरहितोऽधिकमासस्त्रयोदशोऽस्तीत्येवमाहुः। त्रयोदशेन परिधिना तन्मासप्राप्तिर्भवति ॥

अन्तर्द्धिरेव† तात्पर्य्यं दर्शयति। “अन्तरिक्षस्यान्तर्द्धिरसीत्याह व्यावृत्त्यै” इति। (५प्र०।४अ०।३०म०)। एतावती महावीरस्य सीमा इत ऊर्द्धमन्तरिक्षलोक इति विभागो‡ व्यावृत्तिः ॥

कल्पः। दिवं तपसस्त्रायस्वेति सौवर्णेन रुक्मेण पिधाय इति। (१४ मन्त्रः)। महावीरस्योपरि पिधानत्वेन स्थाप्यमान हे रुक्म ‘दिवं’ द्युलोकं, ‘तपसः’ वह्नितापात्, ‘त्रायस्व’ पालय ॥

एतन्मन्त्रसाध्यं रुक्मस्थापनं विधत्ते। “दिवं तपसस्त्रायस्वेत्युपरिष्टाद्धिरण्यमधि निदधाति। अमुष्या अनतिदाहाय। अथो आभ्यामेवैनमुभयतः परिगृह्णाति” इति। (५प्र०।४अ०।३१म०)। उपरितनरुक्मव्यवधानेन द्युलोकस्यातिदाहो न

---

* अधिकमप्येकं इति तै० पुस्तकपाठः।

† अन्तर्द्धिशब्द इति तै० पुस्तकपाठः।

‡ विभागा इति तै० पुस्तकपाठः।

(१५)आभिर्गीर्भिर्यदतो न ऊनं। आप्यायय हरिवो वर्द्धमानः। यदा स्तोतृभ्यो महि गोत्रा रुजासि। भूयिष्ठभाजो अध ते स्याम(१५)। (१६)शुक्रन्ते अन्यद्यजतन्ते अन्यत् ॥ ६ ॥

विषुरूपे अहनी द्यौरिवासि। विश्वा हि माया

---

भवति। अपि चोर्द्धाधोगताभ्यां इस्ताभ्यां 'एनं' महावीरं, 'उभयतः' दृढं 'परिगृह्णाति' ॥

कल्पः। आभिर्गीर्भिरिति तिसृभिरभिमन्त्रयेति। तत्र प्रथमामाह। (१५)"आभिर्गीर्भिर्यदतो न ऊनं ० अध ते स्याम"(१५) इति। हे 'हरिवः*' अश्वयुक्तेन्द्रत्वेन स्तूयमान महावीर 'आभिर्गीर्भिः' अस्मदीयस्तुतिभिः, 'वर्द्धमानः' त्वं 'अतः' अस्मात् कर्मणः, 'ऊनं' अङ्गं, 'नः' अस्मदर्थं, 'आप्यायय' अभिवर्द्धय। 'यदा' यस्मिन् काले, 'स्तोतृभ्यः' स्तोत्रानुग्रहार्थं, 'महि गोत्रा' महतो मेघान्, 'रुजासि' भग्नान् करोषि, 'अध' तदा, वयं 'ते' तवानुग्रहात्, 'भूयिष्ठभाजः' 'स्याम' प्रभूतधनानां लब्धारो भूयास्म ॥

अथ द्वितीयामाह। (१६)"शुक्रन्ते ० पूषन्निह रातिरस्तु"(१६) इति। हे 'पूषन्' पोषक महावीर आदित्यत्वेन स्तूयमान, 'ते' तव, 'शुक्रं' शुद्धं स्वरूपं, 'अन्यत्' अनेकप्रकारं,

---

* हरिवन् इति तै० पुस्तकपाठः।

अवसि स्वधावः। भद्रा ते पूषन्निह रातिरस्तु(१९)।
(१०)अर्हन् विभर्षि सायकानि धन्व। अर्हन्निष्कं यजतं
विश्वरूपं। अर्हन्निदं दयसे विश्वमब्भुवं। न वा

उदयकाले रक्तवर्णं रूपमन्यत्। मध्याह्नकाले श्वेतवर्णं रूपमन्यत्। इत्येवमनेकप्रकारत्वं तथा 'ते' तव, 'यजतं' पूजनमपि 'अन्यत्'। प्रातःकाले मित्रस्य चर्षणी धृत इत्यादिभिर्मन्त्रैः पूज्यसे। मध्याह्ने आसत्येनेत्यादिभिः तथाविधया निष्पादिते 'अहनी', अपि 'विषुरूपे' नानारूपे, अहःशब्दः छत्रिन्यायेन रात्रिमप्युपलक्षयति अहः प्रकाशोपेतं रात्रिस्तमोयुक्तेति नानारूपत्वं एवं विचित्रकार्य्यकृदपि त्वं 'द्यौरिवासि' आकाशं यथैकरूपं तद्वत् त्वमपि सर्व्वत्र पक्षपातराहित्यादेकरूपोऽसि। मीयन्ते प्रमीयन्ते पदार्था आभिश्चित्तवृत्तिभिस्ताश्चित्तवृत्तयः 'मायाः' कव्यदानवाचिना स्वधाशब्देन कृत्स्नमप्यन्नमुपलक्ष्यते। हे 'स्वधावः' अन्नवन्, 'विश्वा' 'हि' 'मायाः' सर्व्वा अस्मदीयचित्तवृत्तीः, 'अवसि' रक्षसि, हे 'पूषन्' 'ते' तव, 'राति' 'भद्रा' 'अस्तु' फलप्रदानं समीचीनं भवतु॥

अथ तृतीयामाह। (१०)"अर्हन् विभर्षि सायकानि धन्व० ओजीयो रुद्र त्वदस्ति"(१०) इति। हे 'रुद्र' महावीर रुद्रत्वेन स्तूयमान, 'अर्हन्' योग्यः सन्, 'सायकानि' वाणान्, 'धन्व' धनुश्च, 'विभर्षि' हस्तयोर्धारयसि। तथैव 'अर्हन्' योग्यः सन्, 'यजतं' पूजासाधनं, 'विश्वरूपं' नानाविधं, 'निष्कं' आभरणं,

ओजीयो रुद्र त्वदस्ति[१७]। [१८]गायत्रमसि। त्रैष्टुभमसि। जागतमसि[१८]॥ [१९]मधु मधु मधु[१९]॥ ७॥

अनक्तु, असादीत्, उत्तरतः, पाहि, प्रतिमा, असि, यजतन्ते, अन्यत्, जागतमसि, एकं च॥ अनु० ५॥

---

'बिभर्षि' कर्णकण्ठहस्तादौ धारयसि। तथैव 'अर्हन्' योग्यः सन्, 'अब्भुवं' अबादिभ्यः पञ्चभूतेभ्यः उत्पन्नं, 'इदं' जगत्, 'दयसे' पालयसि, अतो हे 'रुद्र' 'त्वत्' 'ओजीयः' त्वत्तो बलवद्वस्तु किमपि 'न' एव, 'अस्ति'॥

एतन्महावीरस्य सायकादिधारणासम्भवमाशङ्क्य स्तुतित्वेन परिहरति। "अर्हन् बिभर्षि सायकानि धन्वेत्याह॥ १०॥ स्तौत्येवैनमेतत्" इति। (५ प्र०।४ अ०।१२ म०)। अनेनैव न्यायेन पूर्वोक्तमन्त्रद्वयार्थासम्भवशङ्कापि परिहर्त्तव्या। एवमुत्तरयोरपि योज्यं॥

कल्पः। धवित्राण्यादत्ते गायत्रमसीति प्रथमं त्रैष्टुभमसीति द्वितीयं जागतमसीति तृतीयमिति। (१८ मन्त्रः)। वायुना ज्वालोत्पादकं व्यजनं धवित्रं हे प्रथमधवित्र त्वं 'गायत्रमसि' गायत्रीच्छन्दोदेवतारूपमसि॥

एतैर्मन्त्रैः साध्यमादानं विधत्ते। "गायत्रमसि त्रैष्टुभमसि जागतमसीति धवित्राण्यादत्ते। छन्दोभिरेवैनान्यादत्ते" इति। (५ प्र०।४ अ०।१३ म०)। गायत्र्यादिशब्दैर्महावीरस्य व्यवहारश्छन्दोदेवताभिरादानसिध्यर्थो द्रष्टव्यः॥

मन्त्रः। तेरेनं चिकद्रुमुपवीजयतीति मधु मध्विति हतीयो मधुशब्दो मन्त्रशेषः। (१८मन्त्रः)। हे धविचत्रय 'मधु' समीचीनं ज्वालोत्पादनं यथा भवति तथा वायुं कुर्व्विति शेषः॥

एतन्मन्त्रसाध्यां क्रियां विधत्ते। "मधु मध्विति धूनोति। प्राणो वै मधु। प्राणमेव यजमाने दधाति" इति। (५प्र०।४प्र०।२४म०)। समीचीनवायुरूपत्वात् प्राणस्य मधुत्वं॥

यदुक्तं सूत्रकारेण। तेषामेकं प्रतिप्रस्थात्रे प्रयच्छत्येकमाग्नीध्रायाग्नीध्रप्रथमास्त्रिः प्रदक्षिणमूर्द्धं धून्वन्तः परियन्तीति। तदिदं विधत्ते। "त्रिः परियन्ति। त्रिवृद्धि प्राणः" इति। (५प्र०।४प्र०।२५म०)। प्राणापानव्यानाख्यवृत्तिभेदात् प्राणस्य त्रैगुण्यं प्रदक्षिणत्रयेण सिध्यति॥

तमेव विधिमनूद्य पुनः प्रशंसति। "त्रिः परियन्ति। त्र्यावृद्धि यज्ञः॥ ११॥ अथो रक्षसामपहत्यै" इति। (५प्र०।४प्र०।२६म०)। सवनत्रयानुष्ठानेन यज्ञस्यावृत्तित्रयं*। अपि च प्रदक्षिणत्रयेण रक्षांस्यपहन्यन्ते॥

यदुक्तं सूत्रकारेण। अध्वर्युप्रथमा अनभिधून्वन्तः त्रिः परियन्तीति। तदिदं विधत्ते। "त्रिः पुनः परियन्ति। षट् सम्पद्यन्ते। षट् वा ऋतवः। ऋतुष्वेव प्रतितिष्ठन्ति" इति। (५प्र०।४प्र०।२७म०)। पूर्व्वोक्ताः प्रदक्षिणावृत्तयस्तिस्र एतास्तु विपरीतावृत्तयस्तिस्र इत्येवं षट्सम्पत्तिः॥

चतुर्थावृत्तिं निषेधति। "यो वै घर्मस्य प्रियां तनुवमा-

* त्रयत्वं इति तै० पु० पाठः।

क्रामति। दुश्चर्मा वै स भवति। एष ह वा अस्य प्रियान्तनुवमा-क्रामति। यस्त्रिः परीत्य चतुर्थं पर्य्येति। एताꣳ ह वा अस्योग्र-देवो राजनिराचक्राम॥१२॥ ततो वै स दुश्चर्माभवत्। तस्मात् त्रिः परीत्य न चतुर्थं परीयात्। आत्मनो गोपी-थाय। प्राणा वै धवित्राणि” इति। (५प्र०।४अ०।१८म०)। ‘घर्मस्य’ महावीरस्य, प्रियशरीराक्रमणे त्वग्दोषः स्यात्, ‘यः’ पुमान्, अपेक्षितं प्रदक्षिणत्रयं कृत्वा ततश्चतुर्थं प्रदक्षिणमनपे-क्षितमपि कुर्य्यात्। ‘सः’ एव प्रियशरीरं ‘आक्रामति’ इति। त्वग्दोषं ‘सः’ प्राप्नुयात्। न चैतद्वार्त्तामात्रं किन्तु कश्चित् ‘रा-जनि’ नामकः पुरुषः, ‘उग्रदेवः’। उग्राणाम्बलिनां शास्त्रा-र्थमुल्लङ्घयतां स्वामी सन् कदाचिदेतां प्रियतनूं ‘आचक्राम’। ‘ततः’ अपराधात्, कुष्ठरोगवानभूत्। अतः स्वदेहरक्षार्थी चतुर्थावृत्तिं न कुर्य्यात्। धवित्राणि प्रशंसति प्राणा इति॥

यदुक्तं सूत्रकारेण। तमभिमुखाः पर्य्युपविशन्ते पुरस्ताद-ध्वर्य्युः दक्षिणतः प्रतिप्रस्थातोत्तरत आग्नीध्रोऽव्यतिषक्तमूर्द्ध्वं धून्वन्त इति। तत्र धवित्रदण्डानां यः परस्परसंश्लेषाभावः तमिमं विधत्ते। “अव्यतिषक्तं धून्वन्ति। प्राणानामव्यतिषङ्गाय क्लृप्त्यै” इति। (५प्र०।४अ०।१९म०)। प्राणादिवृत्तीनां साङ्कर्य्य-परिहारेण स्वव्यापारसामर्थ्यार्थो धवित्राणामयमव्यतिषङ्गः॥

तमभिमुखाः पर्य्युपविशन्तीति यदुक्तं तद्विधत्ते। “विनिषद्य धून्वन्ति। दिक्ष्वेव प्रतितिष्ठन्ति” इति। (५प्र०।४अ०।४०म०)। पुरस्तादध्वर्य्युरित्याद्यभिधानात् ‘दिक्षु’ प्रतिष्ठा॥

अथ षष्ठोऽनुवाकः ।

(१)दृशा॒ प्राची॒र्दृशा॒ भासि दक्षि॒णा । दृशा॒ प्रती॒ची॒र्दृशा॒

---

ऊर्द्धाभिमुखत्वेन वायूत्पादनं विधत्ते । "उर्द्धं धून्वन्ति । सुवर्गस्य लोकस्य समष्ट्यै" इति । (५प्र०।४अ०।४१म०) । स्वर्गस्योर्द्धवर्त्तित्वादूर्द्धधूननेन तत्प्राप्तिः ॥

सर्व्वासु दिक्षु धूननं विधत्ते । "सर्व्वतो धून्वन्ति । तस्मादय॒ꣳ सर्व्वतः पवते" इति ॥ १३ ॥ (५प्र०।४अ०।४२म०) । यस्मान् महावीरस्य सर्वासु दिक्षु वायुमुत्पादयन्ति तस्माल्लोकेऽप्ययं वायुः सर्व्वासु दिक्षु सञ्चरति ॥ दधाति, इवान्वाह, यज्ञस्य, आह, एष, उपरिष्टादाशीरन्यः, व्याख्यापयन्ति, रश्मयः, भवन्ति, धन्वेत्याह, यज्ञः, चक्राम, समष्ट्यै, द्वे च ॥ इति पञ्चमप्रपाठके ४ अनुवाकः ॥ ४ ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ षष्ठोऽनुवाकः ।

पञ्चमे महावीरस्थापनमुक्तं । षष्ठे तस्याभिमन्त्रणमुच्यते । कल्पः । अध्वर्य्युर्महावीरमभिमन्त्रयते । दृशा प्राचीर्दृशा भासि दक्षिणेत्यनुवाकेनेति । तत्रादावेकामृचमाह । "(१)दृशा प्राचीर्दृशा

भास्युदीचीः। दृशोर्ङ्भासि सुमनस्यमानः। स नो रुचं धेह्यहृणीयमानः(१)।(२)अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसा। स मा रुचितो रोचय(२)।

---

भासि दक्षिणा ० सनो रुचं धेह्यहृणीयमानः"(१) इति। हे महावीर, 'प्राचीः' प्राग्दिग्वर्त्तिन्यो ज्वालाः 'दृश'सञ्ज्ञाका यथा भवन्ति तथा 'भासि' त्वं दीप्यसे। एवं दक्षिणादिषु योज्यं। ताभिरेताभिः सर्व्वाभिः ज्वालाभिः सौमनस्यं प्राप्तं, 'सः' त्वं, 'अहृणीयमानः' केनाप्यहिंस्यमानः सन्, 'नः' अस्मदर्थं, 'रुचं' 'धेहि' तेजो धारय॥

अथ दिग्भेदेन देवताविशेषप्रतिपादकानि पञ्चयजूंषि तत्र प्रथमं यजुराह। (२)"अग्निष्ट्वा वसुभिः ० रोचय"(२) इति। हे महावीर त्वां, पूर्व्वस्यां दिशि 'वसुभिः' देवैः, गायत्रीच्छन्दोदेवतया च सह 'अग्निः' देवः, 'रोचयतु' दीपयतु, पुरतः 'रुचितः' दीपितः, 'सः' त्वं, मां, 'रोचय' प्रकाशय॥

अस्मिन् मन्त्रे यदग्नेर्दीपकत्वं तन्मुख्यमेव न तूपचरितं इत्येवकारेण दर्शयति। "अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसेत्याह। अग्निरेवैनं वसुभिः पुरस्ताद्रोचयति गायत्रेण छन्दसा" इति। (५प्र०।५अ०।१म०)॥

रोचयत्वित्ययं लोट्प्रत्ययो न विध्यर्थः किन्त्वाशिरर्थ इत्येतद्दर्शयति। "स मा रुचितो रोचयेत्याह। आशिषमेवैतामाशास्ते" इति। (५प्र०।५अ०।२म०)॥

(१)इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसा । स मा रुचितो रोचय । वरुणस्त्वादित्यैः पश्चाद्रोचयतु जागतेन छन्दसा । स मा रुचितो रोचय ॥ १ ॥

द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचयत्वानुष्टुभेन छन्दसा । स मा रुचितो रोचय । बृहस्पति-

---

अथ दक्षिणादिदिग्देवताविषयाणि चत्वारि यजूंष्याह । "(१)इन्द्रस्त्वा रुद्रैर्दक्षिणतो • स मा रुचितो रोचय"(१) इति । पूर्व्वोक्ताग्निविषययजुरिवेन्द्रादिविषयाणि चत्वारि यजूंषि व्याख्येयानि ॥

एतेषु चतुर्ष्वपि यजुःस्वपपाठव्यावृत्तिमेवकारेण लोट्प्रत्ययस्याशिरर्थत्वं च पूर्व्ववद्दर्शयति । "इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसेत्याह । इन्द्र एवैनꣳ रुद्रैर्दक्षिणतो रोचयति त्रैष्टुभेन छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते । वरुणस्त्वादित्यैः पश्चाद्रोचयतु जागतेन छन्दसेत्याह । वरुण एवैनमादित्यैः पश्चाद्रोचयति जागतेन छन्दसा ॥१॥ स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते । द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचयत्वानुष्टुभेन छन्दसेत्याह । द्युतान एवैनं मारुतो मरुद्भिरुत्तरतो रोचयत्यानुष्टुभेन छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते । बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन

स्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन छन्दसा। स मा रुचितो रोचय[३]। [४]रोचितस्त्वं देव घर्म देवेष्वसि। रोचिषीयाहं मनुष्येषु[४]। [५]सम्राड् घर्म रुचितस्त्वं देवेष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चस्यसि। रुचितोऽहं मनु-

---

छन्दसेत्याह। बृहस्पतिरेवैनं विश्वैर्देवैरुपरिष्टाद्रोचयति पाङ्क्तेन छन्दसा। स मा रुचितो रोचयेत्याह। आशिषमेवैतामाशास्ते" इति॥ ३॥ (५प्र०।५अ०।१म०)॥

अथ यजुरन्तरमाह। [४]"रोचितस्त्वं देव घर्म ० मनुष्येषु[४]" इति। हे 'देव' द्योतमान, 'घर्म' महावीर, 'त्वं' 'देवेषु' मध्ये, 'रोचितः' प्रकाशितः, 'असि'। अतस्त्वत्प्रसादात् 'अहं' अपि 'मनुष्येषु' मध्ये, 'रोचिषीय' प्रकाशितो भूयासं॥

अस्मिन् मन्त्रे भागद्वयगतयोरर्थयोः प्रसिद्धिमवष्टभ्याविलम्ब हिशब्देनैवकारेण दर्शयति। "रोचितस्त्वं देव घर्म देवेष्वसीत्याह। रोचितो ह्येष देवेषु। रोचिषीयाहं मनुष्येष्वित्याह। रोचत एवैष मनुष्येषु" इति। (५प्र०।५अ०। ४म०)॥

अथ यजुरन्तरमाह। [५]"सम्राट् घर्म रुचितः ० ब्रह्मवर्चसी भूयासं"[५] इति। हे 'घर्म' महावीर, 'त्वं' 'देवेषु' मध्ये, बहुगुणयुक्तः 'असि', के ते गुणा इति त उच्यन्ते। 'सम्राट्' साम्राज्ययुक्तः, 'रुचितः' प्रकाशितः, 'आयुष्मान्' दीर्घेणायुषा

ष्वैषायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी भूयासं(५)। (६)रुगसि। रुचं मयि धेहि ॥ मयि रुक्(६)। (७)दश पुरस्ताद्रोचसे। दश दक्षिणा। दश प्रत्यङ्। दशोदङ्। दशोर्ध्वा भासि

---

युक्तः, 'तेजस्वी' महत्या कान्त्या युक्तः, 'ब्रह्मवर्चसी' श्रुताध्ययनसम्पन्नः, त्वत्प्रसादात् 'अहं' अपि 'मनुष्येषु' मध्ये, रुचितत्वादिगुणयुक्तो 'भूयासं' ॥

अत्रापि हिशब्दैवकाराभ्यां मन्त्रभागौ पूर्व्ववद्व्याचष्टे। "सम्राट् घर्म रुचितस्त्वं देवेष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसीत्याह। रुचितो ह्येष देवेष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी। रुचितोऽहं मनुष्येष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी भूयासमित्याह। रुचित एवैष मनुष्येष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी भवति" इति। (५प्र०।५अ०।५म०) ॥

अथ यजुरन्तरमाह। (६)"रुगसि ० मयि रुक्"(६) इति। हे महावीर 'रुगसि' त्वमेव दीप्तिरूपः असि। अतः, 'मयि' 'रुचं' दीप्तिं, 'धेहि' सम्पादय, त्वदनुग्रहात् 'रुग्' दीप्तिः, 'मयि' तिष्ठत्विति शेषः ॥

धेहीत्यस्य लोट्प्रत्ययस्याशीरर्थत्वं दर्शयति। "रुगसि रुचं मयि धेहि मयि रुगित्याह। आशिषमेवैतामाशास्ते" इति। (५प्र०।५अ०।६म०) ॥

अथ यजुरन्तरमाह। (७)"दश पुरस्ताद्रोचसे ० रोचितो घर्मो रुचीय"(७) इति। अनुवाकादौ दश प्राचीरिति योऽर्थ

सुमनस्यमानः । स नः सम्राडिषमूर्जं धेहि । वाजी वाजिने पवस्व । रोचितो घर्मो रुचीय(७) ॥ २ ॥

रोचय, धेहि, नव च ॥ अनु० ६ ॥

---

उक्तः सोऽस्योपसंह्रियते । हे महावीर 'पुरस्तात्' पूर्वस्यां दिशि, 'रश्म' दीप्तयः, यथा भवन्ति तथा त्वं 'रोचसे' दीप्यसे, एवं दक्षिणादिषु दिक्षु द्रष्टव्यं । अतः 'सुमनस्यमानः' सौमनस्यं प्राप्तः, 'सम्राट्' साम्राज्यं प्राप्तः, 'सः' त्वं, 'नः' अस्माकं, 'इषं' 'ऊर्जं' च 'धेहि' सम्पादय । 'वाजी' अन्नयुक्तः, त्वं 'वाजिने' अन्नयुक्ताय मह्यं, 'पवस्व' सर्वं भोग्यं शोधय । एवमनेन प्रकारेण 'घर्मः' महावीरः, 'रोचितः' अस्माभिः प्रकाशितः, अतः त्वत्प्रसादादहमपि 'रुचीय' प्रकाशवान् भूयासं ॥

यदुक्तं सूत्रकारेण उपोत्थिष्ठन्नध्वर्युराह* रुचितो घर्म इति तदिदं काम्यमङ्गितं विधत्ते । "तं यदेतैर्यजुर्भिररोचयित्वा । रुचितो घर्म इति प्रब्रूयात् । अरोचुकोऽध्वर्युः स्यात् । अरोचुको यजमानः । अथ यदेनमेतैर्यजुर्भी रोचयित्वा । रुचितो घर्म इति प्राह । रोचुकोऽध्वर्युर्भवति । रोचुको यजमानः" इति ॥३॥ (५प्र०।५अ०।७म०) । 'तं' महावीरं, 'यदेतैः' अनुवाकोक्तैः, 'यजुर्भिः' मन्त्रैः, 'अरोचयित्वा' प्रकाशितमकृत्वा, प्रथमत एव 'घर्मः' महावीरः, 'रुचितः' प्रकाशितः, 'इति' 'प्रब्रूयात्' ।

---

* अध्वर्युं प्राह इति D चिह्नित पु० पाठः ।

अथ सप्तमोऽनुवाकः ।

(१)अप॑श्यं गो॒पामनि॑पद्यमानं। आ च॒ परा॑ च प॒-

तदाध्वर्य्युयजमानौ दीप्तिरहितौ स्यातां यजुःपाठादूर्द्धं तु नायं दोषः, तस्मादुत्तरकाल एव 'रुचितः' 'घर्मं' इति मन्त्रमध्वर्य्युर्ब्रूयात् ॥ पश्चाद्रोचयति जागतेन छन्दसा, स मा रुचितो रोचयेत्याहाशिषमेवैतामाशास्ते, आशास्ते, अष्टौ च ॥ इति पञ्चमप्रपाठके ५ अनुवाकः ॥ ५ ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

अथ सप्तमोऽनुवाकः ।

षष्ठे महावीराभिमन्त्रणमुक्तं । अथ सप्तमे महावीरावेक्षणमुच्यते । कल्पः । यथा लोकमवस्थाय सर्व्वे ऋत्विजो यजमान*श्चाधीयन्तो महावीरमवेक्षन्ते। अपश्यं गोपामिति। एतस्यानुवाकस्यादावेकामृचमाह । (१)"अपश्यं गोपामनिपद्यमानं • आवरीवर्त्ति भुवनेष्वन्तः"(१) इति । अहं महावीरं 'अपश्यं' दृष्टवानस्मि। कीदृशं 'गोपां' कर्म्मनिष्पादनेन रक्षकं,

* यजमानाश्चाधीयन्तो इति तै॰ पु॰ पाठः ।

थिभिश्चरन्तं। स स॒ध्रीची॒ः स विषू॑ची॒र्वसा॑नः। आव॑-

‘अनिपद्यमानं’ विनाशरहितं, अथ वा आदित्यरूपेण पतनरहितं। तथा ‘पथिभिः’ नानामार्गैः, ‘आ’‘चरन्तं’ ‘च’ ‘परा’ ‘चरन्तं’ ‘च’ आदित्यरूपः सम्माभिमुख्येन प्रातःकाले समागच्छन्तं, सायङ्काले पराङ्मुखत्वेन गच्छन्तं। ‘सः’ महावीर आदित्यरूपः, ‘सध्रीचीः’ एकत्र सहावस्थिता अपि, ‘विषूचीः’ नानादेशेषु विभज्य गच्छन्तीरपि प्रजाः सर्व्वाः, ‘वसानः’ स्वकीयरश्मिभिराच्छादयन् इव वर्त्तते। अथ वा एकत्रावस्थिताः तत्र तत्र पृथगवस्थितास्च मरीचिः स्वस्मिन्नाच्छादयन् वर्त्तते। ‘सः’ च ‘भुवनेष्वन्तः’ सर्व्वेषु लोकेषु मध्ये, ‘आवरीवर्त्ति’ पुनःपुनरावर्त्तते। सोऽयं मन्त्र उपरिष्टाद्व्याख्यास्यते॥

तत्र प्रथमं तावत् प्रवर्ग्यस्य कालं विधत्ते। “शिरो वा एतद्यज्ञस्य। यत् प्रवर्ग्यः। ग्रीवा उपसदः। पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति। ग्रीवास्वेव यज्ञस्य शिरः प्रतिदधाति” इति। (५प्र०।६अ०।१म०)। प्रवर्ग्यस्य यज्ञ-‘शिरो’रूपत्वात् ‘उपसदां’ च यज्ञ-‘ग्रीवा’रूपत्वात् उभयोः सामीप्याय ‘उपसदः’ अनुष्ठानात्, प्रागेव ‘प्रवर्ग्यं’ कर्म्म, अनुतिष्ठेत्। तप्ते घृते पयःप्रक्षेपः प्रवृञ्जनं तद्यस्मिन् कर्म्मविशेषे विद्यते सोऽयं ‘प्रवर्ग्यः’, स कर्म्मविशेषो यथा सम्पद्यते तथा प्रवृञ्जनं कुर्य्यादित्यत्त्रार्थः। प्रवर्ग्योपसदोः सामीप्ये सति यथा लोके ग्रीवायां

'शिरः' प्रतिष्ठितं भवति तदेतत् सम्पद्यते 'षोडशसु' इति वचन-व्यत्ययः॥

प्रवर्ग्यस्यावृत्तिं विधत्ते। "त्रिः प्रवृणक्ति। त्रय इमे लोकाः। एभ्य एव लोकेभ्यो यज्ञस्य शिरोऽवरुन्धे" इति। (५प्र०।६अ०।२म०)। उपसदां दिनत्रयेऽनुष्ठेयत्वात् तत्समोपवर्त्ती प्रवर्ग्योऽपि दिनत्रयेऽनुष्ठेयः तथा सति लोकत्रयार्थं यज्ञशिरः, प्रतिष्ठितं भवति॥

सायं प्रातश्चेति कालद्वयानुष्ठानं प्रशंसति। "षट् सम्पद्यन्ते। षट् वा ऋतवः॥१॥ ऋतुभ्य एव यज्ञस्य शिरोऽवरुन्धे" इति। (५प्र०।६अ०।३म०)। एकैकस्मिन् दिने कालभेदेन द्विरनुष्ठानात् 'षट्' सङ्ख्या सम्पद्यते। तत* ऋतुभ्यः सकाशा-द्यज्ञ-'शिरः' सम्पादितं भवति॥

दिनषट्कपक्षं विधत्ते। "द्वादशकृत्वः प्रवृणक्ति। द्वादश मासाः संवत्सरः। संवत्सरादेव यज्ञस्य शिरोऽवरुन्धे" इति। (५प्र०।६अ०।४म०)। षट्सु दिनेषु कालद्वयानुष्ठानेन द्वादशत्वं॥

द्वादशसु दिनेष्वनुष्ठानविधिमभिप्रेत्य प्रशंसति। "चतुर्विंशतिः सम्पद्यन्ते। चतुर्विंशतिरर्द्धमासाः। अर्द्धमासेभ्य एव यज्ञस्य शिरोऽवरुन्धे" इति। (५प्र०।६अ०।५म०)। द्वादशस्वपि दिनेषु कालद्वयानुष्ठानेन 'चतुर्विंशतिः' सम्पत्तिः अग्निष्टोमे त्रिष्वेव दिनेषूपसदः अग्निचयने षट्सु दिनेषु अहीने सत्रे

* अत इति वै० पु० पाठः।

द्वादशसु दिनेषु तदनुसारेण प्रवर्ग्यावृत्तिः। एतच्च सूत्रकारेण सङ्गृहीतं त्र्युपसत्के षट्कृत्वः षडुपसत्के द्वादशकृत्वो द्वादशोपसत्के चतुर्विंशतिकृत्वः इति॥

विकल्पितं पक्षान्तरं विधत्ते। "अथो खलु। सकृदेव प्रवृज्यः। एकꣳ हि शिरः"॥२॥ इति। (५प्र०।६अ०।६म०)। पक्षान्तरोपन्यासाय 'अथो' शब्दः शिरस एकत्वात् तत्स्थानीयः प्रवर्ग्यः सकृदेवानुष्ठेयो न त्वावृत्त्येति केषाञ्चित् पक्षः। एतच्च सूत्रकारेण विस्पष्टमुदाहृतं। सुत्यायां प्रवृञ्जनमेके समामनन्ति। तत्र मीमांसा यदा पुरस्ताद्दृणः स्यात् अथ प्रवृञ्ज्य उपकाश उपव्युषं समयाविषित उदितानुदित उदिते वा प्रातःसवने मध्यन्दिने वा पवमाने स्तुत आग्नीध्रागारे प्रवृञ्ज्यः सकृदेव प्रवृञ्ज्य इति विज्ञायत इति॥

प्रवर्ग्यस्याग्निष्टोमसम्बन्धं विधत्ते। "अग्निष्टोमे प्रवृणक्ति। एतावान् वै यज्ञः। यावानग्निष्टोमः। यावानेव यज्ञः। तस्य शिरः प्रतिदधाति" इति। (५प्र०।६अ०।७म०)। यावन्तः सोमयागाः सन्ति तेषु सर्व्वेषु 'अग्निष्टोमः' सञ्चारी अतः सर्व्वयज्ञात्मकः तत्रानुष्ठिते सति कृत्स्नेऽपि यज्ञे 'शिरः' प्रतिष्ठितं भवति। अनारभ्याधीतस्य प्रवर्ग्यस्य यद्यपि पुरस्तादुपसदामिति वाक्येनैव प्रकृतिभूताग्निष्टोमसम्बन्धः प्राप्तः, तथापि शाखान्तरगतं न प्रथमयज्ञे प्रवृञ्ज्यादिति निषेधमपोद्य प्रतिप्रसवार्थं पुनर्विधानं, निषेधस्त्वितराचेऽपि चरितार्थो भविष्यति तस्यापि विकल्पितप्रथमयज्ञत्वात्, तथा चापस्तम्ब आह।

अग्निष्टोमः प्रथमयज्ञोऽतिरात्रमेके पूर्व्वं समामनन्तीति॥

पुरस्तादुपसदामितिवाक्येनोक्तोऽप्युपसद्भावात् पूर्व्वं प्रवर्ग्यस्यापि प्राप्तौ निषेधयति। "नोक्थ्ये प्रवृञ्ज्यात्। प्रजा वै पशव उक्थानि। यदुक्थ्ये प्रवृञ्ज्यात्। प्रजां पशूनस्य निर्दहेत्" इति। (५प्र०।६अ०।८म०)। एकेषु स्ववाणीत्यादीतिशस्त्राण्युक्थशब्देनाविधीयन्ते तान्यर्हतीत्युक्थ्यः क्रतुः तत्र प्रवृञ्जनेनोक्थशस्त्रसाध्याः 'प्रजाः' 'पशवः' च दह्येयुः, तस्मात् तत्र, 'न' 'प्रवृञ्ज्यात्'॥

उक्थ्यविशेषे प्रतिप्रसवं विधत्ते। "विश्वजिति सर्व्वपृष्ठे प्रवृणक्ति॥२॥ पृष्ठानि वा अच्युतं च्यावयन्ति। पृष्ठैरेवास्मा अच्युतं च्यावयित्वावरुन्धे" इति। (५प्र०।६अ०।९म०)। रथन्तरबृहद्वैरूपवैराजशाक्वररैवतसामसाध्यानि पृष्ठस्तोत्राणि सर्व्वाण्यपि यस्मिन् विश्वजिद्यागे विद्यन्ते। सोऽयं सर्व्वपृष्ठः, यद्यपि विश्वजिदुक्थ्यसंस्थो नात्र प्रसिद्धः तथापि शाखान्तरे तत्सद्भावमभिप्रेत्य नोक्थ्ये 'प्रवृञ्ज्यादिति निषेधं वारयितुं पुनर्विधिः सर्व्वत्र पृष्ठस्तोत्राणि, 'अच्युतं' न च्युतमपि दोषं। 'च्यावयन्ति' विनाशयन्ति, अत्रापि पृष्ठस्तोत्रैरेव 'अच्युतं' निषेधप्रयुक्तं प्रवलमपि दोषं, 'च्यावयित्वा' प्रवर्ग्यफलमपि प्राप्नोति॥

तदेवं बुद्धिस्थं प्रवर्ग्यविधिविचारं परिसमाप्य प्रकृतस्यैव मन्त्रस्य प्रथमपादे पूर्व्वभागं* व्याचष्टे। "अपश्यं गोपामित्याह।

---

* पूर्व्वपादं इति तै० पु० पाठः।

प्राणो वै गोपाः। प्राणमेव प्रजासु वियातयति" इति। (५प्र०।६अ०।१०म०)। 'प्राणः' हि स्वावस्थानेन* शरीराणि गोपायतीति 'गोपाः' मन्त्रे च प्राणत्वेन स्तुतिमभिप्रेत्य महावीरे गोपाशब्दः प्रयुक्तः, अतो गोपामपश्यमित्युक्ते सति सर्व्वासु 'प्रजासु' 'प्राणमेव' प्रचारितवान् भवति॥

आदित्यरूपेण स्तुतिमभिप्रेत्य पुनरपि व्याचष्टे। "अपश्यं गोपामित्याह। असौ वा आदित्यो गोपाः। स हीमाः प्रजा गोपायति। तमेव प्रजानां गोप्तारं कुरुते" इति। (५प्र०।६अ०।११म०)। 'आदित्यः' उदयेन प्रकाशं कृत्वा, सर्व्वाः 'प्रजाः' गोपायतीति 'गोपाः', तद्रूपत्वेन स्तुतत्वात् महावीरः 'गोपाः'। एतत्पाठेन यजमानमेव 'प्रजानां' 'गोप्तारं' करोति॥

प्रथमपादस्योत्तरभागोक्तादित्यरूपेणावस्थितस्य महावीरस्य भूमौ पतनाभावः प्रसिद्ध इति दर्शयति। "अनिपद्यमानमित्याह॥ ४॥ न ह्येष निपद्यते" इति। (५प्र०।६अ०।१२म०)॥

द्वितीयपादोक्तं नानामार्गैरादित्यस्यागमनं परागमनञ्च प्रसिद्धमिति दर्शयति। "आ च परा च पथिभिश्चरन्तमित्याह। आ च ह्येष परा च पथिभिश्चरति" इति। (५प्र०।६अ०।१३म०)॥

यदायमादित्य उदयं प्राप्तः सर्व्वाः प्रजा अभितो विशेषेण

* स्वावयवस्थानि इति तै० पु० पाठः।

रीवर्त्ति भुवनेष्वन्तः<sup>(१)</sup>। <sup>(२)</sup>अत्र प्रावीः। मधुमाध्वीभ्यां मधुमाधूचीभ्यां। अनु वां देववीतये<sup>(२)</sup>। <sup>(१)</sup>सम-

---

पश्यति। तदानीं स्वेन सह वर्त्तमाना दूरे विविधं प्रसृतास्च मरीचीः वस्त्रवद्वसानो वर्त्तत इत्येतत् प्रसिद्धमित्येतादृशं तृतीयपादाभिप्रायं दर्शयति। "स सध्रीचीः स विषूचीर्वसान इत्याह। सध्रीचीश्च ह्येष विषूचीश्च वसानः प्रजा अभिविपश्यति" इति। (५प्र०।६अ०।१४म०)॥

चतुर्थपादोक्ता भुवनमध्ये सूर्य्यस्यावृत्तिः प्रसिद्धेति दर्शयति। "आवरीवर्त्ति भुवनेष्वन्तरित्याह। आह्येष वरीवर्त्ति भुवनेष्वन्तः" इति। (५प्र०।६अ०।१५म०)॥

अथ वसन्तर्तुरूपेण स्तावकं मन्त्रमाह। [१]"अत्र प्रावीः० अनु वां देववीतये"[२] इति। हे महावीर 'अत्र' अस्मिन् कर्म्मणि, 'मधुमाध्वीभ्यां' सहितस्त्वं 'प्रावीः' अस्मान् प्रकर्षेण रक्षितवानसि, 'मधु'शब्दो वसन्तावयवचैत्रमासाभिमानिदेवमाचष्टे। 'माध्वी' शब्दस्तत्पत्नीं। तथा द्वितीयो 'मधु'शब्दो वसन्तावयववैशाखमासाभिमानिदेवमाचष्टे, 'माधूची'शब्दस्तत्पत्नीं ताभ्यां सहितस्त्वं प्रावीरित्यन्वयः। 'वां' वसन्तदेवौ युवां, 'अनु'सृत्य, 'देववीतये' देवप्राप्त्यर्थं, महावीरमवेचत इति शेषः॥

मन्त्रस्य वसन्तर्तुपरतां दर्शयति। "अत्र प्रावीर्मधुमाध्वीभ्यां मधुमाधूचीभ्यामित्याह। वासन्तिकावेवास्मा ऋतू कल्प-

मिर॒ग्निना॑गतः। सं दे॒वेन॑ सवि॒त्रा। सꣳसूर्य्येण रोच-
ते(१) ॥ १ ॥

---

यति" इति। (५प्र०।६अ०।१६म०)। 'अस्मै' यजमानार्थं, वसन्तसम्बन्धिनावृत्ववयवौ चैत्रवैशाखमासौ स्वोचितभोगप्रदानसमर्थौ करोति॥

अथ ग्रीष्मर्त्तुरूपेण स्तावकं मन्त्रमाह। (१)"समग्निरग्निनागत ० सꣳसूर्य्येण रोचते"(१) इति। अग्निशब्दाभ्यामत्युष्णौ ग्रीष्मावयवौ ज्येष्ठाषाढमासौ विवक्षितौ। तत्रैक 'अग्निः' ज्येष्ठमासरूपः, द्वितीयेन 'अग्निना' आषाढमासरूपेण, 'सं' 'गतः' अभूत्, तदुभयमासवर्त्तिनावादित्यौ सवितृसूर्य्यशब्दाभ्यां विवक्ष्येते। अयं महावीराख्यो देवो ज्येष्ठमासे 'सविता' 'सं' 'गतः' आषाढमासे 'सूर्य्येण' 'सं'-गत्य 'रोचते'॥

अथ मन्त्रस्य ग्रीष्मर्त्तुपरतां दर्शयति। "समग्निरग्निनागतेत्याह॥ ५॥ ग्रैष्मावेवास्मा ऋतू कल्पयति" इति। (५प्र०।६अ०।१७म०)। वसन्तवाक्यवद्व्याख्येयं॥

तस्यैव* मन्त्रस्यार्थान्तरं दर्शयति। "समग्निरग्निनागतेत्याह। अग्निर्ह्येषोऽग्निना सङ्गच्छते" इति। (५प्र०।६अ०।१८म०)। 'एषः' महावीररूपः, 'अग्निः' आदित्यरूपेण 'अग्निना' सङ्गच्छते, इत्ययमर्थः प्रसिद्धः॥

---

* अस्यैव इति ते० पु० पाठः।

(४)स्वाहा समग्निस्तपसा गतः। सं देवेन सवित्रा। सꣳ सूर्येणारोचिष्ट(४)। (५)धर्त्ता दिवो विभासि रजसः। पृथिव्या धर्त्ता। उरोरन्तरिक्षस्य धर्त्ता। धर्त्ता देवो दे-

---

पुनरपि ग्रीष्मर्त्तुरूपेणैव स्तावकं मन्त्रान्तरमाह। (४)"स्वाहा समग्निस्तपसा गतः ० सꣳ सूर्येणारोचिष्ट"(४) इति। 'स्वाहा' शब्दो निपातत्वादनेकार्थः, अग्निवदुष्णरूपो ज्येष्ठमासः 'तपसा' तापयुक्तेन आषाढमासेन, 'स्वाहा' सुष्ठु, समागतः' 'सं' 'गतः' अभूत्, 'सं' 'देवेन' इत्यादि पूर्ववत्॥

अस्य मन्त्रस्य पूर्वमन्त्रेण सह समानार्थतां दर्शयति। "स्वाहा समग्निस्तपसा गतेत्याह। पूर्वमेवोदितं। उत्तरेणाभिगृणाति" इति। (५प्र०।६अ०।१९म०)। ग्रीष्मविषयत्वं पूर्वस्मिन् मन्त्रेऽभिहितमेव ग्रीष्ममुत्तरमन्त्रेणापि* श्रुतिर्ब्रूते॥

अथ वर्षर्त्तुरूपेण स्तावकं मन्त्रमाह। (५)"धर्त्ता दिवो विभासि रजसः ० अमर्त्यस्तपोजाः"(५) इति। हे महावीर वर्षर्त्तुरूपेण 'दिवः' द्युलोकस्य, 'रजसः' मेघादिरञ्जनोपेतस्य, 'धर्त्ता' धारकः, 'विभासि' प्रकाशसे। तथा ओषधीजननेन 'पृथिव्याः' अपि 'धर्त्ता' स्वकीयवृष्टिप्रसारणेन, 'उरोः' विस्तीर्णस्य, 'अन्तरिक्षस्य' अपि 'धर्त्ता' हविर्द्वारेणोपकारकत्वात्, 'देवानां' अपि 'धर्त्ता' पोषकः, 'देवः' अतएव 'अमर्त्यः'

---

* मन्त्रेणाभिगृणातीति ब्रूते इति तै० पु० पाठः।

वानां। अमर्त्यस्तपोजाः[१]। [१]हृदे त्वा मनसे त्वा। दिवे त्वा सूर्य्याय त्वा॥ २॥

ऊर्द्धमिममध्वरं कृधि। दिवि देवेषु होत्रा यच्छ[१]।

---

मरणरहितः, दीक्षादिरूपेण तपसा जायते सिध्यतीति 'तपोजाः'॥

अस्य मन्त्रस्य वर्षर्त्तुपरतां दर्शयति। "धर्त्ता दिवो विभासि रजसः पृथिव्या इत्याह। वार्षिकावेवास्मा ऋतू कल्पयति" इति। (५प्र०।६अ०।२०म०)। वसन्तमन्त्रवद्व्याख्येयं॥

शारदर्त्तु*रूपेण स्तावकमन्त्रमाह। [१]"हृदे त्वा मनसे त्वा० दिवि देवेषु होत्रा यच्छ"[१] इति। हे महावीर त्वां, 'हृदे' हृदयार्थमवेक्ष इति शेषः। 'मनसे' मनोऽर्थं त्वामवेक्षे, अत्र हृन्मनःशब्दाभ्यां अनुकूलभोगार्थत्वेन चिन्त्यमानावाश्वयुजकार्त्तिकमासावुपलक्ष्येते तन्मासद्वयोचितभोगसिद्ध्यर्थमित्यर्थः, तथा 'दिवे' द्युलोकप्राप्त्यर्थं, 'सूर्य्याय' सूर्य्यप्राप्त्यर्थञ्च त्वामवेक्षे, 'इमं' अस्मदीयं, 'अध्वरं' यागं, 'ऊर्द्धं कृधि' उन्नतं कुरु, 'होत्राः' इमा होमक्रियाः, 'दिवि' द्युलोके, 'देवेषु' मध्ये, 'यच्छ' देहि कथय, इत्यर्थः॥

अस्य मन्त्रस्य शारदर्त्तुपरतां दर्शयति। "हृदे त्वा मनसे त्वेत्याह। शारदावेवास्मा ऋतू कल्पयति" इति॥ ६॥ (५प्र०।६अ०।२१म०)। वसन्तवाक्यवद्व्याख्येयं॥

---

* शरद्दृतु इति तै० पु० पाठः।

(७)विश्वासां भुवां पते। विश्वस्य भुवनस्पते। विश्वस्य मनसस्पते। विश्वस्य वचसस्पते। विश्वस्य तपसस्पते। विश्वस्य ब्रह्मणस्पते(७)। (८)देवश्रूस्त्वं देव घर्म देवान् पाहि(८)। (९)तपोजां वाचमस्मे नियच्छ देवायुवं(९) ॥ ३ ॥

---

मन्त्रचरमभागेन सर्व्वेषां लोकानां होमक्रियाभिसम्बन्धं* दर्शयति। "दिवि देवेषु होत्रा यच्छेत्याह। होत्राभिरेवेमान् लोकान्त्सन्दधाति" इति। (५ प्र०।६ अ०।२१ म०)॥

अथ हेमन्तर्त्तुरूपेण स्तावकं मन्त्रमाह। (७)"विश्वासां भुवां पते० विश्वस्य ब्रह्मणस्पते"(७) इति। जम्बूद्वीपादयो या भुवः तासां 'भुवां' 'विश्वासां' सर्व्वासां, हे 'पते' पालक, हेमन्तर्त्तुरूप महावीर त्वामवेच्च इति शेषः। 'भुवनः' भुवनस्य लोकजातस्य, 'मनसः' अन्तःकरणजातस्य, 'वचसः' वाक्यजातस्य, 'तपसः' तपोजातस्य, 'ब्रह्मणः' वेदजातस्य, 'पते' पालक, त्वामवेच्चे॥

अस्य मन्त्रस्य हेमन्तर्त्तुपरतां दर्शयति। "विश्वासां भुवां पत इत्याह। हैमन्तिकावेवास्मा ऋतू कल्पयति" इति। (५ प्र०।६ अ०।२३ म०)। वसन्तवाक्यवद्व्याख्येयं॥

शिशिरर्त्तुरूपेण स्तावकं मन्त्रमाह। (८)"देवश्रूस्त्वं देव घर्म देवान् पाहि"(८) इति। हे 'घर्म' प्रवर्ग्य, 'देव' शिशिरर्त्तुरूप,

---

* सम्बन्धसिद्धिं इति तै० पु० पाठः।

(१०)गर्भो देवानां(१०)। (११)पिता मतीनां(११)। (१२)पतिः

'देवश्रूः' देवेषु श्रूयमाणः, 'त्वं' 'देवान्', हविःप्रदानेन 'पाहि' रक्ष ॥

अस्य मन्त्रस्य ग्रैष्मिरर्त्तुपरतां दर्शयति। "देवश्रूस्त्वं देव घर्म देवान् पाहीत्याह। ग्रैष्मिरावेवास्मा ऋतू कल्पयति" इति। (५ प्र०।६ अ०।२४ म०)। वसन्तवाक्यवद्व्याख्येयं ॥

अथ बहूनि वाक्यानि नानाविधगुणैः स्तावकान्युच्यन्ते। तत्रैक-वाक्यमाह। (९)"तपोजां वाचमस्मे नियच्छ देवायुवं"(९) इति। हे महावीर 'अस्मे' अस्मभ्यं, 'तपोजां' तपस उत्पन्नां, 'देवायुवं' देवान् इच्छन्तीं, 'वाचं' मन्त्ररूपां, 'नियच्छ' नितरां देहि, 'तपोजां' इत्यनेन यज्ञयोग्या मन्त्ररूपा वाग् विवक्ष्यते ॥

तस्यास्तपस्विना पुरुषेण लभ्यमानत्वादित्येतद्दर्शयति। "तपो-जां वाचमस्मे नियच्छ देवायुवमित्याह। या वै मेध्या वाक्। सा तपोजाः। तामेवावरुन्धे" इति॥ ७ ॥ (५ प्र०।६ अ०।२५ म०) ॥

वाक्यान्तरमाह। (१०)"गर्भो देवानां"(१०) इति। अयं महावीरः 'देवानां' सम्बन्धी 'गर्भ'-रूपः देवैरपेक्षितस्य हवि-षोऽत्र गर्भरूपेणावस्थानात् ॥

मन्त्रार्थस्य प्रसिद्धिं दर्शयति। "गर्भो देवानामित्याह। गर्भो ह्येष देवानां" इति। (५प्र०।६ अ०।२६म०) ॥

वाक्यान्तरमाह। (११)"पिता मतीनां"(११) इति। देवैर्ह-विःप्रदानार्थं तदा तदा मन्यन्त इति मतयः प्रजास्तासां

प्रजाना॑म्[१२] । [१३]म॒तिः क॒वीना॑म्[१३] । [१४]सं दे॒वो दे॒वेन॑ सवि॒त्राय॑तिष्ट । सꣳ सूर्ये॑णारुक्त[१४] । [१५]आ॒यु॒र्दास्त्व-

प्रजानां मातुं,* महावीरः फलदानेन पालकत्वात् 'पिता' ॥

मतिशब्देन प्रजाविवक्षां दर्शयति । "पिता मतीनामित्याह । प्रजा वै मतयः । तासामेष एव पिता । यत् प्रवर्ग्यः । तस्मादेवमाह" इति । (५प्र०।६अ०।२७म०) ॥

वाक्यान्तरमाह । [१२]"पतिः प्रजानां"[१२] इति । अयं महावीरः पूर्व्वोक्तरीत्या पालकत्वात् 'प्रजानां' स्वामी ॥

अस्य वाक्यस्यार्थे प्रसिद्धिं दर्शयति । "पतिः प्रजानामित्याह । पतिर्ह्येष प्रजानां" इति । (५प्र०।६अ०।२८म०) ॥

वाक्यान्तरमाह । [१३]"मतिः कवीनां"[१३] इति । ये कवयः शास्त्रार्थाभिज्ञाः, तेषामभिज्ञानसाधनबुद्धिरूपोऽयं महावीरः, अनेन कर्म्मण्यनुष्ठिते तेन सुकृतेन प्रज्ञोदयात् ॥

अस्मिन्नर्थे प्रसिद्धिं दर्शयति । "मतिः कवीनामित्याह । ॥ ८ ॥ मतिर्ह्येष कवीनां" इति । (५प्र०।६अ०।२९म०) ॥

वाक्यान्तरमाह । [१४]"सं देवो देवेन सवित्रायतिष्ट । सꣳ सूर्येणारुक्त"[१४]इति । अयं महावीरः 'देवः' 'देवेन' 'सवित्रा' 'सं'युज्य, 'अयतिष्ट' अस्मानमनुग्रहीतुं प्रयत्नं कृतवान् । तथा 'सूर्येण' 'सꣳ'युज्य, 'आरुक्त' दीप्तवान् ॥

* अयं इति तै० पु० पाठः ।

मस्मभ्यं घर्म वर्चो दा असि(१५)। (१६)पिता नोऽसि पिता नो बोध(१६)। (१७)आयुर्द्धास्तनूधाः पयोधाः। वर्चो दा वरिवो दा द्रविणो दाः॥ ४॥

---

अत्र देवशब्दद्वयेन आदित्यमहावीरौ विवक्षिताविति दर्शयति। "सं देवो देवेन सवित्रायतिष्ट सं सूर्य्येणारुक्तेत्याह। असुं ह्येवादित्यं प्रवर्ग्यश्च सं ह्यास्ते" इति। (५प्र०। ६अ०।३०म०)। सम्यक् कथयतीत्यर्थः॥

वाक्यान्तरमाह। (१५)"आयुर्दास्त्वमस्मभ्यं घर्म वर्चो दा असि"(१५) इति। हे 'घर्म' महावीर, 'त्वं' 'अस्मभ्यं' 'आयु'-स्तेजसोः* प्रदाता 'असि'॥

अस्य वाक्यस्यायुःपरतां दर्शयति। "आयुर्दास्त्वमस्मभ्यं घर्म वर्चो दा असीत्याह। आशिषमेवैतामाशास्ते" इति। (५प्र०६अ०।३१म०)॥

वाक्यान्तरमाह। (१६)"पिता नोऽसि पिता नो बोध"(१६) इति। हे महावीर 'नः' अस्माकं, पालकत्वात् 'पिता' 'असि'। अतः 'पिता' जनक, एव भूत्वा 'नः' अस्मान्, 'बोध' इदं इदं कुर्व्विति सन्मार्गं बोधय॥

महावीरे प्रवृत्तस्योत्तरकर्त्तव्यताया बुध्यमानत्वात् बोधकत्वमस्यावश्यमस्तीत्येतद्दर्शयति। "पिता नोऽसि पिता नो

---

* वर्चसोः, इति तै॰ पु॰ पाठः।

अन्तरिक्षप्र उरोर्व्वरीयान्। अशीमहि त्वा मा मा हिꣳसीः(१७)। (१८)त्वमग्ने गृहपतिर्विशामसि। विश्वासां मानुषीणां। शतं पूर्भिर्य्यविष्ठ पाह्यꣳहसः। समेद्धारꣳ शतꣳ हिमाः। तन्द्राविणꣳ हार्दिवानं। इहैव रा-

---

बोधेत्याह। बोधयत्येवैनम्” इति। (५प्र०।६अ०।१२म०)॥

वाक्यान्तरमाह। (१७)“आयुर्धास्तनूधाः पयोधाः ० अशीमहि त्वा मा मा हिꣳसीः”(१७) इति। अयं महावीरो दीर्घमायुः शरीरपाटवं* क्षीरसमृद्धिञ्च सम्पादयति। तथा कान्तिं पूजां धनञ्च प्रयच्छति। अन्तरिक्षं स्वोत्पन्नया ज्वालया प्रतिपूरयतीति ‘अन्तरिक्षप्रः’ अतएव ‘उरोः’ विशालादपि वस्तुनः। ‘वरीयान्’ अतिशयेन विस्तृतः†, तादृश हे महावीर त्वां, ‘अशीमहि’ व्याप्नुयाम, व्याप्नुवन्तं मां, ‘मा’ ‘हिꣳसीः’ हिंसितं मा कुरु॥

अथाग्निरूपेण स्तुतयोः‡ काञ्चिद्देवतामाह। (१८)“त्वमग्ने गृहपतिर्विशामसि ० इहैव रातयः सन्तु(१८) इति। हे ‘अग्ने’ ‘त्वं’ ‘मानुषीणां’ मनुष्यजातियुक्तानां, ‘विश्वासां’ सर्व्वासां, ‘विशां’ प्रजानां, ‘गृहपतिः’ ‘असि’ गृहस्वामी, भवसि। हे ‘यविष्ठ’

---

* शरीरपोषणम् इति तै० पु० पाठः।
† विस्तृतः इति तै० पु० पाठः। विवृतः इति D चिह्नितपुस्तकपाठः।
‡ स्तुवामेतां ऋचमाह इति तै० पु० पाठः।

तयः सन्तु(१८)। (१९)त्वष्टीमती ते सपेय। सुरेता रेतो दधाना॥ वीरं विदेय तव सन्दृशि। माहꣳ रायस्पोषेण वियोषं(१९)॥ ५॥

रोचते, सूर्य्याय त्वा, देवायुवं, द्रविणो दाः, दधाना, द्वे च॥ अनु० ७॥

---

युवतम, 'पूर्भिः' धनादीनां पूरणैः, 'शतं' शतसम्वत्सरमायुः, 'पाहि' रक्ष। तथा 'शतꣳ हिमाः' शतसंवत्सरान्, 'समेद्धारं' सम्यगभिवृद्धियुक्तं, मां, 'अंहसः' 'पाहि' पापात् रक्ष। कीदृशं मां, 'तन्द्राविणं' त्वत्पालनात् पूर्व्वं तन्द्रीयुक्तं कर्म्मालसं, 'हार्दिवानं' त्वत्पालनादूर्द्ध्वं हृदयगतकर्म्मोत्साहवन्तं, 'रातयः' त्वदीयानि फलदानानि, 'इहैव' अस्मिन्नेव कर्म्मणि, 'सन्तु'॥

कल्पः। अनुवाकशेषं तु परिश्रिते प्रतिप्रस्थाता पत्नीं वाचयति। त्वष्टीमती ते सपेयेति। पाठस्तु। (१९)"त्वष्टीमती ते सपेय ० माहꣳरायस्पोषेण वियोषम्"(१९) इति। हे महावीर, 'ते' तव, प्रसादात् 'अहं', पत्नी 'त्वष्टीमती' सिक्ते रेतसि रूपाणां विकर्त्ता त्वष्टृशब्देन* युक्ता सती 'सपेय' पत्या सङ्गच्छेय। ततः सङ्गमादूर्द्ध्वं 'सुरेताः' शोभनेन पुत्रोत्पादनेन रेतसा युक्ता सती, 'रेतो दधाना' तादृशमेव पतिसम्बद्धं रेतो धारयन्ती, 'तव' 'संदृशि' त्वदीयकटाक्षे सति। 'वीरं' 'विदेय' कर्म्मणि

---

* त्वष्टा देवेन इति तै० पु० पाठः।

शूरं पुत्रं, लभेय । 'अहं' त्वत्प्रसादात् 'रायस्पोषेण' धनपुष्ट्या, 'मा वियोषं' वियुक्ता मा भुवं ॥

अस्मिन्ननुवाके मन्त्रसङ्ख्यां दर्शयति । "नवैतेऽवकाशा भवन्ति । पत्न्यै दशमः । नव वै पुरुषे प्राणाः ॥८॥ नाभिर्दशमी । प्राणानेव यजमाने दधाति । अथो दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे" इति । (५प्र०।६अ०। ११म०)। अवकाशयन्तोऽर्थम्प्रकाशयन्त इति 'अवकाशाः' मन्त्राः । ते चात्र 'नव'-सङ्ख्याका* ऋत्विजां 'भवन्ति' । अपश्यं गोपामित्येको मन्त्रः, अत्र प्रावीरित्याद्या ऋतुविषयाः षण्मन्त्राः†, तपोष्वामित्यादि मा मा हिंसीरित्यन्तं वाक्यजातमेको मन्त्रः, त्वमग्न इत्यादिको रातयः सन्त्वित्यन्तिको मन्त्रः‡ एकः, एवं नवसङ्ख्याकाः । त्वष्टीमतीत्यादिकः पत्न्याः§ 'दशमः' मन्त्रः । पुरुषशरीरेऽपि छिद्रगताः 'प्राणाः' 'नव'-सङ्ख्याकाः तदपेक्षया 'नाभिर्दशमी' अतो मन्त्रगतसङ्ख्यासाम्यात् 'यजमाने' 'प्राणानेव' सुस्थिरान्|| करोति । अपि च 'विराट्' द्वारा 'अन्नं' अपि प्राप्नोति ॥

एतैर्मन्त्रैः साध्यं महावीरावेक्षणं विधत्ते । "यज्ञस्य शिरोऽच्छिद्यत । तद्देवा होत्राभिः प्रत्यदधुः । ऋत्विजोऽवेक्षन्ते ।

* नवसङ्ख्याका भवन्ति इति D चिह्नितपु० पाठः ।

† परे मन्त्राः इति D चिह्नितपु० पाठः ।

‡ सन्त्वित्येको मन्त्रः इति तै० पु० पाठः ।

§ पत्न्यै इति D चिह्नितपु० पाठः ।

|| सुस्थिताम् इति D चिह्नितपु० पाठः ।

एता वै होत्राः। होत्राभिरेव यज्ञस्य शिरः प्रतिदधाति॥ ॥१०॥ इति। (५प्र०।६अ०।२४म०)। यदा धनुःकोव्या यज्ञपुरुषस्य, 'शिरः' छिन्नं तदा 'देवाः' तत् 'शिरः' 'होत्राभिः' यज्ञशरीरे प्रतिष्ठितवन्तः होमनिष्पादिका ऋत्विजां याः प्रत्यवेक्षणादि*क्रियाः, 'एताः' एव 'होत्राः' तस्मादृत्विजामवेक्षणेन 'होत्राभिरेव' 'यज्ञस्य शिरः' प्रतिष्ठितं भवति॥

अग्निष्टेत्यादिमन्त्रैरुपस्थानादूर्द्धकालीनत्वमवेक्षणस्य विधत्ते। "ईक्षितमवेक्षन्ते। ईक्षिताद्वै प्रजापतिः प्रजा असृजत। प्रजानामुष्ट्यै" इति। (५प्र०।६अ०।२५म०)। ईक्षधात्वर्थप्रतिपादकैः अग्निष्टेत्यादिकैर्मन्त्रैरभिमन्त्रितो महावीरो ईक्षितः तादृशं पश्चादवेक्षेरन्, पुरा 'प्रजापतिः' प्रवर्ग्यात्, 'ईक्षितात्' एव 'प्रजाः' सृष्टवान्, अतोऽत्रापि 'सृष्ट्यै†' तद्भवति॥

पूर्वोक्तमेवानूद्य पुनः प्रशंसति। "ईक्षितमवेक्षन्ते। ईक्षिताद्वै पर्जन्यो वर्षति। वर्षुकः पर्जन्यो भवति। सं प्रजा वर्द्धन्ते" इति। (५प्र०।६अ०।२६म०) पूर्वोक्तात् 'ईक्षितात्' प्रवर्ग्यादेव कर्मानुष्ठानद्वारादित्यप्राप्त्या मेघः 'वर्षति' अतोऽत्रापि ईक्षितावेक्षणे 'पर्जन्यः' वर्षणशीलः, 'भवति', 'प्रजाः' च सम्यग्वर्द्धन्ते॥

पुनरपि प्रकारान्तरेण प्रशंसति। "ईक्षितमवेक्षन्ते। ईक्षितं वै ब्रह्मवर्चसं। ब्रह्मवर्चसिनो भवन्ति"॥११॥ इति। (५प्र०। ६अ०।२७म०)। 'ब्रह्मवर्चसं' श्रुताध्ययनसम्पत्तिः, 'ईक्षितं'

---

* अवेक्ष्याादि इति तै० पु० पाठः।

† सृष्टैतत् इति तै० पु० पाठः।

विहत्वभार्या प्रकाशितं, भवति। अतो दृषितावेक्षणेन ब्रह्मवर्चसयुक्ताः 'भवन्ति' ॥

अवेक्षणे पूर्व्वोक्तमन्त्रान् विधत्ते। "अधीयन्तोऽवेक्षन्ते। सर्व्वमायुर्यन्ति" इति। (५प्र०।६अ०।३८म०)। 'अधीयन्तः' अपश्यं गोपामित्यादिमन्त्रान् पठन्तः, ऋत्विजोऽवेक्षेरन्, ततो* मन्त्रसामर्थ्यात् सर्व्वायुःप्राप्तिः ॥

पत्न्याः कश्चिद्विशेषं विधत्ते। "न पत्न्यवेक्षेत। यत् पत्न्यवेक्षेत। प्रजायेत। प्रजां त्वस्ये निर्द्दहेत्। यन्नावेक्षेत। न प्रजायेत। नास्ये प्रजां निर्द्दहेत्। तिरस्कृत्य यजुर्व्वाचयति ॥ प्रजायते। नास्ये प्रजां निर्द्दहति" इति। (५प्र०।६अ०।३९म०)। अत्रायं विचारः, किं 'पत्न्यवेक्षेत', 'न' वेति अवेक्षणपक्षे प्रजोत्पत्तिलक्षणे गुणे सत्यपि तदीयां 'प्रजां' महावीरः 'निर्द्दहेत्' इत्येष महान् दोषः, अतः 'नावेक्षेत' इत्येकः पक्षः। अनवेक्षणपक्षे निर्द्दाहाभावेऽपि प्रजोत्पत्तिः 'न' स्यादित्यन्यो दोषः, अतो दोषद्वयनिवृत्तये पत्नीं केनचिद्व्यवधानेन 'तिरस्कृत्य' 'त्वष्टीमती' इति मन्त्रं पठेत् ॥

तस्मिन् मन्त्रे सपेयेत्यस्य तात्पर्य्यं दर्शयति। "त्वष्टीमती ते सपेयेत्याह। सपाद्धि प्रजाः प्रजायन्ते" ॥१२॥ इति। (५प्र०।६अ०।४०म०)। स्त्रीपुरुषयोः समवायात् प्रजोत्पत्तिः प्रसिद्धा तस्मात् 'सपेय' इत्युच्यते ॥

ऋतवः, हि शिरः, सर्व्वपृष्ठे प्रवृणक्ति, अनिपद्यमानमि-

---

* अतो इति ते० पु० पाठः।

त्याह, गतेत्याह, आरद्रावेवास्मा ऋतू कल्पयति, इन्धे, कवीनामित्याह, प्राणाः, प्रतिदधाति, भवन्ति, आचयति, चत्वारि च ॥ इति ५ प्रपाठके ६ अनुवाकः ॥

अथ मीमांसा। तृतीयाध्यायस्य तृतीयपादे चिन्तितम्।

न प्रवृञ्ज्यादाद्ययज्ञे क्रतौ सोऽनुष्ठितावुत।
प्रतिषेधः क्रतौ युक्त उक्ता ह्यस्याद्ययज्ञता॥
प्रवृणक्त्युपसद्भ्यः प्रागिति वाक्यात् क्रतोर्विधेः।
आद्यप्रयोगे प्राथम्यान्निषेधः क्वचिदेव सः॥

ज्योतिष्टोमे प्रवर्ग्याख्यं कर्म्म प्रकृत्य श्रूयते। न प्रथमयज्ञे प्रवृञ्ज्यादिति सोऽयं निषेधो ज्योतिष्टोमक्रतौ द्रष्टव्यो न तु तदीयप्रथमप्रयोगे। कुतः। एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम इति। तस्य प्रथमयज्ञत्वाभिधानादिति चेत्। नैवं। पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति*वाक्येन क्रतौ प्रवर्ग्यस्य विहितत्वात्। न च विधिनिषेधवाक्ययोः समानबलत्वादयं निर्णयः, तथा सति प्रतिषेधवाक्ये प्रथमशब्देन प्रयोगपरत्वनिर्णयात् प्रथमद्वितीयादिशब्दाः क्रियाया आवृत्तौ मुख्याः तत्सम्बन्धादन्यत्रोपचर्य्यन्ते। प्रथममध्येतव्यत्वात् प्रथमकाण्डं, तदनन्तरमध्येतव्यत्वाद्द्वितीयकाण्डं, एवमादावुत्पन्नत्वात् प्रथमः पुत्रः, तदनन्तरमुत्पन्नत्वाद्द्वितीयः पुत्रः। तथापि† प्रयोगक्रियाया

---

* प्रवृणक्तीति D चिह्नितपु॰ पाठः।
† तथा सति इति तै॰ पु॰ पाठः।

आवृत्तिविशेषेऽपि* प्रथमशब्दो मुख्यः तदा-†वृत्तिविशेषतया यज्ञशब्दो लाक्षणिकः, तत्पक्षे क्रतौ मुख्यो यज्ञशब्दः प्रयोगो‡ लाक्षणिकः स्यादितिचेत्। वाढं। तथाप्यनन्यज्ञातविरोधिनि लाक्षणिकत्वकल्पनात् काम§मुत्तरपदे तत्कल्पनं तस्माज्ज्योतिष्टोमस्य प्रथमप्रयोगे प्रवर्ग्यस्य निषेधः। न तु सप्तसंस्थायुक्तस्य ज्योतिष्टोमस्य प्रथमसंस्थारूपोऽग्निष्टोमः तत्रायं निषेधः पर्य्यवस्यति। विधिस्तु तत्र श्रूयते। अग्निष्टोमे प्रवृणक्तीति। एवं तत्राधिकारि‖भेदेन विधिनिषेधयोर्व्यवस्थास्तु। तथा च श्रूयते। कामन्तु योऽनूचानः स्यात् तस्य प्रवृञ्ज्यादिति तस्मादनूचानव्यतिरिक्तप्रथमप्रयोगएवायं निषेधः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

* आवृत्तिर्द्वितीयेऽपि इति D चिह्नितपु॰ पाठः।
† तथा इति तै॰ पु॰ पाठः।
‡ प्रयोगे इति तै॰ पु॰ पाठः।
§ वरं इति तै॰ पु॰ पाठः।
‖ अधिकार इति D चिह्नितपु॰ पाठः।

अथ अष्टमोऽनुवाकः ।

(१)देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्यां । पूष्णो हस्ताभ्यामाददे(१) । (२)अदित्यै रास्नासि(२) । (३)इड

---

अथ अष्टमोऽनुवाकः ।

सप्तमे महावीरावेक्षणमुक्तं । अष्टमे आज्ये महावीरे पयःप्रक्षेपणं विधत्ते प्रवृञ्जनमुच्यते* । कल्पः । सावित्रेण रशनामादायेति । पाठस्तु । (१)"देवस्य त्वा सवितुः प्रसवे ० पूष्णो-हस्ताभ्यामाददे"(१) इति । द्वितीयानुवाके (३८१पृ०) व्याख्यातोऽयं मन्त्रः ॥

अनेन मन्त्रेण साध्यमादानं विधत्ते । "देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्तां । पूष्णो हस्ताभ्यामित्याह यत्यै" इति । (५प्र०।७अ०।१म०) ॥

कल्पः । अदित्यै रास्नासीत्यभिमन्त्र्येति । (२मन्त्रः) हे रशने त्वं 'अदित्यै' भूमिरूपायै धेन्वै, 'रास्ना' बन्धनार्था रशना, 'असि' ॥

मन्त्रतात्पर्यं दर्शयति । "आददेऽदित्यै रास्नासीत्याह यजुष्कृत्यै" इति । (५प्र०।७अ०।२म०) । 'आददे' इत्येष पूर्व-

---

* पयःप्रक्षेपणमुच्यते इति तै० पु० पाठः ।

एहि। अदित एहि। सरस्वत्येहि[२]। [४]असावेहि। असावेहि। असावेहि[४] ॥ १ ॥

---

मन्त्रशेषः, स्पष्टार्थत्वात् पाठ एव तस्य व्याख्यानं। यजुषा मन्त्रेण कृतिः निष्पादनं यजुष्कृतिः तत्सिद्ध्यर्थमनेनाभिमन्त्रणं ॥

कल्पः। पूर्व्वया द्वारोपनिष्क्रम्य त्रिरुपांशु घर्मदुघामाह्वयति। [१]"इड एहि अदित एहि सरस्वत्येहि"[१] इति। इडादीनि गोनामधेयानि तैः सम्बोध्य 'एहि' इत्याह्वयति ॥

मन्त्रतात्पर्यं दर्शयति। "इड एह्यदित एहि सरस्वत्येहीत्याह। एतानि वा अस्यै देवनामानि। देवनामैरेवैनामाह्वयति" इति। (५ प्र०।७ अ०।३ म०)। वक्ष्यमाणाह्वानेन पुनरुक्तिं वारयितुं 'देवनामानि' इति विशेष्यते। इडादीनि देवानां प्रसिद्धानि गोनामानि मन्त्रपाठे सति तैरेवेयमाहूता भवति ॥

कल्पः। प्रत्येत्य दोग्ध्रे निदाने इत्यादाय दक्षिणया द्वारोपनिष्क्रम्य त्रिरुच्चैः। असावेहि। असावेहि। असावेहीति (४ मन्त्रः)। घर्मदुघामाह्वयतीत्यनुवर्त्तते। मनुष्ये व्यवहारार्थं सङ्केतितं गङ्गादिकं धेनुनाम 'असौ' इति शब्देन निर्द्दिश्यते हे गङ्गे समागच्छ ॥

पूर्व्वाह्वानाद्व्यावृत्तिमन्त्रं दर्शयति। "असावेह्यसावेह्यसावेहीत्याह। एतानि वा अस्यै मनुष्यनामानि॥ १ ॥ मनुष्यनामैरेवैनामाह्वयति" इति। (५ प्र०।७ अ०।४ म०) ॥

(४)अदि॑त्या उ॒ष्णीष॑मसि(४)। (६)वा॒युर॑स्यै॒डः(६)। (७)पू॒षा

द्विविधाक्रामगतां सङ्ख्यां प्रशंसति। "षट् सम्पद्यन्ते। षट् वा ऋतवः। ऋतुभिरेवैनामाक्रमयति" इति। (५प्र०।७अ०।५म०)। त्रीणि देवनामानि त्रीणि मनुष्यनामानीत्येवं 'षट्' सम्पत्तिः॥

कल्पः। अदित्या उष्णीषमसीति रशनया घर्मदुघामभिदधाति इति। (५मन्त्रः) हे रशने 'अदित्याः' भूमिरूपाया धेनोः, उष्णीषस्थानीया 'असि'॥

मन्त्रस्य स्पष्टार्थं दर्शयति। "अदित्या उष्णीषमसीत्याह। यथा यजुरेवैतत् इति। (५प्र०।७अ०।६म०)॥

कल्पः। वायुरस्यैड इति वत्समिति। (६मन्त्रः) अभिदधातीत्यनुवर्त्तते। इडाया अपत्यं 'ऐडः' वत्सः, तादृशस्त्वं 'वायु'-स्वरूपः 'असि'॥

वायुत्वमुपपादयति। "वायुरस्यैड इत्याह। वायुदेवत्यो वै वत्सः" इति। (५प्र०।७अ०।७म०)। वत्सापाकरणे वायवः स्थेत्याम्नानात्* 'वायुदेवत्यः' त्वं, अत एवान्यत्र ब्राह्मणे वायुर्वत्स इत्युक्तं॥

कल्पः। पूषा त्वोपावसृजत्वित्युपावसृज्येति अश्विभ्यां प्रदापय इति मन्त्रशेषः। (७मन्त्रः) हे वत्स त्वां, 'पूषा'-ख्यो देवः स्तनपानार्थं मुञ्चतु त्वञ्चाश्विदेवार्थं पयः 'प्रदापय'॥

* इत्याम्नातं तै० पु० पाठः।

त्वोपावसृजतु। अश्विभ्यां प्रदापय[७]। [८]यस्ते स्तनः शशयो यो मयोभूः। येन विश्वाः पुष्यसि वार्याणि। यो

---

मन्त्रस्य पूर्वभागे पूषेत्यस्य तात्पर्यं दर्शयति। "पूषा त्वोपावसृजत्वित्याह। पौष्णा वै देवतया पशवः॥ २॥ स्वयैवैनं देवतयोपावसृजति" इति। (५प्र०।७अ०।८म०)। पोषकत्वाद्देवायं पशूनां देवः॥

उत्तरभागेऽश्विशब्दतात्पर्यं दर्शयति। "अश्विभ्यां प्रदापयेत्याह। अश्विनौ वै देवानां भिषजौ। ताभ्यामेवास्मै भेषजं करोति" इति। (५प्र०।७अ०।९म०)। 'अस्मै' वत्साय, क्षीरं 'भेषजं' इत्येतत् प्रत्यक्षं, 'अश्विभ्यां' तु हविःप्रदानद्वारा 'भेषजं'॥

कल्पः। यस्ते स्तनः शशय इति घर्मदुघामभिमन्त्रयत इति। पाठस्तु। [८]"यस्ते स्तनः शशयो यो मयोभूः० सरस्वति तमिह धातवेऽकः"[८] इति। हे धेनो 'ते' तव, 'यः' 'स्तनः' 'शशयः' शयानः स्थैर्य्येणावस्थितः, 'यः' च 'स्तनः' 'मयोभूः' सुखस्य भावयिता, 'येन' च स्तनेन, 'विश्वाः' सर्व्वाणि, 'वार्य्याणि' वरणीयानि* वत्सादिशरीराणि, 'पुष्यसि' पुष्टानि करोषि, 'यः' च 'स्तनः' 'रत्नधा' रत्नवन्महार्घं क्षीरं धारयति। अत एव 'वसुवित्' उत्तमं वस्तु लभते। 'यः' च स्तनः, 'सुदत्रः' शोभनदानशीलः, बहुक्षीरं ददातीत्यर्थः। हे 'सरस्वति'

---

* प्रेरणीयानि इति D चिह्नितपु॰ पाठः।

रत्नधा वसुविद्यः सुदत्रः। सरस्वति तमिह धातवे- ऽकः[८]। [९]उस्र घर्म॑ꣳ शिꣳष। उस्र घर्मं पाहि ॥ २ ॥

---

एतन्नामयुक्ते धेनो, 'तं' स्तनं, 'इह' कर्म्मणि, 'धातवे' धातुं देवानां चीरं पातुं*, 'अकः' योग्यं कुरु ॥

स्तनवर्णनेन धेनोरेव स्तुतिः सम्पद्यत इत्येतद्दर्शयति। "यस्ते स्तनः शशय इत्याह। स्तौत्येवैनां" (५प्र०।७अ०।१०म०) ॥

कल्पः। उस्र घर्म्मꣳ शिꣳष उस्र घर्म्मं पाहि घर्म्माय शिꣳषेति निदाय वत्समिति। (९ मन्त्रः)। 'निदाय' बद्ध्वे- त्यर्थः। हे 'उस्र' वत्स, 'घर्म्मं' †अरणयोग्यं चीरं, 'शिꣳष' अवशेषय, हे 'उस्र' चीराख्यं 'घर्म्मं' 'पाहि' पालय, यथा सुरचितं भवति तथा कुरु। किमर्थमिति तदुच्यते। 'घर्म्माय' प्रवर्ग्यार्थं, 'शिꣳष' अवशेषय ॥

घर्म्मायेत्येतच्चतुर्थ्यन्तस्य तात्पर्य्यं दर्शयति। "उस्र घर्म्मꣳ शिꣳषोस्र घर्म्मं पाहि घर्म्माय शिꣳषेत्याह। यथा ब्रूयादमुष्मै देहीति। तादृगेव तत्" इति। (५प्र०।७अ०।११म०)। लोके हि बालपुत्रार्थं चीरं देहीति गृहस्वामिनं बालस्य माता याचते तद्वदिदं द्रष्टव्यं ॥

कल्पः। बृहस्पतिस्त्वोपसीदत्वित्युपसीदतीति। (१० मन्त्रः)।

---

* दातुं इति तै० पु० पाठः।

† रक्षणयोग्यं इति तै० पु० पाठः।

घर्माय शिङ्क्ष्व(९)। (१०)बृहस्पतिस्त्वोपसीदतु(१०)। (११)दानवः स्थ पेरवः। विष्वग्वृतो लोहितेन(११)।

---

हे धेनो 'त्वा' त्वां, दोग्धृरूपः 'बृहस्पतिः' 'उपसीदतु' समीपे प्राप्नोतु॥

बृहस्पतिशब्दतात्पर्यं दर्शयति। "बृहस्पतिस्त्वोपसीदत्वित्याह॥ २॥ ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैवैनामुपसीदति" इति। (५प्र०।७अ०।१२म०)। 'देवानां' मध्ये, बृहस्पतेः परब्रह्मरूपत्वात् तेनैवोपसदनं कृतं भवति॥

कल्पः। दानवः स्थ पेरव इति स्तनान् संमृशेति। विष्वग्वृतो लोहितेनेति मन्त्रशेषः। (११ मन्त्रः)। हे स्तनाः यूयं, 'दानवः' क्षीरदानकुशलाः, 'पेरवः' वत्सेन पातुं योग्याः, 'लोहितेन' वत्सेन, 'विष्वग्वृतः' पृथग्भूत्वा वर्त्तमानाः, 'स्थ'। न हि स्तनदोहने रक्तमायाति॥

पानयोग्यत्वकथनेन शुद्धिः सूचितेत्येतद्दर्शयति। "दानवः स्थ पेरव इत्याह। मेध्यानेवैनान् करोति" इति। (५प्र०। ७अ०।१३म०)॥

विष्वग्वृत इत्यनेन क्षीरस्य रक्ताद्व्यावृत्तिर्विवक्षितेति दर्शयति। "विष्वग्वृतो लोहितेनेत्याह व्यावृत्त्यै" इति। (५प्र०। ७अ० १४म०)॥

कल्पः। अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व

(१२)अश्विभ्यां पिन्वस्व। सरस्वत्यै पिन्वस्व। पूष्णे पिन्वस्व। बृहस्पतये पिन्वस्व। इन्द्राय पिन्वस्व। इन्द्राय पिन्वस्व(१२) ॥ ३ ॥

---

बृहस्पतये पिन्वस्वेति बृष्णीयसि* दोग्ध्रे दोग्धीति। स्रुवे दोहनपात्रे दुग्धादित्यर्थः†। इन्द्राय पिन्वस्व इन्द्राय पिन्वस्वेति मन्त्रशेषः। (१२ मन्त्रः)। हे धेनो अश्विसरस्वत्यादिदेवार्थं 'पिन्वस्व' हविःप्रभूतं देहि ॥

प्रभूतदातृत्वं धेनोः प्रसिद्धमित्येतद्दर्शयति। "अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेत्याह। एताभ्यो ह्येषा देवताभ्यः पिन्वते" इति। (५प्र०। ७अ०। १५म०) ॥

बृहस्पत्यादिवदिन्द्रस्य मन्त्रमात्रेण परितोषो न भवति किन्तु हविर्भागोऽप्यस्तीत्येतद्दर्शयति। "इन्द्राय पिन्वस्वेन्द्राय पिन्वस्वेत्याह। इन्द्रमेव भागधेयेन समर्द्धयति" इति। (५प्र०। ७अ०। १६म०) ॥

भागाधिक्येनेन्द्रमन्त्रावृत्तिं दर्शयति। "द्विरिन्द्रायेत्याह ॥ ॥ ४ ॥ तस्मादिन्द्रो देवतानां भूयिष्ठ भाक्तमः" इति। (५प्र०। ७अ०। १७म०) ॥

---

* वर्षीयसि इति तै० पु० पाठः।
† दुग्धतीत्यर्थः इति तै० पु० पाठः।

(१२)गायत्रोऽसि। त्रैष्टुभोऽसि। जागतमसि(१३)। (१४)सहोर्ज्जो भागेनोपमेहि(१४)। (१५)इन्द्राश्विना मधुनः

कल्पः। उपोत्तिष्ठन्तावग्नौ पयसो प्रदाय पूर्व्वावभिहृत्य* शफोपयमानादत्ते गायत्रोऽसीति प्रथमं त्रैष्टुभोऽसीति द्वितीयं जागतमसीति तृतीयमित्युपयमनं प्रतिप्रस्थातेति। (१३ मन्त्रः)। तप्तस्य महावीरस्य हस्ताभ्यां ग्रहीतुमशक्यत्वात् सन्दंशवदुभयतः काष्ठद्वयमध्ये महावीरं सन्दष्टं कृत्वा काष्ठद्वयस्य मूलद्वयमग्रद्वयं च धृत्वा अध्वर्य्युप्रतिप्रस्थातारावानयतः तौ काष्ठविशेषौ शफावित्युच्येते। महावीरस्याधस्ताद्धार्य्यमाणः काष्ठविशेष उपयमनी† इत्युच्यते। हे प्रथमशफ त्वं गायत्रीच्छन्दःसम्बन्धी 'असि'। हे द्वितीयशफ त्वं त्रिष्टुवच्छन्दःसम्बन्धी 'असि'। हे उपयमनि‡ त्वं जगतीच्छन्दःसम्बन्धी 'असि'॥

एतन्मन्त्रसाध्यमादानं विधत्ते। "गायत्रोऽसि त्रैष्टुभोऽसि जागतमसीति शफोपयमानादत्ते। छन्दोभिरेवैनामादत्ते" इति। (५प्र०।७अ०।१८म०)। गायत्र्यादिशब्दप्रयोगेण छन्दोभिरादानं सिध्यति॥

कल्पः। सहोर्ज्जो भागेनोपमेहीति पय आह्रीयमाणं प्रतीक्षत इति। (१४ मन्त्रः)। आग्नीध्रेणानीयमान हे पयः 'ऊर्ज्जः' रसस्य, 'भागेन' 'सह' मां, 'उपेहि', मत्समीपे समागच्छ॥

* पूर्व्ववदुद्धृत्य इति तै० पु० पाठः।
† उपयमन इति तै० पु० पाठः।
‡ उपयमन इति H चिह्नितपु०पाठः।

सारघस्य। घर्मं पात वसवो यजतावट्[१५]। [१६]स्वाहा

---

एतन्मन्त्रबलेनोर्जो रसस्य भागः सम्पादितो भवतीति दर्शयति। "महोर्जो भागेनोपमेहीत्याह। ऊर्ज एवैनं भागमकः" इति। (५ प्र०।७ अ०।१८ म०)॥

कल्पः। इन्द्राश्विना मधुनः सारघस्येति महावीरे गोपयः आनयतीति। घर्मं पात वसवो यजता वडिति मन्त्रशेषः। (१५ मन्त्रः)। हे 'इन्द्र' हे अश्विनौ, यूयं त्रयोऽपि 'मधुनः' सम्बन्धिनं 'घर्मं' घृतसहितं क्षीरं, 'पात' पिबत। कीदृशस्य 'मधुनः' 'सारघस्य' सरघा मधुमक्षिकाः ताभिर्निष्पादितं सारघं तादृशस्य मधुनः सम्बन्धेन हविषस्तद्वन्मधुररसत्वं हे 'वसवः' देवाः, 'यजत' यागं कुरुत, 'वट्' इदं हविर्दत्तमस्तु॥

अस्मिन् मन्त्रे इन्द्रशब्देन सहाश्विशब्दस्य प्रयोगाभिप्रायं दर्शयति। "अश्विनौ वा एतद्यज्ञस्य शिरः प्रतिदधतावब्रूतां। आवाभ्यामेव पूर्वाभ्यां वषट् क्रियाता इति। इन्द्राश्विना मधुनः सारघस्येत्याह। अश्विभ्यामेव पूर्वाभ्यां वषट्करोति। अथो अश्विनावेव भागधेयेन समर्द्धयति" ॥५॥ इति। (५ प्र०।७ अ०। ९ म०)। धनुष ऊर्द्धकोट्या छिन्नं 'एतद्यज्ञस्य शिरः' पुनस्तद्देहे* प्रतिधत्तौ, 'अश्विनौ' तस्मिन् काले, इदं वचनं 'अब्रूतां'। पूर्वभाविभ्यां 'आवाभ्यामेव' 'वषट्'-कारेण हविः-

---

* तद्देहे इति तै० पु० पाठः।

प्रदातव्यमिति अतस्ताभ्यां प्रार्थितत्वात् 'अश्विनौ' इति मन्त्रे उच्यते। तेनैताभ्यां प्रथमतो हविर्हुत्तं भवति। अपि च पूर्वं भागरहितौ 'अश्विनौ' इदानीं भागेन समृद्धं करोति, 'शिरः' प्रतिधानवेलायामितरदेवान् प्रति 'पूर्वाभ्यां' इति वरस्य* वृतत्वात् देवान्तरापेक्षयाश्विनोः पूर्वत्वं अतो नान्येभ्यो देवेभ्यः घर्म्मो दीयते। किन्तु इन्द्रसहिताश्विभ्यामेव॥

मन्त्रस्योत्तरभागे वसुशब्देन वसूनामपि भागसिद्धिं दर्शयति। "घर्म्मं पात वसवो यजता वडित्याह। वसूनेव भागधेयेन समर्द्धयति" इति। (५प्र०।७अ०।२१म०)॥

अथ मीमांसयां† वषट्शब्दं प्रशंसति। "यद्वषट्कुर्य्यात्। यातयामास्य वषट्कारः स्यात्। यन्न वषट्कुर्य्यात्। रक्षाꣳसि यज्ञꣳ हन्युः। वडित्याह। परोक्षमेव वषट्करोति। नास्य यातयामा वषट्कारो भवति। न यज्ञꣳ रक्षाꣳसि घ्नन्ति" ॥६॥ इति। (५प्र०।७अ०।२२म०)। अयेदं विचार्य्यते। 'वषट्'-शब्दः प्रयोक्तव्यो न वेति तत्प्रयोगे सति इदानीमेव गतसारत्वात्‡ सोमयागे भविष्यति वषट्कारो निःसारो भवेत्। तदप्रयोगे वज्रो वै वषट्कार इति श्रुतस्य वज्रस्याभावात् 'रक्षांसि' 'यज्ञं' विनाशयेयुः, अत उभयदोषपरिहाराय द्वितीयाक्षरं परित्यज्य 'वट्' इत्येव प्रयोक्तव्यं। तथा

---

* पदस्य इति तै० पु० पाठः।

† मीमांसायां इति D चिह्नितपु० पाठः।

‡ रसनामेव गतसारत्वात् इति D चिह्नितपु० पाठः।

त्वा सूर्य्यस्य रश्मये वृष्टिवनये जुहामि[११]। [१०]मधु

सति सम्पूर्णत्वाभावात् प्रत्यक्षः 'वषट्कारः'। 'न' भवति मंत्र एव ततः सद्भावात् परोक्षस्तिरोहितः, 'वषट्कारः' 'भवति' ततः सम्पूर्ण'वषट्कारः' 'न' गतसारः, एकदेशस्यापि विद्यमानत्वात्। वज्रसद्भावेन 'रक्षांसि' अपि 'यज्ञं' 'न' विनाशयन्ति ॥

कल्पः। स्वाहा त्वा सूर्य्यस्य रश्मये वृष्टिवनये जुहोमीत्युच्छन्तमूष्माणमनुमन्त्रयत इति। (१६ मन्त्रः)। 'वृष्टिवनये' वृष्टिप्रदानाय, 'सूर्य्यस्य रश्मये' हे ऊष्मन् त्वां, 'स्वाहा' 'जुहोमि' स्वाहाकारयोग्यामाहुतिं द्रव्यं कृत्वा 'जुहोमि' ॥

सूर्य्यायेत्यनुक्त्वा रश्मय इत्युक्तेस्तात्पर्य्यं दर्शयति। "स्वाहा त्वा सूर्य्यस्य रश्मये वृष्टिवनये जुहोमीत्याह। यो वा अस्य पुष्यो रश्मिः। स वृष्टिवनिः। तस्मा एवैनं जुहोति" इति। (५ प्र०।७ अ०।२३ म०)। सूर्य्यो न साक्षाद्वृष्टिं प्रयच्छति किन्तु पुष्यरश्मिद्वारा अतः साक्षात् 'रश्मये' एव वृष्टिप्रदानाय, आहुतिर्युक्ता ॥

कल्पः। मधु हविरसीत्याज्यमानयतीति। (१७ मन्त्रः)। महावीर आनयतीत्यनुवर्त्तते। हे आज्य, त्वं मधुरं, 'हविः' 'असि' ॥

स्वादुकर्त्तुं मधुशब्दप्रयोग इति दर्शयति। "मधु हविरसीत्याह। स्वदयत्येवैनं" इति। (५ प्र०।७ अ०।२४ म०) ॥

हविरसि[१७] । [१८]सूर्य्यस्य तपस्तप[१८] । [१९]द्यावापृथि-
वीभ्यां त्वा परिगृह्णामि[१९] ॥ [२०]अन्तरिक्षेण त्वोप-
यच्छामि[२०] । [२१]देवानां त्वा पितृणामनुमतो भर्त्तुं

कल्पः । सूर्य्यस्य तपस्तपे*त्यूष्माणमिति । उद्यन्तमनुमन्त्रयत इत्यनुवर्त्तते । (१८ मन्त्रः) । हे ऊष्मन् 'सूर्य्यस्य' 'तपः' सूर्य्यसम्बन्धिनं तापमपि तापत्वमतिशयेन तप्तं कुरु ॥

मन्त्रस्य स्पष्टार्थतां दर्शयति । "सूर्य्यस्य तपस्तपेत्याह । यथा यजुरेवैतत्" इति । (५ प्र०।७ अ०।२५ म०) ॥

कल्पः । द्यावापृथिवीभ्यां त्वा परिगृह्णामीति शफाभ्यां महावीरं परिगृह्णाति । (१९ मन्त्रः) । हे महावीर त्वां, द्यावापृथिवीदेवतारूपाभ्यां 'शफाभ्यां' 'परिगृह्णामि' ॥

मन्त्रबलात् द्यावापृथिवीपरिग्रहः सिध्यतीति दर्शयति । "द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्याह । द्यावापृथिवीभ्यामेवैनं परिगृह्णाति" ॥७॥ इति । (५ प्र०।७ अ०।२६ म०) ॥

कल्पः । प्रच्छिन्नाग्रेण वेदेन भस्म प्रमृज्यान्तरिक्षेण त्वोपयच्छामीत्युपयमनेन प्रतिप्रस्थातोपयच्छतीति । (२० मन्त्रः) । हे महावीर, त्वां, अन्तरिक्षदेवतारूपेण उपयमनाख्यकाष्ठपात्रेण, 'उपयच्छामि' शफनामकाभ्यां काष्ठाभ्यामुह्यमाने त्वयि तयोः सहायरूपेणानेनाधस्तादुद्यच्छामि ॥

मन्त्रबलादन्तरिक्षदेवतासाहाय्यं सिध्यतीति दर्शयति ।

* तपेत्यूष्माणमनुमन्त्रयते इति तै० पु० पाठः ।

शकेयं(२१)। (२२)तेजोऽसि। तेजोऽनुप्रेहि। दिवि स्पृक्मा मा हिꣳसीः। अन्तरिक्षस्पृक्मा मा हिꣳसीः। पृथिविस्पृक्मा मा हिꣳसीः। सुवरसि सुवर्मे यच्छ। दिवं यच्छ दिवो मा पाहि(२२) ॥ ४ ॥

---

"अन्तरिक्षेण लोपयच्छामीत्याह। अन्तरिक्षेणैवैनमुपयच्छति। न वा एतं मनुष्यो भर्त्तुमर्हति" इति। (५प्र०।७अ०।२७म०)॥

कल्पः। देवानां त्वा पितॄणामनुमतो भर्त्तुꣳ शकेयमित्यादायोत्थायेति। (२१ मन्त्रः)। हे महावीर, 'देवानां', 'पितॄणां' वा अनुमतिं प्राप्तोऽहं त्वां 'भर्त्तुं' धारयितुं शक्तो भूयासं॥

एतत्पाठेनो*भयानुमतिसिद्धिं दर्शयति। "देवानां त्वा पितॄणामनुमतो भर्त्तुꣳ शकेयमित्याह। देवैरेवैनं पितृभिरनुमत आदत्ते" इति। (५प्र०।७अ०।२८म०)॥

कल्पः। तेजोऽसि तेजोऽनुप्रेहीति हरतीति। पाठस्तु। (२२)"तेजोऽसि ० दिवं यच्छ दिवो मा पाहि"(२२) इति। हे प्रवर्ग्य त्वं तेजोरूपः 'असि'। अतस्तेजोरूपमाहवनीयं 'अनु'-लक्ष्य,† 'प्रेहि' प्रकर्षेण गच्छ, अत्युष्णस्त्वं द्युलोकादीन् स्पृशन्नपि 'मा हिꣳसीः'‡ तापं मा कुरु। 'सुवरसि' त्वमेव स्वर्ग-

---

* दारेण इति ते० पुस्तकपाठः।

† अभिलक्ष्य इति ते० पु० पाठः।

‡ माहिंसितं इति ते० पु० पाठः।

## एहि, पाहि, पिन्वस्व, यच्छामि, नव च॥ अनु० ८॥

सुखरूपः 'असि'। अतः स्वर्गसुखं 'मे' प्र'यच्छ'। तत्-सुखाधारं द्युलोकं 'दिवं' 'मे' प्र'यच्छ'। 'दिवः' द्युलोकात्, मां, 'पाहि'। तत्र राक्षसप्रवेशं निवार्य्य पालय॥

मन्त्रस्य पूर्व्वभागे तेजोऽनुप्रेहीत्यस्य तात्पर्य्यं दर्शयति। "विवा एनमेतदर्द्धयन्ति। यत् पश्चात् प्रवृज्य पुरो जुह्वति। तेजोऽसि तेजोऽनुप्रेहीत्याह। तेज एवास्मिन् दधाति" इति। (५प्र०।७अ०।१८म०)। आहवनीयस्य पश्चिमभागे गार्हपत्य-स्योत्तरदेशे प्रवर्ग्यं कृत्वा 'पुरः' पूर्व्वस्यां दिशि, आहवनीये 'जुह्वति' इति 'यत्' अस्ति एतेन 'एनं' प्रवर्ग्यं समृद्धिरहितं कुर्वन्ति, प्रवृञ्जनेनैव तेजसोपगतत्वात् अतः 'तेजोऽनुप्रेहि' इत्युक्त्वा द्रव्ये 'तेजः' सम्पादितं भवति॥

मध्यमभागस्याहिंसापरत्वं दर्शयति। "दिविस्पृग्मा मा हिंसीरन्तरिक्षस्पृग्मा मा हिंसीः पृथिवीस्पृग्मा मा हिं-सीरित्याहाहिंसायै" ॥८॥ इति। (५प्र०।७अ०।२०म०)॥

तृतीयभागस्याशिःपरत्वं दर्शयति। "सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहीत्याह। आशिषमेवैतामा-शास्ते" इति। (५प्र०।७अ०।२१म०)॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-रण्यके चतुर्थप्रपाठके अष्टमोऽनुवाकः॥ ८॥

अथ नवमोऽनुवाकः ।

(१)समुद्राय त्वा वाताय स्वाहा । सलिलाय त्वा वाताय स्वाहा । अनाधृष्याय त्वा वाताय स्वाहा । अप्रतिधृष्याय त्वा वाताय स्वाहा । अवस्यवे त्वा वाताय स्वाहा । दुवस्वते त्वा वाताय स्वाहा । शिमिद्वते त्वा वाताय स्वाहा । अग्नये त्वा वसुमते स्वाहा । सोमाय त्वा रुद्रवते स्वाहा । वरुणाय त्वादित्यवते स्वाहा ॥ १ ॥

---

अथ नवमोऽनुवाकः ।

अष्टमे महावीरे घृतयुक्ते क्षीरप्रक्षेपलक्षणं प्रवृञ्जनमुक्तं । नवमे तस्य प्रवर्ग्यद्रव्यस्याहवनीये याग उच्यते । कल्पः । प्रभञ्जनावानं पञ्चवातनामानि व्याचष्टे समुद्राय त्वा वाताय स्वाहेत्यपि पञ्चोत्तराण्यग्नये त्वा वसुमते स्वाहेति । पाठस्तु । (१)"समुद्राय त्वा वाताय स्वाहा ० यमाय त्वाङ्गिरस्वते पितृमते स्वाहा"(१) इति । अत्र 'वाताय' इति विशेष्य निर्देशः । समुद्रादिशब्दविशेषणभूता नामधेयविशेषवाचिनः । हे प्रवर्ग्य त्वां, समुद्रनामकाय 'वाताय' 'स्वाहा' कथयामीत्यर्थः । निपातानामनेकार्थत्वात् । एवमुत्तरेष्वपि योज्यं । षष्ठसप्तमौ मन्त्रौ विकल्पार्थौ । वसुयुक्तायाग्नये अग्निनामकाय वातविशेषाय, त्वां, 'स्वाहा' कथयामि । एवमुत्तरत्रापि योज्यं । अभा-

बृहस्पतये त्वा विश्वदेव्यावते स्वाहा । सवित्रे त्वर्भु-
मते विभुमते प्रभुमते वाजवते स्वाहा । यमाय त्वाङ्गिर-
स्वते पितृमते स्वाहा(१) । (२)विश्वा आशा दक्षिणसत्(२) ।

---

दिभिर्युक्ताय सवितृनामकाय वाताय कथयामि । अङ्गिरोभिः पितृभिश्च युक्ताय यमनामकाय वाताय कथयामि । अय-मपि मन्त्रोविकल्पार्थः ॥

एतैर्मन्त्रैः साध्यवातनामकथनं* विधत्ते । "शिरो वा एत-द्यज्ञस्य । यत् प्रवर्ग्यः । आत्मा वायुः । उद्यत्य वातनामान्याह । आत्मन्नेव यज्ञस्य शिरः प्रतिदधाति" इति । (५प्र०।७अ०।१२म०) । आहवनीयं प्रतिनेतुं प्रवर्ग्यमुद्धृत्य वातनामकथनेन वायोरात्मत्वादात्मन्येव 'यज्ञस्य†' अग्निः प्रतिष्ठितो भवति ॥

तत्कथनमध्ये श्वासं वारयति । "अनवानं । प्राणानाꣳ सन्तत्यै" इति । (५प्र०।७अ०।१३म०) । अवानं श्वासः स यथा न भवति तथा पठेत् । तच्च प्राणानामविच्छेदाय भवति ॥

मन्त्रसङ्ख्यां विधत्ते । "पञ्चाह ॥८॥ पाङ्क्तो यज्ञः । यावानेव यज्ञः । तस्य शिरः प्रतिदधाति" इति । (५प्र०।७अ०।१४म०) । धानाकरम्भादिहविःपञ्चकयोगेन 'यज्ञः' 'पाङ्क्तः' स च 'या-वान्' अस्ति 'तस्य' सर्व्वस्य,'शिरः'-नामपञ्चकेन प्रतिष्ठितं भवति ॥

उत्तरपञ्चकस्य प्रथममन्त्रे अग्निशब्देनादित्यो विवक्षित

---

* कथनविकल्पं इति तै० पुस्तकपाठः ।

† यज्ञशिरः प्रतिष्ठितं भवति इति तै० पुस्तकपाठः ।

इति दर्शयति। "अग्नये त्वा वसुमते स्वाहेत्याह। असौ वा आदित्योऽग्निर्वसुमान्। तस्मा एवैनं जुहोति" इति। (५प्र०। ७अ०।२५म०)। हविःप्रक्षेपाभावेऽपि स्वाहाशब्दप्रयोगमात्रेण जुहोतीत्युच्यते॥

द्वितीयमन्त्रादौ सोमादिशब्दैः प्रसिद्धार्थतामेव विवक्षां दर्शयति। "सोमाय त्वा रुद्रवते स्वाहेत्याह। चन्द्रमा वै सोमो रुद्रवान्। तस्मा एवैनं जुहोति। वरुणाय त्वादित्यवते स्वाहेत्याह॥१०॥ अप्सु वै वरुण आदित्यवान्। तस्मा एवैनं जुहोति। बृहस्पतये त्वा विश्वदेव्यावते स्वाहेत्याह। ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मण एवैनं जुहोति" इति। (५प्र०। ७अ०।२६म०)॥

अनन्तरमन्त्रे सवितृशब्देन संवत्सरस्य विवक्षां दर्शयति। "सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहेत्याह। संवत्सरो वै सवितर्भुमान् विभुमान् प्रभुमान् वाजवान्। तस्मा एवैनं जुहोति" इति। (५प्र०।७अ०।२७म०)॥

अनन्तरमन्त्रे यमशब्देन प्राणस्य विवक्षां दर्शयति। "यमाय त्वाङ्गिरस्वते पितृमते स्वाहेत्याह। प्राणो वै यमोऽङ्गिरस्वान् पितृमान्॥११॥ तस्मा एवैनं जुहोति" इति। (५प्र०। ७अ०।२८म०)॥

वातानां मन्त्रानुपसंहरति। "एताभ्य एवैनं देवताभ्यो जुहोति" इति। (५प्र०।७अ०।२९म०)। समुद्रादिभ्यो यमान्तेभ्यस्त्रयोदशमन्त्रोक्ताभ्यः 'देवताभ्यः' होमः कृतो भवति॥

अनुष्ठेयमन्त्रसङ्ख्यां प्रशंसति। "दश सम्पद्यन्ते। दशाक्षरा विराट्। अन्नं विराट्। विराजैवान्नाद्यमवरुन्धे" इति। (५प्र०।७अ०।४०म०)। चयोदशेषु* चयाणां विकल्पार्थत्वेन पूर्व्वपञ्चकमुत्तरपञ्चकञ्चेत्येवमनुष्ठेयमन्त्राणां 'दश'-त्वसम्पत्तिः, अतो विराड्-द्वारान्नत्वप्राप्तिः॥

अथ रौहिणपुरोडाशौ विधत्ते। "रौहिणाभ्यां वै देवाः सुवर्गं लोकमायन्। तद्रौहिणयो रौहिणत्वं। यद्रौहिणौ भवतः। रौहिणाभ्यामेव तद्यजमानः सुवर्गं लोकमेति" इति। (५प्र०।७अ०।४१म०)। स्वर्गरोहत्याभ्यां पुरोडाशाभ्यामिति 'रौहिणौ' ताभ्यां स्वर्गप्राप्तिः॥

रौहिणपुरोडाशयोर्दक्षिणोत्तरयोरपि होममन्त्रावुत्तरानुवाके आम्नास्यमानावपि पुरोडाशविधिप्रसङ्गादिहैवोपहृत्य व्याख्यास्येते। "अहर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहा रात्रिर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहेत्याह। आदित्यमेव तदमुष्मिंल्लोकेऽह्नापरस्ताद्दाधार। रात्रिया अवस्तात्। तस्मादसावादित्योऽमुष्मिंल्लोकेऽहोरात्राभ्यां धृतः"॥१२॥ इति। (५प्र०।७अ०।४२म०)। अहर्देवता 'केतुना' अध्वजरूपेणादित्यमण्डलेन सह, 'ज्योतिः' 'जुषतां' प्रकाशं सेवतां। 'ज्योतिषां' मध्ये, 'सुज्योतिः' शोभनज्योतीरूपमहरहदस्तु, स्वाहुतमिदमस्तु। एवं रात्रिदेवता-

---

* चयोदशमन्त्रेषु इति तै॰ पुस्तकपाठः।

(३)विश्वा॑न्दे॒वान॑याडि॒ह(३)। (४)स्वाहा॑ कृतस्य घ॒र्मस्य॑।

---

मन्त्रोऽपि व्याख्येयः, तत्तेन मन्त्रद्वयेन स्वर्गलोकात्* 'परस्तात्' उपरिभागे, अहर्देवतया सहितं 'आदित्यं' धारयति। 'अवस्तात्' अधोभागे, रात्रिदेवतया सहितं 'आदित्यं' धारयति। यस्मादेवं 'तस्मात्' स्वर्गे, 'असावादित्यः' देवताद्वयेन 'धृतः' वर्त्तते॥

मनुष्यनामानि, पशवः, सीदन्तित्याह, इन्द्रायेत्याह, अर्द्धयति, घ्नन्ति, गृह्णाति, अहिंसायै, पश्चाह, आदित्यवते स्वाहेत्याह, पितृमान्, एति, चत्वारि च॥

इति पञ्चमप्रपाठके सप्तमोऽनुवाकः॥ ७॥

कल्पः। अपरेणाहवनीयं दक्षिणाभिक्रामन् विश्वा आशा दक्षिणसदिति ब्रह्माणमीक्षत इति। (१ मन्त्रः)। दक्षिणदेशे सीदतीति 'दक्षिणसद्' ब्रह्मा, सोऽयं 'विश्वा आशाः' सर्वदिग्वर्त्तिनो देवान् प्रीणात्विति शेषः॥

उक्तार्थपरत्वं मन्त्रस्य दर्शयति। "विश्वा आशा दक्षिणसदित्याह। विश्वानेव देवान् प्रीणाति। अथो दुरिष्ट्या एवैनं पाति" इति। (५प्र०।८अ०।१म०)। अनेन मन्त्रेण देवप्रीतिर्भवति। यागे सम्भावितदोषाच्च यजमानं पालयति॥

कल्पः। विश्वान् देवानयाडिहेति होतारमिति। ईक्षत इत्यनुवर्त्तते। (२ मन्त्रः)। 'इह' कर्म्मणि, होता 'विश्वान् देवान्' 'अयाट्' इष्टवान्॥

---

* स्वर्गलोके परस्तात् इति तै० पुस्तकपाठः।

मधोः पिबतमश्विना। स्वाहाग्नये यज्ञियाय। शं यजुर्भिः[४]। [५]अश्विना घर्म्मं पातꣳ हार्द्दिवानं॥ २॥

---

अथाट्शब्देन सर्व्वदेवानां भागसमृद्धिं दर्शयति। "विश्वान् देवानयाडिहेत्याह। विश्वानेव देवान् भागधेयेन समर्द्धयति" इति। (५प्र०।८अ०।२म०)॥

कल्पः। स्वाहाकृतस्य घर्म्मस्येति घर्म्म*मभिमन्त्रयेति। पाठस्तु। [४]"स्वाहाकृतस्य घर्म्मस्य ० शं यजुर्भिः"[४] इति। 'अश्विना' हे अश्विनौ, 'स्वाहाकृतस्य' स्वाहाकारेण समर्पितस्य, 'मधोः' मधुरस्य, 'घर्म्मस्य' प्रवर्ग्यद्रव्यस्य, रसं 'पिबतं', 'यजुर्भिः' यजुर्देवताभिः, सहिताय 'यज्ञियाय' यज्ञयोग्याय, 'अग्नये' 'शं' सुखं यथा भवति तथा स्वाहुतमस्तु॥

मन्त्रस्य पूर्व्वभागेनाश्विनोर्भागसमृद्धिं दर्शयति। "स्वाहाकृतस्य घर्म्मस्य मधोः पिबतमश्विनेत्याह। अश्विनावेव भागधेयेन समर्द्धयति" इति। (५प्र०।८अ०।३म०)॥

उत्तरभागे स्वाहेत्युच्चारणेन प्रवर्ग्येऽभिघारणं हविष्ट्वं सम्पद्यत इति दर्शयति। "स्वाहाग्नये यज्ञियाय शं यजुर्भिरित्याह। अश्वैवेनं घारयति। अथो हविरेवाकः"॥१॥ इति। (५प्र०।८अ०।४म०)॥

कल्पः। अश्विना घर्म्मं पातमिति वषट्कृते जुहोतीति।

---

* दुघ इति D चिह्नितपु० पाठः।

अहर्दिवाभिरूतिभिः । अनु वां द्यावापृथिवी मंऽसातां । स्वाहेन्द्राय(५) । (६)स्वाहेन्द्रावट्(६) । (७)घर्म्मम-

---

पाठस्तु । (५)"अश्विना घर्मं पातꣳ हार्द्दिवानं • स्वाहेन्द्राय"(५) इति । हे अश्विनौ, 'घर्मं' प्रवर्ग्यं हविः, 'पातं' पिवतं । कीदृशं 'हार्द्दिवानं' हृदयप्रियातिशयो हार्द्दी सोऽस्यास्तीति हार्द्दिवा तादृशं, 'अहः' अह्नि अस्मिन् दिने, 'दिवाभिः' द्योतमानाभिः, 'ऊतिभिः' अस्मदिपयरक्षणक्रियाभिः निमित्तभूताभिः, 'पातं' इति पूर्व्वेणान्वयः । हे अश्विनौ, 'वां' युवां, द्यावापृथिव्यौ देवते, 'अनु' 'मꣳसातां' अनुमतौ कुरुतां । 'इन्द्राय' इदं स्वाहुतमस्तु ॥

कल्पः । स्वाहेन्द्राय*वडित्यनुवषट्कृत्य† इति । (६ मन्त्रः) । जुहोतीत्यनुवर्त्तते । 'इन्द्रः' इत्ययं शब्दः परमैश्वर्य्ययोगात् स्विष्टकृदग्निमाचष्टे । 'स्वाहा'शब्द आहुतियोग्यतामाह । तादृशाय वषट् इदं हविः समर्पितं ॥

अश्विना घर्मं पातमित्युक्त्वा तयोर्भागसमृद्धिं दर्शयति । "अश्विना घर्मं पातꣳ हार्द्दिवानमहर्द्दिवाभिरूतिभिरित्याह । अश्विनावेव भागधेयेन समर्द्धयति" इति । (५ प्र० । ८ अ० । ५ म०) ॥

---

* स्वाहेन्द्रावट् H पु॰ पाठः ।
† वषट्कारः तै॰ पु॰ पाठः ।

पातमश्विना हार्दिवानं। अहर्दिवाभिरूतिभिः। अनु
वां द्यावापृथिवी अमꣳसाताम्। तं प्राव्यं यथावट्। नमो

अनुमꣳसातामिति पदेन द्यावापृथिव्योरनुज्ञा प्रार्थ्यत इति दर्शयति। "अनु त्वां द्यावापृथिवी मꣳसातामित्याहानुमत्यै" इति। (५प्र०।८अ०।६म०)॥

चतुर्थ्यन्तस्येन्द्रशब्दस्य प्रथमतः प्रयोगे कारणं दर्शयति। "स्वाहेन्द्राय स्वाहेन्द्रावडित्याह। इन्द्राय हि पुरोहूयते" इति। (५प्र०।८अ०।७म०)। यस्मात् प्रधानदेवतारूपाय 'इन्द्राय' प्रथमत आहुतिः पश्चात् स्विष्टकृद्देवताया आहुतिर्युक्ता। तस्मादिन्द्रायेति मुख्यदेवताविवक्षया प्रथमप्रयोगः॥

अथानुष्ठानक्रमं विधत्ते। "आश्राव्याह घर्मस्य यजेति। वषट्कृते जुहोति। रक्षसामपहत्यै। अनुयजति स्वगाकृत्यै" इति। (५प्र०।८अ०।८म०)। प्रथममाश्रावणं कृत्वा, ततः 'घर्मस्य' ॐ 'यज' इति ब्रूयात्। हे होतः, 'घर्मस्य' प्रवर्ग्यस्यानुष्ठानार्थं, 'यज' याज्यां पठ। एवं प्रैषमुक्त्वा ततो होता याज्यापाठेन 'वषट्कृते' सति अश्विना घर्ममित्यनेन मन्त्रेण जुहुयात्। एतच्च 'रक्षसां' अपघाताय भवति। ततोऽनुवषट्कारे होत्रा प्रयुक्ते सति स्वाहेन्द्रावडिति मन्त्रेण यजेत्। तच्च 'स्वगाकृत्यै' स्वाधीन*करणायोपयुज्यते॥

---

* स्वाधीनत्व इति तै० पु० पाठः।

दिवे। नमः पृथिव्यै॥ दिवि धा इमं यज्ञं। यज्ञमिमं दिवि धाः। दिवं गच्छ। अन्तरिक्षं गच्छ। पृथिवीं गच्छ। पञ्च प्रदिशो गच्छ। देवान् घर्म्मपान् गच्छ। पितॄन् घर्म्मपान् गच्छ(७) ॥ २ ॥

---

कल्पः। घर्म्ममपातमश्विनेत्यनुवाकशेषेणोपस्थायेति। पाठस्तु। (७)"घर्म्ममपातमश्विना हार्द्दिवानं ० पितॄन् घर्म्मपान् गच्छ"(७) इति। हे अश्विनौ, अस्मिन् अहनि द्योतमानरक्षणक्रियानिमित्तं हृदयप्रियातिशययुक्तं प्रवर्ग्यद्रव्यं 'अपातं' युवां पीतवन्तौ। द्यावापृथिव्यौ च युवयोरनुमतिं दत्तवत्यौ 'प्राव्यं'* प्रकृष्टरक्षाहेतुं, 'तं प्राव्यं'† 'यथावट्' स्विष्टकृद्देवतायै यथावद्दत्तवानस्मि। द्यावापृथिव्योः प्रसादादस्य कर्म्मणो निष्पत्तेः ताभ्यां 'नमः' अस्तु। हे अग्नीन्द्ररूप प्रवर्ग्यदेव, अस्मदीयं 'इमं' 'यज्ञं' 'दिवि धाः' द्युलोके स्थापय, द्विरभिरादरार्था। हे प्रवर्ग्य द्युप्रभृतिकं लोकत्रयं प्राप्नुहि तथा ऊर्द्धदिक्सहिताः प्राच्यादिपञ्चदिग्देवताः प्राप्नुहि। प्रवर्ग्यस्य पातारो ये देवाः ये च पितरस्तानुभयान् प्राप्नुहि॥

होममन्त्रेण सहोपस्थानमन्त्रस्य समानार्थतां दर्शयति। "घर्म्ममपातमश्विनेत्याह॥ २॥ पूर्व्वमेवोदितं। उत्तरेणाभिगृणाति" इति। (५ प्र०।८ अ०।९ म०)॥

---

* प्राप्यं इति D चिह्नित पाठः।

† प्रवर्ग्यं इति D चिह्नितपु०पाठः।

आदि॒त्यव॑ते॒ स्वाहा॑, हा॒र्दि॑वा॒नं, पृ॑थि॒व्यै॑, अ॒ष्टौ च॑ ॥ अनु॰ ९ ॥

---

अमंस्वातामित्यस्यातीतार्थवाचिशब्दस्य सिद्धानुज्ञापरत्वं दर्शयति। "अनु वां द्यावापृथिवी अमंस्वातामित्याहानुमत्यै" इति। (५प्र०।८अ०।१०म०) ॥

अनन्तरमन्त्रभागस्य स्पष्टार्थतां दर्शयति। "तं प्राव्यं यथावद्धमो दिवे नमः पृथिव्या इत्याह। यथा यजुरेवैतत्" इति। (५प्र०।८अ०।११म०) ॥

हविषः स्वर्गप्राप्तिपरत्वमनन्तरभागस्य दर्शयति। "दिवि धा इमं यज्ञं यज्ञमिमं दिवि धा इत्याह। सुवर्गमेवैनं लोकं गमयति" इति। (५प्र०।८अ०।१२म०) ॥

दिवं गच्छेति प्रार्थनाया हविषो लोकत्रयप्रतिष्ठापनार्थतां दर्शयति। "दिवं गच्छान्तरिक्षं गच्छ पृथिवीं गच्छेत्याह। एष्वेवैनं लोकेषु प्रतिष्ठापयति" इति। (५प्र०।८अ०।१३म०)॥

अथोत्तरवाक्यानां सर्व्वदिक्षु देवेषु पितृषु च हविषः प्रतिष्ठापनार्थतां दर्शयति। "पञ्च प्रदिशो गच्छेत्याह ॥१॥ दिक्ष्वेवैनं प्रतिष्ठापयति। देवान् घर्म्मपान् गच्छ पितॄन् घर्म्मपान् गच्छेत्याह। उभयेष्वेवैनं प्रतिष्ठापयति" इति। (५प्र०।८अ०।१४म०)॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ दशमोऽनुवाकः ।

(१)इषे पीपिहि । ऊर्जे पीपिहि । ब्रह्मणे पीपिहि । क्षत्राय पीपिहि । अद्भ्यः पीपिहि । ओषधीभ्यः पीपिहि । वनस्पतिभ्यः पीपिहि । द्यावापृथिवीभ्यां पीपिहि । सुभूताय पीपिहि । ब्रह्मवर्चसाय पीपिहि ॥ १ ॥

यजमानाय पीपिहि । मह्यं ज्यैष्ठ्याय पीपिहि(१) ।

---

अथ दशमोऽनुवाकः ।

आहवनीये प्रवर्ग्यद्रव्येण होमो नवमेऽभिहितः । दशमे तद्द्रव्यशेषेणाग्निहोत्रहोमोऽभिधीयते । तत्रादौ किञ्चिदनुमन्त्रणमुच्यते । कल्पः । उपर्याहवनीये धार्य्यमाणं प्रतिप्रस्थाता शृतदभ्रा पूरयतीषे पीपिह्यूर्ज्जे पीपिहीति विक्षरन्तमनुमन्त्रयत इति । पाठस्तु । (१)"इषे पीपिहि ० मह्यं ज्यैष्ठ्याय पीपिहि"(१) इति । आहवनीयस्योपरि महावीरं धारयित्वा तत्रत्ये तप्ते घृते तप्तस्य दध्नः प्रक्षेपे सति प्रवर्ग्यो विक्षरति विशेषेण पात्रस्योर्द्ध्वं यदोद्गच्छति तदानीमुद्गच्छन्तं प्रवर्ग्यं सम्बोध्येदमुच्यते । हे प्रवर्ग्य, 'इषे' अन्नार्थं, 'पीपिहि' त्वं प्रवृद्धो भव । तथा 'ऊर्ज्जे' रसार्थं ब्राह्मणार्थञ्च, प्रवृद्धो भव । सुभूतं, शोभनं प्राणिजातं, 'मह्यं ज्यैष्ठ्याय' अध्वर्य्योर्मम प्रशस्तत्वाय, प्रवर्ग्यस्याभिवृद्ध्या सर्व्वमिदमभिवर्द्धत इत्यर्थः ॥

एतस्याभिवृद्धेर्मन्त्रोक्ताया: वृष्टिहेतुत्वं दर्शयति। "यत् पिन्वते। वर्षुकः पर्जन्यो भवति। तस्मात् पिन्वमानः पुण्यः" इति। (५प्र०।८अ०।१५म०)। 'पिन्वते' वर्द्धते, पात्रस्योपरि उद्गच्छतीत्यर्थः॥

हविष उद्गमनं दिग्विशेषेण प्रशंसति। "यत् प्राङ् पिन्वते। तद्देवानां। यद्दक्षिणा। तत्पितॄणां॥४॥ यत् प्रत्यक्। तन्मनुष्याणां। यदुदङ्। तद्रुद्राणां" इति। (५प्र०।८अ०।१६म०)॥

इत्थमभिवृद्धिं प्रशस्य प्रागुदग्दिशोः सन्धौ चरणं* विधत्ते। "प्राञ्चमुदञ्चं पिन्वयति। देवत्राकः" इति। (५प्र०। ८अ०।१७म०)। प्रागुदङ्मध्यवर्त्तिनमेतं प्रवर्ग्यं दृष्टं 'पिन्वयति' अभिवृद्धं कुर्य्यात्। महावीरमध्ये तस्मिन् प्रदेशे दधिप्रक्षेपेणाभिवर्द्धयेत्। तेन देवत्रा, देवेष्टकः एतं प्रवर्ग्यं करोति॥

पक्षान्तरं विधत्ते। "अथो खलु। सर्व्वा अनु दिशः पिन्वयति। सर्व्वा दिशः समेधन्ते" इति। (५प्र०।८अ०।१८म०)। पात्रमध्ये 'सर्व्वा दिशः' 'अनु'लक्ष्य, दधिप्रक्षेपेण तद्धविरुद्गमयेत्। तेन सर्व्वा अपि दिशः सम्यग् वर्द्धन्ते॥

पात्रादुद्गतस्य हविषः परिधिभ्यो बहिर्देशे पतनं वारयितुं विधत्ते। "अन्तः परिधि पिन्वयति॥५॥ तेजसोऽस्कन्दाय" इति। (५प्र०।८अ०।१९म०)। परिधीनां 'अन्तः' एव यथा पतति तथा अभिवर्द्धयेत्। तथा सत्यविनाशितं तेजो भवति॥

---

* विक्षरणं इति D चिह्नितपु० पाठः।

(१)त्विष्यै त्वा। द्युम्नाय त्वा। इन्द्रियाय त्वा भूत्यै त्वा(२)।

---

मन्त्रेषु चतुर्थीविभक्तेस्तात्पर्य्यं दर्शयति। "इषे पीपिह्यूर्ज्जे पीपिहीत्याह। इषमेवोर्जं यजमाने दधाति" इति। (५ प्र०। ८ अ०। २० म०)। उत्तरमन्त्रेष्वप्येतदनुसन्धेयं॥

सर्व्वेषां यजमानार्थत्वे समाने सति पुनर्यजमानायेत्युक्तेस्तात्पर्य्यमाह। "यजमानाय पीपिहीत्याह। यजमानायैवैतामाशिषमाशास्ते" इति। (५ प्र०। ८ अ०। २१ म०)। यजमानस्य फलान्तरानुशासनायेयमुक्तिरित्यर्थः॥

अध्वर्य्योः स्वार्थं मह्यमित्युक्तिरिति दर्शयति। "मह्यं ज्यैष्ठ्याय पीपिहीत्याह। आत्मन एवैतामाशिषमाशास्ते" इति। (५ प्र०। ८ अ०। २२ म०)॥

कल्पः। अथैनं दिशोऽनुप्रजावयति त्विष्यै त्वा द्युम्नाय त्वा इन्द्रियाय त्वा भूत्यै त्वेति। (२ मन्त्रः)। हे प्रवर्ग्य, 'त्विष्यै' दीप्तिसिद्धये, त्वां प्राच्यां दिशि कृतं करोमि। 'द्युम्नाय' धनसिद्धये, त्वां दक्षिणस्यां दिशि कृतं करोमि। 'इन्द्रियाय' वीर्य्यवृद्धये त्वां प्रतीच्यां दिशि कृतं करोमि। 'भूत्यै' ऐश्वर्य्यसिद्ध्यर्थं, उदीच्यां दिशि कृतं करोमि॥

मन्त्रस्य स्पष्टार्थतां दर्शयति। "त्विष्यै त्वा द्युम्नाय त्वेन्द्रियाय त्वा भूत्यै त्वेत्याह। यथा यजुरेवैतत्" इति। (५ प्र०। ८ अ०। २३ म०)॥

(१)धर्म्मासि सुधर्म्मा मेऽन्यस्मे। ब्रह्माणि धारय। क्षत्राणि धारय। विशं धारय। नेत्त्वा वातः स्कन्द्यात्(२) ॥ २ ॥

---

कल्पः। प्रत्याक्रम्योपयमने शेषमानीयाकार्वैरुपयमनं निधाय पूर्व्वस्मिन् खरे राजतं रुक्मं निधाय तस्मिन् महावीरं प्रतिष्ठापयति धर्म्मासि सुधर्म्मा मेऽन्यस्मे ब्रह्माणि धारयेति क्षत्राणि धारयेति राजन्यस्य विशं धारयेति वैश्यस्येति। (३ मन्त्राः)। (नेत्त्वा वातः स्कन्द्यादिति मन्त्रशेषः)। हे महावीर, 'धर्म्मासि' त्वं धारणशक्तियुक्तोऽसि, 'मे' मम, 'सुधर्म्मा' सुष्ठु धारको भवेति शेषः। 'अस्मे' अस्मासु, 'ब्रह्माणि' ब्राह्मणजात्युचितानि कर्म्माणि, 'धारय' नितरां सम्पादय, 'क्षत्राणि' क्षत्रियजात्युचितानि कर्म्माणि 'धारय', 'विशं' प्रजां, 'धारय' 'वातः' वायुः, त्वां, 'मेत्' 'स्कन्द्यात्' नैव शोषयतु ॥

मन्त्रपाठेन ब्राह्मणजात्युचिते* कर्म्मणि यजमानस्य स्थापनं दर्शयति। "धर्म्मासि सुधर्म्मा मेऽन्यस्मे ब्रह्माणि धारयेत्याह। ॥६॥ ब्रह्मन्नेवैनं प्रतिष्ठापयति" इति। (५ प्र०।८ अ०।२४ म०) ॥

मन्त्रशेषस्य निगदव्याख्यातत्वमभिप्रेत्य तत्स्वरूपमात्रमुपदर्शयति। "नेत्त्वा वातः स्कन्द्यादिति" (५ प्र०।८ अ०।२५ म०)। ब्राह्मणादिविषयेषु मन्त्रत्रयेष्वनुषङ्गद्योतनाय पृथगुपदर्शनं ॥

---

* ब्राह्मणजात्युचितेन कर्म्मणा इति तै० पुस्तकपाठः।

(४)अमुष्य त्वा प्राणे सादयामि। अमुना सह नि-र्थं गच्छ। योऽस्मान्द्वेष्टि। यं च वयं द्विष्मः(४)।
(५)पूष्णे शरसे स्वाहा। ग्रावभ्यः स्वाहा। प्रतिरेभ्यः

---

कल्पः। यद्यभिचरेदमुष्य त्वा प्राणे सादयामीति सादये-दिति। पाठस्तु। (४)"अमुष्य त्वा प्राणे सादयामि ० यं च वयं द्विष्मः"(४) इति। हे महावीर, द्वेष्टा द्वेष्यश्चेत्युभयविधस्य, 'अमुष्य' शत्रोः 'प्राणे' त्वां, 'सादयामि'। 'अमुना' शत्रुणा, 'सह' त्वं 'निरर्थं गच्छ' प्रयोजनाभावं प्राप्नुहि, तदीयं प्रयो-जनं मा कुर्वित्यर्थः॥

अनेन मन्त्रेणाभिचारप्रयोगं विधत्ते। "यद्यभिचरेत्। अमुष्य त्वा प्राणे सादयाम्यमुना सह निरर्थं गच्छेति ब्रूयाद्यं द्विष्यात्। यमेव द्वेष्टि। तेनैनꣳ सह निरर्थं गमयति" इति। (५प्र०।८अ०।२६म०)। 'यं' शत्रुं, यजमानः 'द्विष्यात्' शत्रुश्च 'यमेव' यजमानं, 'द्वेष्टि' 'एनꣳ' द्वेष्यं द्वेष्टारं चेत्युभयविधं शत्रुं स यजमानस्तेन महावीरेण 'सह' 'निरर्थं' पुरुषार्थाभावं प्रापयति॥

कल्पः। अथैतान् शकलानुपयमने जुहोति। पूष्णे शरसे स्वाहेत्येतैः प्रतिमन्त्रमिति। पाठस्तु। (५)"पूष्णे शरसे स्वाहा० पितृभ्यो घर्मपेभ्यः स्वाहा"(५) इति। अनिष्टस्य हिंसकः शरः तादृशाय 'शरसे' 'पूष्णे' पोषकाय देवाय, स्वाहुतमिद-

स्वाहा। द्यावापृथिवीभ्याᳲ स्वाहा। पितृभ्यो घर्म-

---

मस्तु। 'ग्रावभ्यः' पाषाणजन्यध्वनिरूपाभ्यः वाग्देवताभ्यः, 'प्रतिरेभ्यः' अभिवृद्धिहेतुभ्यः प्राणदेवेभ्यः॥

प्रथममन्त्रे पूषन्शब्देन बहुदेवताविवक्षां दर्शयति। "पूष्णे शरसे स्वाहेत्याह। या एव देवता हुतभागाः। ताभ्य एवैनं जुहोति" इति। (५ प्र० । ८ अ० । २७ म०)। द्विविधा हि 'देवताः' हुतभागा अहुतभागाश्चेति। तथा चान्यत्राम्नातं। हुतादो वा अन्ये देवा अहुतादोऽन्य इति। तासु 'हुतभागाः' सर्व्वा *अप्यत्रोपलक्षिताः 'ताभ्यः' सर्व्वाभ्यः, 'एनं' उक्तं प्रकरणं 'जुहोति'॥

ग्रावशब्देन तज्जन्यध्वनिविवक्षां दर्शयति। "ग्रावभ्यः स्वाहेत्याह। या एवान्तरिक्षे वाचः॥ ७॥ ताभ्य एवैनं जुहोति" इति। (५ प्र० । ८ अ० । २८ म०)॥

प्रतिरशब्देन प्राणविवक्षां दर्शयति। "प्रतिरेभ्यः स्वाहेत्याह। प्राणा वै देवाः प्रतिराः। तेभ्य एवैनं जुहोति" इति। (५ प्र० । ८ अ० । २९ म०)॥

द्यावापृथिवीशब्देन मुख्यार्थविवक्षां दर्शयति। "द्यावापृथिवीभ्याᳲ स्वाहेत्याह। द्यावापृथिवीभ्यामेवैनं जुहोति" इति। (५ प्र० । ८ अ० । ३० म०)॥

---

* अन्य इति D चिह्नितपुस्तकपाठः।

घेभ्यः स्वाहा[५]। [६]रुद्राय रुद्रहोत्रे स्वाहा[६] ॥ ३ ॥

घर्म्मपेभ्य इति विशेषणेन* सोमयागं कृत्वा पितृलोकगतानां पितॄणां विवक्षां दर्शयति। "पितृभ्यो घर्म्मपेभ्यः स्वाहेत्याह। ये वै यज्वानः। ते पितरो घर्म्मपाः। तेभ्य एवैनं जुहोति" इति ॥८॥ (५ प्र०।८ अ०।३१ म०)। यज्वनां स्वकीययागकाले प्रवर्ग्यपानमस्तीति ते घर्म्मपाः ॥

कल्पः। षष्ठं शकलं सर्व्वेषु लेपेष्वक्त्वानन्वीक्षमाण उदञ्चं निरस्यति रुद्राय रुद्रहोत्रे स्वाहेति। (६ मन्त्रः)। रुद्राः सहस्रसङ्ख्याका होतार आह्वातारो यस्य मुख्यरुद्रस्य तस्मै 'रुद्रहोत्रे' मुख्य-'रुद्राय' स्वाहुतमिदं शकलमस्तु ॥

अनेन मुख्यरुद्रस्य भागसमृद्धिं दर्शयति। "रुद्राय रुद्रहोत्रे स्वाहेत्याह। रुद्रमेव भागधेयेन समर्द्धयति" इति। (५ प्र०।८ अ०।३२ म०) ॥

अस्य शकलस्याप्यपयः पितृलेपेषु सर्व्वेष्वञ्जनं विधत्ते। "सर्व्वतः समनक्ति। सर्व्वत एव रुद्रं निरवदयते" इति। (५ प्र०।८ अ०।३३ म०)। सर्व्वाञ्जनेन क्रूरदेवस्य रुद्रस्य 'सर्व्वतः' अपसारणं कृतं भवति ॥

शकलपरित्यागस्य दिग्विशेषं विधत्ते। "उदञ्चं निरस्यति। एषा वै रुद्रस्य दिक्। स्वायामेव दिशि रुद्रं निरवदयते" इति। (५ प्र०।८ अ०।३४ म०)। ऐशान्याः समीपे वर्त्तत इति उदीच्यपि 'रुद्रस्य दिग्' भवति ॥

* विशेषणेन इति तै० पुस्तकपाठः।

(७)अहर्ज्योतिः केतुना जुषताꣳ। सुज्योतिर्ज्योतिषाꣳ स्वाहा। रात्रिर्ज्योतिः केतुना जुषताꣳ। सुज्योतिर्ज्योतिषाꣳ स्वाहा(७)। (८)अपोपरो माह्नो रात्रियै मा पाहि। एषा ते अग्ने समित्। तया समिध्यस्व। आ-

---

हस्तेन जलस्पर्शनं विधत्ते। "अप उपस्पृशति मेध्यत्वाय" इति। (५ प्र०।८अ०।१५ म०)। रुद्रार्थप्रकलस्पर्शेन यज्ञयोग्यत्वं विनष्टं पुनर्जलस्पर्शेन तद्योग्यता सम्पद्यते॥

प्रकलपरित्यागकाले तद्दर्शनं निषेधति। "नान्वीक्षेत। यदन्वीक्षेत॥ ९॥ चक्षुरस्य प्रमायुकꣳ स्यात्। तस्मान्नान्वीक्ष्यः" इति। (५ प्र०।८अ०।१६ म०)। 'प्रमायुकꣳ' विनश्वरं॥

कल्पः। प्रतिप्रस्थाता दक्षिणं रौहिणं प्रतितिष्ठन्तं जुहोत्यहर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहेति। रात्रिर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहेति। (७ मन्त्रः)। तावेतौ मन्त्रौ पूर्व्वस्मिन्ननुवाके ब्राह्मणोदाहरणप्रसङ्गेन व्याख्यातौ॥

कल्पः। अपोपरो माह्नो रात्रियै मा पाह्येषा ते अग्ने समित् तया समिध्यस्वायुर्मे दा वर्चसा माञ्जीरिति सायं समिध*मादधात्यपोपरो मा रात्रिया अह्नो मा पाहीति प्रातरिति। तन्मन्त्रशेषस्तु। एषा ते अग्ने समित्। तया समि-

---

* समिधमभिजुहोति इति D चिह्नितपुस्तकपाठः।

युर्मे दाः। वर्चसा माञ्जीः। अपीपरो मा रात्रिया अह्नो मा पाहि ॥ ४ ॥

एषा ते अग्ने समित्। तया समिध्यस्व। आयुर्मे दाः। वर्चसा माञ्जीः(८)। (९)अग्निर्ज्योतिर्ज्योतिरग्निः

---

ध्यस्व। आयुर्मे दाः। वर्चसा माञ्जीरिति। (८ मन्त्रः)। हे अग्ने मां, यजमानं 'अपीपरः' पारं नीतवानसि। तस्मात् 'अह्नः' रात्रेः, च सकाशान्मां 'पाहि'। हे 'अग्ने' 'ते' तव, 'एषा' समिदाधीयते 'तया' समिधा त्वं 'समिध्यस्व' सन्दीप्तो भव, 'मे' मह्यं, 'आयुर्दाः' देहि, 'वर्चसा' तेजसा, मां, यजमानं, 'आञ्जीः' अक्तं कुरु संयोजयेत्यर्थः। अपीपरो मा रात्रिया इति मन्त्रोऽपि तद्वत् व्याख्येयः। अहःशब्दस्य रात्रिशब्दस्य च पाठपौर्व्वापर्य्यमात्रं विशेषः॥

मन्त्रद्वयेऽपि यजमानस्यायुर्वर्च्चः प्राप्तिं दर्शयति। "अपीपरो माह्नो रात्रियै मा पाह्येषा ते अग्ने समित्तया समिध्यस्वायुर्मे दा वर्चसा माञ्जीरित्याह। आयुरेवास्मिन् वर्चो दधाति। अपीपरो मा रात्रिया अह्नो मा पाह्येषा ते अग्ने समित्तया समिध्यस्वायुर्मे दा वर्चसा माञ्जीरित्याह। आयुरेवास्मिन् वर्चो दधाति" इति। (५ प्र०।८ अ०।१७ म०॥

कल्पः। अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायमग्निहोत्रं जुहोतीति सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातरिति।

स्वाहा। सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा[९]। [१०]भूः स्वाहा[१०]। [११]हुतं हविः। मधु हविः। इन्द्रतमेऽग्नौ॥

---

(९ मन्त्रः)। योऽयं 'अग्निः' स ज्योतिःस्वरूपः यश्च ज्योतिःस्वरूपः सोऽप्यग्निः अग्नेर्ज्योतिषश्चात्यन्तमभेदं द्योतयितुं व्यतिहारेण द्विरुपन्यासः। तस्मात् अग्नये स्वाहुतमिदमस्तु। सूर्यमन्त्रोऽप्येवं व्याख्येयः॥

मन्त्रद्वयस्य स्पष्टार्थतां दर्शयति। "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिःसूर्यः स्वाहेत्याह। यथा यजुरेवैतत्" इति। (५ प्र०।८ अ०।३८ म०)॥

कल्पः। अथाप उपस्पृश्य तूष्णीं काष्ठकीं समिधमाधायैतस्मादेव शेषादुपयमेनाग्निहोत्रं जुहोतीति भूः स्वाहेति। (१० मन्त्रः)। 'भूः' सत्तास्वभावः, सदेव सोम्येदमग्र आसीदित्यादिशास्त्रप्रतिपाद्यस्य परमात्मनः स्वरूपभूतो योऽग्निः तस्मै स्वाहुतमिदमस्तु॥

अत्र मीमांसया भूः स्वाहेति मन्त्रं प्रथमप्रवर्ग्यकालीनाग्निहोत्रविषयत्वेन व्यवस्थापयति*। "ब्रह्मवादिनो वदन्ति। होतव्यमग्निहोत्रा३न्न होतव्या३मिति ॥१०॥ यद्यजुषा जुहुयात्। अयथा पूर्व्वमाहुतीर्जुहुयात्। यन्न जुहुयात्। अग्निः पराभवेत्। भूः स्वाहेत्येव होतव्यं। यथा पूर्व्वमाहुतीर्जुहोति। नाग्निः

---

* व्यवस्थां दर्शयति इति तै॰ पुस्तकपाठः।

पिता नोऽसि मा मा हिꣳसीः। अश्याम ते देवघर्म्म। मधुमतो वाजवतः पितुमतः। अङ्गिरस्वतः स्वधाविनः। अशीमहि त्वा मा मा हिꣳसीः(११)। (१२)स्वाहा

---

पराभवति" इति। (५प्र०।८अ०।१९म०)। अत्र प्रथमप्रवर्ग्ये प्रातःकालीने तदीयद्रव्येणाग्निहोत्रं जुहुयात् न वेति विचारः होमपक्षे प्रथमाम्नातेनाग्निर्ज्योतिरिति मन्त्रेण होतव्यं, स च मन्त्रो नित्याग्निहोत्रे सायङ्कालीनः अतो यथा पूर्व्वमनुष्ठानं न स्यात्। अहोमपक्षे त्वाहुत्यभावादग्निः क्षुधया पराभूतो भवेत्। अतो दोषद्वयपरिहाराय भूः स्वाहेति मन्त्रेण प्रथमप्रवर्ग्यकाले जुहुयात्। ततः सायमग्निर्ज्योतिरिति मन्त्रः परेद्युः प्रातःसूर्य्यो ज्योतिरिति मन्त्रः एवं सति यथा पूर्व्वं नित्याग्निहोत्रवदेवेमा आहुतीर्जुहोति। अग्निश्चाहुतिसद्भावान्न पराभवति॥

कल्पः। हुतꣳ हविर्म्मधुहविरिति भक्षयित्वेति। पाठस्तु। (११)"हुतꣳ हविः • अशीमहि त्वा मा मा हिꣳसीः"(११) इति। इदं प्रवर्ग्याख्यं 'हविः' उत्तराग्नौ 'हुतं' तच्च 'हविर्मधु' स्वादुभूतं, कुत्र हुतमिति तदुच्यते। 'इन्द्रतमेऽग्नौ' अतिशयेन परमैश्वर्य्ययुक्ते जाठरे प्राणरूपेऽग्नौ, हे प्रवर्ग्य त्वं 'नः' अस्माकं, 'पिता' पालकः 'असि' अतो मां, 'मा हिꣳसीः' हे 'घर्म्म' प्रवर्ग्यदेव, 'मधुमतः' माधुर्य्ययुक्तस्य, 'वाजवतः' शरीर-

व्यापित्वेन गतियुक्तस्य, 'पितुमतः' अन्नसाधनत्वेनान्नयुक्तस्य, 'अङ्गिरस्वतः' अङ्गसौष्ठवहेतोः, 'स्वधाविनः' अमृतयुक्तस्य, 'ते' तव सारं, 'अश्याम' भक्षयेम। अथवा 'स्वधाविनः' इत्युत्तरत्रान्वेतव्यं। यस्मात् स्वधाविनोऽमृतत्वार्थिनो वयं त्वां 'अशीमहि' तस्मान्मां 'मा हिंसीः'॥

मधुशब्देन स्वादुत्वं विवक्षितमिति दर्शयति। "ऋतꣳ हविर्मधुहविरित्याह। स्वदयत्येवैनं" इति। (५प्र०।८अ०। ४०म०)॥

अग्निशब्देन प्राणविवक्षां दर्शयति।"इन्द्रतमेऽग्नावित्याह॥११॥ प्राणो वा इन्द्रतमोऽग्निः। प्राण एवैनमिन्द्रतमेऽग्नौ जुहोति"। (५प्र०।८अ०।४१म०)॥

मा हिंसीरिति प्रार्थनाया अवरणादिहिंसापरिहारार्थत्वं दर्शयति। "पिता नोऽसि मा मा हिंसीरित्याहाहिंसायै" इति। (५प्र०।८अ०।४२म०)॥

अश्यामेत्यस्य लिङ्प्रत्ययस्याशिरर्थविवक्षां दर्शयति। "अश्याम ते देवघर्म मधुमतो वाजवतः पितुमत इत्याह। आशिषमेवैतामाशास्ते" इति। (५प्र०।८अ०।४३म०)॥

मा हिंसीरित्यनेन देवताशरीरभक्षणप्रयुक्तहिंसानिवारणविवक्षां दर्शयति। "स्वधाविनोऽशीमहि त्वा मा मा हिंसीरित्याहाहिंसायै" इति। (५प्र०।८अ०।४४म०)॥

उक्तमन्त्रसाध्यं भक्षणं विधत्ते। "तेजसा वा एते व्यृध्यन्ते। ये प्रवर्ग्येण चरन्ति। प्राश्नन्ति। तेज एवात्मन् दधते" इति॥१२॥

(५ प्र०।८ अ०।४५ म०)। प्रवर्ग्यप्रचरणप्रयासेन क्षीणा शक्ति-र्हविर्भक्षणेन समाहिता भवति ॥

नियमान् विधत्ते। "संवत्सरं न माꣳसमश्नीयात्। न रामामुपेयात्। न मृण्मयेन पिबेत्। नास्य राम उच्छिष्टं पिबेत्। तेज एव तत् सꣳश्यति" इति। (५ प्र०।८ अ०।४६ म०) प्रवर्ग्यानुष्ठायी 'संवत्सर'-मात्रं 'माꣳसं' 'न' भक्षयेत्। स्त्रियं 'न' 'उपेयात्' 'मृण्मयेन' करकादिना, जलं 'न' 'पिबेत्'। 'अस्य' यजमानस्य, 'उच्छिष्टं' 'रामः' रमणीयः पुत्रः, 'न' 'पिबेत्'। 'तत्' तेन नियमेन, स्वकीयं 'तेजएव' सम्यक् तीक्ष्णी करोति ॥

यथोक्तं संवत्सरमाꣳसवर्जनादिव्रतं प्रशंसति। "देवा-सुराः संयत्ता आसन्। ते देवा विजयमुपयन्तः। विभ्राजि सौर्य्ये ब्रह्म सन्न्यदधत। यत्किञ्च दिवाकीर्त्त्यं। तदेतेनैव व्रते-नागोपायत्॥ तस्मादेतत् व्रतं चार्य्यं। तेजसो गोपीथाय। तस्मादेतानि यजूꣳषि विभ्राजः सौर्य्यस्येत्याहुः" इति। (५ प्र०। ८ अ०।४७ म०)। देवाश्चासुराश्च यदा परस्परं योद्धुं सन्नद्धाः 'आसन्' तदानीं 'ते' 'देवाः' 'विजयं' प्राप्तुमिच्छन्तः, सूर्य्यस्य पुत्रे विभ्राट्नामके देवे 'ब्रह्म' वेदजातं, सम्यग्निहितवन्तः। स च विभ्राड्देवो वेदे 'यत्किञ्चित्'* 'दिवाकीर्त्त्यं' अहन्येव पठनीयमनुवाकंजातं अस्ति। 'तत्' सर्व्वं 'एतेन' पूर्व्वोक्तनि-रूपणेन† 'एव' 'व्रतेन' युक्तो रचितवान्, 'तस्मात्' कारणात्,

---

* किमपि इति D चिह्नितपु० पाठः।

† नियमेन इति D चिह्नितपु० पाठः।

त्वा सूर्य्यस्य रश्मिभ्यः। स्वाहा त्वा नक्षत्रेभ्यः[१२] ॥ ५ ॥

ब्रह्मवर्चसाय पीपिहि, स्कन्दयात्, रुद्राय रुद्रहोत्रे स्वाहा, अग्नौ मा पाहि, अग्नौ, सप्त च ॥ अनु० १० ॥

---

दिवाकीर्त्त्येन प्रवर्ग्याध्यायेनानुष्ठानं कुर्व्वता पुरुषेण पूर्व्वाङ्गं 'एतद्व्रतं' चरणीयं। यस्मात् विभ्राट्नामको देवो दिवाकीर्त्यानि नमो वाचे या चोदितेत्यादीनि यजूंषि रचितवान्। 'तस्मादेतानि यजूंषि' सूर्य्यपुत्रस्य विभ्राड्देवस्य, सम्बन्धीनीत्येवमभिज्ञाः कथयन्ति। तदीयानुष्ठाने तेजो रक्षणार्थं व्रत चरणं ॥

कल्पः। अग्रेणाहवनीयं पर्य्याहृत्य शाखाडासन्नां* सम्पादयति स्वाहा त्वा सूर्य्यस्य रश्मिभ्य इति प्रातः स्वाहा त्वा नक्षत्रेभ्य इति सायमिति। (१२ मन्त्रः)। हे घर्म्म पात्रसमूह त्वां, 'सूर्य्यस्य' 'रश्मिभ्यः' 'स्वाहा' समर्पयामि, ततस्त्वां 'नक्षत्रेभ्यः' समर्पयामि ॥

एतन्मन्त्रद्वयसाध्यं घर्म्मपात्रसादनं विधत्ते। "स्वाहा त्वा सूर्य्यस्य रश्मिभ्य इति प्रातः सꣳसादयति। स्वाहा त्वा नक्षत्रेभ्य इति सायं। एता वा एतस्य देवताः। ताभिरेवैनꣳ समर्द्धयति" इति ॥१२॥ (५ प्र०।८य०।४८म०)। सूर्य्यो नक्षत्राणि चेति 'एताः' प्रवर्ग्यपात्रसमूहस्य, स्वामिभूताः, अतः 'ताभिरेव' देवताभिः, 'एनꣳ' पात्रसमूहं, समृद्धं करोतीति ॥

---

* सन्नां इति D चिह्नितपु० पाठः।

अथैकादशोऽनुवाकः ।

(१)घर्म्म या ते दिवि शुक् । या गायत्रे छन्दसि । या ब्राह्मणे । या हविर्द्धाने । तां त एतेनावयजे स्वाहा(१) ।

---

अकः, अग्निनेत्याह, प्रदिशो गच्छेत्याह, पितॄणां, अन्तः-परिधि पिन्वयति, धारयेत्याह, वायवः, घर्म्मपाः तेभ्य एवैनं जुहोति, अन्वीचेत, होतव्याइमिति, अग्नावित्याह, इधते, अगोपायत्, सप्त च ॥

इति पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

अथैकादशोऽनुवाकः ।

दशमे प्रवर्ग्यशेषेणाग्निहोत्रहोम उक्तः, एकादशे प्रवर्ग्योद्वासनमुच्यते । कल्पः । प्रवर्ग्यमुद्वासयिष्यन्नजमग्नीधे ददात्यष्टौ हि ब्रह्मणे धेनुं होत्रे रुक्ममध्वर्य्यवे षट् अपरं खरं पूर्व्वस्मिन् खरे न्यस्तो*च्छिष्टखरं सक्त्योत्तरेणाहवनीयं समाडासन्दीं प्रतिष्ठाप्य तस्यां सर्व्वं परिघर्म्मं समाधायो†दुम्बर्य्यां स्रुवि

---

* न्यस्तोपोच्छिष्ट इति तै० पु० पाठः ।
† समवधायो इति तै० पु० पाठः ।

(१)घर्म्म या तेऽन्तरिक्षे शुक्। या त्रैष्टुभे छन्दसि। या राजन्ये। याग्नीध्रे। तां त एतेनावयजे स्वाहा॥ १॥

घर्म्म या ते पृथिव्याꣳ शुक्। या जागते छन्दसि। या वैश्ये। या सदसि। तां त एतेनावयजे स्वाहा(२)।

---

चतुर्गृहीतं गृहीत्वा घर्म्म या ते दिवि शुगित्येतैर्यथा लिङ्गं जुहोत्यपि वा प्रतिप्रस्थाता चीन् सन्नखान् शलाकान् मुष्टीमादाय तेषामेकमाहवनीये प्रदीप्यास्यदघ्ने धारयति तमध्वर्युरभिजुहोति घर्म्म या ते दिवि शुगिति। पाठस्तु। (१)"घर्म्म या ते दिवि शुक् • तां त एतेनावयजे स्वाहा"(१) इति। हे 'घर्म्म' प्रवर्ग्य, 'ते' तव सम्बन्धिनी, 'शुक्' सन्तापः, 'या' 'दिवि' द्युलोके, 'गायत्रे' 'छन्दसि' 'या' 'ब्राह्मणे' पुरुषे, 'या' 'हविर्द्धाने' मण्डपे च विद्यते। 'तां' सर्व्वां, 'ते' त्वदीयां, शुचं, 'एतेन' होमेन, अहं 'अवयजे' नाशयामि॥

कल्पः। तस्मिन्नपरं प्रदीप्याहवनीये पूर्व्वं प्रहृत्य नाभिदघ्ने धारयति तमध्वर्युरभिजुहोति घर्म्म या तेऽन्तरिक्षे शुगिति। तस्मिन्नपरं प्रदीप्याहवनीये पूर्व्वं प्रहृत्य जानुदघ्ने धारयति तमध्वर्युरभिजुहोति घर्म्म या ते पृथिव्याꣳ शुगिति। पाठस्तु। (१)"घर्म्म या तेऽन्तरिक्षे शुक् • तां तएतेनावयजे स्वाहा"(१) इति। एतौ मन्त्रौ प्रथममन्त्रवद्व्याख्येयौ॥

एतन्मन्त्रसाध्यं होमं विधत्ते। "घर्म्म या ते दिवि शुगिति

(३)अनु॑नोऽद्यानु॑मतिः । अन्विद॑नुमते॒ त्वं(२) । (४)दि॒व-

---

तिस्र आहुतीर्जुहोति । छन्दोभिरेवाभ्यो लोकेभ्यः शुचमवयजते" इति । (५प्र०।८अ०।१म०)। 'अस्य' घर्मस्य, सम्बन्धिनीं 'शुचं' छन्दोदेवताभिरेव सहायभूताभिः लोकत्रयादपनयति ॥

प्रदीप्यमानस्य शलाकामुष्टेर्द्धारणे क्रमेण मुखनाभिजानुप्रमाणानि हस्तेनाभिनीय विधत्ते । "इयत्यग्रे जुहोति । अथेयत्यथेयति। त्रय इमे लोकाः । एभ्य एव लोकेभ्यः शुचमवयजते" इति । (५प्र०।८अ०।२म०)। 'अग्रे' प्रथमं, 'इयति' आस्यदघ्ने देशे 'जुहोति'। 'अथ' अनन्तरं, 'इयति' नाभिदघ्ने देशे धारयित्वा 'जुहोति'। 'अथ' अनन्तरं, 'इयति' जानुदघ्ने देशे धारयित्वा 'जुहोति'। एते च 'त्रयः' देशा लोकत्रयरूपाः, अतो 'लोकेभ्यः' 'शुचं' निराकरोति ॥

कल्पः। आहवनीय एवैनमनुप्रहरति अनुनोऽद्यानुमतिरिति परिश्रिते प्रतिप्रस्थाता पत्नीमुदानयत्यन्विदनुमत इति । (२ मन्त्रौ)। अनुनोऽद्यानुमतिरित्येकस्या ऋचः प्रतीकं, अन्विदनुमते त्वमित्यपरस्या ऋचः प्रतीकं, एते ऋचाविदं वामास्ये हविरित्यनुवाके व्याख्यास्येते ॥

अनयोर्देवतानुरूपतां* दर्शयति । "अनुनोऽद्यानुमतिरित्याहानुमत्यै" इति । (५प्र०।८अ०।३म०)॥

---

* आनार्थतां इति तै० पु० पाठः ।

त्वा पर॒स्यायाः। अ॒न्तरि॑क्षस्य त॒नुवः॑ पाहि। पृ॒थि॒-
व्या॒स्त्वा॒ धर्म॑णा ॥ २ ॥

व॒यमनु॑क्रामाम सुवि॒ताय॒ नव्य॑से[४]। [५]ब्रह्म॑णस्त्वा

---

कल्पः। दिवस्त्वा परस्याया* इति प्रथमेऽभिप्रव्रजन्ति।
पाठस्तु। [४]"दिवस्त्वा परस्यायाः ० वयमनुक्रामाम सुविताय
नव्यसे"[४] इति। सर्व्वे मिलित्वा प्रवर्ग्योद्वासनदेशं प्रति यदा†
गच्छन्ति तदा‡ मार्गं त्रेधा विभज्य प्रथमे भागे मन्त्रेणानेन
प्रव्रजन्ति। हे प्रवर्ग्य, 'दिवः' द्युलोकस्य, 'परस्यायाः' अति-
शयेन पालननिमित्तं त्वां, 'वयमनुक्रामाम', त्वं च 'अन्तरिक्षस्य'
सम्बन्धिनीः, 'तनुवः' प्राणिशरीराणि, 'पाहि' रक्ष। तथा
'पृथिव्या धर्म्मणा' धारणनिमित्तं त्वां, 'वयमनुक्रामाम' एत-
दनुक्रमणरूपं, 'नव्यसे' नूतनाय, 'सुविताय' शोभनगमनाय,
सम्पद्यतां ॥

अस्य मन्त्रस्य लोकत्रयधारणे तात्पर्य्यं दर्शयति। "दिवस्त्वा
परस्याया इत्याह। दिव एवेमाँल्लोकान्दाधार" इति।
(५ प्र०।८ अ०।४ म०)। 'दिवः' द्युलोकदेवतायाः, रक्षणेन
लोकत्रयं धृतं भवतीत्यर्थः ॥

कल्पः। ब्रह्मणस्त्वा परस्याया इति द्वितीय इति। अनेन

---

* परस्पूया इति तै० पु० पाठः।
† यथा इति तै० पु० पाठः।
‡ तथा इति तै० पु० पाठः।

परस्यायाः। क्षत्रस्य तनुवः पाहि। विशस्त्वा धर्म्मणा। वयमनुक्रामाम सुविताय नव्यसे[५]। [६]प्राणस्य त्वा परस्यायै। चक्षुषस्तनुवः पाहि। श्रोत्रस्य त्वा धर्म्मणा। वयमनुक्रामाम सुविताय नव्यसे[६]। [७]वल्गुरसि शंयुधायाः॥ ३॥

---

मन्त्रेण द्वितीयमार्गभागे प्रव्रजेयुरित्यर्थः। पाठस्तु। [५]"ब्रह्मणस्त्वा परस्याया: ० वयमनुक्रामाम सुविताय नव्यसे"[५] इति। पूर्व्ववद्व्याख्येयं॥

लोकविषयमन्त्रानन्तरं ब्राह्मणादिजातिविषयमन्त्रेण लोकेषु प्रजानां धारणं सिद्ध्यतीति दर्शयति। "ब्रह्मणस्त्वा परस्याया इत्याह॥ १॥ एष्वेव लोकेषु प्रजा दाधार" इति। (५ प्र०।८ अ०।५ म०)॥

कल्पः। प्राणस्य त्वा परस्याया इति तृतीय इति। अनेन मन्त्रेण मार्गस्य तृतीयभागे प्रव्रजेयुः। पाठस्तु। [६]"प्राणस्य त्वा परस्यायै ० वयमनुक्रामाम सुविताय नव्यसे"[६] इति। 'चक्षुषस्तनुव:' इत्यनेन चक्षुष्मन्ति शरीराणीत्यर्थो विवक्षितः। अन्यत् पूर्व्ववद्व्याख्येयं॥

ब्रह्मक्षत्रादिप्रजाविषयानन्तरं* प्राणचक्षुरादिविषयमन्त्रेण

---

* विषयमन्त्रानन्तरं इति तै० पु० पाठः।

प्रजासु प्राणधारणसिद्धिं दर्शयति। “प्राणस्य त्वा परस्पाया इत्याह। प्रजास्वेव प्राणान्दाधार।” इति। (५ प्र०।९ अ०। ६ म०)॥

प्रवर्ग्यस्य पूर्व्वदिश्युद्वासनं विधत्ते। “शिरो वा एतद्यज्ञस्य। यत् प्रवर्ग्यः। असौ खलु वा आदित्यः प्रवर्ग्यः। तं यद्दक्षिणा प्रत्यञ्चमुदञ्चमुद्वासयेत्। जिह्मं यज्ञस्य शिरो हरेत्। प्राञ्च-मुद्वासयति। पुरस्तादेव यज्ञस्य शिरः प्रतिदधाति॥ २॥ प्राञ्चमुद्वासयति। तस्मादसावादित्यः पुरस्तादुदेति।” इति। (५ प्र०।९ अ०।७ म०)। प्रवर्ग्यस्य यज्ञशिरोरूपस्य दक्षिणा-दिषु तिसृषु दिक्षूद्वासने सति ‘शिरः’, ‘जिह्मं’ कुटिलं यथा भवति तथा, हृतं स्यात्। अतः ‘पुरस्तादेव’ आर्ज्जवेन यज्ञशिरः-प्रतिधानाय प्रवर्ग्यं प्राङ्मुखमेव, ‘उद्वासयेत्’। किञ्च प्रवर्ग्य-स्यादित्यरूपत्वात् आदित्यस्य च पुरस्तात् एवोदयात् प्रागु-द्वासनं युक्तं॥

शफादीनां तत्रानयनं विधत्ते। “शफोपयमान्त्सविचाभि धृष्टी इत्यन्ववहरन्ति। आत्मानमेवैनꣳ सतनुं करोति।” इति। (५ प्र०।९ अ०।८ म०)। तप्तस्य महावीरस्य हस्तेन स्प्रष्टुमशक्य-त्वात् तद्धारणार्थौ काष्ठविशेषौ शफौ। उपयमः पात्रविशेषः धृष्टी अङ्गारनिर्हरणार्थौ साधनविशेषौ। साधनान्तराणा-मप्युपदर्शनार्थः ‘इति’शब्दः। एतानि सर्व्वाण्यपि महावीरमनु-प्रवर्ग्योद्वासनदेशे हरेयुः। तेन ‘एनꣳ’ प्रवर्ग्यं, आत्मसहितं शरीरसहितं ‘करोति’॥

एतद्वेदनं प्रशंसति। "सात्मामुष्मिँल्लोके भवति। य एवं वेद।" इति। (५प्र०।८अ०।८म०) ॥

साधनानां कारणं वृक्षविशेषं विधत्ते। "औदुम्बराणि भवन्ति। ऊर्ग्वा उदुम्बरः। ऊर्जमेवावरुन्धे।" इति। (५प्र०।८अ०।१०म०)। उदुम्बरफलस्य भक्ष्यत्वेनोर्ग्रूपत्वात् तद्द्वारेणोर्क्प्राप्तिः* ॥

गमनकाले साधनीभूतं सामगानं विधत्ते। "वर्त्मना वा अन्वित्य ॥ ३ ॥ यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति। साम्ना प्रस्तोतान्ववैति। साम वै रक्षोहा। रक्षसामपहत्यै।" इति। (५प्र०।८अ०।११म०) ॥ गमनवेलायां प्रस्तोतुं सामगानेन सहितः† 'प्रस्तोता', तान् सर्व्वाननुगच्छेत्। साम्नो रक्षोघ्नत्वात् तद्गानं रक्षोऽपघाताय भवति ॥

यदुक्तं सूत्रकारेण, सर्व्वे सहपत्नीकाः त्रिः साम्नो निधनमुपयन्ति। अर्द्धाद्ये द्वितीयं प्राप्यापरेणोत्तरवेदिं तृतीयमिति॥ तदिदमुत्तरं विधास्यन्नादौ प्रस्तोतुर्निधनावृत्तिं विधत्ते। "त्रिर्निधनमुपैति। त्रय इमे लोकाः। एभ्य एव लोकेभ्यो रक्षाꣳस्यपहन्ति।" इति। (५प्र०।८अ०।१२म०)। पञ्चभागयुक्तस्य साम्नश्चरमो भागो 'निधनं', तत्त्रिवारं पठेत्। तेन लोकत्रयाद्रक्षसामपहतिर्भवति ॥

पत्नीसहितानां सर्व्वेषां प्रस्तोतृ‡निधनभागोच्चारणं विधत्ते।

---

* ऊर्ग्वत्प्राप्तिः इति D चिह्नितपुस्तकपाठः।

† रक्षांसि चेत्वरन्मार्गेणैव पृष्ठत आगत्य यज्ञं हन्तुं गच्छन्ति। अतस्तत्परिहाराय सामगानेन सहित इति तै० पुस्तकपाठः।

‡ प्रस्तोतृवत् इति तै० पुस्तकपाठः।

त्रिशुग्जनधायाः(७)। (८)शं च वक्षि परि च वक्षि(८)।

"पुरुषः पुरुषो निधनमुपैति। पुरुषः पुरुषो हि रक्षस्वी। रक्षसामपहत्यै ॥ ४ ॥" इति। (५प्र०।९अ०।१३म०)। सर्व्वेष्वपि पुरुषेषु बाधकानि रक्षांस्यनुगच्छन्ति अतः सर्व्वोऽपि 'पुरुषः', 'रक्षस्वी'। निधनपाठेन तानि रक्षांस्यपहन्यन्ते॥

उद्वासनदेशे हिरण्यस्थापनं विधत्ते। "यत् पृथिव्यामुद्वासयेत्। पृथिवीꣳ शुचार्पयेत्। यदप्सु। अपः शुचार्पयेत्। यदोषधीषु। ओषधीः शुचार्पयेत्। यद्वनस्पतिषु। वनस्पतीञ्छुचार्पयेत्। हिरण्यं निधायोद्वासयति। अमृतं वै हिरण्यं॥५॥ अमृत एवैनं प्रतिष्ठापयति।" इति। (५प्र०।९अ०।१४म०)। प्रवर्ग्यस्य दाहकत्वात् पृथिव्यादीनां दाहो माभूदिति हिरण्ये तदुद्वासनं अग्निसंयोगेऽपि विनाशाभावात् 'हिरण्यं', 'अमृतं'। अतस्तत्रैव प्रवर्ग्यं 'प्रतिष्ठापयति'॥

कल्पः। उदकुम्भमादायाध्वर्य्युर्वल्गुरसि शंयुधाया इति त्रिः प्रदक्षिणमुत्तरवेदिं परिषिञ्चन् पर्य्येतीति। पाठस्तु। (७)"वल्गुरसि शंयुधायाः ॥३॥ त्रिशुग्जनधायाः"(७) इति। हे परिषेक, त्वं 'शंयुधायाः' सुखप्राप्तेः, दुःखवियोगस्य धारकः,* 'वल्गुः' सुन्दरः, 'असि'। 'जनधायाः' जनस्य धारकः, 'त्रिशुग्' वाञ्छवदुपलालनीयः, 'असि'। उत्तरवेदिपरत्वेन व्याख्येयं॥

* भावकः इति तै० पुस्तकपाठः।

(९)चतुःस्रक्तिर्नाभिर्ऋतस्य(९)। (१०)सदो विश्वायुः शर्म्म

एतन्मन्त्रसाध्यं परिषेचनं विधत्ते। "सन्नुरसि शंयुधाया इति त्रिः परिषिञ्चन् पर्य्येति। त्रिवृद्वा अग्निः। यावानेवाग्निः। तस्य शुचꣳ शमयति।" इति। (५प्र०।८अ०।१५म०)। आहवनीयादिरूपेणाग्नेस्त्रिगुणत्वात् त्रिवारपरिषेचनेन सर्व्वस्याग्नेः शोकः शाम्यति॥

कल्पः। निधाय कुम्भं शं च वक्षि परि च वक्षीति त्रिः परिषिञ्चन् प्रतिपर्य्येतीति। (८ मन्त्रः)। हे उत्तरवेदि, 'शं च वक्षि' सुखमपि वहसि, 'परि च वक्षि' दुःखपरिहारमपि वहसि॥

एतन्मन्त्रसाध्यां प्रदक्षिणावृत्तिं विधत्ते। "त्रिः पुनः पर्य्येति। षट् सम्पद्यन्ते। षड् वा ऋतवः। ऋतुभिरेवास्य शुचꣳ शमयति।" इति। (५प्र०।८अ०।१६म०)। त्रीणि प्रदक्षिणानि त्रीण्यप्रदक्षिणानीति 'षट्'-सम्पत्तिः॥

कल्पः। चतुःस्रक्तिर्नाभिर्ऋतस्येत्युत्तरवेदिमभिमृशेति। (९ मन्त्रः)। 'चतुःस्रक्तिः' कोणचतुष्टयोपेतोत्तरवेदिः, इयं 'ऋतस्य' यज्ञस्य, नाभिस्थानीया। यद्वा 'ऋतस्य' सत्यभूतायाः भूमेर्नाभिस्थानीया॥

मन्त्रस्य भूमिनाभिपरत्वं दर्शयति। "चतुःस्रक्तिर्नाभिर्ऋतस्येत्याह॥६॥ इयं वा ऋतं। तस्या एष एव नाभिः। यत्प्रवर्ग्यः। तस्मादेवमाह।" इति। (५प्र०।८अ०।१७म०)। प्रवर्ग्यहोमाधारत्वादुत्तरवेदिः 'प्रवर्ग्यः', इत्युच्यते॥

सप्रथाः(१०)। (११)अप द्वेषो अप ह्वरः। अन्यद्व्रतस्य सश्चिम:(११)। (१२)घर्म्मैतत्तेऽन्नमेतत् पुरीषं। तेन वर्द्धस्व

कल्पः। सदो विश्वायुरित्युत्तरेणोत्तरवेदिं खरौ न्युप्या-* नुव्यूहतीति। शर्म्म सप्रथा इति मन्त्रशेषः। (१०मन्त्रः)। 'सदः' भूप्रदेशविशेषः †उत्तरवेद्युत्तरदेशरूपः, 'विश्वायुः' कृत्स्नायुर्हेतुः, अतएव 'सप्रथाः' ख्यातियुक्तः, 'शर्म्म' सुखहेतुः॥

‡शर्म्मशब्देन भूमिविवरं दर्शयति। "सदो विश्वायुरित्याह। सदो हीयं।" इति। (५प्र०।८अ०।१८म०)॥

कल्पः। अप द्वेषो अप ह्वर इति मार्ज्जालीयदेशे उच्छिष्टखरमिति न्युप्यानुव्यूहतीत्यनुवर्त्तते। अन्यद्व्रतस्य सश्चिमेति मन्त्रशेषः। (११मन्त्रः)। 'द्वेषः' द्वेष्टा शत्रुः, अपनीतः, 'ह्वरः' कौटिल्यकारी चापनीतः। 'व्रतस्य' अनुष्ठीयमानस्य कर्म्मणः, 'अन्यत् सश्चिमः' पूर्व्वोक्तद्वेषकौटिल्याभ्यामतिरिक्तं क्षेमेणानुष्ठानं वयं सम्पादितवन्तः॥

अनेन मन्त्रेण शत्रुनिराकरणं दर्शयति। "अप द्वेषो अप ह्वर इत्याह भ्रातृव्यापनुत्त्यै।" इति। (५प्र०।८अ०।१९म०)॥

कल्पः। घर्म्मैतत्तेऽन्नमेतत् पुरीषमिति दध्ना मधुमिश्रेण पात्राणि पूरयतीति। पाठस्तु। (१२)घर्म्मैतत्तेऽन्नमेतत्पुरीषं। ०

* नाभिं खरावनुव्युप्या इति तै० पुस्तकपाठः।
† उत्तरनाभ्युत्तरदेशः इति तै० पुस्तकपाठः।
‡ सदःशब्देन इति तै० पु० पाठः।

चाच॑प्यायस्व। वर्द्धिषीमहि॑ च व॒यं। आच॑प्यासिषी॒महि॑(१२) ॥ ४ ॥

(१३)रन्ति॒र्नामा॑सि दि॒व्यो ग॑न्ध॒र्व्वः। तस्य॑ ते य॒द्ध॒विर्द्धा॒नं। अ॒ग्निर॑ध्यक्षाः। रु॒द्रोऽधि॑पतिः(१३)। (१४)स-

---

आचप्यासिषीमहि।"(१२) इति। हे 'घर्म्म', 'एतत्' मधुमिश्रं दधि, 'ते' तव, 'अन्नं', 'एतत्', च 'पुरीषं' सम्पूर्णं, 'तेन' मधुमिश्रेण दध्ना, त्वं 'वर्द्धस्व' 'आप्यायस्व च', अभिवृद्धिस्वरूपबाहुल्यं आप्यायनं मानसः परितोषः, त्वत्प्रसादात् 'वयं', अपि वृद्धिमाप्यायनञ्च प्राप्नुवाम ॥

एतन्मन्त्रसाध्यं पूरणं विधत्ते। "घर्म्मैतत्तेऽन्नमेतत् पुरीषमिति दध्ना मधुमिश्रेण पूरयति। ऊर्व्वा अन्नाद्यं दधि। ऊर्ज्जैवैनमन्नाद्येन समर्द्धयति ॥ ७ ॥" इति। (५ प्र०।६ अ०।२०म०)। ऊर्क्शब्देन स्वादुत्वमुच्यते ॥

अन्नाद्यशब्देनोदरपूर्त्तिहेतुत्वं वेदनं प्रशंसति। "अन्नशनादुको भवति। य एवं वेद।" इति। (५प्र०।६अ०।२१म०)। अन्नेच्छाशीलः अन्नशनायुको दरिद्रः 'अनशनायुकः' इष्टः ॥

कल्पः। अथैनमुपतिष्ठन्ते रन्तिर्नामासि दिव्यो गन्धर्व्व इति। रन्तिरित्यादयः परिजानादहीनमित्यन्ता बहवो मन्त्राः। तेषु प्रथमं मन्त्रमाह। पाठस्तु। (१३)"रन्तिर्नामासि ० रुद्रोऽधिपतिः"(१३) इति। रन्तिनामको द्युलोकवर्त्ती यः 'गन्धर्व्वः',

महमायुषा। सं प्राणेन। सं वर्चसा। सं पयसा। सं गौपत्येन। सꣳ रायस्पोषेण[१४] ॥ ५ ॥

---

असि, हे प्रवर्ग्य, तद्रूपस्त्वं 'असि', 'तस्य ते' तादृशस्य गन्धर्व्वरूपस्य तव, 'हविर्द्धानं', 'यद्दत्' हविर्द्धानाख्यमण्डपादिसदृशं* उत्तरवेद्यां प्राक् शिरस्त्वेनावस्थितस्य तवाधोभागवर्त्तित्वात्, योऽयं 'अग्निः', उत्तरवेदिं गतः, सोऽयं 'अध्यक्षः' तव स्वामी, योऽयं 'रुद्रः' क्रूरो देवः, सोऽयं 'अधिपतिः' अनिष्टनिवारणेनाधिकपालकः ॥

मन्त्रान्तरैः प्रवर्ग्यमहिम्नः स्पष्टप्रतिभानं दर्शयति। "रश्मिर्नामासि दिव्यो गन्धर्व्व इत्याह। रूपमेवास्यैतन्महिमानꣳ रश्मिं बन्धुतां व्याचष्टे।" इति। (५ प्र०।९ अ०।२२ म०)। 'रश्मिः' बन्धुत्वं, रमणहेतुत्वात्, मन्त्रस्य यत् स्वरूपमस्ति रश्म्यादिशब्दोपेतं एतदेव प्रवर्ग्यस्य बन्धुत्वलक्षणं महिमानं प्रकाशयति ॥

द्वितीयं मन्त्रमाह। [१४]"समहमायुषा ० सꣳ रायस्पोषेण"[१४] इति। 'अहं', अस्य प्रवर्ग्यस्य प्रसादादायुरादिना रायस्पोषान्तेन फलषट्केन सङ्गतो भूयासं ॥

मन्त्रस्याशीरर्थतां दर्शयति। "समहमायुषा सं प्राणेने-

---

* मण्डपं पादसदृशमिति तै० पुस्तकपाठः।

† स्वस्य महिमानमिति तै० पुस्तकपाठः।

(१५)व्यसौ। योऽस्मान्द्वेष्टि। यञ्च वयं द्विष्मः(१५)। (१६)अचिक्रदद्वृषा हरिः। महान्मित्रो न दर्शतः। सꣳ सूर्य्येण रोचते(१६)। (१७)चिदसि समुद्रयोनिः। इन्दु-

---

त्याह। आशिषमेवैतामाशास्ते।" इति। (५प्र०।६अ०।२१म०)॥

तृतीयं मन्त्रमाह। (१५)"व्यसौ ० यञ्च वयं द्विष्मः"(१५) इति। 'यः', अस्माकं द्वेष्टा, यश्चास्माभिर्द्वेष्यः, उभयविधः 'असौ' शत्रुः, प्रवर्ग्येण विनाशितः॥

मन्त्रस्य परविनाशपरत्वेनाभिचाररूपतां दर्शयति। "व्यसौ योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इत्याह। अभिचार एवा-स्यैषः।" इति। ५)प्र०।६अ०।२४म०)। 'अस्य' शत्रोः, 'एषः' मन्त्रपाठः यजमानेन कृतोऽभिचारः, तेनासौ विनश्यतीत्यर्थः॥

चतुर्थं मन्त्रमाह। (१६)"अचिक्रदद् वृषा हरिः ० सꣳ सूर्य्येण रोचते"(१६) इति। अयं प्रवर्ग्यः 'वृषा' कामानां वर्षयिता, 'हरिः' पापस्य हर्त्ता, तादृशः सन् 'अचिक्रदत्' *क्रन्दनमुत्साहेनास्फोटनं कृतवान्। स च प्रवर्ग्यः 'महान्' गुणैरधिकः, 'मित्रो न' मित्र इव, 'दर्शतः' दर्शनीयः, तादृशः 'सूर्य्येण' सꣳभूय 'रोचते' प्रकाशयति॥

प्रथमपादे विशेषणयोः प्रसिद्धिं दर्शयति। "अचिक्रदद्

---

* क्रन्दनमुत्साहेनास्फन्दनं इति D चिह्नितपुस्तकपाठः। क्रन्दनमु-त्साहेनोद्घाटनं इति तै० पुस्तकपाठः।

दक्षः श्येन ऋतवा* । हिरण्यपक्षः शकुनो भुरण्युः । महान्त्सधस्थे ध्रुव आनिषत्तः ॥ ६ ॥

नमस्ते अस्तु मा मा हिꣳसीः(१०) । (१८)विश्वावसुꣳ

---

वृषा हरिरित्याह । वृषा ह्येषः ॥ ८ ॥ वृषा हरिः" । इति । (५प्र०।९अ०।२५म०) । यथा वृषत्वं प्रसिद्धं तथा हरि त्वमपीति वक्तुं 'वृषः' इति पुनरुक्तिः ॥

द्वितीयपादस्य स्तुतिपरतां दर्शयति । "महान्मित्रो न दर्शत इत्याह । स्तौत्येवैनमेतत्" । इति । (५प्र०।९अ०।२६म०)॥

पञ्चमं मन्त्रमाह । (१०)"चिदसि समुद्रयोनिः ० नमस्ते अस्तु मा मा हिꣳसीः"(१०) इति । हे प्रवर्ग्य, त्वं चिदादि-विशेषणविशिष्टः, 'असि' । 'चित्' अभिज्ञः, 'समुद्रयोनिः' ज्ञान-द्वारा समुद्रस्यापि कारणभूतः, 'इन्दुः' चन्द्रवदाह्लादकारी, 'दक्षः' उत्साहवान्, 'श्येनः' श्येनवद्वेगवान्, 'ऋतवा' कर्मफल-युक्तः, 'हिरण्यपक्षः' चित्यायामनुष्ठीयमानः सन् सुवर्णसमान-पक्षोपेतः, 'शकुनः' पक्ष्याकारः, 'भुरण्युः' जगद्भरणसमर्थः, 'महान्' गुणैरधिकः, 'सधस्थे' कर्मकर्तृभिःसहावस्थानप्रदेशे, 'ध्रुवः' स्थिरः, 'आनिषत्तः' आभिमुख्येनोपविष्टः । हे प्रवर्ग्य, 'ते नमः', मां 'मा हिꣳसीः' ॥

समुद्रयोनिशब्दस्य तात्पर्य्यं दर्शयति । "चिदसि समुद्र-

---

* ऋतावा इति A, B, C, D, E, G, चिह्नितपुस्तकषट्कपाठः ।

सोमगन्धर्व्वं । आपो दद्दृशुषीः । तद्दृतेनाथ्यायन् । तदन्ववैत् । इन्द्रो रारहाण आसां । परि सूर्य्यस्य*

योनिरित्याह । स्वामेवैनं योनिं गमयति ।" इति । (५प्र०। ८अ०।१७म०)। समुद्रादिकं जगत्कर्मरूपां, स्वकीयां 'योनिं', प्रापयति। यद्वा समुद्रो योनिर्यस्य प्रवर्ग्यस्येति बहुव्रीहिः, समुद्रसदृशः परमात्मा तस्य कारणं, ततो मन्त्रपाठेन स्वकीययोनिप्राप्तिः ॥

वैकल्यप्रयुक्तहिंसापरिहारार्थतां नमस्कारस्य दर्शयति। "नमस्ते अस्तु मा मा हिंसीरित्याहाहिंसायै"। इति। (५प्र०।८अ०।१८अ०) ॥

षष्ठं मन्त्रमाह। (१८)"विश्वावसुं सोमगन्धर्व्वं ० परिसूर्य्यस्य परिधीं रपश्यत्"(१८) इति। सोमस्य परिमोषको गन्धर्व्वः 'सोमगन्धर्व्वः'। स च 'विश्वावसु'नामकः, अतएव सोमप्रकरणे श्रूयते, तं सोममाह्रियमाणं गन्धर्व्वो विश्वावसुः पर्य्यमुष्णादिति। सोमस्यापहर्त्तारं तं, 'विश्वावसुं', 'आपो ददृशुषीः' अब्देवता दृष्टवत्यः, ताश्चाब्देवताः 'ऋतेन' यज्ञेन निमित्तेन, 'तत्' तदा, 'अध्यायन्' विशेषेण गन्धर्व्वसमीपं प्रत्यागच्छन्, 'इन्द्रः', देवः, 'तत्' अपां गमनं, 'अन्ववैत्' अनुक्रमेण ज्ञातवान्, स च इन्द्रः, 'आसां' अपां समीपे, 'रारहाणः' अग्रं गच्छन्, 'सूर्य्यस्य',

* B चिह्नितपुस्तके परिसूर्य्यस्य इति पाठो नास्ति।

परि॒धीꣳर॑पश्यत्(१८) । (१९)वि॒श्वाव॑सुर॒भि तन्नो॑ गृणा-
तु । दि॒व्यो ग॑न्ध॒र्वो रज॑सो वि॒मान॑ः । यद्वा॑ घ स॒त्य-
मु॒त यन्न वि॒द्म ॥ ७ ॥

'परिधीन्' परिधिसदृशान्, इन्द्राभिमानिनो देवान्, 'पर्य्य-
पश्यत्' परितो वेष्टयित्वन् अवलोकितवान् । यदा गन्धर्व्वः
सोमं मुष्णाति तदाग्नीमापो दृष्ट्वा तत्र गताः, इन्द्रस्य तद-
भिप्राय अपां सहायार्थं गन्धर्व्वमवरोद्धुं सूर्य्यरश्मीन् प्रेषित-
वानित्यर्थः ॥

विश्वावसुवृत्तान्तस्मरणस्य विकलाङ्गसमाधानार्थत्वं दर्श-
यति । "विश्वावसुꣳ सोमगन्धर्व्वमित्याह । यदेवास्य क्रिय-
माणस्यान्तर्य्यन्ति । तदेवास्यैतेनाप्याययति* ।" इति । (५ प्र०।
९ अ०।२९म०) । अनुष्ठीयमानस्य प्रवर्ग्यस्य 'यत्' अङ्गम्, ऋत्विजः
अन्तर्हितं कुर्व्वन्ति, 'तत्' अङ्गं, 'एतेन' वृत्तान्तस्मरणेन, सम्पद्धं
करोति । गन्धर्व्वेणापादितस्य वैकल्यस्याङ्गिरिन्द्रेण च समा-
हितत्वात्तदनुस्मरणस्य समाधानार्थत्वं युक्तं ॥

सप्तमं मन्त्रमाह । (१९)"विश्वावसुरभि तन्नो गृणातु । ० धियो
हिन्वानो धिय इन्नो अव्यात् ।"(१९) इति । अस्मिन् कर्म्मणि 'यद्वाघ'
यदेव किञ्चिदङ्गं यथाशास्त्रं अनुष्ठितं, 'उत' अपि च, 'यत्'
अङ्गम्, 'न विद्म' वयं विस्मृतवन्तः, 'तत्'-सर्व्वं, 'नः' अस्मभ्यं,

* आप्याययति इति F, H, चिह्नितपुस्तकद्वयपाठः ।

धियो हिन्वानो धिय इन्नो अव्यात्[१९]। [२०]स-लिममविन्दच्चरणे नदीनां। अपावृणोद् दुरो अश्म-

---

'विश्वावसुः', 'गृणातु' कथयतु। कीदृशः, 'दिव्यो गन्धर्व्वः' दिवि भवो गन्धर्व्वजातिः, अतः सर्व्वज्ञ इत्यर्थः। 'रजसो वि-मानः' रञ्जकस्य गीतस्य विशेषेण निर्म्माता, 'धियो हिन्वानः' बुद्धेः प्रीणयिता, स गन्धर्व्वः 'नः' अस्मदीयाः, 'धिय इत्' बुद्धीः सर्व्वा अपि, 'अव्यात्' रक्षतु॥

पूर्व्वमन्त्रे* यथाङ्गवैकल्यसमाधानहेतुत्वं, तद्वदस्यापि वैकल्य-समाधानहेतुतां दर्शयति। "विश्वावसुरभितन्नो गृणात्वि-त्याह॥ ९॥ पूर्व्वमेवोदितं। उत्तरेणाभिगृणातु"। इति। (५प्र०।९अ०।२०म०)॥

चतुर्थपादे धीरक्षणेन चतुसमृद्धिर्विवक्षितेति दर्शयति। "धियो हिन्वानो धिय इन्नो अव्यादित्याह। ऋतूनेवास्मै कल्पयति"। इति। (५प्र०।९अ०।२१म०)। ऋतवो यदा स्वस्वकार्य्यकराः तदा प्राणिनां बुद्धयः स्वस्था भवन्ति। अतो धीरक्षणं ऋतुषु प्रवाहरूपेण प्रवर्त्तते॥

अष्टममन्त्रमाह। [२०]"सलिममविन्दच्चरणे नदीनां। ० इन्द्रो इदं परिजानादहीनं"[२०] इति। यः पूर्व्वो गन्धर्व्वः अस्ति सः

---

* पूर्वमन्त्रो यथाङ्गवैकल्यसमाधानहेतुः। इति F, H, चिह्नितपु-स्तकद्वयपाठः।

व्रजानां। प्रासां गन्धर्व्वो अमृतानि वोचत्। इन्द्रो दक्षं परिजानादहीनं(२०)।(२१)एतत्त्वं देव घर्म्म देवो देवा-

---

अयं 'नदीनां' गङ्गायमुनादीनां, 'चरणे' प्रवाहरूपे प्रवर्त्तके, 'चक्षिमविन्दत्' शुद्धिं लब्धवान्, नदीप्रवहणेन पङ्कादि-प्रक्षालनात् शुद्धिं दृष्टवान्। अश्मसु पाषाणेषु व्रजन्ति प्रवहन्ति इति, 'अश्मव्रजाः' नद्यः, तासां, 'दुरः' द्वाराणि, 'अपावृणोत्' अपनीतवान्, नदीषु प्रवेष्टुं द्वारस्थानीया-स्तीर्थभूताः मार्गाः अश्मभिर्व्वे अवरुद्धाः, तत्र पाषाणान् अपनीय नदीः सेवितुं योग्याः कृतवान्। ततः 'आसां' नदीनां, 'अमृतानि' शुद्धिकारणानि जलानि, सः 'गन्धर्व्वः', 'प्रवोचत्' प्राणिनामग्रे कथितवान्। ततः 'इन्द्रः', 'दक्षं' कुशलं गन्धर्व्वं, 'अहीनं' क्वापि वैकल्यरहितं, 'परिजानात्' परितो ज्ञातवान्॥

अत्र जलवाचिना अमृतशब्देन मरणरहितानां प्राणाना-मपि सूचनं दर्शयति। "प्रासां गन्धर्व्वो अमृतानि वोचदि-त्याह। प्राणा वा अमृताः। प्राणानेवास्मै कल्पयति"। इति। (५प्र०।८अ०।२२म०)। अमृतशब्दपाठेन यजमानस्य प्राणान् सुस्थितान् करोति॥

कल्पः। एतत्त्वं देव घर्म्म देवो देवानुपागा इति अभि-मन्त्रयेति। (२१ मन्त्रः)। हे 'घर्म्म देव', 'त्वं', 'देवः' देवतारूपः

नुपागाः(२१)। (२२)इदमहं मनुष्यो मनुष्यान्। सोमपी-

सन्, 'एतत्' अस्माकं प्रत्यक्षं यथा भवति तथा, 'देवान्', 'उपागाः' प्राप्तवानसि ॥

अत्र प्रवर्ग्यस्य देवत्वं सर्व्वदेवप्रापकत्वञ्च* प्रसिद्धमित्येतद्दर्शयति। "एतत्त्वं देव घर्म्म देवो देवानुपागा इत्याह। देवो ह्येष सन् देवानुपैति"। इति। (५प्र०।९अ०।२३म०)॥

कल्पः। इदमहं मनुष्यो मनुष्यानिति प्रदक्षिणमावृत्त्येति। पाठस्तु। (२२)"इदमहं मनुष्यो मनुष्यान्। ० सह रायस्पोषेण"(२२) इति। 'अहं' यजमानः, 'मनुष्यः', सन् 'इदं' प्रत्यक्षं यथा भवति तथा, 'मनुष्यान्', प्राप्नोमीति शेषः। हे 'सोमपीथ' सोमपान, 'मां', आभिमुख्येन 'अन्विहि' प्राप्नुहि, न केवलं त्वमेव, किन्तु 'प्रजया रायस्पोषेण', च 'सह', तदुभयमपि मां प्राप्नोतु ॥

यजमानस्य मनुष्यत्वं मनुष्यत्वप्राप्तिश्च प्रसिद्धा इत्येतद्दर्शयति। "इदमहं मनुष्यो मनुष्यानित्याह ॥१०॥ मनुष्यो हि। एष सन् मनुष्यानुपैति"। इति। (५प्र०।९अ०।२४म०)॥

सोमपानप्रार्थनायां कारणं दर्शयति। "ईश्वरो वै प्रवर्ग्यमुद्वासयन्। प्रजां पशून्त्सोमपीथमनूद्वासः सोमपीथानुमेहि। सह प्रजया सह रायस्पोषेणेत्याह। प्रजामेव पशून्त्सोमपीथमात्मन्धत्ते"। इति। (५प्र०।९अ०।२५म०)। यः

* अत्र प्रवर्ग्यस्य देवप्रापकमिति D चिह्नितपुस्तकपाठः।

थाऽऽनु मेहि। सह प्रजया सह रायस्पोषेण(२१)*।
(२२)सुमित्रा न आप ओषधयः सन्तु॥ दुर्म्मित्रास्तस्मै
भूयासुः। योऽस्मान् द्वेष्टि। यञ्च वयं द्विष्मः(२२)।

---

प्रवर्ग्यं उद्वासयति अथो तदानीं तं 'प्रवर्ग्यम्', 'अनु', स्वकीयां 'प्रजां' पुत्रादिकां, 'पशून्' गवादीन्, 'सोमपीथं' करिष्यमाणं सोमपानञ्च, 'उद्वासः' 'ईश्वरः' उद्वासयितुं समर्थो भवति। प्रवर्ग्योद्वासनमनु सर्व्वमिदं गच्छतीत्यर्थः†। अतः सोमपीथे-त्यादिमन्त्रपाठेन प्रजादिकं स्वात्मनि सम्पादयति॥

कल्पः। सुमित्रा न आप ओषधयः इति मार्ज्जालीयदेशे उच्छिष्टखरे मार्ज्जयित्वेति। पाठस्तु। (२२)"सुमित्रा न आपः ओषधयः सन्तु • यञ्च वयं द्विष्मः"(२२) इति। एताः 'आपः', तत्कार्य्याः 'ओषधयः', च 'नः' अस्माकं, 'सुमित्राः' सुस्निग्धाः, 'सन्तु'। 'यः' द्वेष्टा, यश्च द्वेष्यः, 'तस्मै' उभयस्मै, 'दुर्म्मित्राः' शत्रवः, 'सन्तु'॥

प्रथमपादस्याशीःपरतां दर्शयति। "सुमित्रा न आप ओषधयः सन्त्वित्याह। आशिषमेवैतामाशास्ते"। इति। (५प्र०। ८अ०।३६म०)॥

उत्तरभागस्य शत्रुविषयाभिचारत्वं दर्शयति। "दुर्म्मित्रा-

---

* B चिह्नितपुस्तके सह प्रजयेति पाठो नास्ति। G, B, चिह्नित-पुस्तकयोः 'स्पो'कार उदात्तो अन्यत्र 'षे'कारः।

† न गच्छतीत्यर्थः इति E चिह्नितपुस्तकपाठः।

(२४)उद्वयं तमसस्परि। उदु त्यं चित्रं(२४)। (२५)इममू षु

स्मै भूयासुर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इत्याह। अभिचार एवास्यैषः" ॥ इति। (५ प्र०।९ अ०।१७ अ०)॥

कल्पः। उद्वयं तमसस्परीत्यादित्यमुपस्थायोदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये जुहोत्युपतिष्ठते इति। उद्वयमिति मन्त्रः, समास्त्वाग्न इत्यनुवाके व्याख्यातः। उदु त्यं जातवेदसं चित्रं देवानामिति मन्त्रद्वयं उदु त्यमित्यनुवाके व्याख्यातं। एतन्मन्त्रद्वयसाध्यहोमं विधत्ते। "प्र वा एषोऽस्माल्लोकाच्यवते। यः प्रवर्ग्यमुद्वासयति। उदु त्यं चित्रमिति सौरीभ्यामृग्भ्यां पुनरेत्य गार्हपत्ये जुहोति। अयं वै लोको गार्हपत्यः। अस्मिन्नेव लोके प्रतितिष्ठति। असौ खलु वा आदित्यः सुवर्गो लोकः। यत् सौरी भवतः। तेनैव सुवर्गाल्लोकान्नैति"* ॥११॥ इति। (५ प्र०।९ अ०।१८ अ०)। प्रवर्ग्यस्योद्वासनेन स्वयमेव 'अस्माल्लोकात्', भ्रष्टो भवति। गार्हपत्यस्यैतल्लोकरूपत्वेन तत्र होमे सति स्वयं 'अस्मिन्', लोके, प्रतिष्ठितो भवति। आदित्यस्य स्वर्गलोकरूपत्वात् सौरमन्त्रेण स्वर्गादपि भ्रंशो न भवति।

ब्रह्मणस्त्वा परस्याया इत्याह, दधाति, अग्नित्य, रक्षसी रक्षसामपहत्यै, वै हिरण्यं, आह, अर्द्धयति, लोष, त्पणालित्याह, मनुष्यानित्याह, असौषः, अष्टौ च ॥

इति माधवीये पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

* लोकान्नैति इति H, F, चिह्नितपुस्तकद्वयपाठः।

त्यमस्मभ्यꣳ सनिं*। गायत्रं नवीयाꣳसं। अग्ने देवेषु प्रवोचः(२५) ॥ ८ ॥

याग्नीध्रे तां तं एतेनावयजे स्वाहा, धर्म्मणा, शं-युधायाः, प्यासिषीमहि, पोषेण, निषत्तः, विद्म, सन्तु, अष्टौ च ॥ अनु० ११ ॥

---

कल्पः। इममूषु त्यमस्मभ्यमित्याहवनीये जुहोतीत्युपति-ष्ठन्तां† इत्येक इति। पाठस्तु। (२५)"इममूषु त्यमस्मभ्यꣳ सनिं। ० अग्ने देवेषु प्रवोचः(२५) इति। हे 'अग्ने', 'देवेषु', मध्ये 'अस्मभ्यं', 'सनिं' फलदानं, 'प्रवोचः' प्रकर्षेण कथय। न केवलं फलदानं, किन्तु 'त्यमिममूषु' तं शास्त्रप्रसिद्धमिममस्माभि-रिदानीं अनुष्ठितं प्रवर्ग्यमपि सुष्ठु देवेषु, चपय। कीदृशं प्रवर्ग्यं, 'गायत्रं' गायत्र्यादिछन्दोयुक्तं। अतएव पूर्व्वत्राम्नातं, 'छन्दोभिर्वा एषक्रियत इति'। 'नवीयाꣳसं' अतिशयेन नूतनं, सर्वाङ्गसम्पूर्णमित्यर्थः ॥

शाखान्तरे यानि प्रवर्ग्यसामानि, तेषामाधारभूता ये मन्त्रास्तान् विधत्ते। "प्रजापतिं वै देवाः शुक्रं पयोऽदुहन्। तदेभ्यो न व्यभवत्। तदग्निर्व्यकरोत्। तानि शुक्रियाणि सामा-न्यभवन्। तेषां यो रसोऽत्यचरत्। तानि शुक्रयजूꣳष्यभवन्।

---

* G, I, चिह्नितपुस्तकद्वये "भ्यं"कार उदात्तः।

† उपतिष्ठत इति D चिह्नितपुस्तकपाठः।

शुक्रियाणां वा एतानि शुक्रियाणि। सामपयसं वा एतयो-रन्यत्। देवानामन्यत्पयः। यद् गोः पयः ॥१॥ तत्साम्नः पयः। यदजायै पयः। तद्देवानां पयः। तस्माद्यत्रैतैर्यजुर्भिश्चरन्ति। तत्पयसा चरन्ति। प्रजापतिमेव तद्देवान् पयसान्नाद्येन सम-र्द्धयन्ति।" इति। (५ प्र०।१०अ०।१म०)। पुरा कदाचित् 'देवाः', सर्व्वे 'प्रजापतिं', कामधेनुं कृत्वा 'शुक्रं पयः' प्रवर्ग्यरूपं क्षीरं, दुग्धवन्तः।'तत्' एकमेव, भूत्वा देवेभ्यः 'न व्यभवत्' बहूनां देवानामर्थे विविधं नाभूत्। अतः सर्वेषां भोगाय न पर्य्याप्तं, तदानीं 'अग्निः', 'तत्' एकं पयः, विविधं 'अकरोत्'। 'तानि' विविधानि पयांसि, 'शुक्रियाणि' प्रवर्ग्यसम्बन्धीनि, 'सामा-न्यभवन्'। 'तेषां' च पयोरूपाणां साम्नां, 'यो रसः', 'अत्यचरत्' तेभ्यः अस्रवत्, 'तानि' सामभ्यः स्रुतानि साराणि,'शुक्रयजूंषि' प्रवर्ग्यसम्बन्धिनो मन्त्राः, आसन्*। 'शुक्रियाणां' प्रवर्ग्यसम्बन्धिनां साम्नां, सम्बन्धीनि प्रवर्ग्ययोग्यानि 'एतानि' यजूंषि। इत्थं प्रव-र्ग्याङ्गमन्त्रोत्पत्तिरुक्ता, अथ द्रव्यमुच्यते, 'एतयोः' वक्ष्यमाणयोः द्वयोः पयसोर्मध्ये, 'अन्यत्' एकं, 'सामपयसं' साम्नां प्रियं क्षीरं, 'अन्यत्', 'यत्', 'देवानां', प्रियं। तदुभयं विभज्य प्रदर्श्यते। तत्र गव्यं सामदेवतायाः प्रियं, अजाक्षीरं देवानां प्रियं, यस्मादेवं मन्त्रोत्पत्तिः, क्षीरद्वयञ्च एतादृशं, 'तस्मात्', 'यत्र' कर्म्मणि, 'एतैः' 'यजुर्भिः' प्रवर्ग्यमन्त्रैः, 'चरन्ति' अनुतिष्ठन्ति। 'तत्' तत्र कर्म्मणि, द्विविधेन 'पयसा', 'चरन्ति'। शुक्रियमन्त्रैः क्षीरद्वयं

* अभवन् इति E, चिह्नितपुस्तकपाठः।

नुहुयात्, इति मन्त्रद्रव्यविशिष्टकर्म्मविधिरयं द्रष्टव्यः। तेन कर्म्मणा 'प्रजापतिं', 'देवान्', च अन्नसमृद्धान् कुर्व्वन्ति॥

तत्तद्वेदनं प्रशंसति। "एष इवै साचात् प्रवर्ग्यं भचयति। यस्यैवं विदुषः प्रवर्ग्यः प्रवृज्यते"। इति। (५प्र०।१०अ०। १म०)। 'एवं विदुषः' प्रवर्ग्यमाहात्म्यविदः, 'यस्य', 'प्रवर्ग्यं', अनुष्ठीयते, सः 'एषः' 'साचात्' मुख्यं, प्रवर्ग्यफलमनुभवति॥

तस्य प्रवर्ग्यस्य काम्यमुद्वासनदेशं विधत्ते। "उत्तरवेद्या- मुद्वासयेत् तेजस्कामस्य। तेजो वा उत्तरवेदिः॥२॥ तेजः प्रवर्ग्यः। तेजसैव तेजः समर्द्धयति"। इति। (५प्र०।१०अ०। ३म०)। उत्तरवेदेरग्न्याधारत्वात् प्रवर्ग्यहविषस्य तत्स्वरूप- त्वात् उभयोस्तेजस्त्वम्॥

तमेव देशं फलान्तराय विधत्ते। "उत्तरवेद्यामुद्वासये- दन्नकामस्य। शिरो वा एतद्यज्ञस्य। यत्प्रवर्ग्यः। मुखमुत्तर- वेदिः। शीर्ष्णैव मुखꣳ सन्दधात्यन्नाद्याय। अन्नाद एव भवति"। इति। (५प्र०।१०अ०।४म०)। प्रवर्ग्यस्य शिरोरूप- त्वादुत्तरवेदेः मुखत्वात्तत्रास्योद्वासने* सत्यन्नं भोक्तुं शिरसा मुखस्य साधनं† कृतं भवति। ततोऽयं 'अन्नादो भवत्येव'॥

उत्तरवेद्यामुद्वासनं प्रशंसति। "यत्र खलु वा एतमुद्वा- सितं वयाꣳसि पर्य्यासते। परि वै ताꣳ समां प्रजा वयाꣳ- स्यासते॥३॥ तस्मादुत्तरवेद्यामेवोद्वासयेत्। प्रजानां गोपी-

---

* मुखत्वात्र तत्र तस्योद्वासने इति F, H, चिह्नितपुस्तकद्वयपाठः।

† सन्धानमिति F, चिह्नितपुस्तकपाठः।

स्थाय"। इति। (५प्र०।१०अ०।५म०)। 'यत्र' यस्मिन् संवत्सरे, कस्मिंश्चिद्देशविशेषे, 'उद्वासितं', 'एतं' प्रवर्ग्यं, 'वयाꣳसि' पक्षिणः, 'पर्य्यासते' परित आगत्योपविशन्ति, 'ताꣳ समां' तं संवत्सरं सर्व्वमपि, पक्षिणः, 'प्रजाः' पुत्रादीन्, 'पर्य्यासते' पुत्रादिशवदेहेषु प्रविशन्ति, प्रजा म्रियन्त इत्यर्थः। अतस्तेजोऽस्थकामराहित्येऽपि प्रजारक्षणार्थं, 'उत्तरवेद्यामेवोद्वासयेत्' ॥

तत्रापि देशविशेषं विकल्पितं विधत्ते। "पुरो वा पश्चादोद्वासयेत्। पुरस्ताद्वा एतज्ज्योतिरुदेति। तत्पश्चान्निम्लोचति। स्वामेवैनं योनिमनूद्वासयति"। इति॥ (५प्र०।१०अ०। ६म०)। उत्तरवेदेः पूर्व्वभागे पश्चिमभागे वा प्रवर्ग्यं 'उद्वासयेत्'। प्रवर्ग्यस्वरूपं इदं आदित्य'ज्योतिः', 'पुरस्तात्', 'उदेति', 'पश्चात्', अस्तमेति। ततस्तयोरुभयोरपि तदीयस्थानत्वात् स्वकीयमेव स्थानं 'अनु'सृत्य 'उद्वासयति' ॥

अन्यं देशविशेषं विधत्ते। "अपां मध्य उद्वासयेत्। अपां वा एतन्मध्याज्ज्योतिरजायत। ज्योतिः प्रवर्ग्यः। स्व एवैनं योनौ प्रतिष्ठापयति" इति ॥ ४ ॥ (५प्र०।१०अ०।७म०)। 'एतत्' और्व्वविद्युत्स्वरूपं,* 'ज्योतिः', 'अपां मध्यादजायत'। 'प्रवर्ग्यः', च 'ज्योतिः'स्वरूपः। तस्मात् 'एनं' प्रवर्ग्यं, स्वकीय एव स्थाने 'प्रतिष्ठापयति' ॥

देशान्तरं विधत्ते। "यं द्विष्यात्। यत्र स स्यात्। तस्यां

---

* 'एतत्' वैद्युतस्वरूपमिति E, चिह्नितपुस्तकपाठः। 'एतत्' और्व्ववैद्युतस्वरूपमिति H, चिह्नितपुस्तकपाठः।

दिश्युद्वासयेत्। एष वा अग्निर्वैश्वानरः। यत्प्रवर्ग्यः। अग्निनैवेनं वैश्वानरेणाभिप्रवर्त्तयति*"। इति। (५प्र०।१०अ०।८म०)। यजमानः 'यं'† पुरुषं, 'द्विष्यात्', 'सः' द्वेष्यः, यस्यां दिशि तिष्ठति, 'तस्यां दिशि', प्रवर्ग्यं 'उद्वासयेत्'। प्रवर्ग्यस्य वैश्वानराग्निरूपत्वात् 'एनं' द्वेष्यं, 'अभि'लक्ष्य वैश्वानराग्निनैव 'प्रवर्त्तयति'। तेनाग्निना तमभितो दहतीत्यर्थः‡॥

तत्रैव कश्चिद्विशेषं विधत्ते। "औदुम्बर्य्याꣳ शाखायामुद्वासयेत्। ऊर्ग्वा उदुम्बरः। अन्नं प्राणः। शुग् घर्म्मः॥५॥ इदमहममुष्यामुष्यायणस्य शुचा प्राणमपि दहामीत्याह। शुचैवास्य प्राणमपि दहति। ता जगार्त्तिमार्च्छति"। इति। (५प्र०।१०अ०।९म०)। उदम्बरवृक्षस्य येयं शाखा तस्यां प्रवर्ग्यं 'उद्वासयेत्'। उदुम्बरस्यान्नरूपत्वात्, अन्नस्य प्राणस्थितिहेतुत्वात्, घर्म्मस्य च सन्तापरूपत्वात्, तदनुसारेणोद्वासनकाले इदमित्यादिमन्त्रं पठेत्। 'अमुष्यायणस्य' देवदत्तपुत्रस्य, 'अमुष्य' यज्ञदत्तस्य, 'प्राणं' 'इदं' प्रत्यक्षं यथा भवति तथा, 'शुचा' सन्तापेन, 'अपि', 'दहामि' सर्व्वतो दग्धं करोमि। एतन्मन्त्रपाठेन 'अस्य' द्वेष्यस्य, 'प्राणं', सन्तापेन 'दहति', एव। तदानीमेवासौ 'आर्त्तिं', प्राप्नोति॥

देशान्तरं विधत्ते। "यत्र दर्भा उपदीकसन्तताः स्युः। त-

---

* वैश्वानरेणातिप्रवर्त्तयति इति F, H, चिह्नितपुस्तकद्वयपाठः।

† वक्ष्यमाणोऽयमिति D, F, H चिह्नितपुस्तकत्रयपाठः।

‡ हरतीत्यर्थः इति D चिह्नितपुस्तकपाठः।

दुद्वासयेद् वृष्टिकामस्य । एता वा अपामनुज्ञावर्य्या* नाम ।
यद्दर्भाः । असौ खलु वा आदित्य इतो वृष्टिमुदीरयति ।
असावेवास्मा आदित्यो वृष्टिं नियच्छति । ता आपो नियता
धन्वना यन्ति" इति ॥६॥ (५प्र०१०अ०१०म०)। यस्मि-
न्देशे 'दर्भाः', 'उपदीकसन्तताः' स्तम्बैरविच्छिन्नाः,† भवन्ति ।
वृष्टिकामः तत्र 'उद्वासयेत्' । य एते दर्भाः 'एताः', एव 'अपां',
'अनुज्ञावर्य्याः' इत्येतन्नामभाजो भवन्ति, 'अनुज्ञाः' अनुक्रम-
गताः प्रवाहाः, तद्युक्ता नद्यः 'अनुज्ञावर्य्याः' । आपो वै दर्भा
इति श्रुत्यन्तरात् दर्भाणामविच्छिन्नप्रवाहोपेतनदीरूपत्वं । प्रव-
र्ग्यस्यादित्यरूपत्वादादित्यवद् वृष्टिप्रदः । अतो दर्भेषु तदु-
द्वासने सति 'आदित्यः', द्युलोकाद् 'वृष्टिं', प्रेरयति । 'ताः'
च 'आपः', 'धन्वना' मरुदेशेन सह, 'नियताः', प्रवर्त्तन्ते ॥

गोः पयः, उत्तरवेदिः, आसते, स्नापयति, घर्माः, यन्ति ॥

इति पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-
रण्यके चतुर्थप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

---

* अपामनूझ्झावर्य्ये इति B, E, G, I, चिह्नितपुस्तकचतुष्टयपाठः ।
अपामनूमस्यावर्य्ये इति J, चिह्नितपुस्तकपाठः ।

† स्तम्ब एव विच्छिन्ना इति D चिह्नितपुस्तकपाठः । स्तम्भरवि-
च्छिन्ना इति E चिह्नितपुस्तकपाठः ।

अथ द्वादशोऽनुवाकः ।

(१)मह्नीनां पयोऽसि विहितं देवत्रा(१) । (२)ज्योतिर्भा असि वनस्पतीनामोषधीनाꣳ रसः(२) । (३)वाजिनं त्वा वाजिनोऽवनयामः । ऊर्द्ध्वं मनः सुवर्गं(३)॥ अनु० १२ ॥

---

अथ द्वादशोऽनुवाकः ।

एकादशे प्रवर्ग्योद्वासनमुक्तं । तत्र महावीरे द्रव्यपूरणावसरे* घर्मैतत्तेऽन्नमिति† मन्त्रात् पूर्व्वं त्रयो मन्त्रा अपेक्षिताः, ते अत्र द्वादशे अभिधीयन्ते । कल्पः । मह्नीनां पयोऽसीति महावीरे गोपय आनयतीति विहितं, देवत्रेति मन्त्रशेषः । (१ मन्त्रः) । हे द्रव्य 'देवत्रा' देवनिमित्तं,‡ 'विहितं' सम्पादितं, 'मह्नीनां' गवां, 'पयः', 'असि' ॥

कल्पः । ज्योतिर्भा असि वनस्पतीनामोषधीनाꣳ रस इति मध्विति महावीर आनयतीत्यनुवर्त्तते । (२ मन्त्रः) । हे मधुद्रव्य 'वनस्पतीनां', 'ओषधीनां', च 'रस'भूतस्त्वं 'ज्योतिर्भाः' ज्योतिषां प्रकाशकः, 'असि' ॥

कल्पः । वाजिनं त्वा वाजिनो वनयाम इति दधीनि महावीर आनयतीत्यनुवर्त्तते । ऊर्द्ध्वं मनः सुवर्गमिति मन्त्रशेषः । (३ मन्त्रः) । 'ऊर्द्ध्वं' उपरिवर्त्तमानं, 'मनः' मननीयं,

---

* निरूपणावसरे इति E चिह्नितपुस्तकपाठः ।

† ५०७ पृष्ठे द्रष्टव्यम् ।

‡ देवेषु देवनिमित्तमिति E चिह्नितपुस्तकपाठः ।

अथ त्रयोदशोऽनुवाकः ।

(१)अस्कान् द्यौः पृथिवीं । अस्कान्दृषभो युवा गाः । स्कन्नेमा विश्वा भुवना । स्कन्नो यज्ञः प्रजनयतु(१) । (२)अस्कानजनि प्राजनि । आ स्कन्नाज्जायते वृषा । स्कन्नात् प्रजनिषीमहि(२) ॥ अनु० १३ ॥

---

स्वर्गं प्राप्नुम्, हे दधिद्रव्य, 'वाजिनं' अन्नवन्तं, त्वां 'वाजिनः' अन्नवन्तो वयं, 'अवनयामः' महावीरे प्रक्षिपामः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

अथ त्रयोदशोऽनुवाकः ।

त्रयोदशमारभ्य प्रायेण घर्मप्रायश्चित्ताः *उच्यन्ते । कल्पः । यदि घर्मं स्कन्देत्, अस्कान् द्यौः पृथिवीमिति द्वाभ्यामभिमन्त्रयते इति । तत्र प्रथमामाह । (१)"अस्कान् द्यौः पृथिवीं । ०स्कन्नो यज्ञः प्रजनयतु"(१) इति । 'द्यौः' द्युलोकाख्यो देवः, 'पृथिवीं', देवतां प्रति 'अस्कान्' स्ववीर्य्यं स्कन्दितवान् । तथा 'युवा' यौवनोपेतः, 'वृषभः', 'गाः', बह्वीः† प्रति 'अस्कान्' स्वकीयं वीर्य्यं स्कन्दितवान् । 'इमा विश्वा भुवना' एतानि

---

* त्रयोदशमारभ्य त्रयो घर्मप्रायश्चित्ता इति E चिह्नितपुस्तकपाठः ।
† वर्ह्वीः इति D चिह्नितपुस्तकपाठः ।

अथ चतुर्दशोऽनुवाकः।

या पुरस्ताद्विद्युदापतत्। तां त एतेनावयजे स्वा-

---

सर्व्वाणि भूतजातानि, 'स्कन्ना' स्कन्नवीर्य्यरूपाणि। अतो-ऽत्रापि 'स्कन्नः' द्रव्यस्कन्दनयुक्तः,* 'यज्ञः', 'प्रजनयतु' प्रजा-मुत्पादयतु॥

अथ द्वितीयामाह। (१)"अस्कानजनि प्राजनि। ० स्कन्नात् प्रजनिषीमहि"(१) इति। 'अस्कान्' द्रव्यं स्कन्नमभूत्, तेन 'अजनि' किञ्चिदपत्यमुत्पन्नं। 'प्राजनि' प्रकर्षेणापत्यस्य अपत्य-मुत्पन्नं। 'स्कन्नात्', द्रव्यात् 'वृषा' सेचनसमर्थः पुत्रः, 'आजा-यते'। अतो वयं 'स्कन्नात्' द्रव्यात्, 'प्रजनिषीमहि' प्रक-र्षेणापत्यमुत्पादयामः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-रण्यके चतुर्थप्रपाठके त्रयोदशोऽनुवाकः॥ १३॥

---

अथ चतुर्दशोऽनुवाकः।

कल्पः। यदि घर्म्मेण चरत्सु विद्युदापतेत् या पुरस्ता-द्विद्युदापतदिति। एतैर्यथालिङ्गं जुहुयादिति। पाठस्तु। "याः पुरस्ताद्विद्युदापतत्। ० तां त एतेनावयजे स्वाहा" इति। 'या' 'विद्युत्' अशनिरूपा, 'पुरस्तात्' पूर्व्वस्यां दिशि, 'आपतत्' पतितवती, इति 'तां' विद्युतं, 'ते' तव, सम्बन्धिना

---

* स्कन्नद्रव्ययुक्त इति E चिह्नितपुस्तकपाठः।

हा। या दक्षिणतः। या पश्चात्। योत्तरतः। योपरि-
ष्टाद्विद्युदापतत्। तां त एतेनावयजे स्वाहा॥
अनु० १४॥

अथ पञ्चदशोऽनुवाकः।

प्राणाय स्वाहा व्यानाय स्वाहाऽपानाय स्वाहा।
चक्षुषे स्वाहा श्रोत्राय स्वाहा। मनसे स्वाहा
वाचे सरस्वत्यै स्वाहा॥ अनु० १५॥

---

'एतेन' होमेन, 'अवयजे' नाशयाम*। अत्र त इत्यभिधाना-
द्धर्मः सम्बोधनीयः। या दक्षिणत इत्यादिषु त्रिषु विद्युदि-
त्यादिकमनुषञ्जनीयं। अनुषङ्गद्योतनायैवोत्तरे मन्त्रे पुनः
पठ्यते॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजु-
रारण्यके चतुर्थप्रपाठके चतुर्दशोऽनुवाकः॥ १४॥

अथ पञ्चदशोऽनुवाकः।

कल्पः। प्राणाय स्वाहा पूष्णे स्वाहेत्येतावनुवाकौ घर्म
प्रायश्चित्तानीति घर्मविषये यदेकत्वं तद्वारयितुमनुवाकद्वय-
होमः। तत्रैकमनुवाकमाह। "प्राणाय स्वाहा व्यानाय स्वाहा

---

* नाशयामि इति D चिह्नितपुस्तकपाठः।

अथ षोडशोऽनुवाकः।

पूष्णे स्वाहा पूष्णे शरसे स्वाहा। पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा। पूष्णेऽङ्घृणये स्वाहा पूष्णे नरुणाय स्वाहा। पूष्णे साकेताय स्वाहा॥
अनु० १६॥

० वाचे सरस्वत्यै स्वाहा" इति। 'वाक्'शब्देन वक्तव्यशब्दमात्रत्वशङ्कां वारयितुं देवतावाचकस्य सरस्वतीशब्दस्य प्रयोगः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके पञ्चदशोऽनुवाकः॥ १५॥

अथ षोडशोऽनुवाकः।

अनुवाकान्तरमाह। "पूष्णे स्वाहा पूष्णे शरसे स्वाहा। ० पूष्णे साकेताय स्वाहा" इति। पोषको देवः 'पूषा', स एव विशेषणभेदाद्भिद्यते। 'शरसे' शत्रूणां हिंसकाय, 'प्रपथ्याय' प्रकृष्टस्वर्गमार्गहिताय, नरान् मनुष्यान्, धिनोति प्रीणयतीति 'नरन्धिषः', तस्मै। 'अङ्घृणिः' रश्मिनेन दीप्यमानः, तस्मै। नृनय इति धातोर्नरुणशब्दः प्राणिनां स्वस्वमार्गेषु नेता 'नरुणः', तस्मै। आसमन्तात् ज्ञानमाकेतः तेन सह वर्त्तत इति 'साकेतः', तस्मै॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके षोडशोऽनुवाकः॥ १६॥

अथ सप्तदशोऽनुवाकः ।

उदस्य शुष्माद्भानुर्नार्त्त बिभर्त्ति । भारं पृथिवी न* भूम । प्र शुक्रैतु देवी मनीषा । अस्मत् सुतष्टो रथो न वाजी । अर्चन्त एके महि साम मन्वत† । तेन

---

अथ सप्तदशोऽनुवाकः ।

कल्पः । घर्म्मेष्टकामुपदधात्युदस्य शुष्माद्भानुरित्यनुवाकेनेति । एतच्च महाग्निचयने द्रष्टव्यं । तथा च तत्र सूत्रकारेणोक्तं । घर्म्मेष्टकामुपधाय कुलायिनी तयोः प्रवर्ग्ये मन्त्राविति । पाठस्तु । "उदस्य शुष्माद्भानुर्नार्त्त विभर्त्ति । • तथा देवतयाङ्गिरस्वद्ध्रुवा सीद" इति । 'भानुः' सूर्य्यः, 'अस्य' अग्नेः, 'शुष्मात्' बलात्, 'उत्' एति, उच्छब्देनाकाङ्क्षितत्वात् एतीत्यध्याहर्त्तव्यः । स च भानुः 'नार्त्त' आर्त्तिं न प्राप्तः, पुनः पुनः उदयङ्गच्छतोऽप्यग्निबलसाहाय्यादार्त्तिस्तस्य न विद्यते । 'पृथिवी न' भूमिरिव, भूमिप्रयातं 'भारं', 'बिभर्त्ति' । यथा पृथिवी प्राणिनां भारं सहते तथा अयं रश्मिभारं सहते । तस्य अग्नेः प्रसादात् 'शुक्रा' निर्म्मला, 'मनीषा' 'देवी' कर्म्मणि मनः प्रेरयन्ती देवता, प्रकर्षेण 'एतु' प्राप्नोतु । किन्निमित्तमिति एतदुच्यते, 'अस्मत्' निमित्तार्थे, पञ्चमी, अस्माननुगृहीतु-

---

* पृथिम इति E चिह्नितपुस्तकपाठः ।

† मन्मती इति D, F चिह्नितपुस्तकद्वयपाठः ।

सूर्य्यमधारयन्। तेन सूर्य्यमरोचयन्। घर्म्मः शिर-स्तदयमग्निः। पुरीषमसि सम्प्रियं प्रजया पशुभिर्भु-वत्। प्रजापतिस्त्वा सादयतु। तया देवतयाङ्गिर-स्वद्ध्रुवा सीद॥ अनु० १७॥

---

मित्यर्थः। वृद्धिप्राप्तौ दृष्टान्तः। 'सुतष्टः' वर्धकिना सुष्टु-तक्षणेन निष्पादितः, 'वाजी' वेगवान्, 'रथो न' रथ इव, 'एके' महात्मानः, तं अग्निं 'अर्चन्तः'। 'महि' पूजार्हं, 'साम' सर्व्वेषु समं, 'मन्वत' मनसि निश्चितवन्तः। 'तेन' अग्नि-तेजसा, 'सूर्य्यं', 'अधारयन्' पोषितवन्तः। उद्यन्तं वावादि-त्यमग्निरनुसमारोहतीति श्रुतं, 'तेन' अग्नितेजसा, 'सूर्य्यं', 'अरोचयन्' आदीप्तियुक्तमकुर्व्वन्। 'घर्म्मः शिरः' यदिदं प्रवर्ग्य-रूपं यज्ञस्य शिरोऽस्ति, 'तदयं' चीयमानः, 'अग्निः', एव। अतो हे अग्ने, त्वं 'पुरीषं' इष्टकोपादान* मृत्स्वरूपं, 'असि'। तच्च स्वरूपं 'प्रजया पशुभिः', 'सम्', एत्य 'प्रियं भुवत्' यजमा-नानां प्रियं भवति। तथाविधाग्निरूपे हे घर्म्मेष्टके 'प्रजापतिः', त्वां अत्र चित्ते 'सादयतु' स्थापयतु। 'अङ्गिरस्वत्' अङ्गिरो-भिरिव, 'तया' प्रजापतिदेवतया, उपहिता सती 'ध्रुवा सीद' स्थिरा भूत्वा तिष्ठ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजु-रारण्यके चतुर्थप्रपाठके सप्तदशोऽनुवाकः॥ १७॥

---

* इष्टकोपधानेति E चिह्नितपुस्तकपाठः।

अथाष्टादशोऽनुवाकः ।

यास्ते॑ अग्न आ॒र्द्रा योन॑यो॒ याः कु॑ला॒यिनीः॑ । ये ते॑ अग्न॒ इन्द॑वो॒ या उर्णना॒भ॑यः* । यास्ते॑ अग्ने त॒नुव॒ ऊर्ज्जो॒ नाम॑ । ताभि॒स्त्वमु॒भयी॑भिः संविदा॒नः । प्र॒जा-भि॑रग्ने॒ द्रवि॑णे॒ह सी॑द । प्र॒जाप॑तिस्त्वा सादयतु । तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वा सी॑द ॥ अनु० १८ ॥

---

अथाष्टादशोऽनुवाकः ।

कल्पः । कुलायिनीं यास्ते आर्द्रा योनय इत्यनुवाकेनेति, उपदधातीत्यनुवर्त्तते । पाठस्तु । "यास्ते अग्न आर्द्रा योनयो याः कुलायिनीः । ० तया देवतयाङ्गिरस्वद्ध्रुवा सीद" इति । हे 'अग्ने', 'ते' त्वदीया, 'आर्द्राः योनयः' अश्वत्थवृक्षादि-रूपाः, 'आर्द्राः' कारणविशेषाः, सन्ति । अश्वत्थाद्धव्यवाहाद्धि-जातामग्नेस्तनुं यज्ञियाꣳ सम्भरामीति श्रुतेः । 'याः' च 'कुला-यिनीः' आहवनीयादिस्थानविशेषाः सन्ति । हे 'अग्ने', 'ते' त्वदीयाः, 'इन्दवः' चन्द्रप्रभृतयः स्थानविशेषाः, 'ये', सन्ति । 'या उर्णनाभयः' यास्तोर्णनाभ्यादिस्थानविशेषाः सन्ति । हे 'अग्ने', 'ते' त्वदीया, 'याः' च अन्याः,'तनुवः', 'ऊर्जो नाम' ओषध्यादिपाचकत्वेनोर्ङ्नामधारिण्यः सन्ति । 'ताभिः' स-

---

* या उनाभय इति A, B, G, I, J, चिह्नितपुस्तकपञ्चकपाठः ।

अथैकोनविंशोऽनुवाकः।

अग्निर॑सि वैश्वान॒रो॑ऽसि। सं॒व॒त्स॒रो॑ऽसि परि॒वत्स॒रो॑ऽसि। इ॒दा॒व॒त्स॒रो॑ऽसीदुवत्स॒रो॑ऽसि। इ॒द्व॒त्स॒रो॑ऽसि वत्स॒रो॑ऽसि। तस्य॑ ते वस॒न्तः शिर॑ः। ग्री॒ष्मो दक्षि॑णः प॒क्षः। व॒र्षाः पुच्छ॑म्। श॒रदुत्त॑रः प॒क्षः। हे॒म॒न्तो मध्य॑म्। पू॒र्व॒प॒क्षाश्चित॑यः। अ॒प॒र॒प॒क्षाः पुरी॑षम्। अ॒हो॒-

---

र्व्वाभिः, युक्तः 'त्वं', 'उभयीभिः' दैवीभिर्मानुषीभिश्च, 'प्रजाभिः', 'संविदानः' ऐकमत्यं गतः त्वं* 'इह' चेत्रे, 'द्रविण' अस्माकं धननिमित्तं, हे 'अग्ने', 'सीद' तिष्ठ, प्रजापतिरित्यादि पूर्व्ववत् ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

अथैकोनविंशोऽनुवाकः।

कल्पः। अध्वर्य्युरग्निमभिमृशति अग्निरसि वैश्वानरोऽसीत्यनुवाकेनेति। पाठस्तु। "अग्निरसि वैश्वानरोऽसि। ० तया देवतयाङ्गिरस्वद्ध्रुवा सीद" इति। इष्टकाभिर्निष्पन्न हे देव त्वं 'अग्निरसि', अङ्गारैर्विना इष्टकाशरीरमात्रेणैव अग्निस्त्वं।

---

* गतः सन् इति E चिह्नितपुस्तकपाठः।

रा॒त्राणीष्ट॑काः। तस्यं ते॒ मासा॑श्चार्द्धमा॒साश्च॑ कल्पन्ताम्। ऋ॒तव॑स्ते कल्पन्ताम्। सं॒व॒त्स॒रस्ते॑ कल्पताम्। अ॒हो॒रा॒त्राणि॑ ते कल्पन्ताम्। एति॒ प्रेति॒ वीति॒ समित्युदिति॑। प्र॒जाप॑तिस्त्वा सादयतु। तया॑ दे॒वत॑याङ्गिर॒स्वद्ध्रु॒वः सी॑द॥ अनु॰ १९॥

---

'वैश्वानरः' विश्वेषां नराणां उपकारकः, 'असि'। प्रभवादीनामेकैकपञ्चके वर्त्तमानाः शब्दाः* संवत्सरादयः, सर्व्वेष्वनुगतो वत्सरः, त्वमेवं षड्विधः 'असि'। 'तस्य' तथाविधस्य, 'ते' ऊर्जरूपस्य, वसन्ताद्यृतवः 'शिरः' आद्यवयवाः, चैत्रादिमासेषु ये शुक्लपक्षाः ते चितिरूपाः। ये च कृष्णपक्षाः ते पुरीषरूपाः। यान्यहोरात्राणि तानीष्टकारूपाणि। 'तस्य ते' तादृशस्य तव, मासादयः स्वस्वकार्य्यक्षमा भवन्तु। इतिशब्दशिरस्काः आ,प्र,वि,सम्,उदः, उपसर्गाः अत्र निर्द्दिष्टाः, तैरुपसर्गाः अत्र निर्द्दिष्टाः, तैरु-पितक्रियां संयोज्य अग्निहोत्रं स्तोतव्यं† इति तात्पर्य्यार्थः। उचितक्रियाणां च बह्वीनां सम्भवात् महती स्तुतिः सम्पद्यते। प्रजापतिरित्यादि पूर्व्ववत्। अग्निविशेषणत्वाद् ध्रुव इति लिङ्गनिर्द्देशः॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके एकोनविंशोऽनुवाकः॥१९॥

---

* अब्दा इति E चिह्नितपुस्तकपाठः।

† अग्निस्तोतव्य इति D, E चिह्नितपुस्तकद्वयपाठः।

अथ विंशोऽनुवाकः।

(१)भूर्भुवः सुवः(१)। (२)ऊर्ध्व ऊषुणं ऊतये। ऊर्ध्वो नः पाह्यꣳहसः(२)। (३)विधुन्दद्राणꣳ समने बहूनां। युवानꣳसन्तम्पलितो जगार। देवस्य पश्य काव्यं महित्वा-

अथ विंशोऽनुवाकः।

(१)"भूर्भुवः सुवः" (१)इति सर्वप्रायश्चित्तानीति। त्रयो लोकाः सुखप्रदा भवन्त्विति मन्त्रत्रयस्यार्थः॥

कल्पः। यदि महावीरः पद्येत ऊर्ध्व ऊषुण ऊतय इति द्वाभ्यामिति। पाठस्तु। "(२)ऊर्ध्व ऊषुण ऊतये, ऊर्ध्वो नः पाह्यꣳहसः," (२)इति। एतच्च मन्त्रयोः प्रतीकद्वयं। तौ च मन्त्रावञ्जन्ति त्वामध्वरे देवयन्त इत्यनुवाके व्याख्यातौ॥

कल्पः। यदि भिद्येत विधुन्दद्राणमिति सन्दध्यादिति*। पाठस्तु। (३)"विधुन्दद्राणꣳ समने बहूनां। ० स ह्यः समान"(३) इति। 'बहूनां' कर्मणां, 'समने' समीचीनचेष्टारूपे अनुष्ठाने, 'दद्राणं' भूयःप्रवर्त्तमानं, 'विधुं' अनुष्ठानस्य विधातारं महावीरं, 'युवानं' यौवनोपेतपुरुषवद्दृढं, एवं 'सन्तं,' 'पलितः' वयोहीन-सदृशः† शैथिल्यविशेषः, 'जगार' निगीर्णवान् 'देवस्य' जग-द्विधातुः परमेश्वरस्य, 'काव्यं' ‡अभिज्ञानरूपं, 'महित्वा' महिमानं, 'सः' महावीरः, 'ह्यः' पूर्वेद्युः, 'समान' सम्यक् चेष्टितवान्। 'अद्य'

* सन्दध्यादिति E चिह्नितपुस्तकपाठः।

† वयोहानिसदृश इति F चिह्नितपुस्तकपाठः।

‡ काम्यं इति E चिह्नितपुस्तकपाठः।

ऽध्या ममार। स ह्यः समान[३]। [४]यद्दृते चिदभिश्रिषः।
पुरा जर्तृभ्य आतृदः। सन्धाता सन्धिं मघवा पुरो-
वसुः ॥ १ ॥

निष्कर्ता विह्रुतं पुनः[४]। [५]पुनरूर्जा सह रय्या[५]।

---

'पश्य' हे जनसमूह अवलोकय। किन्तन्माहात्म्यमिति तदुच्यते। अस्मिन् दिने, 'ममार' भग्नोभूत्,* ईदृशं खल्वीश्वरस्य माहात्म्यं॥

कल्पः। ततो यानि दृढार्थं संश्लेषणानि स्युः तैरेनमभिसन्दृह्यात् यदन्यन्माषान्माषेभ्यश्च। यद्दृते चिदभिश्रिष इति भिन्नं महावीरं विधुन्दद्राणमिति मन्त्रेण सन्धाय यद्दृते चिदितिमन्त्रेण संश्लेषणसाधनैरुपलिम्पेत्। पाठस्तु। [४]"यद्दृते चिदभिश्रिषः। ० निष्कर्त्ता विह्रुतं पुनः" [४]इति। 'यत्' महावीरस्वरूपं, 'जर्तृभ्यः पुरा' कपालजरणेभ्यः† कपालानाञ्चूर्णीभावेभ्यः पूर्वं, 'अभिश्रिषः ऋते' अभितः संश्लेषणसाधनानि द्रव्याणि विना, 'आतृदः'‡ तर्दनम्भङ्गं प्राप्नोत्। तस्य महावीरस्य 'मघवा' इन्द्रः, 'सन्धिं' सन्धानं, करिष्यति। कीदृशो मघवा, 'पुरोवसुः' पुरतोऽवस्थितानि वसूनि संश्लेषणसाधनानि द्रव्याणि यस्यासौ पुरोवसुः, इत्थं स इन्द्रः 'विह्रुतं' विशेषेण भग्नं महावीरं, 'पुनर्निष्कर्त्ता' पुनरपि सम्पादयिष्यति॥

---

* महावीरो भग्नो भूदिति E चिह्नितपुस्तकपाठः।

† कपालच्चरणेभ्य इति D चिह्नितपुस्तकपाठः।

‡ आतृद इति D, F, चिह्नितपुस्तकद्वयपाठः।

(१)मा नो॑ घर्म व्यथि॒तो वि॑व्यथो नः। मा नः॒ पर॒मध॑र॒ं मा रजो॒ऽनैः। मा स्व॒स्मा॒ꣳस्त॒मस्य॑न्तरा॒धाः। मा रु॒द्रियासो अ॒भिगु॑र्वृ॒धानः॑(१)।(७)मा नः॒ क्रतु॑भिर्ही॒डि॒तेभि॑र॒स्मान्।

कल्पः। यदि घर्मं प्रतिपरीयुः, न वा प्रतिपरीयुः, पुनरूर्जा-सह रय्येति" (५)मन्त्रः। एताभ्यामेनं प्रतिपरीयुरिति त्रिः परिषिञ्चन् पर्येतीति यदुक्तं, तत्राधिकपर्यावर्त्तने त्रिः पुनः परियन्तीति विपरीतावर्त्तनं यदुक्तं, तदकरणेऽप्येतत् प्रायश्चित्तं। तत्र मन्त्रयोर्यदिदं * प्रतीकद्वयं, पुनरूर्जा निवर्त्तस्वेत्येको मन्त्रः, सह रय्या निवर्त्तस्व इत्यपरो मन्त्रः, एतावुभावपि भूमिर्भूम्नेत्यत्र † व्याख्यातौ॥

कल्पः। मा नो घर्म व्यथित इत्यष्टौ घर्मे व्यथिते प्रायश्चित्तानीति। घर्मस्याज्यपयोरूपद्रव्यस्य व्यथनं चलनं सन्तापाधिक्येन पात्रस्योपरि उद्गमने सति एतत्प्रायश्चित्तं। तत्र प्रथमामृचमाह। (१)"मा नो घर्म व्यथितो विव्यथो नः। ० मा रुद्रियासो अभिगुर्वृधानः" (१)इति। 'नः' अस्मदीय, हे 'घर्म' हविर्द्रव्य, त्वं 'व्यथितः' चलितो भूत्वा, 'नः' अस्मान्, 'मा विव्यथः' स्वस्थानान्मा विचालय। 'नः' अस्माकं, 'परं' उत्कृष्टं कर्म, 'अधरं' निकृष्टं, 'मा', कुरु। 'रजो मा अनैः' अस्मान् रजोगुणं मा प्रापय,। तथा 'तमस्यन्तः' तमोगुणमध्ये, 'अस्मान्', सुष्ठु 'मा आधाः' मा स्थापय। 'वृधानः' वर्धमाना उद्भ्रान्ताः, 'रुद्रियासः' रुद्रसम्बन्धिनः क्रूरदेवाः, 'मा अभिगुः' अस्मिन् कर्मण्याभिमुख्येन मा आगच्छन्तु।

* मन्त्रयोरुदितमिति D चिह्नितपुस्तकपाठः।

† भूमिर्भूम्नेत्यत्रानुवाके इति E चिह्नितपुस्तकपाठः।

द्विषा सुनीते मा परादाः। मा नो रुद्रो निर्ऋतिर्मा नो अस्ता। मा द्यावापृथिवी हीडिषातां(७) ॥ २ ॥

(८)उप नो मित्रावरुणाविहावतं। अन्वादीध्याथामिह नः सखाया। आदित्यानां प्रसितिर्हेतिः। उग्रा शता पाष्ठाऽघ विषा परि णो वृणक्तु(८)।

---

अथ द्वितीयामाह। "(७)मा नः क्रतुभिर्हीडितेभिरस्मान्। ० मा द्यावापृथिवी हीडिषातां" (७)इति। हे घर्म 'हीडितेभिः' अपराधयुक्तैः, 'नः' अस्मदीयैः, 'क्रतुभिः,' कुपितस्त्वं 'अस्मान्' यजमानान्, 'द्विषा' द्वेषेण, 'सुनीते' सुष्ठु सम्पादिते फले, 'मा परादाः' निराकरणं मा कुरु,। एतावन्तङ्कालं महता क्लेशेन सम्पादितकर्मफलमीषदपराधद्वेषेण मा विनाशयेत्यर्थः। तथा 'रुद्रः' क्रूरो देवः, 'नः' अस्मान्, 'मा अस्ता' मैव अस्यतु, मा निराकरोतु। 'निर्ऋतिः' अपि राक्षसदेवता, 'नः' अस्मान्, 'मा अस्ता' मा अस्यतु, मा निराकरोतु। 'द्यावापृथिव्यावपि देवते 'मा हीडिषातां' अस्मद्विषये क्रोधमाकुरुतां ॥

अथ तृतीयामाह। (८)"उप नो मित्रावरुणाविहावतं। ० पाष्ठाऽघ विषा परिणो वृणक्तु"(८) इति। हे 'मित्रावरुणौ,' 'नः' अस्मान्, धर्मापराधरहितान, 'इह'कर्मणि, 'उपावतं' उपेत्य रक्षतं। हे 'सखाया' सखिवदत्यन्तस्निग्धौ युवां, 'इह' कर्मणि, 'नः' अस्मान्,

(९)इमं मे वरुण तत्त्वायामि। त्वन्नोऽअग्ने स त्वन्नोऽअग्ने। त्वमग्ने अयासि(९)। (१०)उद्वयन्तमसस्परि। उदुत्यञ्चित्रं। वयः सुपर्णाः(१०) ॥ ३ ॥

पुरोवसुः, इडोडिषाताः, सुपर्णाः ॥ अनु० २० ॥

---

'अग्न्यादीध्यायां' अनुक्रमेण सर्वतो दीप्तान् कुरुतं। 'आदित्यानां,' सम्बन्धिनी 'हेतिः' पापिषु हिंसाकारणमायुधं, 'नः' अस्मान्, 'परिवृणक्तु' सर्वतो वर्जयतु। कीदृशी हेतिः, 'प्रसितिः' प्रकृष्टबन्धा,* 'उग्रा' 'तीक्ष्णाघाता, 'पाष्ठा' बहुस्पर्शा, बहुभिरवयवैः प्रहर्त्तुं समर्थेत्यर्थः†। 'विषा' व्यापिनी, । 'अद्य'शब्दो यथोक्तविशेषणसमुच्चयार्थः ॥

चतुर्थादीनामष्टमान्तानाम्पञ्चानाम्प्रतीकानि दर्शयति। "(९) इमं मे वरुण तत्त्वा यामि। ० त्वमग्ने अयासि(९)"। तत्राद्यं मन्त्रद्वयं इन्द्रं वो विश्वतस्परीश्वर इत्यत्र व्याख्यातं। अनन्तरन्तु मन्त्रद्वयमायुष्ट आयुर्दा अग्न इत्यत्र व्याख्यातं। अन्तिमो जुष्टो दमूना इत्यत्र व्याख्यातः ॥

कल्पः। यदि घर्मेण चरंस्तादित्योऽस्तमियात्। अपरस्याम्द्वारि दर्भेण हिरण्यं प्रबध्य उद्वयन्तमसस्परीत्पश्चात उदुत्यं चित्रमिति द्वाभ्याङ्गार्हपत्ये कृत्वा प्रवृज्य शोभते वयःसुपर्णा इत्या-

---

* प्रकृष्टबन्धना इति D, F, चिह्नितपुस्तकद्वयपाठः। प्रकृष्टसम्बन्धना इति E चिह्नितपुस्तकपाठः।

† प्रहर्त्तुसमर्थेत्यर्थ इति E चिह्नितपुस्तकपाठः।

अथ एकविंशोऽनुवाकः ।

(१)भूर्भुवः सुवः । मयि त्यदिन्द्रियं महत् । मयि दक्षो मयि क्रतुः । मयि धायि सुवीर्यं । त्रिशुग्घर्मो विभातु मे ।

---

दित्यमुपतिष्ठत इति । चतसृणामेतासामत्र प्रतीकान्याम्नातानि । (१'प्रतीकः) उद्वयमिति मन्त्रः समास्त्वाग्न इत्यनुवाके व्याख्यातः । उदुत्यं चित्रमिति द्वयं उदुत्यं जातवेदसे इत्यनुवाके व्याख्यातं । वयः सुपर्णा इति मन्त्रः स ईंपाहि इत्यनुवाके व्याख्यातः ।

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

अथ एकविंशोऽनुवाकः ।

यदि घर्मं भक्षयन्ति भूर्भुवः स्वरित्यनुवाकेनेति । पाठस्तु । (१)"भूर्भुवः सुवः ॰ उपहूतस्योपहूतो भक्षयामि"(१) इति । भू-रादिलोकदेवता अनुगृह्णन्त्विति शेषः । 'त्यत्' प्रसिद्धं, 'मह-त्' इन्द्रियसामर्थ्यं, 'मयि', 'धायि' धीयतां, स्थाप्यतां । तथा 'दक्षः' उत्साहः, 'क्रतुः' अनुष्ठानं, 'सुवीर्यं' सर्वेषु कार्येषु शोभनं सामर्थ्यं, तत्सर्वं 'मयि,' स्थास्थाप्यतां । 'त्रिशुक्' अग्निविद्युदात्मना त्रेधा-भिन्नदीप्तिः, 'घर्मः,' मदर्थं आकृत्यादिभिः 'सह', 'विभातु' विविधन्दीप्यतां । 'आकूतिः' सङ्कल्पः, 'मनः' सङ्कल्पसाधनं, 'विराट्' अन्नं, 'ज्योतिः' तेजः, 'यशः' क्रतुः, 'पयः' क्षीरं,

आकूत्या मनसा सह । विराजा ज्योतिषा सह । यज्ञेन पयसा सह । ब्रह्मणा तेजसा सह । क्षत्रेण यशसा सह ॥ सत्येन तपसा सह । तस्य दोहमशीमहि । तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि । तस्य त इन्द्रेण पीतस्य मधुमतः । उपहूतस्योपहूतो भक्षयामि[१] ॥ १ ॥

यशसा सह, षट् च ॥ अनु० २१ ॥

---

'ब्रह्म' ब्राह्मणजातिः, 'तेजः' शरीरकान्तिः, 'क्षत्रं' क्षत्रियजातिः, 'यशः' कीर्त्तिः, 'सत्यं' अनृतवर्जितं,* 'तपः' कृच्छ्रचान्द्रायणादिकं, 'तस्य' तैराकूत्यादिभिर्युक्तस्य घर्मस्य, 'दोहं' वृष्ट्यादिसमृद्धिं, वयं 'अशीमहि' । 'तस्य सुम्नं' तन्निमित्तं सुखञ्च, 'अशीमहि' । 'तस्य' प्रवर्ग्यस्य, प्रसादात् 'भक्षं' च 'आशीमहि' व्याप्नुयाम । हे घर्म 'तस्य' तादृशस्य, 'ते' तव, रसं 'उपहूतः' अनुज्ञातः, अहं भक्षयामि । कीदृशस्य तव, 'इन्द्रेण', प्रथमं 'पीतस्य,' 'मधुमतः' माधुर्य्ययुक्तस्य, 'उपहूतस्य' अनुज्ञातस्य ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके एकविंशोऽनुवाकः ॥ २१ ॥

---

* अनृतवर्जनमिति E चिह्नितपुस्तकपाठः ।

अथ द्वाविंशोऽनुवाकः ।

(१)यास्ते॑ अग्ने घो॒रास्त॒नुव॑ः । क्षुच्च॒ तृष्णा॑ च । अस्नु॒क्
चाना॑हुतिश्च । अ॒श॒न॒या च॑ पि॒पासा च॑ । से॒दिश्चा-

अथ द्वाविंशोऽनुवाकः ।

कल्पः । व्याख्याता घोरास्तन्वोरण्येऽनुवाक्यो गण उत्तरौ चानुवाकाविति । घोरतनूनां प्रतिपादकौ द्वावनुवाकौ तत्रोक्तास्तन्व आधानप्रतिपादके सूत्रे व्याख्याताः । अरण्येऽनुवाक्या भवन्तीति हि तत्र सूत्रेऽभिहितं । तथा द्वयोरनुवाकयोर्मरुद्गण उक्तः; स च त्रिकल्पितः; तस्य विनियोगो राजसूयप्रकरणे सूत्रकारेणाभिहितः; मारुतमेकविंशतिकपालं निर्वपति; वैश्वदेवीमामिक्षान्तस्यारण्येऽनुवाक्यैर्गणैः * कपालानुपदधातीति । ब्राह्मणस्याम्नातं, योऽरण्येऽनुवाक्यो गणस्तं मध्यत उपदधातीति । तत्र घोरतनुप्रतिपादकं प्रथममनुवाकमाह । (१)"यास्ते अग्ने घोरास्तनुवः ।० यश्च वयं द्विष्मः" (१)इति । हे 'अग्ने,' 'ते' तव सम्बन्धिन्यः, 'घोराः,' अत्युग्राः, 'तनुवः,' 'याः,' सन्ति, कास्ता इति चेत् क्षुदादिभिरमत्यन्तैरष्टाभिः शब्दैः प्रतिपादिताः । हे 'अग्ने', 'ते' तव सम्बन्धिन्यः, 'एताः' उक्ताः,

* अनुवाक्यकृतायैर्गणैरिति E चिह्नितपुस्तकपाठः ।

मतिश्च। एतास्ते अग्ने घोरास्तनुवः। ताभिरमुङ्गच्छ। योऽस्मान्द्वेष्टि। यञ्च वयन्द्विष्मः(१)॥ अनु० २२॥

---

अथ त्रयोविंशोऽनुवाकः।

(१)स्निक् च स्नीहितिश्च स्निहितिश्च*। उष्णा च शीता च। उग्रा च भीमा च। सदाम्नी सेदिरनिरा। एतास्ते अग्ने घोरास्तनुवः। ताभिरमुङ्गच्छ। योऽस्मान्द्वेष्टि। यञ्च वयन्द्विष्मः(१)॥ अनु० २३॥

---

'तनुवः,' 'ताभिः' तनुभिः सह, 'यः' अस्माकन्द्वेष्टा, यश्च द्वेष्यः 'अमुं' द्विविधम्पुरुषं, 'गच्छ'॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके द्वाविंशोऽनुवाकः॥ २२॥

---

अथ त्रयोविंशोऽनुवाकः।

अथ घोरतनूप्रतिपादकं द्वितीयमनुवाकमाह। (१)"स्निक् च स्नीहितिश्च ० यश्च वयं द्विष्मः"(१) इति। स्निगादीन्यनिरान्तानि तनुनामानि। अन्यत्पूर्ववत्॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके त्रयोविंशोऽनुवाकः॥ २३॥

---

* स्नीहीतिश्चेति J चिह्नितपुस्तकपाठः। स्निहितिश्चेति G, चिह्नितपुस्तकपाठः।

अथ चतुर्विंशोऽनुवाकः ।

(१)धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयꣳश्च । निलिम्पश्च विलिम्पश्च विक्षिपः(१) ॥ अनु० २४ ॥

अथ पञ्चविंशोऽनुवाकः ।

(१)उग्रश्च धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयꣳश्च ।

---

अथ चतुर्विंशोऽनुवाकः ।

मरुद्गणप्रतिपादकं प्रथममनुवाकमाह । (१)"धुनिश्च ध्वान्तश्च ० विलिम्पश्च विक्षिपः"(१) इति । धुन्यादीनि सप्त पदानि गणगतानां मरुद्विशेषाणां नामधेयानि । एतद्रूपेण कपालान्यवतिष्ठामीत्यर्थः* ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके चतुर्विंशोऽनुवाकः ॥ २४ ॥

---

अथ पञ्चविंशोऽनुवाकः ।

मरुद्गणप्रतिपादकमनुवाकान्तरमाह । (१)"उग्रश्च धुनिश्च ० एत्य प्रेत्य विक्षिपः"(१) इति । उग्रादीनि सहमानान्तानि सप्त

* कपालान्यवतिष्ठन्तामित्यर्थ इति E चिह्नितपुस्तकपाठः ।

सहस्वाꣳश्च सहमानश्च सहस्वाꣳश्च सहीयाꣳश्च।
एत्य प्रेत्य विक्षिपः[१] ॥ अनु॰ २५ ॥

अथ षड्विंशोऽनुवाकः।

[१]अहोरात्रे त्वोदीरयतां। अर्धमासास्त्वोदीञ्जयन्तु।

---

पदानि गणगतानां मरुद्विशेषाणां नामधेयानि। सहस्रादीनि विक्षिप इत्यन्तानि षण्णामानि विकल्पितानि। अनुवाकद्वयोक्तं गणद्वयं कपालोपधाने विकल्पितं। उत्तरगणे च नामषट्कं पुनर्विकल्पितं ॥

इति सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरराण्यके चतुर्थप्रपाठके पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

अथ षड्विंशोऽनुवाकः।

कल्पः। यदि घर्मदुघं वा महावीरं वास्तेनोपहरेत्, गार्हपत्ये स्रुवाहुतिं जुहुयात्, अहोराचे त्वोदीरयतामिति। पाठस्तु। [१]"अहोराचे त्वोदीरयतां॰ संवत्सरस्त्वाहन्त्वसौ"[१] इति। चोरस्य नामनिर्देशार्थः 'असौ,' इति शब्दः। हे देवदत्तनामक चोर त्वामहोरात्रदेवते 'उदीरयतां' उद्गमयतां। अर्धमासदेवतास्त्वां 'उदीञ्जयन्तु' उत्कर्षेणैव जयन्तु। मासदेवतास्त्वां

मासास्त्वा अपयन्तु। ऋतवस्त्वा पचन्तु। संवत्सर-स्त्वा हन्त्वसौ[१] ॥ अनु० २६ ॥

अथ सप्तविंशोऽनुवाकः।

[१]खट् फट् जहि। छिन्धी भिन्धी हन्धी कट्। इति वाचः क्रूराणि[१] ॥ अनु० २७ ॥

---

'अपयन्तु' वह्नौ पक्कं प्रवर्त्तन्तां। ऋतुदेवतास्त्वां सम्यक् पक्कं कुर्वन्तु। संवत्सरदेवस्त्वां 'हन्तु' मारयतु ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजु-रारण्यके चतुर्थप्रपाठके षड्विंशोऽनुवाकः ॥ २६ ॥

---

अथ सप्तविंशोऽनुवाकः।

अभिचारप्रकरणे ब्राह्मणे यदुक्तं, यद्वाचः क्रूरन्तेन वषट् करोति इति। तदेतत्क्रूरमाह। [१]"खट् फट् जहि ० इति वाचः क्रूराणि"[१] इति। भर्त्सनद्योतकाः खडादयस्त्रयोऽनु-करणशब्दाः। हननच्छेदनभेदनवाचकानि* तु क्रियापदानि। 'इति' एतानि षड्विधानि, 'वाचः,' 'क्रूराणि' ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजु-रारण्यके चतुर्थप्रपाठके सप्तविंशोऽनुवाकः ॥ २७ ॥

---

* छेदनभेदनहननवाचकानि इति E चिह्नितपुस्तकपाठः।

अथ अष्टाविंशोऽनुवाकः ।

(१)विगा इन्द्र विचरन्त्स्याशयस्व । स्वपन्तमिन्द्र पशुमन्तमिच्छ । वज्रेणामुम्बोधय दुर्विदत्रं । स्वपतोऽस्य प्रहर भोजनेभ्यः(१) । (२)अग्ने अग्निना संवदस्व । मृत्यो

---

अथ अष्टाविंशोऽनुवाकः ।

कल्पः । यदि घर्मेण चरत्स्वेकवृक उत्तिष्ठेत् । विगा इन्द्र विचरन्त्स्याशयस्वेति एनमभिमन्त्रयत इति । पाठस्तु । (१)"विगा इन्द्र विचरन्त्स्याशयस्व ० स्वपतोऽस्य प्रहर भोजनेभ्यः"(१) इति । एकाकित्वेनारण्ये सञ्चरन् वत्सान्मारयति यः अरण्यश्वा सोयं एकवृकः, तद्बाधनमत्र प्रार्थ्यते* । हे 'इन्द्र,' 'विगाः' वत्सानेक-वृकादिवियोज्य, तद्रक्षार्थं 'विशेषेण 'चरन्,' 'स्याशयस्व' तमे-कवृकं बाधितङ्कुरु । हे 'इन्द्र,' 'पशुमन्तं' वत्सान् भक्षयि-तुमायातैः पशुभिर्युक्तं तमेकवृकं, 'स्वपन्तं' निद्राणं, गच्छ । गत्वा च 'दुर्विदत्रं' दुर्बुद्धिशीलं, 'अमुं' एकवृकं, 'वज्रेण' आयुधेन, बोधय । यथा स्वपन्तं सुप्तं प्रहारेण† बोधयन्ति, तथा वज्र-प्रहारेण बोधय । बोधयेत्यस्यैवार्थः स्पष्टमुच्यते । 'स्वपन्तं एनमे-कवृकं, 'भोजनेभ्यः' वत्सभक्षणेभ्यः, निवारयितुं 'प्रहर' मारय, इत्यर्थः ॥

कल्पः । उभयत आदीप्योल्मुकमस्मै प्रत्यस्येत् । अग्ने अग्नि-

---

* प्रार्थयते इति D चिह्नितपुस्तकपाठः ।

† हस्तप्रहारेण इति E चिह्नितपुस्तकपाठः ।

मृत्युना संवदस्व। नमस्ते अस्तु भगवः[१]। [२]सकृत्ते अग्ने नमः। द्विस्ते नमः। त्रिस्ते नमः॥ चतुस्ते नमः। पञ्चकृत्वस्ते नमः। दशकृत्वस्ते नमः। शतकृत्वस्ते नमः। आसहस्रकृत्वस्ते नमः। अपरिमितकृत्वस्ते नमः। नमस्ते अस्तु मा मा हिꣳसीः[२]॥ १॥

त्रिस्ते नमः, सप्त च॥ अनु० २८॥

---

ना संवदस्वेति। पाठस्तु। (१)"अग्ने अग्निना संवदस्व ० नमस्ते अस्तु भगवः"(१) इति। हे 'अग्ने,' उल्मुकस्य मूलभागवर्त्तिना 'अग्निना,' उल्मुकाग्रभागवर्त्तिना सह, 'संवदस्व' एकवृकं हन्तुमेकमत्यं प्राप्नुहि। हे 'मृत्यो,' मूलभागस्थिताग्निप्रेरित, 'मृत्युना' अग्रभागस्थिताग्निप्रेरितेन सह, 'संवदस्व' एकवृकं हन्तुं संवादमनुमतिं कुरु। हे 'भगवः' ऐश्वर्यादिगुणयुक्त अग्ने, 'ते' तुभ्यं, 'नमोऽस्तु'॥

कल्पः। अथैनमनुतिष्ठन्ते सकृत्ते अग्ने नम इत्यनुवाकशेषेणेति। पाठस्तु। (२)"सकृत्ते अग्ने नमः ० नमस्ते अस्तु मा मा हिꣳसीः"(२) इति। वृकदर्शनावृत्त्यनुसारेण नमस्कारावृत्तिवाक्यानि योजनीयानि। यद्वा सकृद्दर्शनेपि कृत्स्नो मन्त्रः प्रयोक्तव्यः। नमस्कारावृत्त्युक्तिरादरार्था॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके अष्टाविंशोऽनुवाकः॥ २८॥

अथ एकोनत्रिंशोऽनुवाकः।

(१)असृङ्मुखो रुधिरेणाव्यक्तः। यमस्य दूतः श्वपाद्वि-धावसि। गृध्रः सुपर्णः कुणपन्निषेवसे। यमस्य दूतः

---

अथ एकोनत्रिंशोऽनुवाकः॥

कल्पः। अथ यदि गृध्रः शालावृको भयेडको दीर्घमुख्युलूको भूतोपसृष्टः शकुनिर्वा वदेत्, "असृङ्मुखः" "यदेतत्" "दोषितः" "दीर्घमुखि" "इत्यादुलूकः" "यदेतद्भूतान्यन्वाविश्य" "प्रसार्य सक्थ्यौ" इत्येतैर्यथालिङ्गमभिमन्त्र्योल्मुकप्रत्यसनादि समानमिति। तत्र गृध्रविषयमनुवाकमाह। "असृङ्मुखो रुधिरेणाव्यक्तः ० प्रहितो भवस्य चोभयोः"(१) इति। 'गृध्रः' पक्षिविशेषः। हे गृध्र त्वं 'विधावसि' विविधन्धावनङ्करोषि, शवमन्विच्छन् सर्वत्र सञ्चरसि। कीदृशः, 'असृङ्मुखः' असृक् रक्तं मुखे यस्यासौ तादृशः, पातुं स्वीकृतेन 'रुधिरेण,' मुखस्य सर्वस्य लेपित्वात् 'अव्यक्तः,' ईदृग्जातिरिति निश्चेतुमशक्यः, 'यमस्य,' 'दूतः,' यमो हि मारयितुं गृध्रं प्रेषयति। श्ववत् पश्यते शीघ्रङ्गच्छति इति 'श्वपात्'। त्वं रक्तमांसयोर्गन्धेन तृषया युक्तत्वात् 'गृध्रः,' शोभनौ पर्णौ शीघ्रपतनक्षमौ यस्यासौ 'सुपर्णः,'। तादृशस्त्वं 'कुणपं' शवं, 'निषेवसे' नितरां सेवसे। सोयं गृध्रः 'यमस्य' प्रेताधिपतिदेवस्य, 'भवस्य' परमेश्वरस्यान्तर्यामिणः, 'उभयोः' एतयोः, 'दूतः,'। भवो हि यमं

प्रहितो भवस्य चोभयोः[१] ॥ अनु० २९ ॥

अथ त्रिंशोऽनुवाकः ।

[१]यदेतद्वृकसो भूत्वा। वाग्देव्यभिरायसि। द्विषन्तं मेऽभिराय। तं मृत्यो मृत्यवे नय। स आर्त्याऽऽर्तिमार्च्छतु[१] ॥ अनु० ३० ॥

---

प्रेषयति, यमस्य दूतं। अतः साक्षात्परम्परया चोभयोर्दूतः सन् इह 'प्रहितः' प्रेषितः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके एकोनत्रिंशोऽनुवाकः ॥ २९ ॥

---

अथ त्रिंशोऽनुवाकः ॥

अथ शालावृकविषयमनुवाकमाह। [१]"यदेतद्वृकसो भूत्वा ० स आर्त्यार्तिमार्च्छतु"[१] इति। वृकः क्रोष्टा, हे 'वाग्देवि' ध्वनिदेवते, 'वृकसो भूत्वा' वृकादुत्पद्य, 'अभिरायसि' आभिमुख्येन शब्दं करोषि, इति 'यत्,' तत् 'एतत्,' 'मे,' द्विषन्तं, 'अभिलक्ष्य' 'राय' शब्दं कुरु। हे 'मृत्यो'। वृकरूपं 'तं' 'द्विषन्तं, 'मृत्यवे' मारकाय देवाय, 'नय' प्रापय। 'सः' द्विषन्, 'आर्त्या' रोगेण, 'आर्त्तिं' दुःखं, 'आर्च्छतु' प्राप्नोतु ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके त्रिंशोऽनुवाकः ॥ ३० ॥

अथ एकत्रिंशोऽनुवाकः ।

(१)यदीषितो यदि वा स्वकामी। भयेडको वदति वाचमेतां। तामिन्द्राग्नी ब्रह्मणा संविदानौ। शिवामस्मभ्यं कृणुतं गृहेषु(१) ॥ अनु० ३१ ॥

अथ द्वात्रिंशोऽनुवाकः ।

(१)दीर्घमुखि दुर्हणु। मास्म दक्षिणतो वदः। यदि

---

अथ एकत्रिंशोऽनुवाकः ॥

भयेडकविषयमनुवाकमाह । (१)"यदीषितो यदि वा ० कृणुतं गृहेषु"(१) इति । एडको* मेषः, स च युद्धव्यसनयुक्तः 'भयेडकः,' तन्दृष्ट्वैव भीत्या मनुष्याः पलायन्ते । स च 'यदि,' केनचित् 'ईषितः'† प्रवर्त्तितः, 'यदि वा,' 'स्वकामी' स्वेच्छावर्त्ती सन्, 'एतां' श्रूयमाणां, 'वाचं वदति' ध्वनिं करोति। हे 'इन्द्राग्नी,' 'ब्रह्मणा' परमेश्वरेण सह, 'संविदानौ' ऐकमत्ययुक्तौ, 'अस्मभ्यं' अस्मदर्थं, 'गृहेषु,' अस्मदीयेषु, 'तां' वाचं, 'शिवां' सुखकरीं, 'कृणुतं' कुरुतं॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके एकत्रिंशोऽनुवाकः॥ ३१ ॥

---

अथ द्वात्रिंशोऽनुवाकः ।

दीर्घमुखीविषयमनुवाकमाह । (१)"दीर्घमुखि दुर्हणु ० द्विषन्तं मेऽवबाधस्व"(१) इति। 'दीर्घमुखी' काकस्त्री, गर्दभी वा, 'दुष्टा

---

* एलक इति D F चिह्नितपुस्तकद्वयपाठः ।

† एषित इति E चिह्नितपुस्तकपाठः ।

दक्षिणतो वदाद्विषन्तं मेऽवबाधस्व[१] ॥ अनु० ३२ ॥

अथ त्रयस्त्रिंशोऽनुवाकः ।

[१]इत्थादुलूक आपप्तत् । हिरण्याक्षो अयोमुखः । रक्षसान्दूत आगतः । तमितो नाशयाऽग्ने[१] ॥ अनु० ३३ ॥

---

हनूः यस्याः सा दुर्हणूः । हे 'दुर्हणु,' 'दीर्घमुखि,' 'दक्षिणतः' दक्षिणभागे, 'मास्म वदः' ध्वनिम्मा कार्षीः, । 'यदि,' दक्षिणभागे, 'वदात्' शब्दङ्कुर्याः, तदा 'मे,' 'द्विषन्तं,' 'अवबाधस्व' विनाशय ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके द्वात्रिंशोऽनुवाकः ॥ ३२ ॥

---

अथ त्रयस्त्रिंशोऽनुवाकः ।

उलूकविषयमनुवाकमाह । [१]"इत्थादुलूकः ० तमितो नाशयाऽग्ने"[१]इति । उलूकः, काकविरोधी घूकः, सोयं 'उलूकः,' 'इत्थात्' अनेन प्रकारेण, 'आपप्तत्' प्राप्नोत् । कीदृशः, हिरण्यवद्रूपे अक्षिणी यस्यासौ 'हिरण्याक्षः,' अयोवत् कृष्णवर्णमुखं यस्यासौ 'अयोमुखः,' स च यज्ञविघातिनां 'रक्षसां,' 'दूतः,' सन्, इह समागतः' । हे 'अग्ने,' 'तं' उलूकं, 'इतः' स्थानात्, 'नाशय' ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके त्रयस्त्रिंशोऽनुवाकः ॥ ३३ ॥

अथ चतुस्त्रिंशोऽनुवाकः।

(१)यदेतद्भूतान्यन्वाविश्य। दैवीं वाचं वदसि। द्विषतो नः परावद। तान्मृत्यो मृत्यवे नय। त आर्त्याऽऽर्तिमार्च्छन्तु। अग्निनाऽग्निः संवदताम्(१) ॥ अनु० ३४ ॥

---

अथ चतुस्त्रिंशोऽनुवाकः।

अथ भूतोपसृष्टविषयमनुवाकमाह। (१)"यदेतद्भूतान्यन्वाविश्य ० अग्निनाऽग्निः संवदताम्"(१) इति। यच्चराचसग्रहाविष्टो मनुष्यो यद्वदति तद्विषयमिदमुच्यते। यच्चादिभूतानि प्राणिनः मनुष्यान् अनुप्रविश्य 'दैवीं वाचं' मनुष्याणामयोग्यां काञ्चिद्वाचं, 'वदसि,' इति 'यत्,' 'एतत्' एतेन वचनेन, 'नः' अस्माकं, 'द्विषतः' शत्रून्, 'परावद' पराभूता यथा भवन्ति तथा वद। हे 'मृत्यो,' यच्चादिरूप'मृत्यवे' परममृत्युरूपाय* देवाय, 'तान्' द्विषतः, 'नय' प्रापय। 'ते' द्विषन्तः, 'आर्त्या' रोगेण, 'आर्त्तिं' दुःखं, 'आर्च्छन्तु' प्राप्नुवन्तु। अस्मिन्नर्थे 'अग्निना' उल्मुकमूलभागवर्त्तिना, 'अग्निः' उल्मुकाग्रवर्त्ती, 'संवदतां' संवादमनुमतिं करोतु ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके चतुस्त्रिंशोऽनुवाकः ॥ ३४ ॥

---

* परममृत्युरूपाय इति D चिह्नितपुस्तकपाठः।

अथ पञ्चत्रिंशोऽनुवाकः ।

[१]प्रसार्य सक्थ्यौ पतसि । सव्यमक्षिं निपेपि च । मेह कस्य च नाऽममत्[१] ॥ अनु० ३५ ॥

अथ षट्त्रिंशोऽनुवाकः ।

[१]अत्रिणा त्वा क्रिमे हन्मि । कण्वेन जमदग्निना । विश्वावसोर्ब्रह्मणा हतः । क्रिमीणाꣳ राजा । अप्येषाꣳ

---

अथ पञ्चत्रिंशोऽनुवाकः ।

अथ शकुनिविषयमनुवाकमाह । [१]"प्रसार्य सक्थ्यौ ० मेह कस्य च नाऽममत्"[१] इति । ग्रामगमनादौ शुभाशुभसूचकः पक्षी शकुनिः, हे शकुने 'सक्थ्यौ प्रसार्य' ऊरू प्रसृतौ कृत्वा, इह 'पतसि' । 'सव्यमक्षि' वामचक्षुः, 'निपेपि च' पुनः पुनर्निमीलयसि च । तेन दोषेण 'इह' अस्मिन् देशे, 'कस्य च न' कस्यापि पुरुषस्य, 'माऽममत्' रोगो मा भवतु ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके पञ्चत्रिंशोऽनुवाकः ॥ ३५ ॥

---

अथ षट्त्रिंशोऽनुवाकः ।

कल्पः । यदि घर्मधुक् क्रिमिणा स्यात्, अत्रिणा त्वा क्रिमे हन्मीत्यनुवाकेनास्याः क्रिमीन् हन्यात् । अपि वा सार्वत्रिकमेतत् प्रायश्चित्तं क्रियेत इति । पाठस्तु । [१]"अत्रिणा त्वा क्रिमे हन्मि ०

स्थपतिर्हतः। अथो माताऽथो पिता। अथो स्थूरा अथो क्षुद्राः। अथो कृष्णा अथो श्वेताः। अथो आशातिका हताः। श्वेताभिः सह सर्वे हताः[१] ॥

अनु० ३६ ॥

अथ सप्तत्रिंशोऽनुवाकः।

[१]आहरावद्य। शृतस्य हविषो यथा। तत्सत्यं यदमुं

---

श्वेताभिः सह सर्वे हताः"[१] इति। हे 'क्रिमे,' घर्मधुगादिवर्त्तिन्, 'अत्रिणा,' 'कण्वेन,' 'जमदग्निना,' च महर्षिणा अनुगृहीतः अहं त्वां 'हन्मि'। 'विश्वावसोर्ब्रह्मणा' विश्वावसुसंज्ञकस्य गन्धर्वस्य मन्त्रेण,'क्रिमीणां,' 'राजा' स्वामी, 'हतः'। 'अपि,' च 'एषां' क्रिमीणां, 'स्थपतिः' अन्योपि राजव्यतिरिक्तः प्रभुः, 'हत':। अपि च तव 'माता,' हता, तथा तव 'पिता'। अन्येपि क्रिमयः 'स्थूलाः,' 'क्षुद्राः,' 'कृष्णाः,' 'श्वेताः,' च नानाविधा 'हताः'। अपि च 'आशातिकाः' आगत्य शात्यमानाः अस्माभिरेव बाध्यमानाः गवाश्वादिशरीरेषु वर्त्तमाना दंशयूकादयः सर्वेपि, 'श्वेताभिः' क्रिमिजातिभिः, 'सह,' मारिताः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके षड्त्रिंशोऽनुवाकः ॥ ३६ ॥

---

अथ सप्तत्रिंशोऽनुवाकः।

कल्पः। यमभिचरेत्तस्य लोहितमवदानं हृत्वा आहरावद्य

यमस्य जम्भयोः। आदधामि तथाहि तत्। खण् फण्म्रसि[१] ॥ अनु० ३७॥

अथ अष्टत्रिंशोऽनुवाकः।

[१]ब्रह्मणा त्वा शपामि। ब्रह्मणस्त्वा शपथेन शपा-

---

शृतस्येत्यनुवाकेन जुहुयात् इति। पाठस्तु। [१]"आहरावद्य ० खण् फण् म्रसि"[१] इति। 'यथा' यागकाले, 'शृतस्य' 'हविषः' पक्वं हविः, 'अवद्य' अवदाय, जुहु इति। तथा हे शत्रो लोहितं द्वितीयं 'आहर' आनय। 'अमुं' शत्रुं, 'यमस्य,' 'जम्भयोः' दन्तयोर्मध्ये, 'आदधामि' स्थापयामि' इति 'यत्,' 'तत् सत्यं'। 'तत्' कार्यम्, 'तथाहि' तथैव अस्तु। दंशनध्वनेरनुकरणरूपौ 'खण्फण्' शब्दौ,* तौ यथा भवतस्तथा शत्रो मारितोषि ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके सप्तत्रिंशोऽनुवाकः ॥ ३७ ॥

अथ अष्टत्रिंशोऽनुवकः।

कल्पः। यमभिव्याहरिष्यन् स्यात् त्रिरात्रावरं ब्रह्मचर्यं चरित्वा आगत्य एनमभिव्याहरेत्, ब्रह्मणा त्वा शपामीत्यनुवाकेनेति। पाठस्तु। [१]"ब्रह्मणा त्वा शपामि ० अधरो मत्पद्यस्वासौ"[१] इति। हे शत्रो त्वां देवदत्तनामानं 'ब्रह्मणा' मन्त्रेण, 'शपामि' शापयुक्तं करोमि। 'ब्रह्मणः' परमात्मवस्तुनः, 'शपथेन' शा-

---

* खट्फट्शब्दौ इति E चिह्नितपुस्तकपाठः।

मि। घोरेण त्वा भृगूणां चक्षुषा प्रेक्षे। रौद्रेण त्वाऽङ्गि-
रसां मनसा ध्यायामि। अघस्य त्वा धारया विध्यामि।
अधरो मत्पद्यस्वासौ[१] ॥ अनु० ३८॥

अथ एकोनचत्वारिंशोऽनुवाकः ।

[१]उत्तुद शिमिजावरि। तल्पेजे तल्प उत्तुद। गि-

---

पथासामर्थ्येन, त्वां 'शपामि' । 'भृगूणां' महर्षीणां, सम्बन्धिना 'घो-
रेण' उग्रेण, 'चक्षुषा,' त्वां 'प्रेक्षे' । 'अङ्गिरसां' महर्षीणां, सम्बन्धिना
'रौद्रेण' उग्रेण, 'मनसा,' 'त्वां,' 'ध्यायामि' । 'अघस्य' पापरूपस्य
क्रूरस्यायुधस्य खड्गरूपस्य, 'धारया,' त्वां 'विध्यामि' । 'असौ' हे दे-
वदत्तरूप, त्वं 'मत्' अभिचरितुः* पुरुषात्, 'अधरः,' 'पद्यस्व'
अर्वाचीनः पतितो भव ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजु-
रारण्यके चतुर्थप्रपाठके अष्टत्रिंशोऽनुवाकः ॥ ३८ ॥

---

अथ एकोनचत्वारिंशोऽनुवाकः ।

कल्पः। यं द्विष्यात्तस्य गोष्ठेव्यवतमोषधीम्निखनेत्, उत्तुद
शिमिजावरीत्यनुवाकेन। अपि वा गोष्ठस्यैवादक्षिणं द्वार्बाङ्गमे-
तेनैव विषालयेदिति । पाठस्तु। [१]"उत्तुद शिमिजावरि ०

---

* अभिवदत इति E चिह्नितपुस्तकपाठः ।

रीँ॒रनु॒प्रवे॑शय। मरी॒चीरुप॒ सन्नु॑द। याव॑दि॒तः पु॒र-
स्ता॑दु॒दयाति॒ सूर्यः॑। ताव॑दि॒तोऽमुं॒ नाश॑य। यो॑ऽस्मान्द्वे-
ष्टि॑। यञ्च॑ व॒यं द्वि॒ष्मः[१]॥ अनु॰ ३९॥

अथ चत्वारिंशोऽनुवाकः।

[१]भूर्भुव॒ः सुव॒र्भूर्भुव॒ः सुव॒र्भूर्भुव॒ः सुव॑ः। भुवो॑-

---

यञ्च वयं द्विष्मः"[१] इति। कृषिमन्तरेण स्वयमेवोत्पन्ना 'श्रिमि-जावरी,' हे तथाविधौषधे, 'उन्नुद' शत्रुमुत्क्रम्य व्यथितं कुरु। हे-'तल्पेजे' तस्य शयनस्थाने समुत्पन्ने ओषधे, तदीये 'तल्पे,' प्रविश्य तं 'उन्नुद'। ततो गृहात् भ्रष्टं कृत्वा 'गिरीननुप्रवेशय'। ततः 'मरीचीः' दावाग्निरश्मीन्, 'उप' प्रापय्य, 'सन्नुद' सम्यक् निराकुरु। 'सूर्यः,' यावता कालेन 'इतः' देशात्, 'पुरस्तात्' पूर्वस्यान्दिशि, उदेति, 'तावता, कालेन, 'इतः' देशात्, 'अमुं' द्वेष्टारं, द्वेष्यञ्च 'नाशय'॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजु-रारण्यके चतुर्थप्रपाठके एकोनचत्वारिंशोऽनुवाकः॥ ३९॥

---

अथ चत्वारिंशोऽनुवाकः।

कल्पः। यद्युद्गाता पुरुषः साम गायेत्, अध्वर्युरेवैतेन साम्नो-द्गायेत्। भूर्भुवः सुवरित्यनुवाकेनेति। पाठस्तु। [१]"भूर्भुवः सुवो

ऽधायि* भुवोऽधायि भुवोऽधायि। नृम्णायि नृम्णं नृम्णायि नृम्णं नृम्णायि नृम्णं। निधाय्योऽवापि निधाय्योऽवापि निधाय्योऽवापि। ए अस्मे अस्मे। सुवर्णज्योतिः(१) ॥ अनु० ४० ॥

अथ एकचत्वारिंशोऽनुवाकः।

(१)पृथिवी समित्। तामग्निः समिन्धे। साऽग्निꣳ स-

भूर्भुवः सुवः० सुवर्णज्योतिः"(१) इति। एते सर्वे स्तोभविशेषाः। ऋचमन्तरेण स्तोभैरेव स्वरविशिष्टैः साम आगायेत्। गानार्था तत्र तत्रावृत्तिः। भूरादयस्त्रयो लोका इष्टार्थप्रदाः सन्तु, विशेषतः 'भुवः,' सकाशात् 'अधायि' सर्वमिष्टं सम्पादितं। नृभिर्मनुष्यैर्मन्यते, अभीष्टत्वेन स्मर्यते इति 'नृम्णं' सुखं, नृम्णे सुखे सत्यपि पुनः 'नृम्णं' सुखं, अस्तु। 'निधाय्यः' नितरां सम्पादनीयो भागः, 'अवापि' प्राप्तं। गत्यर्थो वातिधातुः। 'ए'कारो देवतासम्बोधनार्थः। हे देवते 'अस्मे' अस्मासु, 'सुवर्णज्योतिः' सुवर्णसमानं ज्योतिः सम्पद्यतां॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके चत्वारिंशोऽनुवाकः॥ ४०॥

अथ एकचत्वारिंशोऽनुवाकः।

सूत्रे अवान्तरदीक्षां व्याख्यास्याम इत्युपक्रम्याभिहितं, चतस्र

* भुवोऽधायि इति वाक्यं G, I, J चिह्नितपुस्तकानां मूलपाठे वर्त्तते, भाष्ये तु "भुवोऽधायि" इति पाठ एव दृश्यते।

मिन्धे । तामहꣳ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ताꣳ स्वाहा(१) ।(२)अन्तरिक्षꣳ समित् ॥१॥

तां वायुः समिन्धे । सा वायुꣳ समिन्धे । तामहꣳ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ताꣳ स्वाहा(२) । (३)द्यौः समित् । तामादित्यः समिन्धे ॥ २ ॥

---

औदुम्बरीः समिधो घृताक्ता अभ्यादधाति, पृथिवी समिदित्येतैर्मन्त्रैरिति । तत्र प्रथमं मन्त्रमाह । (१)"पृथिवी समित् ० अन्नाद्येन समिन्ताꣳस्वाहा"(१) इति । 'पृथिवी,' देवता, सम्यग्दीप्यमानत्वात् 'समित्,' इत्युच्यते । 'तां' पृथिव्याख्यां समिधं, 'अग्निः,' देवः, 'समिन्धे' सम्यग्दीपितवान् । 'सा' च पृथिव्याख्या समित्, 'अग्निं,' देवं, 'समिन्धे' सम्यग्दीपयति । 'तां' पृथिवीरूपां समिधं, 'अहं,' 'समिन्धे' सम्यक् प्रकाशयामि । 'सा' च देवता, मया 'समिद्धा,' सती, मां आयुरादिभिः 'समिन्तां'* सम्यक् प्रकाशयतु । 'तेजः' शरीरकान्तिः, 'वर्चः' शास्त्रदीप्तिः ॥

अथ द्वितीयतृतीयमन्त्रावाह । (२)"अन्तरिक्षꣳसमित् ० अन्ना-

---

* समिन्धतामिति D चिह्नितपुस्तकपाठः ।

साऽऽदित्यꣳ समिन्धे। तामहꣳ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ताꣳ स्वाहा(३)। (४)प्राजापत्या मे समिदसि सपत्नक्षयणी। भ्रातृव्यहा मेऽसि स्वाहा(४)। (५)अग्ने व्रतपते व्रतञ्चरिष्यामि॥३॥

तच्छकेयं तन्मे राध्यतां। वायो व्रतपत आदित्य व्रतपते। व्रतानां व्रतपते व्रतञ्चरिष्यामि। तच्छकेयं

---

द्येन समिन्ताꣳ स्वाहा"(२)। (३)"द्यौः समित् ० अन्नाद्येन समिन्ताꣳ स्वाहा"(३) इति पूर्ववद्व्याख्येयौ॥

चतुर्थं मन्त्रमाह। (४)"प्राजापत्या मे ० भ्रातृव्यहा मेऽसि स्वाहा"(४) इति। हे समित्, त्वं 'प्राजापत्या' प्रजापतिसम्बन्धिनी, 'सपत्नक्षयणी' वैरिविनाशिनी, 'मे' 'समिदसि' सम्यग्दीपिकाऽसि। तस्मात् 'मे' मम, 'भ्रातृव्यहा असि' शत्रुघातिनी भवसि। स्वाहुतमिदमस्तु॥

कल्पः। अथ देवता उपतिष्ठते, अग्ने व्रतपते व्रतं चरिष्यामीति। पाठस्तु। (५)"अग्ने व्रतपते ० तन्मे राध्यतां"(५) इति। हे 'व्रतपते' अवान्तरदीक्षारूपस्य व्रतस्य पालक अग्ने, 'व्रतं,' इदमहं 'चरिष्यामि'। त्वत्प्रसादात् 'तत्' व्रतं, कर्त्तुं 'शकेयं' शक्तो भूयासं। 'मे' मदीयं, 'तत्' व्रतं, 'राध्यतां' समृद्धिं गच्छतु। वायो व्रतपत इत्येतस्मिन् उत्तरस्मिन् च व्रतं चरिष्या-

तस्मै राध्यताम्[१]। [६]द्यौः समित्। तामादित्यः समिन्धे। साऽऽदित्यꣳ समिन्धे। तामहꣳ समिन्धे। सा मा समिद्धा। आयुषा तेजसा॥ ४॥

वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ताꣳ स्वाहा। अन्तरिक्षꣳ समित्। तां वायुः समिन्धे। सा वायुꣳसमिन्धे। तामहꣳ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया॥ ५॥

यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ताꣳ स्वाहा। पृथिवी समित्। तामग्निः समिन्धे। साऽग्निꣳ समिन्धे। तामहꣳ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन॥

---

मीत्यादिकमनुषज्यते। एतदर्थमेव चतुर्थमन्त्रे पुनराम्नातं। व्रतपत इत्युक्तस्य पुनरपि व्रतानामित्युक्तिः कृत्स्नव्रतस्वीकारार्था॥

कल्पः। आवृत्तैर्मन्त्रैः समिध आधाय आवृत्तैर्देवता उपस्थायेति। पाठस्तु। [६]"द्यौः समित् ० तदशकं तस्मै राधि"[६] इति। व्रतावसाने कर्त्तव्यत्वात् 'अचारिषं', इत्यादिभूतार्थवाचिशब्दप्रयोगः। तद्धि चतुर्षु वेदव्रतेषु सौम्यव्रतमित्यभिधीयते। एतस्य प्रवर्ग्याङ्गत्वाभावेपि शुक्रियकाण्डोक्तमन्त्रसापेक्षत्वात् अत्राम्नातं। एतच्च

अन्नाद्येन समिन्ताꣳ स्वाहा । प्राजापत्या मे स-
मिदसि सपत्नक्षयणी । भ्रातृव्यहा मेऽसि स्वाहा ।
आदित्य व्रतपते व्रतमचारिषं । तदशकं तन्मे
राधि । वायो व्रतपतेऽग्ने व्रतपते । व्रतानां व्रतपते
व्रतमचारिषं । तदशकं तन्मे राधि[१] ॥ ६ ॥

समित्, समिन्धे, व्रतं चरिष्यामि, तेजसा, श्रिया,
यशसा ब्रह्मवर्चसेन, अष्टौ च ॥ अनु० ४१ ॥

---

अथ द्विचत्वारिंशोऽनुवाकः ।

[१]शन्नो वातः पवतां मातरिश्वा शन्नस्तपतु सूर्यः ।

---

सूत्रकारेण दर्शितं, अथैनं सर्वेषामनुवाकानां प्रभृतीरभिव्याहार-
यति, प्रथमोत्तमयोर्वोत्तमेनानुवाकेन शान्तिं कृत्वेति ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजु-
रारण्यके चतुर्थप्रपाठके एकचत्वारिंशोऽनुवाकः ॥ ४१ ॥

---

अथ द्विचत्वारिंशोऽनुवाकः ।

कल्पः । गामवसृज्य मदन्तीरुपस्पृश्योत्तमेनानुवाकेन शान्तिं
कुर्वन्ति, एवं सायं प्रातः प्रवर्ग्योपसद्भ्यां चरन्तीति । तस्मिन्ननु-
वाके प्रथमं मन्त्रमाह । [१]"शन्नो वातः ० प्रतिधीयतां"[१] इति ।

अहा॑नि॒ शम्भ॑वन्तु नः॒ शꣳ रात्रिः॒ प्रति॑धीयताम्[१]। [२]श॒-
मु॒षा नो॒ व्यु॑च्छतु॒ शमा॑दि॒त्य उदे॑तु नः। शि॒वा नः॒ श॒-
न्त॑मा भव सुमृडी॒का सर॑स्वति। मा ते॒ व्योम सं॒दृशि॒[२]।
[१]इडा॑यै॒ वास्त्व॑सि वास्तु॒मद्वा॑स्तु॒मन्तो॑ भूयास्म॒ मा वा-
स्तो॑श्छित्स्म॒ह्यवा॒स्तुः स भू॑या॒द्यो॑ऽस्मान्द्वेष्टि॒ यं च॑ व॒यं

---

'मातरिश्वा' अन्तरिक्षनिवासी, 'वातः,' 'नः' अस्माकं, 'शं' सुखं, यथा भवति, तथा, 'पवतां'। 'सूर्यः,' अपि तथैव 'तपतु'। 'अहानि,' अपि 'नः' अस्माकं, सुखकराणि 'भवन्तु'। 'रात्रिः,' च सुखकरी सम्पद्यतां॥

द्वितीयं मन्त्रमाह।[२]"शमुषा नो व्युच्छतु ० मा ते व्योम संदृशि"[२] इति। 'उषा', देवी, 'नः' अस्माकं, सुखकरी प्रभातं करोतु। 'आदित्यः,' चास्माकं सुखकरः 'उदेतु'। हे 'सरस्वति,' त्वं 'नः' अस्मान् प्रति, 'शिवा' अनुकूला, 'शन्तमा' अतिशयेन सर्वोपद्रवशमनी, 'सुमृडीका' सुष्ठु सुखकरी, च 'भव'। 'ते संदृशि' तव कटाक्षे सति, 'व्योम' सुखशून्यत्वं, 'मा,'भूत्॥

तृतीयं मन्त्रमाह। [१]"इडायै वास्तु ० यं च वयन्द्विष्मः"[१] इति। हे भूमे त्वं 'इडायै' धेनुरूपाया इडादेव्याः, 'वास्तु असि' निवासस्थानमसि। सर्वं जगत् त्वत्प्रसादात् 'वास्तुमत्' निवासस्थानयुक्तं भवतु। वयमपि त्वत्प्रसादात् 'वास्तुमन्तः' निवासस्थानयुक्ताः, 'भूयास्म'। 'वास्तोः,' निवासस्थानात् 'माछित्स्म' विछिन्ना मा-

द्विष्मः[३] । [४]प्रतिष्ठाऽसि प्रतिष्ठावन्तो भूयास्म मा प्रतिष्ठा यांश्छित्स्म ह्यप्रतिष्ठः स भूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः[४] । [५]आ वात वाहि भेषजं वि वात वाहि यद्रपः । त्वꣳ हि विश्वभेषजो देवानां दूत ईयसे[५] । [६]द्वाविमौ वातौ वात आसिन्धोरापरावतः ॥१॥

---

भूयास्म । 'हि' यस्मात्, 'वयमेवंविधाः तस्मादस्माकं विपरीतः 'यः' द्वेष्टा, यस्य द्वेष्यः, सोयं 'अवास्तुः' निवासस्थानरहितो भूयात् ॥

अथ चतुर्थं मन्त्रमाह । [४]"प्रतिष्ठासि प्रतिष्ठावन्तः ० द्वेष्टि' यं च वयं द्विष्मः"[४] इति । 'प्रतिष्ठा' आधारः । अन्यत् पूर्ववत् ॥

अथ पञ्चमं मन्त्रमाह । [५]"आ वात वाहि भेषजं ० देवानां दूत ईयसे"[५] इति । हे 'वात' वायो, मे 'भेषजं', यथा भवति तथा, 'आवाहि' अस्मान् प्रति सर्वतो वातकुरु । हे 'वात,' 'यद्रपः' पापमस्ति, तत् 'विवाहि' विश्लेष्य गच्छ । यस्मात् 'त्वं,' 'विश्वभेषजः' इति विश्वस्य चिकित्सकः, 'देवानां दूतः,' च सन् 'ईयसे' गच्छसि ॥

अथ षष्ठं मन्त्रमाह । [६]"द्वाविमौ वातौ ० परान्यो वातु यद्रपः"[६] इति । 'इमौ' लोके दृश्यमानौ, 'द्वौ वातौ,' 'आसिन्धोः' समुद्रसहिते प्रदेशे, 'आपरावतः' दूरवर्त्तिलोक-

दक्षं मे अन्य आ वातु पराऽन्यो वातु यद्रपः(६)। (७)यददो वात ते गृहेऽमृतस्य निधिर्हितः। ततो नो देहि जीवसे ततो नो धेहि भेषजं। ततो नो मह आवह(७) (८)वात आ वातु भेषजꣳ शंभूर्मयोभूर्नो हृदे। प्र ण आयूꣳषि तारिषत्(८)। (९)इन्द्रस्य गृहो-

---

युक्ते देशे, 'वातः' सञ्चरतः। शान्तो वायुरेकः, तीव्रोऽपरः, तयोर्मध्ये 'अन्यः' एकः शान्तः, 'मे' मम, 'दक्षं आवातु' सुखं सम्पादयतु। 'अन्यः' तीव्रो वायुः, 'यद्रपः' मम यत्पापमस्ति, तत् 'परा वातु' विनाशयतु॥

अथ सप्तमं मन्त्रमाह। (७)"यददो वात ० ततो नो मह आवह"(७) इति। हे 'वात,' 'ते गृहे,' 'यददः' यः असौ, 'अमृतस्य निधिः,' 'हितः' स्थापितः, 'ततः' निधेः सकाशात्, 'नः' अस्माकं, 'जीवसे' जीवनाय, 'देहि' किंयदप्यमृतं प्रयच्छ। 'ततः' अमृतात्, 'नः' अस्माकं, 'भेषजं देहि' औषधं सम्पादय। 'ततः' तस्मात्, 'नः' अस्माकं, 'मह आवह' तेजः सम्पादय।

अथाष्टमं मन्त्रमाह। (८)"वात आवातु भेषजꣳ ० प्रण आयूꣳषि तारिषत्"(८) इति। अयं 'वातः' 'भेषजं,' यथा भवति तथा, 'आवातु'। 'नः' अस्माकं, 'हृदे' मनसे, 'शंभूः' अनिष्टशान्तिं भावयन्, 'मयोभूः' सुखं च भावयन्, वर्त्तताम्। 'नः' अस्माकं, 'आयूंषि' चिरकालजीवनानि, 'प्रतारिषत्' प्रकर्षेण वर्धयतु॥

ऽसि तं त्वा प्रपद्ये सगुः साश्वः। सह यन्मे अस्ति तेन(९)। (१०)भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवः सुवः प्रपद्ये वायुं प्रपद्येऽनार्तां देवतां प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोशं ब्रह्म प्रपद्य प्रपद्ये(१०)। (११)अन्तरिक्षं म उर्वन्तरं बृहदग्नयः पर्वताश्च

---

अथ नवमं मन्त्रमाह। (९)"इन्द्रस्य गृहोऽसि ० सह यन्मे अस्ति तेन"(९) इति। अत्रेन्द्रशब्देन परमैश्वर्ययोगादादित्य उच्यते। तथा च ब्राह्मणं। असौ वा आदित्य इन्द्र एष प्रजापतिरिति। हे आदित्यमण्डल त्वं 'इन्द्रस्य गृहोऽसि' आदित्यस्य निवासस्थानमसि। 'तं' तादृशमादित्यगृहं, त्वां 'प्रपद्ये' प्राप्नोमि। कीदृशोऽहं, 'सगुः' गोसहितः, 'साश्वः' अश्वसहितः, अन्यदपि 'मे', 'यत्' वस्तु, विद्यते 'तेन सह', त्वां प्रविशामि॥

अथ दशमं मन्त्रमाह। (१०)"भूः प्रपद्ये भुवः प्रपद्ये ० ब्रह्म प्रपद्ये ॐ प्रपद्ये"(१०) इति। 'भूः प्रपद्ये' भूर्लोकदेवतां प्रपन्नोऽस्मि। एवमुत्तरत्रापि यथाव्यस्तानां प्रपत्तिस्तथा समस्तानामपि प्रपत्तिः। 'अनार्त्तां' इत्यनेन आरोग्यकरी देवतोच्यते। 'आखणं' खनितुमशक्यं, 'अश्मानं' दृढं पाषाणं, 'प्रपद्ये'। पाषाणवद्दार्ढ्यमयास्त्वित्यर्थः। 'प्रजापतेः', सम्बन्धि 'ब्रह्मकोशं' सर्वमन्त्राधारभूतं, 'ब्रह्म' वेदस्वरूपं, प्रपद्ये। 'ॐ'कारेण परमात्मा उच्यते, तमपि 'प्रपद्ये'॥

यथा वातः स्वस्त्या स्वस्ति मां तया स्वस्त्या स्वस्ति मानसानि(११) । (१२)प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं(१२) (१३)मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं

---

अथैकादशमन्त्रमाह । (११)"अन्तरिक्षं म उर्वन्तरं ० स्वस्ति मामसानि"(११) इति । यदिदं 'अन्तरिक्षं', अस्ति तत् 'मे' मदर्थं, 'उर्वन्तरं' विस्तीर्णावकाशः, भूयात् । तस्मिन्नन्तरिक्षे 'अग्नयः' गार्हपत्यादयः, 'पर्वताः' मेर्वादयश्च, 'बृहत्' अधिकं सुखं यथा भवति तथा, वर्त्ततामिति शेषः । अत्रान्तरिक्षे सञ्चरन् 'वातः', 'यया स्वस्त्या' क्षेमहेतुभूतया क्रियया, 'मां', प्रति 'स्वस्ति' क्षेमं, प्रापयत्विति शेषः । 'तया स्वस्त्या' क्षेमहेतुभूतया क्रियया, 'मानसानि' अस्मदीयान्यन्तःकरणानि, 'स्वस्ति' क्षेमं, प्रापयत्विति शेषः ॥

अथ द्वादशं मन्त्रमाह । (१२)"प्राणापानौ ० मा मा हासिष्टं"(१२) इति । हे प्राणापानदेवौ 'मृत्योः', सकाशात् मां 'पातं' रक्षतं । हे 'प्राणापानौ', युवां मां कदाचिदपि 'माहासिष्टं' मा परित्यजतं ॥

अथ त्रयोदशं मन्त्रमाह । (१३)"मयि मेधां मयि प्रजां ० सूर्यो भ्राजो दधातु"(१३) इति । ग्रन्थतदर्थधारणशक्तिः 'मेधा', 'प्रजा' पुत्रादिः, 'तेजः' शरीरकान्तिः, तत्सर्वं 'अग्निर्मयि', स्थापयतु,

दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु(१३) ॥ २ ॥

(१४)द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः(१४) । (१५)कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता(१५) ।

---

दयतु । 'इन्द्रियं' चक्षुरादिपाटवं, 'भ्राजः' दीप्तिजालं,* अन्यत् पूर्ववत् ॥

अथ चतुर्दशं मन्त्रमाह । (१४)"द्युभिरक्तुभिः परिपातं ० पृथिवी उत द्यौः"(१४) इति । हे 'अश्विनौ', 'सुभगेभिः' सौभाग्यैः युक्तैः, 'अस्मान् पातं', कीदृशैः, 'द्युभिः' द्योतमानैः, 'अक्तुभिः' रञ्जनहेतुघृतादिद्रव्ययुक्तैः, च 'अरिष्टेभिः' विनाशरहितैः । 'नः' अस्माकं, 'तत्' अश्विनोः पालनं, मित्रादयो 'मामहन्तां' अतिशयेन पूजयन्तु । 'सिन्धुः' समुद्रः ॥

अथ पञ्चदशं मन्त्रमाह । (१५)"कया नश्चित्र ० शचिष्ठया- वृता"(१५) इति । कस्य प्रजापतेः सम्बन्धिनीत्यस्मिन्नर्थे 'का' इति शब्दः स्त्रीलिङ्गो वर्त्तते । 'ऊति'शब्दो रक्षावाची, 'कया' ऊत्या' प्रजापतिसम्बन्धिना रक्षणेन, 'चित्र आभुवत्' चित्रोऽयं यज्ञः 'नः'

---

* दीप्तिजातं इति D चिह्नितपुस्तकपाठः ।

(१६)कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः । दृढाचिदारुजे* वसु(१६) । (१७)अभीषु णः सखीनामविता जरितृणां । शतम्भवास्यूतिभिः(१७) । (१८)वयः सुपर्णा

---

अस्मान् प्रति, आगतः । कीदृशो यज्ञः, 'सदावृधः' सर्वदा वर्धमानः, 'सखा' सखिवत् प्रियतमः, स च यज्ञः 'कया' प्रजापतिसम्बन्धिन्या, 'शचिष्ठया' अतिशयितया शक्त्या, 'वृता' वर्त्तते ॥

अथ षोडशं मन्त्रमाह । (१६)"कस्त्वा सत्यः ० आरुजे वसु"(१६) इति । हे प्रवर्ग्य त्वां 'कः' प्रजापतिः, 'मत्सत्' मदयतु† हर्षयतु । कीदृशः प्रजापतिः, 'सत्यः' परमार्थभूतः, 'मदानां' हर्षकारणानामायुरादीनां, 'अन्धसः' अन्नस्य च, 'मंहिष्ठः' अतिशयेन वर्धयिता, 'आरुजे' सर्वतोऽनिष्टभङ्गार्थं, 'वसु' अपेक्षितं धनं, 'दृढाचित्' दृढमेव, करोत्विति शेषः ॥

अथ सप्तदशं मन्त्रमाह । (१७)"अभीषुणः ० ऊतिभिः"(१७) इति । हे प्रजापते 'जरितृणां' जरणशीलानां, 'सखीनां' सखिवत्प्रियाणां, 'नः' अस्माकं, 'शतमूतिभिः' शतसङ्ख्याकैः रक्षणैः, 'अभीषु' सर्वतः, सुष्ठु 'अविता भवासि' रक्षिता भव ॥

अथाष्टादशं मन्त्रमाह । (१८)"वयः सुपर्णा ० निधयेव बद्धान्"(१८) इति । केचित् 'ऋषयः', 'इन्द्रमुपसेदुः', कार्यार्थप्रा-

---

* आरुजे इति D चिह्नितपुस्तकपाठः ।

† मोदयतु इति E चिह्नितपुस्तकपाठः ।

उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः । अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान्[१८] ॥
॥ ३ ॥

[१९]शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः[१९] । [२०]ईशाना वार्याणां क्षयन्ती-

---

भिरुपसन्तिः । कीदृशा ऋषयः, 'वयः' पक्षिमूर्त्तिधारिणः, अतएव 'सुपर्णाः' शोभनपक्षोपेताः, 'प्रियमेधाः' अधीतस्य श्रुतस्य धारणशक्तिर्मेधाः तस्यां प्रीतियुक्ताः । 'नाधमानाः' किञ्चित्कार्यं याचमानाः । स एव याच्ञाप्रकारः स्पष्टीक्रियते । हे इन्द्र 'ध्वान्तं' अज्ञानलक्षणमन्धकारं, 'अपोर्णुहि' अपसारय । 'चक्षुः' ज्ञानलक्षणां दृष्टिं, 'पूर्धि' पूरय । 'निधयेव' शृङ्खलयेव, अज्ञानेन, 'बद्धान्', 'अस्मान्', 'मुमुग्धि' तस्मादज्ञानात् बन्धनान्मोचय ॥

अथैकोनविंशं मन्त्रमाह । [१९]"शन्नो देवीरभिष्टय ० शंयोरभिस्रवन्तु नः"[१९] इति । 'आपः', देव्यः, 'नः' अस्माकं, 'अभिष्टये पीतये' अभीष्टाय पानाय, 'शं' सुखहेतवः, 'भवन्तु' । किञ्च 'नः' अस्माकं, 'शं' सुखं, यथा भवति तथा, 'शंयोः' दुःखवियोगः, यथा भवति तथा, 'अभिस्रवन्तु' सर्वतः प्रवहन्तु ॥

अथ विंशं मन्त्रमाह । [२०]"ईशाना वार्याणां ० याचामि भेषजं"[२०] इति । अहं 'अपः', देवीः प्रति, 'भेषजं' पापविनाश-

श्चर्षणीनां। अपो याचामि भेषजं[२०]। [२१]सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः[२१]। [२२]आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे[२२]। [२३]यो

---

कारणमौषधं, 'याचामि', इति। कीदृशीरपः, 'वार्याणां' वरणीयानां कामानां, 'ईशानाः' दातुं समर्थाः, 'चर्षणीनां' मनुष्याणां, 'क्षयन्तोः' निवासहेतुभूताः॥

अथैकविंशं मन्त्रमाह। [२१]"सुमित्रा न आपः ० यञ्च वयं द्विष्मः"[२१] इति। 'आपः', 'ओषधयः', च इत्येता द्विविधा देवताः, 'नः' अस्मान् प्रति, 'सुमित्राः' सुष्ठु स्निग्धाः, 'सन्तु'। 'यः' अस्मदीयः शत्रुः, 'तस्मै', 'दुर्मित्राः' दुर्हृदया विरोधिनः, 'सन्तु'॥

अथ द्वाविंशं मन्त्रमाह। [२२]"आपो हि ष्ठा मयो भुवः ० महे रणाय चक्षसे"[२२]इति। 'हि'शब्द एवकारार्थः प्रसिद्ध्यर्थो वा। हे 'आपः', यूयमेव 'मयोभुवः स्थ' सुखस्य भावयित्र्यो भवत। स्नानपानादिहेतुत्वेन सुखोत्पादकत्वं प्रसिद्धं। 'ताः' तादृश्यो यूयं, 'नः' अस्मान्, 'ऊर्जे' रसाय, भवदीयरसानुभवार्थं, 'दधातन' स्थापयत। किञ्च, 'महे' महते, 'रणाय' रमणीयाय, 'चक्षसे' दर्शनीयाय, 'दधातन' अस्मान् परतत्त्वसाक्षात्कारयोग्यान् कुरुतेत्यर्थः॥

अथ त्रयोविंशं मन्त्रमाह। [२३]"यो वः शिवतमो रसः ० उशतीरिव मातरः"[२३] इति। 'वः' युष्माकं, 'शिवतमः' शान्त-

वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः[२३]। [२४]तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ ॥ ४ ॥

आपो जनयथा च नः[२४]। [२५]पृथिवी शान्ता साऽग्निना शान्ता सा मे शान्ता शुचꣳ शमयतु[२५]।

---

तमः सुखैकहेतुः, यो 'रसः', अस्ति। 'इह', अस्मिन् कर्मणि, 'नः' अस्मान्, 'तस्य', 'भाजयत' रसं प्रापयत। तत्र दृष्टान्तः, 'उशतीरिव मातरः' इति, कामयमानाः प्रीतियुक्ता मातरो यथा स्वकीयस्तन्यरसं प्रापयन्ति तद्वत् ॥

अथ चतुर्विंशं मन्त्रमाह। [२४]"तस्मा अरंगमाम ० जनयथा च नः"[२४] इति। 'यस्य' रसस्य, 'क्षयाय' क्षयेण निवासेन, 'जिन्वथ' यूयं प्रीता भवथ, 'तस्मै' रसाय, 'वः' युष्मान्, 'अरंगमाम' अलं भृशं प्राप्नुमः। किञ्च, हे 'आपः', यूयं 'नः' अस्मान्, 'जनयथ' प्रजोत्पादकान् कुरुत ॥

अथ पञ्चविंशं मन्त्रमाह। [२५]"पृथिवी शान्ता ० शुचꣳ शमयतु"[२५] इति। येयं 'पृथिवी', देवता, 'सा', इयं 'शान्ता' सर्वोपद्रवशमनयुक्ता, न केवलं स्वयमेव किन्तु 'अग्निना', देवेन सह, 'शान्ता'। तादृशी 'शान्ता', देवता, 'मे' मम, 'शुचं' शोकं, 'शमयतु' शान्तं करोतु ॥

(२६)अन्तरिक्षꣲ शान्तं तद्वायुना शान्तं तन्मे शान्तꣲ शुचꣲ शमयतु(२६)। (२७)द्यौः शान्ता सादित्येन शान्ता सा मे शान्ता शुचꣳ शमयतु(२७)। (२८)पृथिवी शान्तिरन्तरिक्षꣲ शान्तिर्द्यौः शान्तिर्दिशः शान्तिरवान्तरदिशाः शान्तिरग्निः शान्तिर्वायुः शान्तिरादित्यः शान्तिश्चन्द्रमाः शान्तिर्नक्षत्राणि शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्गौः शान्तिरजा शान्तिरश्वः शान्तिः पुरुषः शान्तिर्ब्रह्म शान्तिर्ब्राह्मणः शान्तिः शान्तिरेव शान्तिः शान्तिर्मे अस्तु शान्तिः(२८)।(२९)तयाऽहꣲ शान्त्या सर्वशान्त्या मह्यं द्विपदे

---

अथ षड्विंशसप्तविंशौ मन्त्रावाह। (२६)"अन्तरिक्षꣲ ० शुचꣲ शमयतु"(२६)। (२७)"द्यौः शान्ता ० शुचꣲ शमयतु"(२७) इति। 'अन्त' 'द्यौः शान्ता' मन्त्रद्वयं पृथिवीमन्त्रवद्व्याख्येयं॥

अथाष्टाविंशं मन्त्रमाह। (२८)"पृथिवी शान्तिरन्तरिक्षꣲ शान्तिः ० शान्तिर्मे अस्तु शान्तिः"(२८) इति। पृथिव्यादयः सर्वे देवता अस्मदनिष्टशमनहेतुत्वात् शान्तिदेवतारूपाः। 'ब्रह्म' वेदः, पृथिव्यादीनामुपचरितं शान्तिदेवतारूपत्वं। या तु शान्त्यभिमानिनी देवता सा 'शान्तिरेव' मुख्यमेव तस्याः शान्तित्वं, अतः सा शान्तिदेवता 'मे', 'शान्तिरस्तु' सर्वानिष्टशमनहेतुरस्तु॥

चतुष्पदे च शान्तिङ्करोमि शान्तिर्मे अस्तु शान्तिः(१९)। (२०)एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु मा माꣳ* श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः(२०)। (२१)उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थामम्रृताꣳ अनु(२१)।

---

अथैकोनत्रिंशं मन्त्रमाह। (१९)"तयाहꣳ शान्त्या ० अस्तु शान्तिः"(१९) इति। 'अहं' यजमानः, 'सर्वशान्त्या' सर्वानिष्टशमनहेतुतया, पूर्वोक्तगुणविशिष्टया, 'शान्त्या' शान्तिदेवतया, 'मह्यं' मच्छरीरार्थं, 'द्विपदे' मदीयाय मनुष्यार्थं, 'चतुष्पदे' मदीयाय पश्वर्थं 'च', 'शान्तिं' सर्वानिष्टशमनं, 'करोमि'। अतः शान्तिदेवता 'मे' मदर्थं, 'शान्तिः' सर्वानिष्टशमनहेतुः, 'अस्तु'॥

अथ त्रिंशं मन्त्रमाह। (२०)"एह श्रीश्च ह्रीश्च ० मा मा हासिषुः"(२०) इति। श्रीप्रभृतयो धर्मान्ता या देवताः सन्ति, 'एतानि' देवशरीराणि, इह कर्मसमाप्तौ 'उत्तिष्ठन्तं', 'माम्', 'अनु' आसमन्तात्, 'उत्तिष्ठन्तु'। यानि श्रीप्रभृतीनां स्वरूपाणि 'एतानि', 'मा', 'मा हासिषुः' मा परित्यजन्तु। पुनरपि 'मा मा हासिषुः', द्विरुक्तिरादरार्था॥

अथैकत्रिंशं मन्त्रमाह। (२१)"उदायुषा स्वायुषा ० अम्रृताꣳ

---

* मामित्यस्य स्थाने मा हासिषुः इति पाठः भाष्यसम्मतः। परन्तु आदर्शपुस्तकेषु तथा नास्ति।

(२२)तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतꣳ शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक् च सूर्यं दृशे(२२) ॥ (२३)य उदगान्महतोऽर्णवाद्विभ्राजमानः

---

मनु"(२१) इति। अहं 'अमृताम्' देवान्, 'अनु'लक्ष्य, आयुरादि-विशेषणविशिष्टेन सोमेन सह 'उदस्थां' उत्तिष्ठामि। चिरजीवनं 'आयुः', तचापि रोगाद्युपद्रवरहितं 'स्वायुः', तदुभयप्रदत्वाद्रसस्य तद्रूपत्वं। 'ओषधीनां', 'पर्जन्यस्य', च 'रसः' सारं। चतुर्भिर्विशे-षणैः पृथक् क्रियापदमन्वेतुं चत्वारः 'उत्'शब्दाः॥

अथ द्वात्रिंशं मन्त्रमाह। (२२)"तच्चक्षुर्देवहितं • सूर्यं दृशे"(२२) इति। 'पुरस्तात्' पूर्वस्यान्दिशि, 'उच्चरत्' उदयं गच्छ। 'शुक्रं' ज्योतिःस्वरूपं, 'देवहितं' सर्वेभ्यो देवेभ्यो हित-कारि, 'चक्षुः' दृष्टेरनुग्राहकं, 'तत्' आदित्यमण्डलं, 'शरदः शतं' शतसङ्ख्याकान् संवत्सरान्, सर्वदा 'पश्येम'। तत्प्रसादाज्जीवनादि-व्यापारांश्च प्राप्नुवाम। 'नन्दाम' द्रव्यैः समृद्धा भूयास्म। 'मो-दाम' तद्भोगेन हृष्टाः स्म। 'भवाम' स्वस्थाने निवसाम। 'शृणवाम' वेदशास्त्ररहस्यं गुरुमुखादवगच्छेम। 'प्रब्रवाम' शिष्येभ्यः प्रकर्षेण कथयाम। 'अजीताः' शत्रुणा केनाप्यजिताः, किञ्च 'ज्योक्' दीर्घं कालं, 'सूर्यं', 'दृशे' द्रष्टुं समर्था भूयास्म॥

सरि॒रस्य॑ मध्या॒त्स मा॑ वृष॒भो लो॑हि॒ताक्षः॒ सूर्यो॑ विप॒श्चिन्मन॑सा पुनातु[२३]। [२४]ब्रह्म॑णश्रोत॒न्य॑सि॒ ब्रह्म॑ण आ॒णी स्थो॒ ब्रह्म॑ण आ॒वप॑नमसि धारि॒तेयं पृ॑थि॒वी ब्र॒ह्म॑णा म॒ही धा॑रि॒तमे॒नेन॑ म॒हद॒न्तरि॑क्षं॒ दिवं॑ दाधार

अथ त्रयस्त्रिंशं मन्त्रमाह। [२३]"य उद्गात् ० मनसा पुनातु"[२३] इति। 'यः' सूर्यः, 'महतः' प्रौढात्, 'अर्णवात्' पूर्वसमुद्रात्, तत्रापि विशेषतः 'सरिरस्य'* जलस्य, 'मध्यात्', 'विभ्राजमानः' विशेषेण दीप्यमानः, 'उद्गात्' उदयङ्गच्छति। 'सः सूर्यः', 'मनसा', मां 'पुनातु' शोधयतु। कीदृशः सूर्यः, 'वृषभः' कामानां वर्षयिता, 'लोहिताक्षः' रक्तवर्णाचियुक्तः, 'विपश्चित्' सर्वज्ञः॥

अथ चतुस्त्रिंशं मन्त्रमाह। [२४]"ब्रह्मणश्रोतन्यसि ० अधिविश्वसत्"[२४] इति। अत्र वेदः सम्बोध्यते। हे श्रुते त्वं 'ब्रह्मणः' परमात्मवस्तुनः, 'श्रोतनी' श्रवणहेतुभूता, 'असि', ब्रह्मतत्त्वं बोधयसीत्यर्थः। हे मदीये श्रोत्रे, युवां 'ब्रह्मणः' वेदस्य, 'आणी स्थः' नेतृणी भवथः, वेदं शृणुथ इत्यर्थः। हे मनः, 'ब्रह्मणः' वेदस्य, 'आवपनं' धारणस्थानं, 'असि'। 'इयं', 'मही' महती, 'पृथिवी', 'ब्रह्मणा' वेदप्रतिपाद्येन परमात्मना, 'धारिता'। 'महत्' प्रौढं, 'अन्तरिक्षं', 'एनेन'† परमात्मना, धारितं। 'पृथिवीं'

* सलिलस्येति E चिह्नितपुस्तकपाठः।

† एतेनेति D चिह्नितपुस्तकपाठः।

पृथिवीꣳ सदेवां यदहं वेद तदहं धारयाणि मा म-
द्वेदोऽधि विस्रंसत्[२४]। [२५]मेधामनीषे माऽऽविशताꣳ
समीची भूतस्य भव्यस्यावरुद्ध्यै सर्वमायुरयाणि सर्वमा-
युरयाणि[२५]। [२६]आभिर्गीर्भिर्यदतो न ऊनमाप्यायय
य हरिवो वर्द्धमानः। यदा स्तोतृभ्यो महि गोत्रा

---

विस्तीर्णां, 'सदेवां' देवसहितां, 'दिवं', 'दाधार' परमात्मा धृत-
वान्। 'यत्' परमात्मतत्त्वं, तत्प्रतिपादकं वेदवाक्यं वा, 'अहं'
यजमानः, 'वेद' जानामि। 'तत्' उभयं, 'अहं', सर्वदा मनसि
'धारयाणि'। स वेदः, 'मत्' मत्तः सकाशात्, 'अधि' आधि-
क्येन, 'मा विस्रसत्' विस्रस्तो माभूत्॥

अथ पञ्चविंशं मन्त्रमाह। [२५]"मेधामनीषे ० सर्वमायु-
रयाणि"[२५] इति। 'मेधा' धारणशक्तिः, 'मनीषा' ग्रहणशक्तिः,
ते उभे 'समीची' अनुकूले सत्यौ, 'मां' यजमानं, 'आविशतां'
सर्वतः प्रविशतां। किमर्थं, 'भूतस्य' पूर्वमधीतस्य, 'भव्यस्य' अध्ये-
ष्यमाणस्य, च 'अवरुद्ध्यै' स्वीकारार्थं, एतत्सिद्ध्यर्थमेव 'सर्वमायुः',
'अयाणि' प्राप्नवानि। द्विरुक्तिरादरार्था॥

अथ षट्त्रिंशं मन्त्रमाह। [२६]"आभिर्गीर्भिर्यदतः ० अध ते
स्याम"[२६] इति। हे 'हरिवः' अश्वयुक्तेन्द्र, 'आभिर्गीर्भिः'
अस्मदीयस्तुतिभिः, 'वर्द्धमानः', त्वं 'अतः' अस्मत्कर्मणः, 'ऊनं',

रुजासि भूयिष्ठभाजो अध ते स्याम[११] । [१०]ब्रह्म प्रावादिष्म तन्नो मा हासीत् । ॐ शान्तिः शान्तिः शान्तिः[१०] ॥ ५ ॥

परावतः, दधातु, बह्वान्, जिन्वथ, हृश्ये, सप्त च ॥ अनु० ॥ ४२ ॥

[१]नमः, [२]युञ्जते, [३]वृष्णो अश्वस्य, [४]ब्रह्मन् प्रवर्ग्येण, [५]ब्रह्मन् प्रचरिष्यामः, [६]दश प्राचीः, [७]अ-

---

अङ्गं, 'नः' अस्मदर्थं, 'आप्यायय' अभिवर्द्धय। 'यदा' यस्मिन् काले, 'स्तोतृभ्यः' स्तोत्रनुग्रहार्थं, 'महि गोत्रा' महतो मेघान्, 'रुजासि' भग्नान् करोषि। 'अध' तदा, वयं 'ते' तव, अनुग्रहात्, 'भूयिष्ठभाजः' 'स्याम' प्रभूतधनानां लब्धारो भूयास्म ॥

अथ सप्तत्रिंशं मन्त्रमाह। [१०]"ब्रह्म प्रावादिष्म • शान्तिः शान्तिः"[१०] इति। एवमुक्तेन प्रकारेण 'ब्रह्म' परमात्मप्रतिपादक मन्त्रजातं, 'प्रावादिष्म' प्रकर्षेण वयं कथितवन्तः। 'तत्' ब्रह्मतत्त्वं, तस्य प्रतिपादकं वाक्यञ्च, 'नः' अस्मान्, 'मा हासीत्' कदाचिदपि मा परित्यजतु। हे प्रणवप्रतिपाद्य परमात्मन्, आध्यात्मिकानां ज्वरशिरोव्यथादिकृतानां विघ्नानां 'शान्तिः', अस्तु। आधिभौतिकानां चोरव्याघ्रादिकृतानां विघ्नानां 'शान्तिः', अस्तु। आधिदैविकानां यक्षराक्षसादिकृतानां विघ्नानां 'शान्तिः', अस्तु ॥

पश्यं गोपां, (८)देवस्य, (९)समुद्राय, (१०)इषे पीपिहि,
(११)घर्म्म या ते, (१२)महीनां चत्वारि, (१३)अस्कान्,
(१४)या पुरस्तात् सप्त सप्त, (१५)प्राणाय त्रीणि, (१६)पूष्णे
चत्वारि, (१७)उद्रस्य एकादश, (१८)यास्ते सप्त, (१९)अग्नि-
र्भुवः सीद एकोनविंशतिः, (२०)भूः ऊर्द्ध्वः त्रिंशत्,
(२१)भूः मयि षोडश, (२२)यास्ते घोराः नव, (२३)त्रिक्
च अष्टौ, (२४)धुनिश्च द्वे, (२५)उग्रश्च त्रीणि, (२६)अहोरात्रे
पञ्च, (२७)खट् त्रीणि, (२८)विगाः सप्तदश, (२९)अस्र-
ञ्जुखः चत्वारि, (३०)यद्देतद्वृकसः पञ्च, (३१)यद्दीषितः
चत्वारि, (३२)दीर्घमुखि त्रीणि, (३३)इत्था चत्वारि,
(३४)यद्देतद्भूतानि षट्, (३५)प्रसार्य त्रीणि, (३६)अचित्ता
दश, (३७)आहरावद्य (३८)ब्रह्मणा षट् षट्, (३९)उत्तुद
अष्टौ, (४०)भूः षट्, (४१)पृथिवी अष्टषष्टिः, (४२)शन्नः
सप्तपञ्चाशत् ॥ द्विचत्वारिंशत् ॥

---

अथ नमो वाचे इत्यारभ्य शन्नो वातः पवतामित्यन्तैरनुवाकैः सम्पाद्यं प्रवर्ग्यं स्तोतुं तस्य प्रवर्ग्यस्य नामानि दर्शयति । "प्रजापतिः सम्भ्रियमाणः । सम्राट् सम्भृतः । घर्मः प्रवृक्तः । महावीर उद्वासितः । असौ खलु वावैष आदित्यः । यत्प्रवर्ग्यः । स

युञ्जते,* ब्रह्मन् प्रचरिष्यामः, अपश्यं गोपां, समुद्राय, वयमनुक्रामाम, पूष्णे, धुनिश्च, यद्देतद्भूतानि, तच्छंकेयं अष्टाशीतिः* ॥ ८८ ॥ नमः, अनुमदन्तु ॥

॥०॥ ओम् शान्तिः शान्तिः शान्तिः॥०॥ हरिः ओम् ॥०॥

---

एतानि नामान्यकुरुत" इति। (५प्र०।११अ०।१म०)। अस्य प्रवर्ग्यस्य तत्तदवस्थाभेदेन प्रजापत्यादीनि नामानि सम्पद्यन्ते। यदा ब्रह्मराहविहतवल्मीकवपादिसम्भारैः 'सम्भ्रियमाण'त्व-दशापन्नो भव-

---

* एतत्परिसङ्ख्याने प्रथमोऽनुवाको न गणितः। युञ्जत इत्यारभ्य दशदशतिपरिगणनया द्वितीयानुवाकस्य पञ्चदशत्या अतिरिक्त-नवकण्डिकाः दशतित्वेन परिगणिताः। ब्रह्मन् प्रचरिष्यामः इत्यारभ्य दशदशतौ षष्ठानुवाकस्य अतिरिक्तनवकण्डिका दशतित्वेन परिसङ्ख्याताः। अपश्यं गोपा इत्यारभ्य दशदशत्यां अष्टमानुवाकस्य अतिरिक्तनवकण्डिका दशतित्वेन परिगृहीताः। B, G चिह्नितपुस्तकद्वये दशत्याः समष्टिर्द्व्यशीतिरेव निर्णीता। J चिह्नित-पुस्तकेऽपि तथैव। परन्तु उभयत्र प्रतीकाः विभिन्नाः वर्त्तन्ते। B, G चिह्नितपुस्तकद्वयस्य दशदशतिप्रतीकाः यथा, नमः, युञ्जते, ब्रह्मन् प्रचरिष्यामः, अपश्यं गोपाः, समुद्राय, वयमनुक्रामाम, पूष्णे, अहोरात्रे, अत्रिणा त्वा, आपो जनयथा च न, द्व्यशीतिः ॥ ८२ ॥

J चिह्नितपुस्तकस्य दशतिप्रतीकाः यथा, नमः, युञ्जते, ब्रह्मणा षट् षट्, उत्तुदाष्टौ, भूः षट्, समुद्राय, वयमनुक्रामाम, पूष्णे, अहो-रात्रे, अत्रिणा त्वा, आपो जनयथा च न, द्व्यशीतिः ॥ ८२ ॥

अत्र उभयत्र पाठे दशदशगणनया दशतीनां क्रमेण परिसङ्ख्यानं न कृतं। कुत्रचित् दशदशतिसङ्ख्याया न्यूनाधिक्यं दृश्यते। अतएव तदुभयविधपाठोऽशुद्ध इति अनुमीयते।

ति, तदा 'प्रजापतिः', इत्येवास्य नाम। सर्वात्मना सम्भृतत्वदशापन्नस्य 'सम्राट्', इति नाम। प्रवृञ्जनदशापन्नस्य 'घर्मः', इति नाम। उद्वासनदशापन्नस्य 'महावीरः', इति नाम। एताभिर्दशाभिः अवस्थावत् 'यत्' स्वरूपं, तेन रूपेण 'आदित्यः', इति नाम। सः 'प्रवर्ग्यः', एवं 'एतानि' 'नामानि', 'अकुरुत', सम्पादितवान्॥

नामवेदनं प्रशंसति। "य एवं वेद। विदुरेनं नाम्ना" इति। (५प्र०।११अ०।२म०)। देवदत्तोपाध्याय इत्येवं तदीयं नाम सर्वैः ज्ञातं भवति॥

अथ नामविशेषव्यवहारप्रदर्शनेन प्रशंसति। "ब्रह्मवादिनो वदन्ति॥१॥ यो वै वसीयाꣳसं यथानाममुपचरति। पुण्यार्त्तिं वै स तस्मै कामयते। पुण्यार्त्तिमस्मै कामयन्ते। यः एवं वेद। तस्मादेवं विद्वान्। घर्म इति दिवाऽऽचक्षीत। सम्राडिति नक्तं। एते वा एतस्य प्रिये तनुवौ। एते अस्य प्रिये नामनी। प्रिययैवैनं तनुवा॥२॥ प्रियेण नाम्ना समर्द्धयति। कीर्त्तिरस्य पूर्वा गच्छति जनतामायतः" इति। (५प्र०।११अ०।३म०)। 'यो वै' यः कोऽपि पुमान् भृत्यः, 'वसीयाꣳसं' अतिशयेन वसुमन्तं धनिकं राजानममात्यादिकं वा, 'यथानामं' तदीयं नामानतिक्रम्य नामकरणकाले सम्पादितेनैव नाम्ना, 'उपचरति' अधिपते स्वामिन्नित्यादिशब्दैर्विना भो देवदत्तेत्यादिकेनैव मुख्येन नाम्ना तमाह्वयति, 'सः' भृत्यः, 'तस्मै' धनिकाय, 'पुण्यार्त्तिं वै' भाग्यहानिमेव, 'कामयते', उत्तमोपचारयोग्ये नीचव्यवहारात्। अथवा 'सः' धनिको राजादिः, 'तस्मै' स्वाभाविकनाम्ना व्यवहरते भृत्याय,

'पुण्यान्तिं' धनादिहानिं, 'कामयते' दण्डयितुमिच्छति। न केवलं राजादिरेव किन्तु 'यः' मूढः, 'एवं वेद' स्वाभाविकनाम्नैव व्यवहारं निश्चिनोति, 'अस्मै' मूढाय, राजादिप्रभुपरिसरवर्त्तिनः सर्वेऽपि पुरुषाः 'पुण्यान्तिं' ताडनधनहान्यादिकं, 'कामयन्ते', एवं 'ब्रह्मवादिनः', आहुः। यस्मादेवं 'तस्मात्', 'एवं विद्वान्' नामान्तरेणैव प्रभुर्व्यवहरणीय इत्येवं जानन् पुरुषः, प्रवर्ग्यं प्रत्यहनि 'घर्म इति', नाम्ना व्यवहरेत्, रात्रौ तु 'सम्राट्', 'इति', नाम्ना। तत्र घर्मशब्देनोच्यमाना दीप्यमाना या तनूः, सम्राट्शब्देनोच्यमाना सम्यग्राजमाना या तनूः, 'एते' उभे अपि, 'एतस्य' प्रवर्ग्यस्य, 'प्रिये', शरीरे, 'एते' घर्मसम्राट्शब्दरूपे, 'अस्य' प्रवर्ग्यस्य, 'प्रिये', 'नामनी'। तस्मादेताभ्यां शब्दाभ्यां व्यवहरन् पुरुषः 'प्रिययैव', 'तनुवा' देवादिरूपेण, 'प्रियेण', च 'नाम्ना', तच्छरीरोचितेनैव, प्रवर्ग्यं समृद्धं करोति। तथा सति 'जनतामायतः' जनसमूहं सभां प्रति आगच्छतः, 'अस्य' घर्मादिनामभिर्व्यवहारिणः पुरुषस्य, 'कीर्त्तिः', 'पूर्वा' अस्मादपि पुरुषात् पूर्वभाविनी, 'गच्छति'। अस्य पुरुषस्यागमनात्प्रागेव सर्वेऽपि सभानिष्ठा जना हृषिताभिज्ञोऽयं महात्मेत्येवं 'एनं',* प्रशंसन्ति॥

घर्मादिनामविशेषद्वारा प्रवर्ग्यस्य प्रशंसां कृत्वा गायत्रीच्छन्दोगतसङ्ख्यासाम्येनापि प्रशंसति। "गायत्री देवेभ्योऽपाक्रामत्। तां देवाः प्रवर्ग्येणैवानुव्यभवन्। प्रवर्ग्येणाप्नुवन्। यच्चतुर्विंꣳशतिः कृत्वः प्रवर्ग्यं प्रवृणक्ति। गायत्रीमेव तदनु विभवति। गायत्रीमा-

* महान्मित्येवमेनमिति D चिह्नितपुस्तकपाठः।

प्नोति। पूर्वाऽस्य जनं यतः कीर्त्तिर्गच्छति" इति। (५प्र०।१.१अ०। ४म०)। पुरा कदाचिदपरक्ता सती 'गायत्री', देवी, 'देवेभ्यः', सकाशात्, 'अपाक्रामत्'। तदा 'देवाः', प्रवर्ग्यमनुष्ठाय तेन 'एव', 'प्रवर्ग्येण', 'तां' गायत्रीं, 'अनुव्यभवन्' अन्वेष्टुं विभवः समर्थाः अभवन्। अन्विष्य च तेन 'प्रवर्ग्येण', 'तां' गायत्रीं, 'प्राप्नुवन्'। अतो यदि द्वादशसु दिनेष्वेकैकस्मिन् दिने द्विर्द्विरित्येवं 'चतुर्विंशतिकृत्वः', 'प्रवर्ग्यं', अनुतिष्ठेत्, 'तत्' तदा, 'गायत्रोमेव', 'अनुगन्तुं समर्था भवति। चतुर्विंशतिसङ्ख्याया गायत्र्यक्षरनिष्ठत्वात्। अतः सङ्ख्या-सामान्यात् 'गायत्रीं', 'प्राप्नोति'। 'जनं यतः' सभां गच्छतः, 'अस्य' चतुर्विंशतिवारं प्रवर्ग्यानुष्ठायिनः पुरुषस्य, 'कीर्त्तिः', तस्मा-दपि पूर्वभाविनी सती सभां प्राप्नोति॥

पुनरपि प्रकारान्तरेणावस्थाविशेषगतैर्नामभिः प्रशंसति। "वैश्वदेवः सꣳसन्नः॥३॥ वसवः प्रवृक्तः। सोमोऽभिकीर्यमाणः। आश्विनः पयस्यानीयमाने। मारुतः क्वथन्। पौष्ण उद्वन्तः। सारस्वतो विष्यन्दमानः। मैत्रः शरो गृहीतः। तेज उद्यतो वायुः। ह्रियमाणः प्रजापतिः। हूयमानो वाग्घुतः॥४॥ असौ खलु वावैष आदित्यः। यत्प्रवर्ग्यः। स एतानि नामान्यकुरुत" इति। (५प्र०११अ०।५म०)। 'संसन्नः' सम्यगासादनदशां प्राप्तो यः प्रवर्ग्यः, तस्य 'वैश्वदेवः', इति नाम, तेन हि विश्वेदेवास्तुष्य-न्ति। प्रवृञ्जनदशापन्नस्य 'वसवः', इति नाम, वसूनां प्रीतिहेतु-त्वात्। प्रवृञ्जने सति पात्रस्याकारे इतस्ततश्चलनमभिकीर्यमाणत्वं तद्दशापन्नस्य 'सोमः', इति नाम, तत्प्रीतिहेतुत्वात्। आनीयमान-

क्षीरदशापन्नस्य 'आश्विनः', इति नाम, तेन हि अश्विनौ तृप्यतः। पयसा सह क्वथनदशापन्नस्य 'मारुतः', इति नाम। पात्रस्यान्त-पर्यन्तमुद्गमनं 'उदन्तः', तदवस्थापन्नस्य 'पौष्णः', इति नाम। पात्रादपुन्नतत्वं 'विष्यन्दनं',* तद्दशापन्नस्य 'सारस्वतः', इति नाम। पचनवाहुल्येन घनीभाववत् प्रतीयमानः 'शरः', शराकारग्रहण-दशापन्नस्य 'मैत्रः', इति नाम। अधराभ्यां खरादुद्यमनदशापन्नस्य 'तेजः', इति नाम। आहवनीयं प्रति ह्रियमाणत्वदशापन्नस्य 'वायुः', इति नाम। आहवनीये ह्रयमाणत्वदशापन्नस्य 'प्रजा-पतिः', इति नाम। हुतत्वदशापन्नस्य 'वाक्', इति नाम। एता-भिर्दशाभिरवस्थावान् यः 'प्रवर्ग्यः', तस्य 'आदित्यः', इति नाम। 'सः', प्रवर्ग्यः, एवं तत्तद्देवताप्रीतिहेतुत्वात् स्वस्य 'एतानि', 'ना-मानि', 'अकुरुत' सम्पादितवान् ॥

नामवेदनं प्रशंसति। "य एवं वेद। विदुरेनं नाम्ना" इति। (५ प्र०।११ अ०।६ म०)॥

अथ प्रश्नोत्तराभ्यां मृण्मयस्य महावीरस्य होमसाधनत्वमुपपा-दयति। "ब्रह्मवादिनो वदन्ति। यन्मृण्मयमाहुतिं नाश्नुतेऽथ। कस्मादेषोऽश्नुत इति। वागेव इति ब्रूयात्। वाच्येव वाचं दधाति ॥५॥ तस्मादश्नुते" इति। (५ प्र०।११ अ०।७ म०)। दारुमयस्य होमसाधनत्वं सर्वत्र दृष्टं नतु क्वचिदपि मृण्मयस्य। अतएव शाकम्प्रस्थायीयप्रकरणे समाम्नायते। दारुपात्रेण जुहोति

* निष्यन्दनमिति D चिह्नितपुस्तकपाठः। परिस्यन्दनमिति E चि-ह्नितपुस्तकपाठः।

नहि मृण्मयमाहुतिमानम्न इति। एवं सत्यत्र कस्मात्कारणादेव महावीर आहुतिसाधनत्वं प्राप्नोतीति ब्रह्मवादिनां प्रश्नः। तत्राभिज्ञः पुरुषो 'वागेषः', 'इति', उत्तरं 'ब्रूयात्'। 'एषः' महावीरः, मन्त्रैर्निष्पादितत्वात् वागात्मकः। अतोऽनेन होमे सति वाचो मन्त्रनिष्पन्ने महावीरे 'एव', 'वाचं' मन्त्रनिष्पादितामाहुतिं, सम्पादयति। 'तस्मात्' कारणात्, मृण्मयोऽप्ययं महावीर आहुतिमर्हति॥

प्रकारान्तरेण द्वादशधाविभागमुपजीव्य प्रशंसति। "प्रजापतिर्वा एष द्वादशधा विहितः। यत्प्रवर्ग्यः। यत्प्रागवकाशेभ्यः। तेन प्रजा असृज। अवकाशैर्देवासुरानसृजत। यदूर्ध्वमवकाशेभ्यः। तेनान्नमसृजत। अन्नं प्रजापतिः। प्रजापतिर्वावैषः॥ ६॥" इति। (५प्र०।११अ०।७म०)। यः अयं 'प्रवर्ग्यः', सः 'एषः', 'द्वादशधा', विभक्तः, 'प्रजापतिः" एव। तत्कथमिति तदुच्यते। अवकाशमन्त्रेभ्यः प्राचीनो यो भागः 'तेन' भागेन, प्रजापतिः 'प्रजाः', सृष्टवान्। अपश्यं गोपामित्यनुवाके समाम्नाता दश मन्त्रा अवकाशनामकाः। एतच्च* तद्ब्राह्मणे समाम्नातं। नवैतेऽवकाशा भवन्ति, पत्निये दशम इति। नमो युञ्जत इत्यादिभिः षड्भिरनुवाकैरुक्तो मन्त्रसमूहः अवकाशेभ्यः प्राचीनो भागः तेन प्रजासृष्टिः। 'अवकाशास्त्वेतु दशभिर्मन्त्रैः 'देवासुरान्', 'असृजत'। देवस्य त्वा सवितु प्रसव इत्यादिकः 'अवकाशेभ्यः', 'ऊर्ध्वः', मन्त्रभागः, 'तेन', प्रजापतिः 'अन्नं', 'असृजत'। एवं पूर्वोत्तरभागौ द्वौ, मध्यदेशः अवकाशः,

---

* ततश्च इति D चिह्नितपुस्तकपाठः।

इतिद्वादशप्रकारो मन्त्रसङ्घः प्रजापतिस्वरूपः । 'अन्नं', च प्रजापतिसृष्टत्वात् प्रजापतिरूपम् । तादृशः 'प्रजापतिः', एव 'एषः' प्रवर्ग्यरूपः । एवमस्य प्रशस्तत्वं द्रष्टव्यं ॥

वदन्ति, तनुवा, सꣳसन्नः, ह्वयमानो वाग्घुतः, दधाति, एषः, ॥ अनु०॥११॥

इति पञ्चमप्रपाठके एकादशोऽनुवाकः ॥

अथ दिनविशेषेषु फलविशेषकथनेन प्रवर्ग्यं प्रशंसति । "सविता भूत्वा प्रथमेऽहन् प्रवृज्यते । तेन कामाꣳ एति । यद् द्वितीयेऽहन् प्रवृज्यते । अग्निर्भूत्वा देवानेति । यत्तृतीयेऽहन् प्रवृज्यते । वायुर्भूत्वा प्राणानेति । यच्चतुर्थेऽहन् प्रवृज्यते । आदित्यो भूत्वा रश्मीनेति । यत्पञ्चमेऽहन् प्रवृज्यते । चन्द्रमा भूत्वा नक्षत्राणेति ॥१॥ यत् षष्ठेऽहन् प्रवृज्यते । ऋतुर्भूत्वा संवत्सरमेति । यत्सप्तमेऽहन् प्रवृज्यते । धाता भूत्वा शक्करीमेति । यदष्टमेऽहन् प्रवृज्यते । बृहस्पतिर्भूत्वा गायत्रीमेति । यन्नवमेऽहन् प्रवृज्यते । मित्रो भूत्वा त्रिवृत इमांल्लोकानेति । यद्दशमेऽहन् प्रवृज्यते । वरुणो भूत्वा विराजमेति ॥२॥ यदेकादशेऽहन् प्रवृज्यते । इन्द्रो भूत्वा त्रिष्टुभमेति । यद् द्वादशेऽहन् प्रवृज्यते । सोमो भूत्वा सत्यामेति" इति । (५प्र०।१२अ०।१म०) । प्रथमे दिवसे 'प्रवृज्यते', इति यत् 'तेन', अनुष्ठानेन, अयं 'सवितृदेवः 'भूत्वा', 'कामान्', प्राप्नोति । एवमुत्तरेष्वपि वाक्येषु योजनीयं ॥

द्वादशदिनानुष्ठानं प्रशस्य उपसद्भ्यः प्राचीनप्रतीचीनकालानुष्ठाने* प्रशंसति। "यत् पुरस्तादुपसदां प्रवृज्यते। तस्मादितः पराङ्-मूँल्लोकाꣳ स्तपन्नेति। यदुपरिष्टादुपसदां प्रवृज्यते। तस्मादमुतोऽर्वाङिमाँल्लोकाꣳ स्तपन्नेति" इति। (५प्र०।१२अ०।२म०)। प्रवर्ग्यः आदित्यस्वरूपः, उपसदः लोकस्वरूपाः, तथा सति प्रतिदिनं प्रवर्ग्यानुष्ठानाय पश्चादुपसदानुष्ठानादादित्योऽधोभागवर्त्ती 'पराङ्' ऊर्ध्वाभिमुखः सन्, 'इतः', अपि उपरितनान् 'अमून्' स्वर्गादिलोकान्, 'तपन्नेति' प्रकाशयन् सञ्चरति। तथा पूर्वपूर्वदिनगतेभ्यः उपसद्भ्यः उत्तरोत्तरदिनगतः प्रवर्ग्यः 'उपरिष्टात्', वर्त्तते। 'तस्मात्', असावादित्य ऊर्ध्वलोकवर्त्ती सन् 'अमुतोऽर्वाङ्' स्वर्गलोकादधोमुखो भूत्वा, 'इमान्' भूरादीन् लोकान्, प्रकाशयन् सञ्चरति॥

वेदनं प्रशंसति। "य एवं वेद। एव तपति॥३॥" इति। (५प्र०।१२अ०।३म०)। 'यः' पुमान्, 'एवं' उक्तेन प्रकारेण, प्रवर्ग्यस्याधस्तादुपरिष्टाच्चावस्थानं जानाति सोऽयं सर्वतः प्रकाशितः 'एव'। तदेवं ब्राह्मणगताभ्यां एकादशद्वादशानुवाकगताभ्यां त्रिचत्वारिंशदनुवाकोक्तमन्त्रैरनुष्ठेयः प्रवर्ग्यः प्रशस्तः॥

नक्षत्राण्येति, विराजमेति, तपति॥ अनु०॥१२॥

इति पञ्चमप्रपाठके द्वादशोऽनुवाकः॥

---

* प्राचीनकालानुष्ठानमिति E चिह्नितपुस्तकपाठः।

चतुर्थपञ्चमाभ्यां प्रपाठकाभ्यां प्रपञ्चितः ।
मन्त्रब्राह्मणरूपाभ्यां प्रवर्ग्योयमशेषतः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमार्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके चतुर्थप्रपाठके द्विचत्वारिंशोऽनुवाकः ॥ ४२ ॥

समाप्तश्चतुर्थप्रपाठकः ॥

तद्व्याख्यानरूपेण पञ्चमप्रपाठकोऽपि समाप्तः ॥

पञ्चमप्रपाठके प्रथमोऽनुवाकः ।

शन्नस्तन्नो माह्वासीत् । ॐ शान्तिः शान्तिः शान्तिः । ओम् ।

[1]देवा वै सत्रमासत । ऋद्धिपरिमितं यशस्कामाः । तेऽब्रुवन् । यन्नः प्रथमं यश ऋच्छात् । सर्वेषान्नस्तत्सहासदिति । तेषां कुरुक्षेत्रं वेदिरासीत् । तस्यै खाण्डवो दक्षिणार्द्ध आसीत् । तूर्घ्नमुत्तरार्द्धः । परीणज्जघनार्द्धः । मरव उत्करः ॥ १ ॥

तेषां मखं वैष्णवं यश आर्छत्[1] । [2]तन् न्यकामयत । तेनापाक्रामत् । तं देवा अन्वायन् । यशोऽवरुरुत्समानाः । तस्यान्वागतस्य । सव्याद्धनुरजायत । दक्षिणादिषवः । तस्मादिषुधन्वं पुण्यजन्म । यज्ञजन्मा हि ॥ २ ॥

तमेकꣳ सन्तं । बहवो नाभ्यधृष्णुवन् । तस्मादेकमिषुधन्विनं । बहवोऽनिषुधन्वा नाभिधृष्णुवन्ति[2] । [3]सोऽस्मयत । एकं मा सन्तं बहवो नाभ्यधर्षिषुरिति ।

---

१ एतन्मन्त्रस्य भाष्यं ३७१ पृष्ठे द्रष्टव्यं ।
२ ,, ३७२ ,,
३ ,, ३७३ ,,

तस्य सिष्मियाणस्य तेजोऽपाक्रामत्। तद्देवा ओषधीषु न्यमृजुः । ते श्यामाका अभवन् । स्मयाका वै नामैते ॥ ३ ॥

तत् स्मयाकानाꣳ स्मयाकत्वं । तस्माद्दीक्षितेनापि गृह्य स्मेतव्यं । तेजसो धृत्यै(३) । (४)स धनुः प्रतिष्कभ्याऽतिष्ठत् । ता उपदीका अब्रुवन् वरं वृणामहै । अथ व इमꣳ रन्धयाम । यत्र क्व च खनाम । तदपोऽभितृणदामेति । तस्मादुपदीका यत्र क्व च खनन्ति । तदपोऽभितृन्दन्ति ॥ ४ ॥

वारꣳ वृतꣳ ह्यासां । तस्य ज्यामप्यादन् । तस्य धनुर्विप्रवमाणꣳ शिर उदवर्त्तयत् । तद् द्यावापृथिवी अनुप्रावर्त्तत । यत् प्रावर्त्तत । तत् प्रवर्ग्यस्य प्रवर्ग्यत्वं । यद्घ्राꣳइ इत्यपतत् । तद्घर्मस्य घर्मत्वं । महतो वीर्यमपप्तदिति । तन्महावीरस्य महावीरत्वं ॥ ५ ॥

यदस्याः समभरन् । तत् सम्राजः सम्राट्त्वं(४) । (५)तꣳ स्तृतं देवतास्त्रेधा व्यगृह्णत । अग्निः प्रातःसवनं । इन्द्रो माध्यन्दिनꣳ सवनं । विश्वे देवास्तृतीय-

३ एतन्मन्त्रस्य भाष्यं ३७३ पृष्ठे द्रष्टव्यं ।
४ „ ३७४ „
५ „ ३७६ „

सवनं। तेनापशीर्ष्णा यज्ञेन यजमानाः। नाशिषो-
ऽवारुन्धत। न सुवर्गं लोकमभ्यजयन्(५)। (६)ते देवा
अश्विनावब्रुवन्॥ ६॥

भिषजौ वै स्थः। इदं यज्ञस्य शिरः प्रतिधत्तमिति।
तावब्रूतां वरं वृणावहै। ग्रह एव नावत्रापि गृह्यता-
मिति। ताभ्यामेतमाश्विनमगृह्णन्। तावेतद्यज्ञस्य
शिरः प्रत्यधत्तां(६)। (७)यत् प्रवर्ग्यः। तेन सशीर्-
ष्णा यज्ञेन यजमानाः। अवाशिषोऽरुन्धत। अभि सु-
वर्गं लोकमजयन्*॥ यत् प्रवर्ग्यं प्रवृणक्ति। य-
ज्ञस्यैव तच्छिरः प्रतिदधाति। तेन सशीर्ष्णा यज्ञेन
यजमानः। अवाशिषो रुन्धे। अभि सुवर्गं लोकं ज-
यति। तस्मादेष आश्विनप्रवया इव। यत् प्रवर्ग्यः(७)
॥ ७॥

उत्करः(१), हि(२), एते(३), रुन्दन्ति(४), महा-
वीरत्वम्(५), अब्रुवन्(६), अजयन्, सप्त च(७)॥
अनु० १॥

---

६ एतन्मन्त्रस्य भाष्यं ३७७ पृष्ठे द्रष्टव्यं।
७ ,, ३७८ ,,

* अभ्यजयन्निति A चिह्नितपुस्तकपाठः।

अथ द्वितीयोऽनुवाकः।

(१)सावित्रं जुहोति प्रसूत्यै। चतुर्गृहीतेन जुहोति। चतुष्पादः पशवः। पशूनेवावरुन्धे। चतस्रो दिशः। दिक्ष्वेव प्रतितिष्ठति(१)। (२)छन्दांसि देवेभ्योऽपाक्रामन्। न वोऽभागानि हव्यं वक्ष्याम इति। तेभ्य एतच्चतुर्गृहीतमधारयन्। पुरोऽनुवाक्यायै याज्यायै ॥ १ ॥

देवतायै वषट्काराय। यच्चतुर्गृहीतं जुहोति। छन्दांस्येव तत् प्रीणाति। तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति(२)। (३)ब्रह्मवादिनो वदन्ति। होतव्यं दीक्षितस्य गृहा३ इन होतव्या३मिति। हविर्वै दीक्षितः। यज्जुहुयात्। हविष्कृतं यजमानमग्नौ प्रदध्यात्। यन्न जुहुयात्(३) ॥ २ ॥

(४)यज्ञपरुरन्तरियात्। यजुरेव वदेत्। न हविष्कृतं यजमानमग्नौ प्रदधाति। न यज्ञपरुरन्तरेति(४)। (५)गा-

---

१ एतन्मन्त्रस्य भाष्यं ३७८ पृष्ठे द्रष्टव्यं।
२ ,, ३७९ ,,
३ ,, ३८० ,,
४ ,, ३८० ,,
५ ,, ३८१ ,,

यची च्छन्दांᳪस्यत्यमन्यत । तस्यै वषट्कारोऽभ्यग्य शि-
रोऽच्छिनत् । तस्यै द्वेधा रसः परापतत् । पृथिवीमर्धः
प्राविशत् । पशूनर्धः । यः पृथिवीं प्राविशत् ॥ ३ ॥

स खदिरोऽभवत् । यः पशून् । सोऽजां । यत्
खादिर्य्यभ्रिर्भवति । छन्दसामेव रसेन यज्ञस्य शिरः
सम्भरति[५] । [६]यदौदुम्बरी । ऊर्ग्वा उदुम्बरः । ऊर्जैव
यज्ञस्य शिरः सम्भरति । यद्वैणवी । तेजो वै वेणुः ॥ ४ ॥

तेजसैव यज्ञस्य शिरः सम्भरति । यद्वैकङ्कती ।
भा एवावरुन्धे[६] । [७]देवस्य त्वा सवितुः प्रसव इत्यभ्रि-
मादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ
हि देवानामध्वर्यू आस्तां । पूष्णो हस्ताभ्यामित्याह
यत्यै[७] । [८]वज्र इव वा एषा । यदभ्रिः । अभ्रिरसि
नारिरसीत्याह शान्त्यै[८] ॥ ५ ॥

[९]अध्वरकृद्देवेभ्य इत्याह । यज्ञो वा अध्वरः । यज्ञ-
कृद्देवेभ्य इति वावैतदाह[९] । [१०]उत्तिष्ठ ब्रह्मणस्पत

---

६ एतन्मन्त्रस्य भाष्यं ३८२ पृष्ठे द्रष्टव्यं ।
७ „ ३८२ „
८ „ ३८१ „
९ „ ३८३ „
१० „ ३८४ „

इत्याह। ब्रह्मणैव यज्ञस्य शिरोऽच्छैति[१०]।[११]प्रैतु ब्रह्मणस्पतिरित्याह। प्रेत्यैव यज्ञस्य शिरोऽच्छैति[११]।[१२]प्रदेव्येतु सूनृतेत्याह। यज्ञो वै सूनृता[१२]। [१३]अच्छा वीरन्नर्यं पङ्क्तिराधसमित्याह ॥ ६ ॥

पाङ्क्तो हि यज्ञः[१३]।[१४]देवा यज्ञं नयन्तु न इत्याह। देवानेव यज्ञनियः कुरुते[१४]।[१५]देवी द्यावापृथिवी अनु मेमꣳसाथामित्याह। आभ्यामेवानुमतो यज्ञस्य शिरः सम्भरति[१५]। [१६]ऋध्यासमद्य मखस्य शिर इत्याह। यज्ञो वै मखः। ऋध्यासमद्य यज्ञस्य शिर इति वावैतदाह[१६]। [१७]मखाय त्वा मखस्य त्वा शीर्ष्ण इत्याह। निर्दिश्यैवैनद्धरति[१७] ॥ ७ ॥

[१८]त्रिर्हरति। त्रय इमे लोकाः। एभ्य एव लोकेभ्यो यज्ञस्य शिरः सम्भरति। तूष्णीं चतुर्थꣳ हरति। अपरिमितादेव यज्ञस्य शिरः सम्भरति[१८]।[१९]मृत्खनाद-

---

११ एतन्मन्त्रस्य भाष्यं ३८५ पृष्ठे द्रष्टव्यं।
१२ ,, ३८५ ,,
१३ ,, ३८५ ,,
१४ ,, ३८५ ,,
१५ ,, ३८५ ,,
१६ ,, ३८६ ,,
१७ ,, ३८६ ,,
१८ ,, ३८६ ,,

ग्रे हरति। तस्मान् मृत्खनः करूष्टतमः(१९)। (२०)इयत्यग्र आसीरित्याह। अस्यामेवाच्छंवट्कार* यज्ञस्य शिरः सम्भरति(२०)। (२१)ऊर्जं वा एतꣳ रसं पृथिव्या उपदीका उद्दिहन्ति॥ ८॥

यद्वल्मीकं। यद्वल्मीकवपासम्भारो भवति। ऊर्जमेव रसं पृथिव्या अवरुन्धे। अथो श्रोत्रमेव। श्रोत्रꣳ ह्येतत् पृथिव्याः। यद्वल्मीकः(२१)। (२२)अबधिरो भवति। य एवं वेद(२२)। (२३)इन्द्रो वृत्राय वज्रमुदयच्छत्। स यत्र यत्र पराक्रमत॥ ९॥

तन्नाध्रियत। स पूतीकस्तम्बे पराक्रमत। सोऽध्रियत। सोऽब्रवीत्। ऊतिं वै मेधा इति। तदूतीकानामूतीकत्वं। यदूतीका भवन्ति। यज्ञायैवोतिं दधति(२३)। (२४)अग्निजा असि प्रजापते रेत इत्याह। य एव रसः पशून् प्राविशत्॥ १०॥

---

| | | | |
|---|---|---|---|
| १९ एतन्मन्त्रस्य भाष्यं | ३८७ पृष्ठे द्रष्टव्यं। | | |
| २० | ,, | ३८८ | ,, |
| २१ | ,, | ३८९ | ,, |
| २२ | ,, | ३८९ | ,, |
| २३ | ,, | ३८९ | ,, |
| २४ | ,, | ३९१ | ,, |

* अच्छंवषट्कारमिति J चिह्नितपुस्तकपाठः।

तमेवावरुन्धे(२४) । (२५)पञ्चैते सम्भारा भवन्ति । पाङ्क्तो यज्ञः । यावानेव यज्ञः । तस्य शिरः सम्भरति(२५) । (२६)यद् ग्राम्याणां पशूनां चर्मणा सम्भरेत् । ग्राम्यान् पशूञ्छुचाऽर्पयेत् । कृष्णाजिनेन सम्भरति । आरण्यानेव पशूञ्छुचाऽर्पयति । तस्मात् समावत् पशूनां प्रजायमानानां ॥ ११ ॥

आरण्याः पशवः कनीयाꣳसः । शुचा ह्यृताः(२६) । (२७)लोमतः सम्भरति । अतो ह्यस्य मेध्यं(२७) । (२८)परिगृह्यायन्ति । रक्षसामपहत्यै । बहवो हरन्ति । अपचितिमेवास्मिन्दधति । उद्धते सिकतोपोप्ते परिश्रिते निदधति शान्त्यै(२८) । (२९)मदन्तीभिरुपसृजति ॥ १२ ॥

तेज एवास्मिन्दधाति(२९) । (३०)मधु त्वा मधुला करोत्वित्याह । ब्रह्मणैवास्मिन् तेजो दधाति(३०) । (३१)यद्ग्राम्याणां पात्राणां कपालैः सꣳसृजेत् । ग्राम्याणि

---

| | | | |
|---|---|---|---|
| २५ एतन्मन्त्रस्य भाष्यं | | ३९१ पृष्ठे द्रष्टव्यं । | |
| २६ | ,, | ३९१ | ,, |
| २७ | ,, | ३९२ | ,, |
| २८ | ,, | ३९३ | ,, |
| २९ | ,, | ३९३ | ,, |
| ३० | ,, | ३९४ | ,, |
| ३१ | ,, | ३९४ | ,, |

पाचाणि शुचाऽर्पयेत्। अग्निकपालः संसृजति। एतानि वा अनुपजीवनीयानि। तान्येव शुचार्पयति[२१]। [२२]शर्कराभिः संसृजति धृत्यै। अथो शन्त्वाय[२२]। [२३]अजलोमैः संसृजति। एषा वा अग्नेः प्रिया तनूः। यदजा। प्रिययैवैनन्तनुवा संसृजति। अथो तेजसा[२३]। [२४]कृष्णाजिनस्य लोमभिः संसृजति। यज्ञो वै कृष्णाजिनं। यज्ञेनैव यज्ञं संसृजति[२४]॥ ॥ १३ ॥

याज्यायै(१), न जुहुयात्(२), आविशत्(३), वेणुः(४), शान्त्यै(५), पङ्क्तिराधसमित्याह(६), हरति(७), दिहन्ति(८), पराक्रमत(९), आविशत्(१०), प्रजायमानानां(११), सृजति(१२), शन्त्वाय, अष्टौ च(१३) ॥ अनु० २ ॥

---

२२ एतन्मन्त्रस्य भाष्यं ३९४ पृष्ठे द्रष्टव्यं।
२३ ,, ३९४ ,,
२४ ,, ३९५ ,,

अथ तृतीयोऽनुवाकः।

(१)परिश्रिते करोति। ब्रह्मवर्चसस्य परिगृहीत्यै(१)। (२)न कुर्वन्नभिप्राण्यात्। यत् कुर्वन्नभिप्राण्यात्। प्राणाञ्छुचार्पयेत्। अपहाय प्राणिति। प्राणानां गोपीथाय(२)। (३)न प्रवर्ग्यं चादित्यं चान्तरेयात्। यदन्तरेयात्। दुश्चर्मा स्यात्॥ १॥

तस्मान्नान्तराय्यं। आत्मनो गोपीथाय(३)। (४)वेणुना करोति। तेजो वै वेणुः। तेजः प्रवर्ग्यः। तेजसैव तेजः समर्द्धयति(४)। (५)मखस्य शिरोऽसीत्याह। यज्ञो वै मखः। तस्यैतच्छिरः। यत् प्रवर्ग्यः॥ २॥

तस्मादेवमाह(५)। (६)यज्ञस्य पदे स्थ इत्याह। यज्ञस्य ह्येते पदे। अथो प्रतिष्ठित्यै(६)। (७)गायत्रेण त्वा छन्दसा करोमीत्याह। छन्दोभिरेवैनं करोति(७)।

---

१ एतन्मन्त्रस्य भाष्यं ३९५ पृष्ठे द्रष्टव्यं।
२ ,, ३९५ ,,
३ ,, ३९५ ,,
४ ,, ३९६ ,,
५ ,, ३९६ ,,
६ ,, ३९७ ,,
७ ,, ३९७ ,,

(८)व्युद्धिं करोति। त्रय इमे लोकाः। एषां लोका-
नामाप्त्यै(८)। (९)छन्दोभिः करोति॥ ३॥

वीर्यं वै छन्दाꣳसि। वीर्यणैवैनं करोति(९)। (१०)य-
जुषा बिलं करोति व्यावृत्त्यै(१०)। (११)इयन्तं करोति।
प्रजापतिना यज्ञमुखेन सम्मितम्(११)। (१२)इयन्तं क-
रोति। यज्ञपुरुषा सम्मितम्(१२)। (१३)इयन्तं करो-
ति। एतावद्वै पुरुषे वीर्यं। वीर्यसम्मितम्(१३)॥ ४॥

(१४)अपरिमितं करोति। अपरिमितस्यावरुद्ध्यै(१४)।
(१५)परिग्रीवं करोति धृत्यै(१५)। (१६)सूर्यस्य हरसा श्राये-
त्याह। यथा यजुरेवैतत्(१६)। (१७)अश्वशकेन धूपयति।
प्राजापत्यो वा अश्वः सयोनित्वाय(१७)। (१८)वृष्णो
अश्वस्य निष्पदसीत्याह। असौ वा आदित्यो वृषाश्वः।
तस्य छन्दाꣳसि निष्पत्॥ ५॥

---

| | | | |
|---|---|---|---|
| ८ एतन्मन्त्रस्य भाष्यं | | ३९८ पृष्ठे द्रष्टव्यं। | |
| ९ | ,, | ३९८ | ,, |
| १० | ,, | ३९९ | ,, |
| ११ | ,, | ३९९ | ,, |
| १२ | ,, | ३९९ | ,, |
| १३ | ,, | ३९९ | ,, |
| १४ | ,, | ४०० | ,, |
| १५ | ,, | ४०० | ,, |
| १६ | ,, | ४०० | ,, |
| १७ | ,, | ४०२ | ,, |
| १८ | ,, | ४०२ | ,, |

छन्दोभिरेवैनं धूपयति[१८]। [१९]अर्चिषे त्वा शोचिषे त्वेत्याह। तेज एवास्मिन् दधाति। वारुणोऽभीद्धः। मैत्रियोपैति शान्त्यै[१९]। [२०]सिद्ध्यै त्वेत्याह। यथा यजुरेवैतत्[२०]। [२१]देवस्त्वा सवितोद्वपत्वित्याह। सवितृप्रसूत एवैनं ब्रह्मणा देवताभिरुद्वपति[२१]। [२२]अपद्यमानः पृथिव्यामाशा दिश आपृणेत्याह॥ ६॥

तस्मादग्निः सर्वा दिशोऽनुविभाति[२२]। [२३]उत्तिष्ठ बृहन् भवोर्द्ध्वस्तिष्ठ ध्रुवस्त्वमित्याह प्रतिष्ठित्यै[२३]। [२४]ईश्वरो वा एषोऽन्धो भवितोः। यः प्रवर्ग्यमन्वीक्षते। सूर्यस्य त्वा चक्षुषान्वीक्ष इत्याह। चक्षुषो गोपीथाय[२४]। [२५]ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा भूत्यै त्वेत्याह। इयं वा ऋजुः। अन्तरिक्षꣳ साधु। असौ सुक्षितिः॥ ७॥

---

| | | | |
|---|---|---|---|
| १९ | एतन्मन्त्रस्य भाष्यं | ४०३ | पृष्ठे द्रष्टव्यं। |
| २० | ,, | ४०४ | ,, |
| २१ | ,, | ४०४ | ,, |
| २२ | ,, | ४०५ | ,, |
| २३ | ,, | ४०५ | ,, |
| २४ | ,, | ४०६ | ,, |
| २५ | ,, | ४०६ | ,, |

दिशो भूतिः । इमानेवास्मै लोकान् कल्पयति ।
अथो प्रतिष्ठित्यै(२५) । (२६)इदमहममुमामुष्यायणं विशा
पशुभिर्ब्रह्मवर्चसेन पर्यूहामीत्याह । विशैवैनं पशु-
भिर्ब्रह्मवर्चसेन पर्यूहति(२६) । (२७)विशेति राजन्यस्य
ब्रूयात् । विशैवैनं पर्यूहति । पशुभिरिति वैश्यस्य ।
पशुभिरेवैनं पर्यूहति(२७) । (२८)असुर्यं पात्रमना-
च्छृण्णं ॥ ८ ॥

आच्छृणत्ति । देवत्राकः(२८) । (२९)अजक्षीरेणाच्छृण-
त्ति । परमं वा एतत्पयः । यदजक्षीरं । परमेणैवैनं
पयसाच्छृणत्ति(२९) । (३०)यजुषा व्यावृत्त्यै(३०) । (३१)छ-
न्दोभिराच्छृणत्ति । छन्दोभिर्वा एष क्रियते । छन्दो-
भिरेव छन्दांस्याच्छृणत्ति(३१)॥ (३२)छृन्धि वाचमित्याह ।
वाचमेवावरुन्धे । छृन्ध्यूर्जमित्याह । ऊर्जमेवावरुन्धे ।
छृन्धि हविरित्याह । हविरेवाकः(३२) । (३३)देवपुरश्चरस-
घ्यासं त्वेत्याह । यथा यजुरेवैतत् (३३) ॥ ९ ॥

---

२६ एतन्मन्त्रस्य भाष्यं ४०७ पृष्ठे द्रष्टव्यं ।
२७ ,, ४०७ ,,
२८ ,, ४०८ ,,
२९ ,, ४०८ ,,
३० ,, ४०८ ,,
३१ ,, ४०८ ,,
३२ ,, ४०९ ,,
३३ ,, ४०९ ,,

स्यात्(१), यत् प्रवर्ग्यः(२), छन्दोभिः करोति(३), वीर्यसम्मितं(४), छन्दाꣳसि निष्पत्(५), पृषेत्याह(६), सुक्षितिः(७), अनाच्छृणं(८), छन्दाꣳ स्याच्छृणत्ति(९), अष्टौ च ॥ अनु० ३ ॥

---

अथ चतुर्थोऽनुवाकः ।

(१)ब्रह्मन् प्रचरिष्यामो होतर्घर्ममभिष्टुहीत्याह । एष वा एतर्हि बृहस्पतिः । यद् ब्रह्मा । तस्मा एव प्रतिप्रोच्य प्रचरति । आत्मनो नार्त्यै(१) । (२)यमाय त्वा मखाय त्वेत्याह । एता वा एतस्य देवताः । ताभिरेवैनꣳ समर्धयति(२) । (३)मदन्तीभिः प्रोक्षति । तेज एवास्मिन् दधाति(३) ॥ १ ॥

(४)अभिपूर्वं प्रोक्षति । अभिपूर्वमेवास्मिन् तेजो दधाति(४) । (५)त्रिः प्रोक्षति । त्र्यावृद्धि यज्ञः । अथो

---

१ एतन्मन्त्रस्य भाष्यं ४१२ पृष्ठे द्रष्टव्यं ।
२ " ४१३ "
३ " ४१३ "
४ " ४१३ "
५ " ४१३ "

मेध्यत्वाय[५]। [६]होताऽन्वाह। रक्षसामपहत्यै[६]। [७]अनवानं। प्राणानाꣳ सन्तत्यै[७]। [८]त्रिष्टुभः सती-र्गायत्रीरिवान्वाह॥ २॥

गायत्रो हि प्राणः। प्राणमेव यजमाने दधाति[८]। [९]सन्ततमन्वाह। प्राणानामन्नाद्यस्य सन्तत्यै। अथो रक्षसामपहत्यै[९]। [१०]यत् परिमिता अनुब्रूयात्। परिमितमवरुन्धीत। अपरिमिता अन्वाह। अपरि-मितस्यावरुध्यै[१०]। [११]शिरो वा एतद्यज्ञस्य॥ ३॥

यत् प्रवर्ग्यः। ऊर्ङ्मुञ्जाः। यन्मौञ्जो वेदो भवति। ऊर्जैव यज्ञस्य शिरः समर्द्धयति[११]। [१२]प्राणाहुती-र्जुहोति। प्राणानेव यजमाने दधाति[१२]। [१३]सप्त जु-होति। सप्त वै शीर्षण्याः प्राणाः। प्राणानेवास्मिन् दधाति[१३]। [१४]देवस्त्वा सविता मध्वानक्त्वित्याह॥ ४॥

---

| | | | |
|---|---|---|---|
| ६ | एतन्मन्त्रस्य भाष्यं | ४१४ | पृष्ठे द्रष्टव्यं। |
| ७ | ,, | ४१४ | ,, |
| ८ | ,, | ४१४ | ,, |
| ९ | ,, | ४१५ | ,, |
| १० | ,, | ४१५ | ,, |
| ११ | ,, | ४१५ | ,, |
| १२ | ,, | ४१६ | ,, |
| १३ | ,, | ४१६ | ,, |
| १४ | ,, | ४१७ | ,, |

तेजसैवैनमनक्ति[१४]। [१५]पृथिवीं तपसस्त्रायस्वेति हिरण्यमुपास्यति। अस्या अनतिदाहाय[१५]। [१६]शिरो वा एतद्यज्ञस्य। यत्प्रवर्ग्यः। अग्निः सर्वा देवताः। प्रणवानादीप्योपास्यति। देवतास्वेव यज्ञस्य शिरः प्रतिदधाति[१६]। [१७]अप्रतीशीर्णाग्रं भवति। एतद् बर्हिर्ह्येषः[१७] ॥ ५ ॥

[१८]अर्चिरसि शोचिरसीत्याह। तेज एवास्मिन् ब्रह्मवर्चसं दधाति[१८]। [१९]सꣳसीदस्व महाꣳ असीत्याह। महान् ह्येषः[१९]। [२०] ब्रह्मवादिनो वदन्ति। एते वाव त ऋत्विजः। ये दर्शपूर्णमासयोः। अथ कथा होता यजमानायाशिषो नाशास्त इति। पुरस्तादाशीः खलु वा अन्यो यज्ञः। उपरिष्टादाशीरन्यः[२०] ॥ ६ ॥

[२१]अनाधृष्या पुरस्तादिति यदेतानि यजूꣳष्याह।

---

| | | | |
|---|---|---|---|
| १५ | एतन्मन्त्रस्य भाष्यं | ४१७ | पृष्ठे द्रष्टव्यं। |
| १६ | ,, | ४१७ | ,, |
| १७ | ,, | ४१८ | ,, |
| १८ | ,, | ४१८ | ,, |
| १९ | ,, | ४१९ | ,, |
| २० | ,, | ४२१ | ,, |
| २१ | ,, | ४२१ | ,, |

शीर्षत एव यज्ञस्य यजमान आशिषोऽवरुन्धे(२१)। (२२)आयुः पुरस्तादाह। प्रजां दक्षिणतः। प्राणं पश्चात्। श्रोत्रमुत्तरतः। विधृतिमुपरिष्टात्। प्राणानेवास्मै समीचो दधाति(२२)। (२३)ईश्वरो वा एष दिशोऽनून्मदितोः। यं दिशोऽनु व्यास्थापयन्ति ॥ ७॥

मनोरश्वासि भूरिपुत्रेतीमामभिमृशति। इयं वै मनोरश्वा भूरिपुत्रा। अस्यामेव प्रतितिष्ठत्यनुन्मादाय(२३)। (२४)सूपसदा मे भूया मा मा हिꣳसीरित्याहाहिꣳसायै(२४)। (२५)चितः स्थ परिचित इत्याह। अपचितिमेवास्मिन् दधाति(२५)। (२६)शिरो वा एतद्यज्ञस्य। यत् प्रवर्ग्यः। असौ खलु वा आदित्यः प्रवर्ग्यः। तस्य मरुतो रश्मयः ॥ ८॥

स्वाहा मरुद्भिः परिश्रयस्वेत्याह। अमुमेवादित्यꣳ रश्मिभिः पर्य्यूहति। तस्मादसावादित्योऽमुष्मिंल्लोके रश्मिभिः पर्य्यूढः। तस्माद्राजा विशा पर्य्यूढः। तस्माद्

---

२१ एतन्मन्त्रस्य भाष्यं ४२२ पृष्ठे द्रष्टव्यं।
२३ ,, ४२३ ,,
२४ ,, ४२३ ,,
२५ ,, ४२४ ,,
२६ ,, ४२४ ,,

ग्रामणीः सजातैः पर्य्यूढः(२६) । (२७)अग्नेः सृष्टस्य यतः । विकङ्कतं भा आर्च्छत् । यद्वैकङ्कताः परिधयो भवन्ति । भा एवावरुन्धे(२७) । (२८)द्वादश भवन्ति ॥ ९ ॥

द्वादश मासाः संवत्सरः । संवत्सरमेवावरुन्धे(२८) । (२९)अस्ति त्रयोदशो मास इत्याहुः । यत् त्रयोदशः परिधिर्भवति । तेनैव त्रयोदशं मासमवरुन्धे(२९) । (३०)अन्तरिक्षस्यान्तर्धिरसीत्याह व्यावृत्त्यै(३०) । (३१)दिवं तपसस्त्रायस्वेत्युपरिष्टाद्धिरण्यमधिनिदधाति । अमुष्या अनतिदाहाय । अथो आभ्यामेवैनमुभयतः परिगृह्णाति(३१) । (३२)अर्हन् बिभर्षि सायकानि धन्वेत्याह ॥ १० ॥

स्तौत्येवैनमेतत्(३२) । (३३)गायत्रमसि त्रैष्टुभमसि जागतमसीति धवित्राण्यादत्ते । छन्दोभिरेवैनान्या-

---

| | | | |
|---|---|---|---|
| २७ | एतन्मन्त्रस्य भाष्यं | ४२६ पृष्ठे | द्रष्टव्यं । |
| २८ | ,, | ४२६ | ,, |
| २९ | ,, | ४२७ | ,, |
| ३० | ,, | ४२७ | ,, |
| ३१ | ,, | ४२७ | ,, |
| ३२ | ,, | ४३० | ,, |
| ३३ | ,, | ४३० | ,, |

दत्ते(३३)। (३४)मधु मध्विति धूनोति। प्राणो वै मधु। प्राणमेव यजमाने दधाति(३४)। (३५)त्रिः परियन्ति। त्रिवृद्धि प्राणः(३५)। (३६)त्रिः परियन्ति। त्र्यावृद्धि यज्ञः॥ ११ ॥

अथो रक्षसामपहत्यै(३६)। (३७)त्रिः पुनः परियन्ति। षट् सम्पद्यन्ते। षड्वा ऋतवः। ऋतुष्वेव प्रतितिष्ठन्ति(३७)। (३८)यो वै घर्मस्य प्रियान्तनुवमाक्रामति। दुश्चर्मा वै स भवति। एष ह वा अस्य प्रियान्तनुवमाक्रामति। यस्त्रिः परीत्य चतुर्थं पर्येति। एताꣳ ह वा अस्योग्रदेवो राजनिराचक्राम॥ १२॥

ततो वै स दुश्चर्माऽभवत्। तस्मात् त्रिः परीत्य न चतुर्थं परीयात्। आत्मनो गोपीथाय। प्राणा वै धवित्राणि(३८)। (३९)अव्यतिषङ्गं धून्वन्ति। प्राणानामव्यतिषङ्गाय क्लृप्त्यै(३९)। (४०)विनिषद्य धून्वन्ति।

---

| | | | |
|---|---|---|---|
| ३४ | एतन्मन्त्रस्य भाष्यं | ४३१ | पृष्ठे द्रष्टव्यं। |
| ३५ | ” | ४३१ | ” |
| ३६ | ” | ४३१ | ” |
| ३७ | ” | ४३१ | ” |
| ३८ | ” | ४३१ | ” |
| ३९ | ” | ४३२ | ” |
| ४० | ” | ४३२ | ” |

दि॒व्येव प्रति॑तिष्ठन्ति(४०)। (४१)ऊ॒र्ध्वं धू॑न्वन्ति। सु॒व॒र्गस्य॑ लो॒कस्य॒ सम॑ष्ट्यै(४१) ॥ (४२)स॒र्वतो॑ धून्वन्ति। तस्मा॑द॒यꣳ स॒र्वतः॑ पवते(४२)॥ १३ ॥

द॒धा॒ति(१), इ॒वान्वा॑ह(२), य॒ज्ञस्य॑(३), आ॒ह(४), ए॒षः(५), उ॒परि॑ष्टादा॒शीर॒न्यः(६), व्या॒स्थाप॑यन्ति(७), र॒श्मय॑ः(८), भव॒न्ति(९), धन्वेत्या॑ह(१०), य॒ज्ञः(११), च॑ङ्क्राम॒(१२), सम॑ष्ट्यै॒, द्वे च॑(१३), ॥ अनु० ४ ॥

---

अथ पञ्चमोऽनुवाकः।

(१)अ॒ग्निष्ट्वा॒ वसु॑भिः पु॒रस्ता॑द्रोचयतु गाय॒त्रेण॒ छ॒न्दसेत्या॑ह। अ॒ग्निरे॒वैनं॒ वसु॑भिः पु॒रस्ता॑द्रोचयति गा॒य॒त्रेण॒ छन्द॑सा(१)। (२)स मा॑ रु॒चि॒तो रो॑चयेत्या॑ह। आ॒शिष॑मे॒वैतामाशा॑स्ते(२)। (३)इन्द्र॑स्त्वा रु॒द्रैर्द॑क्षिण॒तो रो॑चयतु॒ त्रैष्टु॑भेन॒ छन्द॒सेत्या॑ह। इन्द्र॑ ए॒वैनꣳ रु॒द्रैर्द॑क्षिण॒तो रो॑चयति॒ त्रैष्टु॑भेन॒ छन्द॑सा। स मा॑ रु॒चि॒तो रो॑चयेत्या॑ह। आ॒शिष॑मे॒वैतामाशा॑स्ते। वरु॑णस्त्वादि॒त्यैः

---

४१ एतन्मन्त्रस्य भाष्यं ४३१ पृष्ठे द्रष्टव्यं।
४२ „ ४३१ „
१ „ ४३४ „
२ „ ४३४ „
३ „ ४३५ „

पश्चाद्रोचयतु जागतेन छन्दसेत्याह । वरुण एवैनमा-दित्यैः पश्चाद्रोचयति जागतेन छन्दसा ॥ १ ॥

स मा रुचितो रोचयेत्याह । आशिषमेवैतामा-शास्ते । द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचय-त्वाऽनुष्टुभेन छन्दसेत्याह । द्युतान एवैनं मारुतो म-रुद्भिरुत्तरतो रोचयत्यानुष्टुभेन छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते । बृ-हस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन छ-न्दसेत्याह । बृहस्पतिरेवैनं विश्वैर्देवैरुपरिष्टाद्रोच-यति पाङ्क्तेन छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते(३) ॥ २ ॥

(४)रोचितस्त्वं देव घर्म देवेष्वसीत्याह । रोचितो ह्येष देवेषु । रोचिषीयाहं मनुष्येष्वित्याह । रोचत एवैष मनुष्येषु(४) । (५)सम्राड् घर्म रुचितस्त्वं देवेष्वा-युष्मा्ँस्तेजस्वी ब्रह्मवर्चस्यसीत्याह । रुचितो ह्येष देवेष्वायुष्मा्ँस्तेजस्वी ब्रह्मवर्चसी । रुचितोऽहं मनुष्ये-ष्वायुष्मा्ँ स्तेजस्वी ब्रह्मवर्चसी भूयासमित्याह । रुचित

---

४ एतन्मन्त्रस्य भाष्यं ४३६ पृष्ठे द्रष्टव्यं ।
५ ,, ४३७ ,,

एवैष मनुष्येष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी भवति(५)। (६)रुगसि रुचं मयि धेहि मयि रुगित्याह। आशिषमेवैतामाशास्ते(६)॥ (७)तं यदेतैर्यजुर्भिररोचयित्वा। रुचितो घर्म इति प्रब्रूयात्। अरोचुकोऽध्वर्युः स्यात्। अरोचुको यजमानः। अथ यदेनमेतैर्यजुर्भी रोचयित्वा। रुचितो घर्म इति प्राह। रोचुकोऽध्वर्युर्भवति। रोचुको यजमानः(७)॥ ३॥

पश्चाद्रोचयति जातेर्गन छन्दसा(१), स मा रुचितो रोचयेत्याहाशिषमेवैतामाशास्ते(२), शास्ते, अष्टौ च(३)॥ अनु० ५॥

---

अथ षष्ठोऽनुवाकः।

(१)शिरो वा एतद्यज्ञस्य। यत् प्रवर्ग्यः। ग्रीवा उपसदः। पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति। ग्रीवास्वेव यज्ञस्य शिरः प्रतिदधाति(१)। (२)त्रिः प्रवृण-

---

६ एतन्मन्त्रस्य भाष्यं ४३७ पृष्ठे द्रष्टव्यं।
७ ” ४३८ ”
१ ” ४४० ”
२ ” ४४१ ”

न्ति। त्रय इमे लोकाः। एभ्य एव लोकेभ्यो यज्ञस्य शिरोऽवरुन्धे[२]। [३]षट् सम्पद्यन्ते। षड् वा ऋतवः॥१॥

ऋतुभ्य एव यज्ञस्य शिरोऽवरुन्धे[३]। [४]द्वादशकृत्वः प्रवृणक्ति। द्वादश मासाः संवत्सरः। संवत्सरादेव यज्ञस्य शिरोऽवरुन्धे[४]। [५]चतुर्विंशतिः सम्पद्यन्ते। चतुर्विंशतिरर्द्धमासाः। अर्द्धमासेभ्य एव यज्ञस्य शिरोऽवरुन्धे[५]। [६]अथो खलु। सकृदेव प्रवृज्यः। एकं हि शिरः[६]॥२॥

[७]अग्निष्टोमे प्रवृणक्ति। एतावान् वै यज्ञः। यावानग्निष्टोमः। यावानेव यज्ञः। तस्य शिरः प्रतिदधाति[७]। [८]नोक्थ्ये प्रवृञ्ज्यात्। प्रजा वै पशव उक्थानि। यदुक्थ्ये प्रवृञ्ज्यात्। प्रजां पशूनस्य निर्दहेत्[८]। [९]विश्वजिति सर्वपृष्ठे प्रवृणक्ति॥३॥

पृष्ठानि वा अच्युतं च्यावयन्ति। पृष्ठैरेवास्मा अच्युतं च्यावयित्वाऽवरुन्धे[९]। [१०]अपश्यं गोपामित्या-

---

| | | | |
|---|---|---|---|
| ३ | एतन्मन्त्रस्य भाष्यं | ४४१ | पृष्ठे द्रष्टव्यं। |
| ४ | ,, | ४४१ | ,, |
| ५ | ,, | ४४१ | ,, |
| ६ | ,, | ४४२ | ,, |
| ७ | ,, | ४४२ | ,, |
| ८ | ,, | ४४३ | ,, |
| ९ | ,, | ४४३ | ,, |
| १० | ,, | ४४३ | ,, |

ह। प्राणो वै गोपाः। प्राणमेव प्रजासु वियातयति[१०]। [११]अपश्यं गोपामित्याह। असौ वा आदित्यो गोपाः। स हीमाः प्रजा गोपायति। तमेव प्रजानां गोप्तारं कुरुते[११]। [१२]अनिपद्यमानमित्याह ॥ ४ ॥

न ह्येष निपद्यते[१२]। [१३]आ च परा च पथिभिश्चरन्तमित्याह। आ च ह्येष परा च पथिभिश्चरति[१३]। [१४]स सध्रीचीः स विषूचीर्वसान इत्याह। सध्रीचीश्च ह्येष विषूचीश्च वसानः प्रजा अभिविपश्यति[१४]। [१५]आवरीवर्त्ति भुवनेष्वन्तरित्याह। आ ह्येष वरीवर्त्ति भुवनेष्वन्तः[१५]। [१६]अत्र प्रावीर्मधुमाध्वीभ्यां मधुमाधूचीभ्यामित्याह। वासन्तिकावेवास्मा ऋतू कल्पयति[१६]। [१७]सममिरग्निना गतेत्याह ॥ ५ ॥

---

| | | | |
|---|---|---|---|
| ११ | एतन्मन्त्रस्य भाष्यं | ४४४ | पृष्ठे द्रष्टव्यं। |
| १२ | ,, | ४४४ | ,, |
| १३ | ,, | ४४४ | ,, |
| १४ | ,, | ४४५ | ,, |
| १५ | ,, | ४४५ | ,, |
| १६ | ,, | ४४५ | ,, |
| १७ | ,, | ४४६ | ,, |

ग्रैष्मावेवास्मा ऋतू कल्पयति(१७)। (१८)समग्निरग्निना गतेत्याह। अग्निर्ह्येवैषोऽग्निना सङ्गच्छते(१८)। (१९)स्वाहा समग्निस्तपसा गतेत्याह। पूर्वमेवोदितं। उत्तरेणाभिगृणाति(१९)। (२०)धर्ता दिवो विभासि रजसः पृथिव्या इत्याह। वार्षिकावेवास्मा ऋतू कल्पयति (२०)। (२१)हृदे त्वा मनसे त्वेत्याह। शारदावेवास्मा ऋतू कल्पयति(२१) ॥ ६ ॥

(२२)दिवि देवेषु होत्रा यच्छेत्याह। होत्राभिरेवेमान् लोकान्त्सन्दधाति(२२)। (२३)विश्वासां भुवां पत इत्याह। हैमन्तिकावेवास्मा ऋतू कल्पयति(२३)। (२४)देवश्रूस्त्वं देव घर्म देवान् पाहीत्याह। शैशिरावेवास्मा ऋतू कल्पयति(२४)। (२५)तपोजां वाचमस्मे नियच्छ देवायुवमित्याह। या वै मेध्या वाक्। सा तपोजा। तामेवावरुन्धे(२५) ॥ ७ ॥

---

| | | | |
|---|---|---|---|
| १८ | एतन्मन्त्रस्य भाष्यं | ४४६ | पृष्ठे द्रष्टव्यं। |
| १९ | ,, | ४४७ | ,, |
| २० | ,, | ४४८ | ,, |
| २१ | ,, | ४४८ | ,, |
| २२ | ,, | ४४९ | ,, |
| २३ | ,, | ४४९ | ,, |
| २४ | ,, | ४५० | ,, |
| २५ | ,, | ४५० | ,, |

(२६)गर्भो देवानामित्याह । गर्भो ह्येष देवानां(२६) । (२७)पिता मतीनामित्याह । प्रजा वै मतयः । तासामेष एव पिता । यत् प्रवर्ग्यः । तस्मादेवमाह(२७) । (२८)पतिः प्रजानामित्याह । पतिर्ह्येष प्रजानां(२८) । (२९)मतिः कवीनामित्याह ॥ ८ ॥

मतिर्ह्येष कवीनां(२९) । (३०)सं देवो देवेन सवित्राऽयतिष्ट सꣳ सूर्येणारुक्तेत्याह । अमुं चैवादित्यं प्रवर्ग्यं च सꣳशास्ति(३०) । (३१)आयुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असीत्याह । आशिषमेवैतामाशास्ते(३१) । (३२)पिता नोऽसि पिता नो बोधेत्याह । बोधयत्येवैनम्(३२) । (३३)नवैतेऽवकाशा भवन्ति । पत्निये दशमः । नव वै पुरुषे प्राणाः ॥ ९ ॥

नाभिर्दशमी । प्राणानेव यजमाने दधाति । अथो दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्य-

---

२६ एतन्मन्त्रस्य भाष्यं ४५० पृष्ठे द्रष्टव्यं ।
२७ ,, ४५१ ,,
२८ ,, ४५१ ,,
२९ ,, ४५१ ,,
३० ,, ४५२ ,,
३१ ,, ४५२ ,,
३२ ,, ४५२ ,,
३३ ,, ४५५ ,,

मवरुन्धे[३३]। [३४]यज्ञस्य शिरोऽच्छिद्यत। तद्देवा हो-
त्राभिः प्रत्यदधुः। ऋत्विजोऽवेक्षन्ते। एता वै होत्राः।
होत्राभिरेव यज्ञस्य शिरः प्रतिदधाति[३४]॥ १०॥

[३५]रुचितमवेक्षन्ते। रुचिताद्वै प्रजापतिः प्रजा असृजत। प्रजानाꣳ सृष्ट्यै[३५]। [३६]रुचितमवेक्षन्ते। रुचिताद्वै पर्जन्यो वर्षति। वर्षुकः पर्जन्यो भवति। सं प्रजा एधन्ते[३६]। [३७]रुचितमवेक्षन्ते। रुचितं वै ब्रह्मवर्चसं। ब्रह्मवर्चसिनो भवन्ति[३७]॥ ११॥

[३८]अधीयन्तोऽवेक्षन्ते। सर्वमायुर्यन्ति[३८]। [३९]न पत्न्यवेक्षेत। यत् पत्न्यवेक्षेत। प्रजायेत। प्रजां त्वस्यै निर्दहेत्। यन्नावेक्षेत। न प्रजायेत। नास्यै प्रजां निर्दहेत्। तिरस्कृत्य यजुर्वाचयति॥ प्रजायते। नास्यै प्रजां निर्दहति[३९]। [४०]त्वष्टीमती ते सपेयेत्याह। सपाद्धि प्रजाः प्रजायन्ते[४०]॥ १२॥

---

| | | | |
|---|---|---|---|
| ३४ | एतन्मन्त्रस्य भाष्यं | ४५५ | पृष्ठे द्रष्टव्यं। |
| ३५ | ,, | ४५६ | ,, |
| ३६ | ,, | ४५६ | ,, |
| ३७ | ,, | ४५६ | ,, |
| ३८ | ,, | ४५७ | ,, |
| ३९ | ,, | ४५७ | ,, |
| ४० | ,, | ४५७ | ,, |

ऋतवः(१), हि शिरः(२), सर्वपृष्ठे प्रष्टयुक्ति(३), अनिपद्यमानमित्याह(४), गतेत्याह(५), शारदावेवास्मा ऋतू कल्पयति(६), रुन्धे(७), कवीनामित्याह(८), प्राणाः(९), प्रतिदधाति(१०), भवन्ति(११), वाचयति, चत्वारि च(१२), ॥ अनु॰ ६ ॥

---

अथ सप्तमोऽनुवाकः ।

(१)देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्तां । पूष्णो हस्ताभ्यामित्याह यत्यै(१)। (२)आददेऽदित्यै रास्नासीत्याह यजुष्कृत्यै(२)। (३)इड एह्यदित एहि सरस्वत्येहीत्याह । एतानि वा अस्यै देवनामानि । देवनामैरेवैनामाह्वयति(३)। (४)असावेह्यसावेह्यसावेहीत्याह । एतानि वा अस्यै मनुष्यनामानि ॥ १ ॥

---

१ एतन्मन्त्रस्य भाष्यं ४६० पृष्ठे द्रष्टव्यं।
२ „ ४६० „
३ „ ४६१ „
४ „ ४६१ „

मनुष्यनाम्नैरेवैनामाह्वयति(४)। (५)षट् सम्पद्यन्ते। षड् वा ऋतवः। ऋतुभिरेवैनामाह्वयति(५)। (६)अदित्या उष्णीषमसीत्याह। यथा यजुरेवैतत्(६)। (७)वायुरस्यैड इत्याह। वायुदेवत्यो वै वत्सः(७)। (८)पूषा त्वोपावसृजत्वित्याह। पौष्णा वै देवतया पशवः॥ २॥

स्वयैवैनं देवतयोपावसृजति(८)। (९)अश्विभ्यां प्रदापयेत्याह। अश्विनौ वै देवानां भिषजौ। ताभ्यामेवास्मै भेषजं करोति(९)। (१०)यस्ते स्तनः शशय इत्याह। स्तौत्येवैनां(१०)। (११)उस्र घर्मꣳ शिꣳषोस्र घर्मं पाहि घर्माय शिꣳषेत्याह। यथा ब्रूयादमुष्मै देहीति। तादृगेव तत्(११)। (१२)बृहस्पतिस्त्वोपसीदत्वित्याह॥ ३॥

ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैवैनामुपसी-

---

| | | | |
|---|---|---|---|
| ५ | एतन्मन्त्रस्य भाष्यं | ४६२ | पृष्ठे द्रष्टव्यं। |
| ६ | ,, | ४६२ | ,, |
| ७ | ,, | ४६२ | ,, |
| ८ | ,, | ४६३ | ,, |
| ९ | ,, | ४६३ | ,, |
| १० | ,, | ४६४ | , |
| ११ | ,, | ४६४ | ,, |
| १२ | ,, | ४६५ | ,, |

दति[१२]। [१३]दानव स्थ पेरव इत्याह। मेध्यानेवैनान् करोति[१३]। [१४]विष्वगवृतो लोहितेनेत्याह व्यावृत्त्यै[१४]। [१५]अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेत्याह। एताभ्यो ह्येषा देवताभ्यः पिन्वते[१५]। [१६]इन्द्राय पिन्वस्वेन्द्राय पिन्वस्वेत्याह। इन्द्रमेव भागधेयेन समर्द्धयति[१६]। [१७]हविरिन्द्रायेत्याह ॥ ४ ॥

तस्मादिन्द्रो देवतानां भूयिष्ठ भाक्तमः[१७]। [१८]गायत्रोऽसि त्रैष्टुभोऽसि जागतमसीति शफोपयमानादत्ते। छन्दोभिरेवैनानादत्ते[१८]। [१९]सहोर्जो भागेनोपमेहीत्याह। ऊर्ज्ज एवैनं भागमकः[१९]। [२०]अश्विनौ वा एतद्यज्ञस्य शिरः प्रतिदधतावब्रूतां। आवाभ्यामेव पूर्वाभ्यां वषट् क्रियाता इति। इन्द्राश्विना मधुनः सारघस्येत्याह। अश्विभ्यामेव पूर्वा-

| | | | |
|---|---|---|---|
| १३ | एतन्मन्त्रस्य भाष्यं | ४६५ | पृष्ठे द्रष्टव्यं। |
| १४ | ,, | ४६५ | ,, |
| १५ | , | ४६६ | ,, |
| १६ | ,, | ४६६ | ,, |
| १७ | ,, | ४६६ | ,, |
| १८ | ,, | ४६७ | ,, |
| १९ | ,, | ४६८ | ,, |
| २० | ,, | ४६८ | ,, |

भ्यां वषट् करोति। अथो अश्विनावेव भागधेयेन समर्धयति[२०] ॥ ५ ॥

[२१]घर्म्मं पात वसवो यजता वडित्याह। वसूनेव भागधेयेन समर्द्धयति[२१]। [२२]यद्वषट् कुर्य्यात्। यातयामास्य वषट्कारः स्यात्। यन्न वषट् कुर्य्यात्। रक्षांसि यज्ञं हन्युः। वडित्याह। परोक्षमेव वषट् करोति। नास्य यातयामा वषट्कारो भवति। न यज्ञं रक्षांसि घ्नन्ति[२२] ॥ ६ ॥

[२३]स्वाहा त्वा सूर्य्यस्य रश्मये वृष्टिवनये जुहोमीत्याह। यो वा अस्य पुण्यो रश्मिः। स वृष्टिवनिः। तस्मा एवैनं जुहोति[२३]। [२४]मधु हविरसीत्याह। स्वदयत्येवैनं[२४]। [२५]सूर्य्यस्य तपस्तपेत्याह। यथा यजुरेवैतत्[२५]। [२६]द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्याह। द्यावापृथिवीभ्यामेवैनं परिगृह्णाति[२६] ॥ ७ ॥

---

| | | | |
|---|---|---|---|
| २१ | एतन्मन्त्रस्य भाष्यं | ४६६ पृष्ठे द्रष्टव्यं। | |
| २२ | ,, | ४६९ | ,, |
| २३ | ,, | ४७० | ,, |
| २४ | ,, | ४७० | ,, |
| २५ | ,, | ४७१ | ,, |
| २६ | ,, | ४७१ | ,, |

(२७)अन्तरिक्षेण त्वोपयच्छामीत्याह। अन्तरिक्षेणैवैनमुपयच्छत। न वा एतं मनुष्यो भर्तुमर्हति(२७)। (२८)देवानां त्वा पितृणामनुमतो भर्तुꣳ शकेयमित्याह। देवैरेवैनं पितृभिरनुमत आदत्ते(२८)। (२९)वि वा एनमेतदर्धयन्ति। यत् पश्चात् प्रवृज्य पुरो जुह्वति। तेजोऽसि तेजोऽनुप्रेहीत्याह। तेज एवास्मिन् दधाति(२९)। (३०)दिविस्पृङ्मा मा हिꣳसीरन्तरिक्षस्पृङ्मा मा हिꣳसीः पृथिविस्पृङ्मा मा हिꣳसीरित्याहाहिꣳसायै(३०)॥ ८॥

(३१)सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहीत्याह। आशिषमेवैतामाशास्ते(३१)। (३२)शिरो वा एतद्यज्ञस्य। यत् प्रवर्ग्यः। आत्मा वायुः। उद्यत्यवातनामान्याह। आत्मन्नेव यज्ञस्य शिरः प्रतिदधाति(३२)। (३३)अनवानं। प्राणानाꣳ सन्तत्यै(३३)। (३४)पञ्चाह॥ ९॥

---

| | | | |
|---|---|---|---|
| २७ एतन्मन्त्रस्य भाष्यं | ४७२ | पृष्ठे द्रष्टव्यं। | |
| २८ | ,, | ४७२ | ,, |
| २९ | ,, | ४७३ | ,, |
| ३० | ,, | ४७३ | ,, |
| ३१ | ,, | ४७३ | ,, |
| ३२ | ,, | ४८५ | ,, |
| ३३ | ,, | ४७५ | ,, |
| ३४ | ,, | ४७५ | ,, |

पाङ्क्तो यज्ञः। यावानेव यज्ञः। तस्य शिरः प्रतिदधाति[२४]। [२५]अग्नये त्वा वसुमते स्वाहेत्याह। असौ वा आदित्योऽग्निर्वसुमान्। तस्मा एवैनं जुहोति[२५]। [२६]सोमाय त्वा रुद्रवते स्वाहेत्याह। चन्द्रमा वै सोमो रुद्रवान्। तस्मा एवैनं जुहोति। वरुणाय त्वाऽऽदित्यवते स्वाहेत्याह ॥ १० ॥

अप्सु वै वरुण आदित्यवान्। तस्मा एवैनं जुहोति। बृहस्पतये त्वा विश्वदेव्यावते स्वाहेत्याह। ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मण एवैनं जुहोति[२६]। [२७]सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहेत्याह। संवत्सरो वै सवितर्भुमान् विभुमान् प्रभुमान् वाजवान्। तस्मा एवैनं जुहोति[२७]। [२८]यमाय त्वाङ्गिरस्वते पितृमते स्वाहेत्याह। प्राणो वै यमोऽङ्गिरस्वान् पितृमान् ॥ ११ ॥

---

२५ एतन्मन्त्रस्य भाष्यं ४७६ पृष्ठे द्रष्टव्यं।
२६ ,, ४७६ ,,
२७ ,, ४७६ ,,
२८ ,, ४७६ ,,

तस्मा एवैनं जुहोति[३८] । [३९]एताभ्य एवैनं देवताभ्यो जुहोति[३९] । [४०]दश सम्पद्यन्ते । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे[४०] । [४१]रौहिणाभ्यां वै देवाः सुवर्गं लोकमायन् । तद्रौहिणयो रौहिणत्वं । यद्रौहिणौ भवतः । रौहिणाभ्यामेव तद्यजमानः सुवर्गं लोकमेति[४१] ॥ [४२]अहर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहा रात्रिर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहेत्याह । आदित्यमेव तदमुष्मिंल्लोकेऽह्ना परस्ताद्दाधार । रात्रिया अवस्तात् । तस्मादसावादित्योऽमुष्मिंल्लोकेऽहोरात्राभ्यां धृतः[४२] ॥ १२ ॥

मनुष्यनामानि(१), पशवः(२), सीदत्वित्याह(३), इन्द्रायेत्याह(४), अर्धयति(५), घ्नन्ति(६), गृह्णाति(७), अहिꣳसायै(८), पश्चाह(९), आदित्यवते स्वाहेत्याह(१०), पितृमान्(११), एति, चत्वारि च(१२) ॥ अनु० ७ ॥

---

३९ एतन्मन्त्रस्य भाष्यं ४७६ पृष्ठे द्रष्टव्यं ।
४० ,, ४७७ ,,
४१ ,, ४७७ ,,
४२ ,, ४७७ ,,

अथ अष्टमोऽनुवाकः ।

(१)विश्वा आशा दक्षिणसदित्याह । विश्वानेव दे-
वान् प्रीणाति । अथो दुरिष्ट्या एवैनं पाति(१) । (२)वि-
श्वान् देवानयाडिहेत्याह । विश्वानेव देवान् भाग-
धेयेन समर्द्धयति(२) । (३)स्वाहाकृतस्य घर्म्मस्य मधोः
पिबतमश्विनेत्याह । अश्विनावेव भागधेयेन समर्द्ध-
यति(३) । (४)स्वाहाऽग्नये यज्ञियाय शं यजुर्भिरित्याह ।
अभ्यैवैनं घारयति । अथो हविरेवाकः(४) ॥ १ ॥

(५)अश्विना घर्म्मं पातꣳ हार्द्दिवानमहर्द्दिवाभिरू-
तिभिरित्याह । अश्विनावेव भागधेयेन समर्द्धयति(५) ।
(६)अनु वां द्यावापृथिवी मꣳसातामित्याहानुमत्यै(६) ।
(७)स्वाहेन्द्राय स्वाहेन्द्रावडित्याह । इन्द्राय हि पुरो-
हूयते(७) । (८)आश्राव्याह घर्म्मस्य यजेति । वषट्कृते

---

१ एतन्मन्त्रस्य भाष्यं ४७८ पृष्ठे द्रष्टव्यं ।
२ „ ४७९ „
३ „ ४७९ „
४ „ ४७९ „
५ „ ४८० „
६ „ ४८१ „
७ „ ४८१ „
८ „ ४८१ „

जुहोति । रक्षसामपहत्यै । अनुयजति स्वगाकृत्यै[८] । [९]घर्म्ममपातमश्विनेत्याह ॥ २ ॥

पूर्वमेवोदितं । उत्तरेणाभिगृणाति[९] । [१०]अनु वां द्यावापृथिवी अमंसातामित्याहानुमत्यै[१०] । [११]तं प्राव्यं यथावन्नमो दिवे नमः पृथिव्या इत्याह । यथा यजुरेवैतत्[११] । [१२]दिवि धा इमं यज्ञं यज्ञमिमं दिवि धा इत्याह । सुवर्गमेवैनं लोकं गमयति[१२] । [१३]दिवं गच्छान्तरिक्षं गच्छ पृथिवीं गच्छेत्याह । एष्वेवैनं लोकेषु प्रतिष्ठापयति[१३] । [१४]पञ्च प्रदिशो गच्छेत्याह ॥ ॥ ३ ॥

दिक्ष्वेवैनं प्रतिष्ठापयति । देवान् घर्म्मपान् गच्छ पितॄन् घर्म्मपान् गच्छेत्याह । उभयेष्वेवैनं प्रतिष्ठापयति[१४] । [१५]यत् पिन्वते । वर्षुकः पर्जन्यो भवति ।

---

| | | | |
|---|---|---|---|
| ९ एतन्मन्त्रस्य भाष्यं | | ४८२ पृष्ठे द्रष्टव्यं । | |
| १० | ,, | ४८३ | ,, |
| ११ | ,, | ४८३ | ,, |
| १२ | ,, | ४८३ | ,, |
| १३ | ,, | ४८३ | ,, |
| १४ | ,, | ४८३ | ,, |
| १५ | ,, | ४८५ | ,, |

तस्मात् पिन्वमानः पुण्यः[१५] । [१६]यत् प्राङ् पिन्वते ।
तद्देवानां । यद्दक्षिणा । तत् पितृणां ॥ ४ ॥

यत् प्रत्यक् । तन्मनुष्याणां । यदुदङ् । तद्रुद्राणां[१६] । [१७]प्राञ्चमुदञ्चं पिन्वयति । देवत्राकः[१७] । [१८]अथो खलु । सर्वा अनु दिशः पिन्वयति । सर्वा दिशः समेधन्ते[१८] । [१९]अन्तः परिधि पिन्वयति ॥ ५ ॥

तेजसोऽस्कन्दाय[१९] । [२०]इषे पीपिह्यूर्ज्जे पीपिहीत्याह । इषमेवोर्जं यजमाने दधाति[२०] । [२१]यजमानाय पीपिहीत्याह । यजमानायैवैतामाशिषमाशास्ते[२१] । [२२]मह्यं ज्यैष्ठ्याय पीपिहीत्याह । आत्मन एवैतामाशिषमाशास्ते[२२] । [२३]त्विष्यै त्वा द्युम्नाय त्वेन्द्रियाय त्वा भूत्यै त्वेत्याह । यथा यजुरेवैतत्[२३] । [२४]धर्मासि सुधर्मा मेऽन्यस्मे ब्रह्माणि धारयेत्याह ॥ ॥ ६ ॥

---

१६ एतन्मन्त्रस्य भाष्यं ४८५ पृष्ठे द्रष्टव्यं ।
१७ ,, ४८५ ,,
१८ ,, ४८५ ,,
१९ ,, ४८५ ,,
२० ,, ४८६ ,,
२१ ,, ४८६ ,,
२२ ,, ४८६ ,,
२३ ,, ४८६ ,,
२४ ,, ४८७ ,,

अप्स्वेवैनं प्रतिष्ठापयति(२४) । (२५)नेत्त्वा वातः स्क-न्दयादिति(२५) (२६)यद्यभिचरेत् । अमुष्य त्वा प्राणे सादयाम्यमुना सह निरर्थं गच्छेति ब्रूयाद्यं द्विष्यात् । यमेव द्वेष्टि । तेनैनꣳ सह निरर्थं गमयति(२६) । (२७)पूष्णे शरसे स्वाहेत्याह । या एव देवता हुतभागाः । ताभ्य एवैनं जुहोति(२७) । (२८)ग्रावभ्यः स्वाहेत्याह । या एवान्तरिक्षे वाचः ॥ ७ ॥

ताभ्य एवैनं जुहोति(२८) । (२९)प्रतिरेभ्यः स्वाहेत्याह । प्राणा वै देवाः प्रतिराः । तेभ्य एवैनं जुहोति(२९) । (३०)द्यावापृथिवीभ्याꣳ स्वाहेत्याह । द्यावापृथिवीभ्या-मेवैनं जुहोति(३०) । (३१)पितृभ्यो घर्मपेभ्यः स्वाहेत्याह । ये वै यज्वानः । ते पितरो घर्मपाः । तेभ्य एवैनं जुहोति(३१) ॥ ८ ॥

---

| | | | |
|---|---|---|---|
| २५ | एतन्मन्त्रस्य भाष्यं | ४८७ पृष्ठे | द्रष्टव्यं । |
| २६ | ,, | ४८८ | ,, |
| २७ | ,, | ४८९ | ,, |
| २८ | ,, | ४८९ | ,, |
| २९ | ,, | ४८९ | ,, |
| ३० | ,, | ४८९ | ,, |
| ३१ | ,, | ४९० | ,, |

(२२)रुद्राय रुद्रहोत्रे स्वाहेत्याह। रुद्रमेव भागधेयेन समर्द्धयति(२२)। (२३)सर्वतः समनक्ति। सर्वत एव रुद्रं निरवदयते(२३)। (२४)उदङ्ङ्वं निरस्यति। एषा वै रुद्रस्य दिक्। स्वायामेव दिशि रुद्रं निरवदयते(२४)। (२५)अप उपस्पृशति मेध्यत्वाय(२५)। (२६)नान्वीक्षेत। यदन्वीक्षेत ॥ ९ ॥

चक्षुरस्य प्रमायुकꣳ स्यात्। तस्मान्नान्वीक्ष्यः(२६)। (२७)अपीपरो माह्नो रात्रियै मा पाह्येषा ते अग्ने समित्तया समिध्यस्वाऽऽयुर्मे दा वर्चसा माञ्जीरित्याह। आयुरेवास्मिन् वर्चो दधाति। अपीपरो मा रात्रिया अह्नो मा पाह्येषा ते अग्ने समित्तया समिध्यस्वाऽऽयुर्मे दा वर्चसा माञ्जीरित्याह। आयुरेवास्मिन् वर्चो दधाति(२७)। (२८)अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेत्याह। यथा यजुरेवैतत्(२८)।

---

२२ एतन्मन्त्रस्य भाष्यं ४९० पृष्ठे द्रष्टव्यं।
२३ ,, ४९० ,,
२४ ,, ४९० ,,
२५ ,, ४९१ ,,
२६ ,, ४९१ ,,
२७ ,, ४९२ ,,
२८ ,, ४९३ ,,

(३९)ब्रह्मवादिनो वदन्ति। होतव्यमग्निहोत्रा३ न होतव्या३मिति॥ १०॥

यद्यजुषा जुहुयात्। अयथापूर्वमाहुतीर्जुहुयात्। यन्न जुहुयात्। अग्निः पराभवेत्। भूः स्वाहेत्येव होतव्यं। यथापूर्वमाहुतीर्जुहोति। नाग्निः परा भवति(३९)। (४०)हुतꣳ हविर्मधुहविरित्याह। स्वदयत्येवैनं(४०)। (४१)इन्द्रतमेऽग्नावित्याह॥ ११॥

प्राणो वा इन्द्रतमोऽग्निः। प्राण एवैनमिन्द्रतमेऽग्नौ जुहोति(४१)। (४२)पिता नोऽसि मा मा हिꣳसीरित्याहाहिꣳसायै(४२)। (४३)अश्याम ते देव घर्म्म मधुमतो वाजवतः पितुमत इत्याह। आशिषमेवैतामाशास्ते(४३)। (४४)स्वधाविनोऽशीमहि त्वा मा मा हिꣳसीरित्याहाहिꣳसायै(४४)। (४५)तेजसा वा एते व्यृद्ध्यन्ते। ये प्रवर्ग्येण चरन्ति। प्राश्नन्ति। तेज एवात्मन्दधते(४५)॥१२॥

---

३९ एतन्मन्त्रस्य भाष्यं ४६३ पृष्ठे द्रष्टव्यं।

| | | | |
|---|---|---|---|
| ४० | ,, | ४६५ | ,, |
| ४१ | ,, | ४६५ | ,, |
| ४२ | ,, | ४६५ | ,, |
| ४३ | ,, | ४६५ | ,, |
| ४४ | ,, | ४६५ | ,, |
| ४५ | ,, | ४६५ | ,, |

(४६)संवत्सरं न माꣳसमश्नीयात्। न रामामुपेयात्। न मृण्मयेन पिबेत्। नाऽस्य राम उच्छिष्टं पिबेत्। तेज एव तत् सꣳश्यति(४६)। (४७)देवासुराः संयत्ता आसन्। ते देवा विजयमुपयन्तः। विभ्राजि सौर्ये ब्रह्म समदधत। यत्किञ्च दिवाकीर्त्यं। तदेतेनैव व्रतेनाऽगोपायत्॥ तस्मादेतद् व्रतं चार्यं। तेजसो गोपीथाय। तस्मादेतानि यजूꣳषि विभ्राजः सौर्यस्येत्याहुः(४७)। (४८)स्वाहा त्वा सूर्यस्य रश्मिभ्य इति प्रातः सꣳसादयति। स्वाहा त्वा नक्षत्रेभ्य इति सायं। एता वा एतस्य देवताः। ताभिरेवैनꣳ समर्द्धयति(४८)॥ १३॥

अर्कः(१), अग्निनेत्याह(२), प्रदिशो गच्छेत्याह(३), पितॄणां(४), अन्तःपरिधि पिन्वयति(५), धारयेत्याह(६), वाचः(७), घर्म्मपास्तेभ्य एवैनं जुहोति(८), अन्वीक्षेत(९), होतव्या३मिति(१०), अप्रावित्याह(११), दधते(१२), अगोपायत्, सप्त च(१३)॥ अनु॰ ८॥

---

४६ एतन्मन्त्रस्य भाष्यं ४९६ पृष्ठे द्रष्टव्यं।
४७ ,, ४९६ ,,
४८ ,, ४९७ ,,

अथ नवमोऽनुवाकः ।

(१)घर्म्म या ते दिवि शुगिति तिस्र आहुतीर्जुहोति । छन्दोभिरेवास्मा इभ्यो लोकेभ्यः शुचमवयजते(१) । (२)इयत्यग्रे जुहोति । अथेयत्यथेयति । चय इमे लोकाः । एभ्य एव लोकेभ्यः शुचमवयजते(२) । (३)अनु नोऽद्यानुमतिरित्याहानुमत्यै(३) । (४)दिवस्त्वा परस्याया इत्याह । दिव एवेमाल्लोकान् दाधार(४) । (५)ब्रह्मणस्त्वा परस्याया इत्याह ॥ १ ॥

एष्वेव लोकेषु प्रजा दाधार(५) । (६)प्राणस्य त्वा परस्याया इत्याह । प्रजास्वेव प्राणान् दाधार(६) । (७)शिरो वा एतद्यज्ञस्य । यत् प्रवर्ग्यः । असौ खलु वा आदित्यः प्रवर्ग्यः । तं यद्दक्षिणा प्रत्यञ्चमुदञ्चमुद्वासयेत् । जिह्मं यज्ञस्य शिरो हरेत् । प्राञ्चमुद्वासयति । पुरस्तादेव यज्ञस्य शिरः प्रतिदधाति ॥ २ ॥

---

१ एतन्मन्त्रस्य भाष्यं ४९९ पृष्ठे द्रष्टव्यं ।
२ ,, ५०० ,,
३ ,, ५०० ,,
४ ,, ५०१ ,,
५ ,, ५०२ ,,
६ ,, ५०३ ,,
७ ,, ५०३ ,,

प्राञ्चमुद्वासयति । तस्मादसावादित्यः पुरस्तादुदे-
ति(७) । (८)शफोपयमान् धवित्राणि धृष्टी इत्यन्ववह-
रन्ति । सात्मानमेवैनꣳ सतनुं करोति(८) । (९)सात्मा-
ऽमुष्मिँल्लोके भवति । य एवं वेद(९) । (१०)औदुम्बराणि
भवन्ति । ऊर्ग्वा उदुम्बरः । ऊर्जमेवावरुन्धे(१०) । (११)व-
र्त्मना वा अन्वित्य ॥ ३ ॥

यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति । साम्ना प्रस्तोता-
ऽन्ववैति । साम वै रक्षोहा । रक्षसामपहत्यै(११) । (१२)त्रि-
र्निधनमुपैति । त्रय इमे लोकाः । एभ्य एव लोकेभ्यो
रक्षाꣳस्यपहन्ति(१२) । (१३)पुरुषः पुरुषो निधनमुपैति ।
पुरुषः पुरुषो हि रक्षस्वी । रक्षसामपहत्यै(१३) ॥ ४ ॥

(१४)यत् पृथिव्यामुद्वासयेत् । पृथिवीꣳ शुचार्पयेत् ।
यदप्सु । अपः शुचार्पयेत् । यदोषधीषु । ओषधीः शु-
चार्पयेत् । यद्वनस्पतिषु । वनस्पतीञ्छुचार्पयेत् । हि-
रण्यं निधायोद्वासयति । अमृतं वै हिरण्यं ॥ ५ ॥

---

| | | | |
|---|---|---|---|
| ८ | एतन्मन्त्रस्य भाष्यं | ५०३ | पृष्ठे द्रष्टव्यं । |
| ९ | ,, | ५०४ | ,, |
| १० | ,, | ५०४ | ,, |
| ११ | ,, | ५०४ | ,, |
| १२ | ,, | ५०४ | ,, |
| १३ | ,, | ५०५ | ,, |
| १४ | ,, | ५०५ | ,, |

अमृत एवैनं प्रतिष्ठापयति(१४)। (१५)वल्गुरसि शंयुधाया इति त्रिः परिषिञ्चन् पर्यैति। त्रिवृद्वा अग्निः। यावानेवाग्निः। तस्य शुचꣳ शमयति(१५)। (१६)त्रिः पुनः पर्यैति। षट् सम्पद्यन्ते। षड् वा ऋतवः। ऋतुभिरेवास्य शुचꣳ शमयति(१६)। (१७)चतुःस्रक्तिर्नाभिर्ऋतस्येत्याह ॥ ६ ॥

इयं वा ऋतं। तस्या एष एव नाभिः। यत् प्रवर्ग्यः। तस्मादेवमाह(१७)। (१८)सदो विश्वायुरित्याह। सदो हीयं(१८)। (१९)अप द्वेषो अप ह्वर इत्याह भ्रातृव्यापनुत्त्यै(१९)। (२०)घर्मैतत्तेऽन्नमेतत् पुरीषमिति दध्ना मधुमिश्रेण पूरयति। ऊर्ग्वा अन्नाद्यं दधि। ऊर्जैवैनमन्नाद्येन समर्द्धयति(२०) ॥ ७ ॥

(२१)अनश्नायुको भवति। य एवं वेद(२१)। (२२)रन्तिर्नामासि दिव्यो गन्धर्व इत्याह। रूपमेवास्यैत-

---

१५ एतन्मन्त्रस्य भाष्यं ५०६ पृष्ठे द्रष्टव्यं।
१६ ,, ५०६ ,,
१७ , ५०६ ,,
१८ ,, ५०७ ,,
१९ ,, ५०७ ,,
२० ,, ५०८ ,,
२१ ,, ५०८ ,,
२२ ,, ५०९ ,,

महिमानꣳ रन्तिं बन्धतां व्याचष्टे(२२)। (२३)समहमा-
युषा सं प्राणेनेत्याह। आशिषमेवैतामाशास्ते(२३)।
(२४)व्यसौ योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इत्याह। अ-
भिचार एवास्यैषः(२४)। (२५)अचिक्रदद् वृषा हरिरि-
त्याह। वृषा ह्येषः॥ ८॥

वृषा हरिः(२५)। (२६)महान्मित्रो न दर्शत इत्याह।
स्तौत्येवैनमेतत्(२६)। (२७)चिदसि समुद्रयोनिरित्याह।
स्वामेवैनां योनिं गमयति(२७)। (२८)नमस्ते अस्तु मा
मा हिꣳसीरित्याहाहिꣳसायै(२८)। (२९)विश्वावसुꣳ सो-
मगन्धर्व्वमित्याह। यद्देवास्य क्रियमाणस्यान्तर्यन्ति।
तद्देवास्यैतेनाप्यायर्यान्त(२९)। (३०)विश्वावसुरभि तन्नो
गृणात्वित्याह॥ ९॥

पूर्व्वमेवोदितं। उत्तरेणाभिगृणाति(३०)। (३१)धियो

---

| | | | |
|---|---|---|---|
| २३ | एतन्मन्त्रस्य भाष्यं | ५०९ | पृष्ठे द्रष्टव्यं। |
| २४ | ,, | ५१० | ,, |
| २५ | ,, | ५१० | ,, |
| २६ | ,, | ५११ | ,, |
| २७ | ,, | ५११ | ,, |
| २८ | ,, | ५१२ | ,, |
| २९ | ,, | ५१३ | ,, |
| ३० | ,, | ५१४ | ,, |
| ३१ | ,, | ५१४ | ,, |

ह्निवानो धिय इन्द्रो अव्यादित्याह। क्रतूनेवास्मै कल्पयति[२१]। [२२]आसां गन्धर्वो अमृतानि वोचदित्याह। प्राणा वा अमृताः। प्राणानेवास्मै कल्पयति[२२]। [२३]एतत्त्वं देव घर्म्म देवो देवानुपागा इत्याह। देवो ह्येष सन् देवानुपैति[२३]। [२४]इदमहं मनुष्यो मनुष्यानित्याह ॥ १० ॥

मनुष्यो हि। एष सन् मनुष्यानुपैति[२४]। [२५]ईश्वरो वै प्रवर्ग्यमुद्वासयन्। प्रजां पशून्त्सोमपीथमनूद्वासः सोमपीथानुमेहि। सह प्रजया सह रायस्पोषेणेत्याह। प्रजामेव पशून्त्सोमपीथमात्मन्धत्ते[२५]। [२६]सुमित्रा न आप ओषधयः सन्त्वित्याह। आशिषमेवैतामाशास्ते[२६]। [२७]दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इत्याह। अभिचार एवास्यैषः[२७]॥ [२८]प्र वा एषोऽस्माल्लोकाच्च्यवते। यः प्रवर्ग्यमुद्वास-

---

| | | | |
|---|---|---|---|
| २२ एतन्मन्त्रस्य भाष्यं | | ५१५ पृष्ठे द्रष्टव्यं। | |
| २३ | ,, | ५१६ | ,, |
| २४ | ,, | ५१६ | ,, |
| २५ | ,, | ६१६ | ,, |
| २६ | ,, | ५१७ | ,, |
| २७ | ,, | ५१७ | ,, |
| २८ | ,, | ५१८ | ,, |

यति। उद् त्यं चित्रमिति सौरीभ्यामृग्भ्यां पुनरेत्य गार्हपत्ये जुहोति। अयं वै लोको गार्हपत्यः। अस्मिन्नेव लोके प्रतितिष्ठति। असौ खलु वा आदित्यः सुवर्गो लोकः। यत् सौरी भवतः। तेनैव सुवर्गं लोकमेति(१८) ॥ ११ ॥

ब्रह्मणस्त्वा परस्याया इत्याह(१), दधाति(२), अन्वित्य(३), रक्षस्वी रक्षसामपहत्यै(४), व हिरण्यं(५), आह(६), अन्वयति(७), द्योषः(८), मृणात्वित्याह(९), मनुष्यानित्याह(१०), अस्यैषः(११), अष्टौ च ॥ अनु० ९ ॥

---

अथ दशमोऽनुवाकः।

(१)प्रजापतिं वै देवाः शुक्रं पयोऽदुह्रन्। तदेभ्यो न व्यभवत्। तदग्निर्व्यकरोत्। तानि शुक्रियाणि सामान्यभवन्। तेषां यो रसोऽत्यक्षरत्। तानि शुक्रयजूꣳष्यभवन्। शुक्रियाणां वा एतानि शुक्रियाणि। सामपयसं वा एतयोरन्यत्। देवानामन्यत् पयः। यद् गोः पयः ॥ १ ॥

---

१ एतन्मन्त्रस्य भाष्यं ५१९ पृष्ठे द्रष्टव्यं।

तत्साम्नः पयः । यदजायै पयः । तद्देवानां पयः । त-
स्माद्यच्चैतैर्यजुर्भिश्चरन्ति । तत्पयसा चरन्ति । प्रजा-
पतिमेव तद्देवान् पयसान्नाद्येन समर्द्धयन्ति(१) । (२)एष
ह वै साक्षात् प्रवर्ग्यं भक्षयति । यस्यैवं विदुषः प्रव-
र्ग्यः प्रवृज्यते(२) । (३)उत्तरवेद्यामुद्वासयेत् तेजस्कामस्य ।
तेजो वा उत्तरवेदिः ॥ २ ॥

तेजः प्रवर्ग्यः । तेजसैव तेजः समर्द्धयति(३) । (४)उ-
त्तरवेद्यामुद्वासयेदन्नकामस्य । शिरो वा एतद्यज्ञस्य ।
यत् प्रवर्ग्यः । मुखमुत्तरवेदिः । शीर्ष्णैव मुखꣳ सन्द-
धात्यन्नाद्याय । अन्नाद एव भवति(४) । (५)यच्च खलु
वा एतमुद्वासितं वयाꣳसि पर्य्यासते । परि वै ताꣳ
समां प्रजा वयाꣳस्यासते ॥ ३ ॥

तस्मादुत्तरवेद्यामेवोद्वासयेत् । प्रजानां गोपीथा-
य(५) । (६)पुरो वा पश्चाद्वोद्वासयेत् । पुरस्ताद्वा एत-
ज्ज्योतिरुदेति । तत्पश्चान्निम्रोचति । स्वामेवैनां योनि-

---

२ एतन्मन्त्रस्य भाष्यं ५२१ पृष्ठे द्रष्टव्यं ।
३ ,, ५२१ ,,
४ ,, ५२१ ,,
५ ,, ५२१ ,,
६ ,, ५२२ ,,

मनूद्वासयति(६)। (७)अपां मध्य उद्वासयेत्। अपां वा एतन्मध्याज्ज्योतिरजायत। ज्योतिः प्रवर्ग्यः। स्व एवैनं योनौ प्रतिष्ठापयति(७) ॥ ४ ॥

(८)यं द्विष्यात्। यत्र स स्यात्। तस्यां दिश्युद्वासयेत्। एष वा अग्निर्वैश्वानरः। यत् प्रवर्ग्यः। अग्निनैवैनं वैश्वानरेणाभिप्रवर्त्तयति(८)। (९)औदुम्बर्य्याᳲ शाखाया-मुद्वासयेत्। ऊर्ग्वा उदुम्बरः। अन्नं प्राणः। शुग् घर्म्मः। ॥ ५ ॥

इदमहममुष्यामुष्यायणस्य शुचा प्राणमपि दहा-मीत्याह। शुचैवास्य प्राणमपि दहति। ताजगार्त्ति-मार्च्छति(९)। (१०)यत्र दर्भा उपदीकसन्तताः स्युः। त-दुद्वासयेद् वृष्टिकामस्य। एता वा अपामनूज्जावर्य्यो नाम। यद्दर्भाः। असौ खलु वा आदित्य इतो वृष्टिमुदीरयति। असावेवास्मा आदित्यो वृष्टिं नि-यच्छति। ता आपो नियता धन्वना यन्ति(१०) ॥ ६ ॥

गोः पयः(१), उत्तरवेदिः(२), आसते(३), स्थापय-ति(४), घर्म्मः(५), यन्ति(६) ॥ अनु०१० ॥

---

७ एतन्मन्त्रस्य भाष्यं ५२२ पृष्ठे द्रष्टव्यं।
८ ,, ५२२ ,,
९ ,, ५२३ ,,
१० ,, ५२३ ,,

अथैकादशोऽनुवाकः ।

[१]प्रजापतिः सम्भ्रियमाणः। सम्राट् सम्भृतः घर्मः प्रवृक्तः। महावीर उद्वासितः। असौ खलु वावैष आदित्यः। यत्प्रवर्ग्यः। स एतानि नामान्यकुरुत[१]। [२]य एवं वेद। विदुरेनं नाम्ना[२]। [३]ब्रह्मवादिनो वदन्ति॥ १॥

यो वै वसीयाꣳसं यथानाममुपचरति। पुण्यांतिं वै स तस्मै कामयते। पुण्यांतिमस्मै कामयन्ते। य एवं वेद। तस्मादेवं विद्वान्। घर्म इति दिवाऽऽचक्षीत। सम्राडिति नक्तं। एते वा एतस्य प्रिये तनुवौ। एते अस्य प्रिये नामनी। प्रिययैवैनं तनुवा॥ २॥

प्रियेण नाम्ना समर्धयति। कीर्त्तिरस्य पूर्वा गच्छति जनतामायतः[३]। [४]गायत्री देवेभ्योऽपाक्रामत्। तां देवाः प्रवर्ग्येणैवानुव्यभवन्। प्रवर्ग्येणाप्नुवन्। यच्च-

१ एतन्मन्त्रस्य भाष्यं ५८० पृष्ठे द्रष्टव्यं।
२ ,, ५८२ ,,
३ ,, ५८२ ,,
४ ,, ५८३ ,,

तुर्विंशतिः स्तुतः प्रवर्ग्यः प्रवृणक्ति । गायत्रीमेव तदनु विभवति । गायत्रीमाप्नोति । पूर्वाऽस्य जनं यतः कीर्त्तिर्गच्छति[४] । [५]वैश्वदेवः सꣳसन्नः ॥ ३ ॥

वसवः प्रवृक्तः । सोमोऽभिकीर्यमाणः । आश्विनः पयस्यानीयमाने । मारुतः क्वथन् । पौष्ण उदन्तः । सारस्वतो विष्यन्दमानः । मैत्रः शरो गृहीतः । तेज उद्यतो वायुः । ह्रियमाणः प्रजापतिः । हूयमानो वाग्घुतः ॥ ४ ॥

असौ खलु वावैष आदित्यः । यत्प्रवर्ग्यः । स एतानि नामान्यकुरुत[५] । [६]य एवं वेद । विदुरेनं नाम्ना[६] । [७]ब्रह्मवादिनो वदन्ति । यन्मृण्मयमाहुतिं नाश्नुतेऽथ । कस्मादेषोऽश्नुत इति । वागेष इति ब्रूयात् । वाच्येव वाचं दधाति ॥ ५ ॥

तस्मादश्नुत[७] । [८]प्रजापतिर्वा एष द्वादशधा विहितः । यत्प्रवर्ग्यः । यत्प्रागवकाशेभ्यः । तेन प्रजा

---

५ एतन्मन्त्रस्य भाष्यं ५८४ पृष्ठे द्रष्टव्यं ।
६ „ ५८५ „
७ „ ५८५ „
८ „ ५८६ „

असृजत । अवकाशैर्देवासुरानसृजत । यदूर्ध्वमवकाशेभ्यः । तेनान्नमसृजत । अन्नं प्रजापतिः । प्रजापतिर्वावैषः[८] ॥ ६ ॥

वदन्ति(१), तनुवा(२), सꣳसन्नः(३), हूयमानो वाग्घुतः(४), दधाति(५), एषः(६), ॥ अनु०११ ॥

अथ द्वादशोऽनुवाकः ।

[१]सविता भूत्वा प्रथमेऽहन् प्रवृज्यते । तेन कामाꣳ एति । यद् द्वितीयेऽहन् प्रवृज्यते । अग्निर्भूत्वा देवानेति । यत्तृतीयेऽहन् प्रवृज्यते । वायुर्भूत्वा प्राणानेति । यच्चतुर्थेऽहन् प्रवृज्यते । आदित्यो भूत्वा रश्मीनेति । यत्पञ्चमेऽहन् प्रवृज्यते । चन्द्रमा भूत्वा नक्षत्राण्येति ॥ १ ॥

यत् षष्ठेऽहन् प्रवृज्यते । ऋतुर्भूत्वा संवत्सरमेति । यत् सप्तमेऽहन् प्रवृज्यते । धाता भूत्वा शक्करीमेति । यदष्टमेऽहम् प्रवृज्यते । बृहस्पतिर्भूत्वा गायत्रीमेति । यन्नवमेऽहन् प्रवृज्यते । मित्रो भूत्वा

१ एतन्मन्त्रस्य भाष्यं ५८७ पृष्ठे द्रष्टव्यं ।

त्रिष्टुतं इमांल्लोकानेति। यद्द्वमेऽहन् प्रवृज्यते।
वरुणो भूत्वा विराजमेति ॥ २ ॥

यदेकादशेऽहन् प्रवृज्यते। इन्द्रो भूत्वा त्रिष्टुभमेति। यद् द्वादशेऽहन् प्रवृज्यते। सोमो भूत्वा सत्यामेति[१]। [२]यत् पुरस्तादुपसदां प्रवृज्यते। तस्मादितः पराङमूंल्लोकाꣳ स्तपन्नेति। यदुपरिष्टादुपसदां प्रवृज्यते। तस्मादमुतोऽर्वाङिमांल्लोकाꣳ स्तपन्नेति[२]। [३]य एवं वेद। एष तपति[३] ॥ ३ ॥

नक्षत्राण्येति(१), विराजमेति(२), तपति(३), ॥

अनु० ॥ १२ ॥

[१]देवा वै सत्रꣳ(१), सावित्रं(२), परिश्रिते(३), ब्रह्मन् प्रचरिष्यामः(४), अग्निष्ठा(५), शिरो॰ग्रीवा(६), देवस्य॰रशनां(७), विश्वा आशा(८), घर्म या ते(९), प्रजापतिꣳ॰शुक्रं(१०), प्रजापतिः सम्भ्रियमाणः(११), सविता(१२), द्वादश ॥ १२ ॥

देवा वै सत्रꣳ, स खदिरः, परिश्रिते, अभिपूर्वम्, अथो रक्षसाम्, ग्रैष्मावेव, ब्रह्म वै देवानां, अश्विना

२ एतन्मन्त्रस्य भाष्यं ५८८ पृष्ठे द्रष्टव्यं।
३ ,, ५८८ ,,

घर्मं पातं, प्राणो वा इन्द्रतमोऽग्निः, वृषा हरिः, यो वै वसीयाꣳसं यथानामम, अष्टोत्तरशतम् ॥ १०८ ॥

शन्नस्तन्नो मा हासीत् ॥ ॐ शान्तिः शान्तिः शान्तिः* । हरिः ओम् ॥

---

* ऊर्गमिरसौ ग्रीवा आत्मा पुनरसौ तं यन्मुखं तेनाप्रतिग्रीवायं त्रिर्नोकथ्ये रचितममवामम्। इति A चिह्नितपुस्तकपाठः। ऊर्गमिरसौ ग्रीवा आत्मापुनरसौ तं यन्मुखमिति i चिह्नितपुस्तकपाठः।

समाप्तोऽयं पञ्चमः प्रपाठकः ॥

# तैत्तिरीये आरण्यके

षष्ठप्रपाठके प्रथमोऽनुवाकः ।

हरिः ॐ ।

सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनञ्च ।

ॐ शान्तिः शान्तिः शान्तिः ॥ ओम् ॥

---

# तैत्तिरीये आरण्यकभाष्ये

षष्ठप्रपाठके प्रथमोऽनुवाकः ।

श्रीगणेशाय नमः ।

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरं ॥
प्रवर्ग्यब्राह्मणं प्रोक्तं पञ्चमे हि प्रपाठके ।
पितृमेधस्य मन्त्रास्तु दृश्यन्तेऽस्मिन् प्रपाठके ॥

तेषाञ्च पितृमेधमन्त्राणां विनियोगो भरद्वाजकल्पे बौधायनकल्पे चाभिहितः । तत्राहिताग्नेर्मरणसंशये दहनदेशञ्जोषयते दक्षिणा प्रत्यक्प्रवणमित्यारभ्य भरद्वाज आह, अन्वारब्धे मृत आहवनीये स्रुगाहुतिं* जुहोति, परे युवाङ्ससमिति ॥ बौधायनोऽप्येवमेवाह, अथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा प्रेतस्य दक्षिणं बाहुमन्वारभ्य जुहोति, परे युवाङ्ससमिति ।

---

* स्रुवाहुतिमिति E चिह्नितपुस्तकपाठः ।

(१)परे॑ युवा॒ꣳसं॑ प्र॒वतो॑ म॒हीरनु॑ ब॒हुभ्यः॒ पन्था॑मनप॒स्पशा॒नम्। वै॒व॒स्व॒तꣳ स॒ङ्गम॑नं॒ जना॑नां य॒मꣳ राजा॑न॒ꣳ ह॒विषा॑ दुवस्यत(१)। (२)इ॒दन्त्वा॒ वस्त्रं॑ प्रथ॒मं न्वाग॑-

पाठस्तु। (१)"परेयुवाꣳस०हविषा दुवस्यत"(१) इति। हे पितृमेध-कर्त्तारः पितृणां 'राजानं', 'यमं', 'हविषा', 'दुवस्यत' प्रीणयत। कीदृशं, 'प्रवतः' प्रकृष्टकर्मवतः, भूलोकवर्त्तिभोगसाधनं पुण्यमनुष्ठितवतः पुरुषान्, 'महीः' तत्तद्भोगोचित*भूप्रदेशविशेषान्, 'अनु', 'परे युवाꣳसं' क्रमेण मरणादूर्ध्वं प्रापितवन्तं, तथा 'बहुभ्यः' स्वर्गार्थिभ्यः पुण्यकृद्भ्यः, पुण्यकृतामर्थे, 'पन्थां' स्वर्गस्योचितं मार्गं, 'अनपस्पशानं' अबाधमानं, पापिन एव पुरुषान् स्वर्गमार्गबाधेन नरकं प्रापयति नतु पुण्यकृत इत्यर्थः। 'वैवस्वतं' विवस्वतः सूर्यस्य पुत्रं, 'जनानां सङ्गमनं' पापिनां मन्तव्यस्थानरूपं॥

कल्पः। औदुम्बर्यामासन्द्यां कृष्णाजिनं दक्षिणाग्रीवमधरलोम आस्तीर्य तस्मिन् एनमुत्तानं निपात्योपान्तदशेनाहतेन वाससा प्रोर्णोति, इदन्त्वा वस्त्रमिति। पाठस्तु। (२)"इदन्त्वा वस्त्रं प्रथमं न्वागन्"(२) इति। हे प्रेत त्वां 'इदं', 'वस्त्रं', 'प्रथमं नु' प्रथममेव, 'आगन्' आगच्छतु॥

कल्पः। अथास्मैतरदपादत्ते, अपैतदूहेति, तत्पुत्रो भ्राता वा

* तत्तद्भोगोचितेति E, F, चिह्नितपुस्तकद्वयपाठः।

न्(२) (३)अपैतदूह यदिहाबिभः पुरा। इष्टापूर्तमनुसम्पश्य दक्षिणां यथा ते दत्तं बहुधा वि बन्धुषु(३)। (४)इमौ युनज्मि ते वह्नी असुनीथाय वोढवे। याभ्यां यमस्य सादनꣳ सुकृताञ्चापि गच्छतात्(४)। (५)पूषा

---

अन्यो वा प्रत्यासन्नबन्धुः प्रतीतः परिधायेति। पाठस्तु। (३)"अपैतदूह ० बहुधा वि बन्धुषु"(३) इति। हे प्रेत 'यत्' वस्त्रं, 'पुरा', त्वं 'अबिभः' धारितवानसि, 'एतत्', 'अपोह' अपसारय, 'इष्टापूर्त्तं' त्वया अनुष्ठितं श्रौतं स्मार्त्तञ्च यत् कर्म तत्, 'अनुसम्पश्य' अनुक्रमेण स्मर, 'दक्षिणां', च ब्राह्मणेभ्यो दत्तां 'अनुसम्पश्य', 'ते' त्वदीयन्धनं, 'बन्धुषु', प्रीतिदानरूपेण 'बहुधा', 'यथा' विशेषेण, 'दत्तं', तमपि प्रकारं 'अनुसम्पश्य', ततस्तदनुरूपं पुण्यलोकं गच्छेत्यभिप्रायः।

कल्पः। अथैनमेतया आसन्द्या सह तत्तल्पेन कटेन वा संवेष्ट्य दासाः प्रवयसो वहेयुः; अथैनं अनसा वहन्तीत्येकेषां अनस्वेद्युञ्ज्यात्, इमौ युनज्मि ते वह्नी असुनीथाय वोढवे। याभ्यां यमस्य सादनꣳ सुकृताञ्चापि गच्छतात् इति। (४ मन्त्रः।) हे प्रेत 'ते' तव, 'असुनीथाय' प्राणसदृशस्य शरीरस्य नयनाय, 'वोढवे' शकटं वोढुं, 'वह्नी' वोढारौ, 'इमौ' बलीवर्दौ, 'युनज्मि' शकटे योजयामि। 'याभ्यां' बलीवर्दाभ्यां, 'यमस्य', 'सादनं' स्थानं, 'सुकृताञ्चापि' पुण्यकृतां पुरुषाणामपि, स्थानं 'गच्छतात्' गमिष्यसि, तादृशौ 'युनज्मि', इत्यन्वयः।

त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः। स त्वैतेभ्यः परि ददात्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः(५)।
(६)पूषेमा आशा अनुवेद सर्वाः सो अस्माँ अभयतम-

---

कल्पः। अथैनमाददत आदीयमानमनुमन्त्रयते, पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः। स त्वैतेभ्यः परिददात्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्य इति, तृतीयमेतस्याध्वनो गत्वा निदधाति इति। (५ मन्त्रः।) हे प्रेत 'पूषा' योयं पोषको देवः, सोयं त्वां 'इतः' देशात्, 'प्रच्यावयतु' प्रचालयतु। कीदृशः, 'विद्वान्' गन्तव्यमार्गाभिज्ञः, 'अनष्टपशुः' वाहकाः मनुष्याः द्विपात्पशवः, अनड्वाहो चतुष्पात्पशूः, अनष्टा अनुपद्रुताः पशवो यस्यासौ 'अनष्टपशुः', वाहकोपद्रवराहित्येन नेतुं समर्थः। 'भुवनस्य गोपाः' सर्वस्य लोकस्य रक्षकः, 'सः' तादृशः पूषा, त्वां 'एतेभ्यः' पूर्वसिद्धेभ्यः, 'पितृभ्यः', 'परिददात्' प्रयच्छतु। यः अग्निः तव दाहं करिष्यति सः 'अग्निः,' 'सुविदत्रियेभ्यः' सुष्ठु त्वदनुष्ठितं कर्म जानद्भ्यः, 'देवेभ्यः', त्वां प्रयच्छतु।

कल्पः। अथैनमाददत आदीयमानमनुमन्त्रयते, पूषेमा आशा अनुवेद सर्वाः सो अस्माँ अभयतमेन नेषत्। स्वस्तिदा आघृणिः सर्ववीरोऽप्रयुच्छन् पुर एतु प्रविद्वान् इति, अर्द्धमस्याध्वनो गत्वा निदधाति इति। (६ मन्त्रः।) योयं 'पूषा', देवः,

मेन नेषत्। स्वस्तिदा अघृणिः सर्ववीरोऽप्रयुच्छन् पुर एतु प्रविद्वान्(१) ॥ १ ॥

(७)आयुर्विश्वायुः परिपासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात्। यत्राऽऽसते सुकृतो यत्र ते ययुस्तत्र त्वा

---

सोऽयं 'इमाः' सर्वाः, 'आशाः' दिशः, 'अनुवेद' इयमनुकूला दिगिति जानाति, 'सः' देवः, 'अस्मान्', अत्यन्तं भयरहितेन मार्गेण 'नेषत्' नयतु। 'कीदृशः पूषा, 'स्वस्तिदाः' क्षेमप्रदः, 'अघृणिः' अदीप्तः, अस्मास्वनुग्राही,* 'सर्ववीरः' सर्वेभ्यः प्रतिकूलेभ्यः अत्यन्तं शूरः, सः तादृशः असौ 'अप्रयुच्छन्' प्रमादमकुर्वन्, 'प्रविद्वान्' मार्गं प्रकर्षेण जानन्, अस्माकं पुरतः 'एतु' गच्छतु।

कल्पः। अथैनमाददत आदीयमानमनुमन्त्रयते, आयुर्विश्वायुः परिपासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात्। यत्राऽऽसते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु इति, समस्तमेतस्याध्वनो गत्वा निदधाति इति। (७मन्त्रः)। विश्वस्मिन् कर्मण्यागच्छति इति 'विश्वायुः' अग्निः, स च 'आयुः' आयुष्मन्तं, आगतवन्तं, त्वां प्रेतं 'परिपासति' परिपालयितुमिच्छति, इहमार्थमागच्छन्तं त्वां प्रतीक्षते इत्यर्थः। अयं 'पूषा', 'प्रपथे' प्रकृष्टे मार्गे, त्वां 'पुरस्तात् पातु' पुरतो गच्छन् प्रतिबन्धकेभ्यो

---

* अस्मास्वनुग्रहयुक्त इति E चिह्नितपुस्तकपाठः।

देवः सविता दधातु(७)। (८)भुवनस्य पत इदꣳ हविः(८)। (९)अग्नये रयिमते स्वाहा(९)। (१०)पुरुषस्य सयावर्यपेद-घानि मृज्महे। यथा नो अत्र नापरः पुरा जरस

---

रक्षोभ्यः पालयतु। 'यत्र' यस्मिन् उत्तमलोके, 'सुकृतः' पूर्वं पुण्यकृतः, 'आसते', 'यत्र' च मार्गे, 'ते' पुण्यकृतः, 'ययुः', 'सविता', 'देवः', 'तत्र', त्वां 'दधातु' स्थापयतु॥

कल्पः। अत्र राजगवीमुपाकरोति, भुवनस्य पते इति जरतीं मुख्यां, तज्जघन्यां कृष्णां कृष्णाचीं कृष्णबालां कृष्णखुरामपि वा अजां, बालखुरमेव कृष्णां, एवं स्यादिति। पाठस्तु। (८)"भुवनस्य पते इदꣳ हविः"(८) इति। हे 'भुवनस्य', 'पते' पालक देव, तव 'इदं' राजगवीरूपं, 'हविः', उपाकरोमीति शेषः॥

अथास्य हविषः स्वकाले प्राप्तो होमः कर्त्तव्यः। तद्धोममन्त्रोऽत्रैव प्रसङ्गादाम्नातः। कल्पः। तत्रैतद्धविरिडापात्र्या चमसेन वा जुहोति, अग्नये रयिमते स्वाहा इति।(९मन्त्रः)। 'रयिमते' धनवते, 'अग्नये', स्वाहुतमिदमस्तु॥

कल्पः। तां घ्नन्ति उत्सृजन्ति वा, यदि विघ्नन्ति तस्यां निहन्यमानायां सव्यानि जानून्यनुनिघ्नन्तः पांसूनवस्रजन्ते, पुरुषस्येति। पाठस्तु। (१०)"पुरुषस्य सयावरि॰ जरस आयति(१०) इति। सह यातुं गन्तुं शीलं यस्याः राजगव्याः सा सयावरी, "पुरुषस्य"

आयति(१०)।(११)पुरुषस्य सयावरि वि ते प्राणमसिस्रसं। शरीरेण महीमिहि स्वधयेहि पितॄनुप प्रजयाऽस्मानि-हावह(११)। (१२)मैवं माऽंस्ता प्रियेऽहं देवी सती पितृ-

मृतस्य सम्बन्धिनि हे 'सयावरि', 'अघानि' पापानि, 'अपेत्' अपनीयैव, 'मृज्महे' अस्मान् शोधयामः, "नः" अस्माकं, 'जरसः' वयोहानेः, 'पुरा', 'अपरः' पाप्मा कश्चिदपि, 'यथा', 'नायति' नागच्छति, तथा मृज्महे इति पूर्वत्रान्वयः ।

कल्पः । अथास्याः प्राणान्विस्रंसमानाननुमन्त्रयते, पुरुषस्य सयावरि वि ते प्राणमसिस्रसं । शरीरेण महीमिहि स्वधयेहि पितॄनुप प्रजयाऽस्मानिहावह इति । (११मन्त्रः) । हे 'पुरुषस्य', 'सयावरि' राजगवि, 'ते' तव, 'प्राणं', 'व्यसिस्रसं' विस्रस्तं शिथिलं कृतवानस्मि । त्वं 'शरीरेण', 'महीं' भूमिं, 'इहि' प्राप्नुहि । 'स्वधया' अन्नेन हविःस्वरूपेण, यद्वा अमृतवाची स्वधाशब्दः, अमृतेन जीवरूपेण, 'पितॄन्', 'उपेहि' । 'इह' अस्मिन् लोके, 'प्रजया' पुत्रादिकया सह, 'अस्मान्', 'आवह' क्षेमं प्रापय ॥

कल्पः । उपोत्थाय* पाऽंसुमवमृशन्ते, मैवं माऽंस्ता प्रियेऽहं देवी सती पितृलोकं यदेषि । विश्ववारा नभसा संव्ययन्त्युभौ नो लोकौ पयसाऽभ्याववृत्स्व इति । (१२मन्त्रः ।) हे 'प्रिये' राजगवि, 'अहं', 'एवं' हतास्मीति, 'मा माऽंस्ता' मनसि मननं मा कार्षीः,

* उदादायेति E चिह्नितपुस्तकपाठः ।

लोकं यदेषि। विश्ववारा नभसा संव्ययन्त्युभौ नौ लोकौ पयसाऽभ्यावंवृत्स्व[१२] ॥ २ ॥

[१२]इयं नारी पतिलोकं वृणाना निपद्यत उप त्वा

---

'यत्' यस्मात्कारणात्, त्वं 'देवी' देवतात्मिका, 'सती', 'पितृलोकं', प्रति 'एषि' आगच्छसि। 'विश्ववारा' सर्वैर्वरणीया, प्रार्थनीया, 'नभसा' आकाशमार्गेण, 'संव्ययन्ती' द्युलोकं संवृण्वती। हे राजगवि तथाविधा त्वं 'नः' अस्माकं, 'उभौ' 'लोकौ' एतल्लोकपरलोकौ, 'पयसा' क्षीरेण, 'अभ्यावर्त्तस्व' अभित आवृत्तौ कुरु, क्षीरपूर्णौ कुरु इत्यर्थः॥

कल्पः। अथास्य भार्यामुपसंवेशयति, इयं नारी पतिलोकं वृणाना निपद्यत उप त्वा मर्त्त्य प्रेतं। विश्वं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणं चेह धेहि इति। (१३मन्त्रः।) हे 'मर्त्य' मनुष्य, या 'नारी' मृतस्य तव भार्या, सा 'पतिलोकं', 'वृणाना' कामयमाना, 'प्रेतं' मृतं त्वां, 'उपनिपद्यते' समीपे नितरां प्राप्नोति। कीदृशी, 'पुराणं विश्वं' अनादिकालप्रवृत्तं कृत्स्नं स्त्रीधर्मं, 'अनु'क्रमेण, 'पालयन्ती', पतिव्रतानां स्त्रीणां पत्या सहैव वासः परमो धर्मः। 'तस्यै' धर्मपत्न्यै, त्वं 'इह' लोके, निवासार्थमनुज्ञां दत्वा 'प्रजां' पूर्वं विद्यमानां पुत्रादिकां, 'द्रविणं' धनं, 'च', 'धेहि' सम्पादय, अनुजानीहीत्यर्थः॥

मर्त्यं प्रेतं। विश्वं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणञ्चेह धेहि[१३]। [१४]उदीर्ष्व नार्यभि जीवलोकमितासुमेतमुपशेष एहि। हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्युर्जनित्वमभिसम्बभूव[१४]। [१५]सुवर्णꣳ हस्तादाददाना मृतस्य श्रियै ब्रह्मणे तेजसे बलाय। अत्रैव त्वमिह वयꣳ सुशेवा विश्वा स्पृधो अभिमातीर्जयेम[१५]।

---

कल्पः। तां प्रति गतः सव्ये पाणावभिपद्योत्थापयति, उदीर्ष्व नार्यभि जीवलोकमितासुमेतमुपशेष एहि। हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्युर्जनित्वमभिसम्बभूव इति। (१४ मन्त्रः)। हे 'नारि', त्वं 'इतासुं' गतप्राणं, 'एतं' पतिं, 'उपशेषे' उपेत्य शयनं करोषि, 'उदीर्ष्व' अस्मात्पतिसमीपादुत्तिष्ठ, 'जीवलोकमभि' जीवन्तं प्राणिसमूहमभिलक्ष्य, 'एहि' आगच्छ। 'त्वं', 'हस्तग्राभस्य' पाणिग्राहवतः, 'दिधिषोः' पुनर्विवाहेच्छोः, 'पत्युः', 'एतत्', 'जनित्वं' जायात्वं, 'अभिसम्बभूव' आभिमुख्येन सम्यक् प्राप्नुहि॥

कल्पः। सुवर्णेन हस्तौ सम्मार्ष्टि, सुवर्णꣳ हस्तादाददाना मृतस्य श्रियै ब्रह्मणे तेजसे बलाय। अत्रैव त्वमिह वयꣳ सुशेवा विश्वा स्पृधो अभिमातीर्जयेम इति। (१५ मन्त्रः)। हे नारि त्वं 'श्रियै' सम्पदर्थं, 'ब्रह्मणे' ब्राह्मणजात्यर्थं, 'तेजसे' कान्त्यर्थं, 'बलाय' शरीरबलार्थं, 'मृतस्य' पुरुषस्य, 'हस्तात्', 'सुवर्णं', 'आददाना', सती 'अत्रैव' लोके, तिष्ठ। 'वयं', अपि 'इह' लोके, 'सुशेवाः' सुखं

(१६)धनुर्हस्तादाददाना मृतस्य श्रियै क्षत्रायौजसे बलाय। अत्रैव त्वमिह वयꣳ सुशेवा विश्वा स्पृधो अभिमातीर्जयेम(१६)। (१७)मणिꣳ हस्तादाददाना मृतस्य श्रियै विशे पुष्ट्यै बलाय। अत्रैव त्वमिह वयꣳ सुशेवा विश्वा स्पृधो अभिमातीर्जयेम(१७)॥ ३ ॥

(१८)इममग्ने चमसं मा विजीह्वरः प्रियो देवाना-

---

सेवमानाः सन्तः, 'स्पृधः' अस्माभिः सह स्पर्द्धमानाः, 'विश्वाः' 'अभिमातीः' सर्वान् शत्रून्, 'जयेम' ॥

कल्पः। धनुर्हस्तादाददाना मृतस्य श्रियै क्षत्रायौजसे बलाय। अत्रैव त्वमिह वयꣳ सुशेवा विश्वा स्पृधो अभिमातीर्जयेम इति राजन्यस्य। मणिꣳ हस्तादाददना मृतस्य श्रियै विशे पुष्ट्यै बलाय। अत्रैव त्वमिह वयꣳ सुशेवा विश्वा स्पृधो अभिमातीर्जयेम इति वैश्यस्य इति। (१६,१७मन्त्रौ)। एतौ मन्त्रौ पूर्वोक्तब्राह्मणमन्त्रवत् व्याख्येयौ ॥

कल्पः। अथ मुखादिष्वस्य पात्राणि नियुञ्ज्यादिति दध्ना सर्पिर्मिश्रेण पूरयित्वा मुखे अग्निहोत्रहवणीं, नासिकयोः स्रुवौ, अक्ष्णोर्हिरण्यशकलौ, आज्यस्रुवौ वा, प्रत्यस्य कर्णयोः प्राशित्रहरणं, भित्त्वा शिरसि कपालानि, ललाट एककपालं, शिरसः प्रणीताप्रणयनं, चमसमस्मिन्दधाति इति, इममग्ने चमसं मा विजीह्वरः प्रियो देवानामुत सोम्यानां। एष यश्चमसो देवपानस्तस्मिन् देवा अमृता मादयन्तामिति। (१८मन्त्रः।) हे 'अग्ने', 'इमं चमसं',

मुत सो॒म्यानां᳚। एष य॒श्च॑म॒सो दे॑व॒पान॒स्तस्मि॑न्दे॒वा अ॒मृता॑ मादयन्तां(१८)। (१९)अ॒ग्नेर्वर्म॒ परि॒ गोभि॑र्व्ययस्व॒ सम्प्रोर्णु॑ष्व॒ मेद॑सा॒ पीव॑सा च। नेत्त्वा॑धृष्णु॒र्हर॑सा॒ जर्हृ॑षा-

---

'मा विजीह्वरः' कुटिलं मा कुरु, मा विनाशयेत्यर्थः। 'एषः' चमसः, 'देवानां प्रियः', देवाश्चमसेन सोमरसम्पातुं वाञ्छन्ति। 'उत' अपि च, 'सोम्यानां' सोमयोग्यानामृत्विग्यजमानानां, 'प्रियः', 'यश्चमसः', 'देवपानः' देवानां पानहेतुः, 'तस्मिन्' चमसे, 'अमृताः', 'देवाः', 'मादयन्तां' यजमानं हर्षयन्तां॥

कल्पः। अथैनं चर्मणा सशीर्षबालपादेन उत्तरलोम्ना प्रोर्णोति, अग्नेर्वर्म परि गोभिर्व्ययस्व सम्प्रोर्णुष्व मेदसा पीवसा च। नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधद्विधक्ष्यन् पर्यङ्खयाते इति। (१९ मन्त्रः) हे 'वर्म' कवचस्थानीय चर्मविशेष, 'अग्नेः', 'गोभिः' रश्मिभिः, परितः 'व्ययस्व' एनं प्रेतं संवृतङ्कुरु, । 'पीवसा' स्थूलेन, 'मेदसा' 'च', त्वदीयावयवेन मेदोभिधेन, 'प्रोर्णुष्व' सम्यगाच्छादय। 'धृष्णुः' धार्ष्ट्योपेतः, अयमग्निः 'त्वा दधत्' हे चर्म त्वां धारयन्, 'हरसा' स्वकीयेन तेजसा, 'जर्हृषाणः' हर्त्तुमिच्छन्, 'विधक्ष्यन्' विशेषेण दग्धुमिच्छन्, उद्युक्तः, 'नेत् पर्यङ्खयाते' परितो नैव चालयतु, त्वदपसारणं मा करोतु।

णो दधद्विधक्ष्यन् पर्यङ्ख्याति[१९]। [२०]मैनमग्ने विदहो माऽभिशोचो माऽस्य त्वचं चिक्षिपो* मा शरीरं। यदा शृतं करवो जातवेदोऽथेमेनं प्रहिणुतात् पितृभ्यः[२०]। [२१]शृतं यदाऽकरसि जातवेदोऽथेमेनं परिदत्तात् पितृभ्यः। यदा गच्छात्यसुनीतिमेतामथा देवानां

---

कल्पः। अथैनमादीपयति आदीप्यमानमनुमन्त्रयते, मैनमग्ने विदहो माऽभिशोचो माऽस्य त्वचं चिक्षिपो मा शरीरं। यदा शृतं करवो जातवेदोऽथेमेनं प्रहिणुतात् पितृभ्यः इति। २०मन्त्रः।) हे 'अग्ने', 'एनं' प्रेतं, 'मा विदहः' विशेषेण दग्धं मषीरूपं मा कुरु, 'मा अभिशोचः' अभितः शोकेन सन्तापेन युक्तं मा कुरु, 'अस्य', 'त्वचं', 'मा चिक्षिपः' इतस्ततो विक्षिप्तां मा कुरु, 'शरीरं', अपि विक्षिप्तं 'मा', कुरु। हे 'जातवेदः', 'यदा', शरीरं 'शृतं' पक्वं, 'करवः', 'अथेमेनं' अनन्तरमेवैनं प्रेतं पुरुषं, 'पितृभ्यः' 'प्रहिणुतात्' पितृसमीपे प्रेरय॥

कल्पः। प्रज्वलितमनुमन्त्रयते, शृतं यदाऽकरसि जातवेदोऽथेमेनं परिदत्तात् पितृभ्यः। यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति इति। (२१मन्त्रः।) हे 'जातवेदः', 'यदा', तच्छरीरं 'शृतं' पक्वं, 'अकः' कृतवान्, 'असि', तदानीमेव 'एनं', 'पितृभ्यः', 'परिदत्तात्' प्रयच्छ। 'यदा', अयं प्रेतः 'एतां' अग्निना त्वया कृतां, 'असुनीतिं' प्राणस्य नयनं, प्राणप्रेरणं, 'गच्छाति'

---

* विक्षिप इति F चिह्नितपुस्तकपाठः।

वशनीभवाति[२१]। [२२]सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा। अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः[२२]। [२३]अजोऽ-

प्राप्नोति, 'अथा' अनन्तरं, 'देवानां', 'वशनीभवाति' वशं प्राप्तो भवति॥

कल्पः। अत्र षड्ढोतारं व्याचष्टे, सूर्यन्ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा। अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः इति। (२२मन्त्रः।) सूर्यन्ते इत्यादिमन्त्रस्य षड्ढोता इति नामधेयं। हे प्रेत 'ते' त्वदीयं, 'चक्षुः', इन्द्रियं 'सूर्यं', 'गच्छतु'। 'आत्मा' प्राणः, बाह्यवायुं 'गच्छतु'। त्वमपि 'धर्मणा' सुकृतेन, तत्फलं भोक्तुं द्युलोकं भूलोकं च 'गच्छ', 'वा', जलं 'गच्छ'*। चक्षुरादीन्द्रियसामर्थ्यं पुनर्देहग्रहणपर्यन्तं, तत्तदधिष्ठातृदेवता त्वया द्युलोकादिषु शरीरे स्वीकृते पश्चात् त्वामेव प्राप्स्यति। यत्र यस्मिन्लोके 'ते' तव, 'हितं' सुखमस्ति, 'तत्र', गत्वा 'ओषधीषु', प्रविश्य तद्द्वारा पितृदेहमातृदेहौ प्रविश्य तत्र तत्रोचितानि शरीराणि स्वीकृत्य तैः 'शरीरैः', प्रतिष्ठितो भव।

कल्पः। अत्र एतं अजं चित्यन्ते अबलेन शुल्बेन बध्नाति, अजोऽभागस्तपसा तन्तपस्व। तन्ते शोचिस्तपतु तन्ते अर्चिः। यास्ते शिवास्तनुवो जातवेदस्ताभिर्वहेमꣳ सुकृतां यत्र लोकाः इति। (२३मन्त्रः।) यत्र चितेः पश्चिमभागे समीपे केनचित् अबलेन

* 'अपो वा गच्छ', इति K चिह्नितपुस्तकपाठः।

भागस्तपसा तन्तपस्व तं ते शोचिस्तपतु तन्ते अर्चिः यास्ते शिवास्तनुवो जातवेदस्ताभिर्वहेमꣳ सुकृतां यत्र लोकाः(२३) । (२४)अयं वै त्वमस्मादधि त्वमेतदयं वै

---

शुल्वेन अजं बध्नीयात्, ज्वालया सन्तप्तः सः तेजसा सह शुल्वः यथा द्रवति तथा बध्नीयात्, तदानीं अजोऽभाग इत्येतं मन्त्रं पठेत् । हे अग्ने अयं 'अजः', भागरहितः । 'तं' अजं, 'तपसा' त्वदीयेन तापेन, 'तपस्व' तप्तं कुरु । तथा 'ते', 'शोचिः' शोकहेतुज्वाला-विशेषः, 'तं तपतु' । तथा 'अर्चिः' भासको ज्वालाविशेषः, 'तं' अजं, 'तपतु' । तपःशोचिरर्चिःशब्दानां सन्तापतारतम्येन भेदः । हे 'जातवेदः', 'ते' तव, 'याः तनवः', 'शिवाः' सुखहेतवः नतु तापप्रदाः, 'ताभिः', 'इमं' प्रेतं, 'वह', 'यत्र' यस्मिन् लोके, 'सुकृतां' पुण्यकृतां, 'लोकाः', सन्ति तत्र प्रापय ॥

कल्पः । अथाऽन्यां जुहोति, अयं वै त्वमस्मादधि त्वमेतदयं वै तदस्य योनिरसि । वैश्वानरः पुत्रः पित्रे लोककृज्जातवेदो वहेमꣳ सुकृतां यत्र लोकाः इति । उपरितनानुवाकोक्तैः नवभिर्मन्त्रैः नव हुत्वा अथ अनन्तरं अन्यां एतामृचं जुहुयात् । (२४मन्त्रः ।) हे 'जातवेदः,' 'अयं' एव प्रेतः पुरुषः, 'त्वं', नतु अस्य तव च भे-दोऽस्ति । 'अस्मादधि' अस्य प्रेतस्य शरीरस्योपरि, 'त्वं' अग्निः, 'एतत्', प्रत्यक्षं यथा भवति तथा वर्त्तसे । 'तत्' तस्मात् अत्यन्त-

तद॑स्य योनि॑रसि । वै॒श्वा॒न॒रः पु॒त्रः पि॒त्रे लो॑कक॒ज्जा॑तवे॑दो॒ वहे॑म॒ꣳ सु॒कृतां॒ यत्र॑ लो॒काः[२४] ॥ ४ ॥

वि॒द्वान्, अ॒भ्याव॑वृत्स्व, अ॒भिमा॑तीर्जयेम्, श॒रीरैः, च॒ त्वारि॑ च ॥ १ ॥

---

भेदाभावात् कारणात्, 'अस्य' प्रेतस्य, 'अयं' एव 'वैश्वानरः', त्वं 'योनिरसि' स्थानप्रदोऽसि । सर्वत्र हि 'पुत्रः', 'पित्रे', 'लोककृत्', भवति, पुन्नाम्नो नरकात्त्रायत इति व्युत्पत्तेः । अयश्च पुरा यजमानत्वदशायां नानाविधैः कर्मभिरग्नेः पालनात्तव पिता । ततः हे 'जातवेदः', 'यत्र', 'सुकृतां' पुण्यकृतां, 'लोकाः' स्थानानि सन्ति, तत्र 'इमं' प्रेतं पुरुषं, 'वह' प्रापय ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

अथ द्वितीयोऽनुवाकः।

(१)य एतस्य पथो गोप्तारस्तेभ्यः स्वाहा य एतस्य पथो रक्षितारस्तेभ्यः स्वाहा य एतस्य पथोऽभिरक्षितारस्तेभ्यः स्वाहा ख्यात्रे स्वाहाऽपाख्यात्रे स्वाहाऽभिलालपते स्वाहाऽपलालपते स्वाहाऽग्नये कर्मकृते स्वाहा

---

अथ द्वितीयोऽनुवाकः।

कल्पः। पर्णमयेन स्रुवेणोपघातं जुहोति, य एतस्य पथो गोप्तारः तेभ्यः स्वाहेति नव स्रुवाहुतीरिति। उपघातं उपहत्योपहत्य सकृत् सकृदवदायेत्यर्थः। पाठस्तु। (१)"य एतस्य पथो गोप्तारस्तेभ्यः स्वाहा॰यमत्र नाधीमस्तस्मै स्वाहा"(१) इति। 'एतस्य पथः' मृतेन गन्तव्यस्य स्वर्गमार्गविषयस्य मार्गस्य, रक्षकाः देवाः त्रिविधाः, गोप्तृरक्षितृभिरक्षितृनामकाः, ते च क्रमेण त्रिषु स्थानेषु तिष्ठन्ति, तादृशाः ये सन्ति 'तेभ्यः', स्वाहुतमिदमस्तु। यजमानकीर्त्तेः प्रकटयिता कश्चिद्देवः 'ख्याता', तस्मै स्वाहुतमिदमस्तु। स हि तुष्टः सन् देवलोके ख्यातिं करिष्यति। अपकीर्त्तेः प्रकटयिता कश्चित् 'अपाख्याता', तस्मै, स्वाहुतमिदमस्तु। स च तुष्टः अपकीर्त्तिं वर्जयति। देवानामग्रे सुकृतं साकल्येन यः कथयति सः 'अभिलालपन्', तत् यः अपलपति सः 'अपलालपन्', ताभ्यां स्वाहु

यमच नाधीमस्तस्मै स्वाहा[१]। [२]यस्तं इध्मञ्जभरत्सि-
ष्विदानो मूर्धानं वा ततपते त्वाया। दिवो विश्वस्मात्
सीमघायत उरुष्यः[२]। [३]अस्मात् त्वमधि जातोऽसि त्व-

तमिदमस्तु। पूर्ववदिष्टप्राप्त्यनिष्टपरिहारौ योजनीयौ। पूर्वानुष्ठितकर्मणामेतस्य च कर्मणो निष्पादको यः 'अग्निः,' तस्मै 'कर्मकृते', स्वाहुतमिदमस्तु। 'यं' वा अन्यदेवं, 'अच', उपयुक्तं वयं 'नाधीमः' न स्मरामः, 'तस्मै', स्वाहुतमिदमस्तु॥

अनन्तरभाविनोर्मन्त्रयोर्विनियोगो भरद्वाजबौधायनाभ्यां अनुक्तत्वाद् ग्रन्थान्तरे द्रष्टव्यः। प्रकरणबलात्तु होमार्थता प्रतीयते*। तत्र प्रथमं मन्त्रमाह। [२]"यस्त इध्मं जभरत् सिष्विदानो॰ सीमघायत उरुष्यः"[२] इति। हे अग्ने 'यः' राक्षसादिः, 'ते' तव, 'इध्मं','जभरत्' अपहरति, अथवा 'त्वाया' त्वदीयस्य दग्धव्यस्य प्रेतस्य, 'मूर्द्धानं', स्वयं 'सिष्विदान'? स्वेदं प्राप्तः सन्, 'ततपते' अतिशयेन तापं करोति; आत्मीयदहनसाधनस्य इध्मस्य अपहारेण वा, स्वकीयस्वेदेन मूर्धानं द्रवीकुर्वन् वा, आत्मीयदाहं विनाश्य स्वर्गं विहन्ति। 'दिवः' स्वर्गस्य, 'अघायतः' अघं पापं विघ्नं य इच्छति तस्मात्, 'विश्वस्मात्सीं' सर्वस्मादपि राक्षसादेः, 'उरुष्यः' अयं प्रेतो रक्षणीयः॥

अथ द्वितीयं मन्त्रमाह। [३]"अस्मात् त्वमधि जातोसि॰ लोकाय

* होमार्थतां दर्शयति इति E चिह्नितपुस्तकपाठः।

द्यं जायतां पुनः । अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा[२] ॥ १ ॥

य एतस्य त्वत् पञ्च ॥ २ ॥

अथ तृतीयोऽनुवाकः ।

[१]प्र केतुना बृहता भात्यग्निरारोदसी वृषभो

---

स्वाहा"[२] इति । हे अग्ने 'अस्मात्' यजमानात्, प्रेतत्वं 'अधिजातोऽसि' । अयं हि कर्मानुष्ठानेन त्वां स्वामिनं सम्पादितवान् । अतः फलदशायां 'अयं', 'पुनः',त्वत्तः 'अधिजायतां' त्वमेव स्वर्गलोके यजमानमुत्पादय, तत्सिद्ध्यर्थं 'वैश्वानराय' सर्वपुरुषहिताय, 'अग्नये' तुभ्यं, इदं स्वाहुतमस्तु ॥

इति सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके षष्ठप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ तृतीयोऽनुवाकः ।

कल्पः । अथैनं नवर्चेन याम्येन सूक्तेनोपतिष्ठते, प्रकेतुनेति । तत्र प्रथमामाह । [१]"प्र केतुना बृहता • महिषो ववर्ध"[१] इति । अयं

रौरवीति। दिवश्चिदन्तादुप मामुदानडपामुपस्थे महिषो ववर्ध[१]। [२]इदन्त एकं पर ऊंत एकं तृतीयेन ज्योतिषा संविशस्व। संवेशनस्तनुवै चारुरेधि प्रियो देवानां परमे सधस्थे[२]। [३]नाके सुपर्णमुप यत् पतन्तः

'अग्निः', 'बृहता' प्रौढेन, 'केतुना' ध्वजस्थानीयेन, ज्वालाविशेषेण, 'प्रभाति' प्रकर्षेण भासते। स च 'आविर्भूतः', 'वृषभः' कामानां वर्षकः सन्, 'विश्वानि', फलान्युद्दिश्य, 'रोरवीति' अतिशयेन ध्वनिं करोति। 'दिवः अन्तात् चित्' स्वर्गस्यावसानदेशादपि, 'उपेत्य 'मां' मदीयं यजमानं प्रेतं, 'उदानट्' उत्कर्षेण व्याप्तवान्, स्वर्गस्योपरि स्वयं पूर्वमवस्थितोऽपि मदीयं प्रेतमनुग्रहीतुमेवात्रागतवानित्यर्थः। सचाग्निः 'अपां' प्राप्तव्यानां फलानां, 'उपस्थे' समीपे, 'महिषो ववर्द्ध' अत्यधिको यथा भवति तथा वृद्धिं प्राप्तवान्॥

अथ द्वितीयामाह। [२]"इदन्त एकं पर ऊत एकं • परमे सधस्थे"[२] इति। हे अग्ने तव स्वाभाविकं 'इदमेकं' ज्योतिः, 'उत' अपिच, 'परः' परस्तात् प्रेतशरीरे स्थितं, 'ते' त्वदीयं, 'एकं' ज्योतिः, तदुभयमपि 'तृतीयेन' 'ज्योतिषा' परमात्मरूपेण 'संविशस्व' संयोजयस्व। 'तनुवे' स्वकीयस्य शरीरस्य, 'संवेशनः' परमात्मज्योतिषा संयोजयिता, 'देवानां प्रियः', त्वं 'चारुरेधि' रमणीयो भव। कुत्रेति तदुच्यते, 'परमे' उत्कृष्टे, 'सधस्थे' सहोपवेशनस्थाने॥

अथ तृतीयामाह। [३]"नाके सुपर्णमुपयत् पतन्तः •

हृदा वेनन्तो अभ्यचक्षत त्वा। हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युं(३)। (४)अतिद्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा। अथा पितॄन्त् सुविदत्राꣳ अपीहि यमेन ये संधमादं मद-

शकुनं भुरण्युं"(३) इति। हे अग्ने त्वामृत्विजः 'हृदा' स्वकीयेन मनसा, 'वेनन्तः' कामयमानाः, 'यत्' यदा, 'अभ्यचक्षत' अभितः ख्यापितवन्तः, तदा त्वं तुष्टो भवेति शेषः। कीदृशं त्वां, 'नाके' स्वर्गे, 'उपपतन्तं' समीपे प्रतिगच्छन्तं, अतएव 'सुपर्णं' शोभनपक्षोपेतं, 'हिरण्यपक्षं' सुवर्णमयपक्षोपेतं, 'वरुणस्य दूतं' वरुणेन प्रेर्यमाणं, 'यमस्य', 'योनौ' स्थानविशेषे, 'भुरण्युं' भरणशीलं, भोगसम्पादकमित्यर्थः। 'शकुनं' पक्ष्याकारं॥

अथ चतुर्थीमाह। (४)"अतिद्रव सारमेयौ श्वानौ ० सधमादं मदन्ति,"(४) इति। हे अग्ने 'साधुना पथा' समीचीनेन मार्गेण, 'श्वानौ', उभौ 'अतिद्रव' अतिक्रम्य गच्छ, यमसम्बन्धिनौ यौ श्वानौ प्रेतस्य बाधकौ, तौ परित्यज्य समीचीनेन मार्गेण प्रेतं नयेत्यर्थः। कीदृशौ श्वानौ, 'सारमेयौ' सरमा नाम काचित् प्रसिद्धा शुनी, तस्याः पुत्रौ, 'चतुरक्षौ' उपरिभागे पुनरप्यक्षिद्वयं ययोस्तादृशौ, 'अथ' शोभनमार्गेण गमनान्तरं, 'ये' पितरः, 'यमेन', 'सधमादं' सहर्षं, 'मदन्ति' प्राप्नुवन्ति, तान् 'सुविदत्रान्' सुष्ठु अभिज्ञान्, 'पितॄन्', 'अपीहि' प्राप्नुहि॥

न्ति(४)। (५)यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसा। ताभ्याꣳ राजन् परि देह्येनꣳ स्वस्ति चास्मा अनमीवञ्च धेहि(५) १ ॥

(६)उरुणसावसुतृपावुलुम्बलौ यमस्य दूतौ चरतोऽवशाꣳ अनु। तावस्मभ्यं दृशये सूर्याय पुनर्दत्तावसु-

---

अथ पञ्चमीमाह। (५)"यौ ते श्वानौ यमरक्षितारौ ० अनमीवञ्च धेहि"(५) इति। हे 'यम', 'ते' त्वदीयौ, 'श्वानौ', 'यौ', विद्येते, 'ताभ्यां' श्वभ्यां, हे 'राजन्' यम, 'एनं' प्रेतं, 'परिदेहि' प्रयच्छ। कीदृशौ श्वानौ, 'रक्षितारौ' यमगृहस्य रक्षकौ, 'चतुरक्षौ' अक्षिचतुष्टययुक्तौ, 'पथिरक्षी' मार्गस्य रक्षकौ, 'नृचक्षसा' मनुष्यैः ख्याप्यमानौ, श्रुतिस्मृतिपुराणाभिज्ञाः पुरुषाः तौ प्रख्यापयन्ति। ताभ्यां श्वभ्यां दत्वा 'अस्मै' प्रेताय, 'स्वस्ति च' क्षेममपि, 'अनमीवञ्च' रोगाभावमपि, 'धेहि' सम्पादय ॥

अथ षष्ठीमाह। (६)"उरुणसावसुतृपौ ० वसुमद्येह भद्रं"(६) इति। हे यमसम्बन्धिनौ 'दूतौ', 'अवशान्' अस्वाधीनान् प्राणिनः, 'अनु' लक्ष्य, सर्वत्र 'चरतः'। कीदृशौ, 'उरुणसौ' दीर्घनासिकायुक्तौ, 'असुतृपौ' स्वकीयान् प्राणान् स्वीकृत्य तैः तृप्यन्तौ, 'उलुम्बलौ' प्रभूतबलयुक्तौ, 'तौ' उभौ दूतौ, 'सूर्याय दृशये'

मद्येह भद्रं(६) ।(७)सोम एकेभ्यः पवते घृतमेक उपासते । येभ्यो मधु प्रधावति तांश्चिदेवापि गच्छतात्(७) ।(८)ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः । ये वा सहस्रद-

---

सूर्यस्य दर्शनार्थं, 'अद्य' दिने, 'इह' कर्मणि, 'भद्रं' 'असुं' समीचीनं प्राणं, 'पुनः', अपि 'अस्मभ्यं', 'दत्ता' प्रयच्छतां ॥

अथ सप्तमीमाह । (७)"सोम एकेभ्यः पवते ० तांश्चिदेवापि गच्छतात्"(७) इति । 'एकेभ्यः' केषाञ्चित् यजमानानामर्थे, 'सोमः', 'पवते' वस्त्रेण शोधितः पूतो भवति । 'एके' अन्ये केचिद्यजमानाः, 'घृतमुपासते' घृतद्रव्योपलक्षितं हविर्यज्ञमनुतिष्ठन्ति । 'येभ्यः' येषामर्थे, 'मधु प्रधावति' असौ वा आदित्यो देवमध्वित्यादिका मधुविद्या प्रवर्त्तते, यदथर्वाङ्गिरसो मधोः कुल्या इत्यादि मधुप्राप्तिफलको ब्राह्मणश्च* येषामर्थे प्रवर्त्तते, 'तांश्चित्' सर्वानपि, अयं प्रेतः 'अपिगच्छतादेव' सर्वथा प्राप्नोत्वेव, सोमयाजिनां दर्शपूर्णमासादियाजिनां ब्रह्मयज्ञमधुविद्याद्यनुष्ठातॄणां यः पुण्यलोकः सोऽयमस्य भवत्वित्यर्थः ॥

अथाष्टमीमाह । (८)"ये युध्यन्ते प्रधनेषु ० तांश्चिदेवापि गच्छतात्"(८) इति । 'ये' क्षत्रियाः, 'प्रधनेषु' प्रकृष्टधननिमित्तेषु सङ्ग्रामेषु, 'युध्यन्ते' युद्धं कुर्वन्ति । तत्रापि 'ये' 'शूरासः' शूराः भटाः, 'तनु-

---

* ब्रह्मयज्ञश्च इति E चिह्नितपुस्तकपाठः ।

क्षिणास्ताꣳश्चिदेवापि गच्छतात्(८)। (९)तपसा ये अनाधृष्यास्तपसा ये सुवर्गताः। तपो ये चक्रिरे महत् ताꣳश्चिदेवापि गच्छतात्(९)। (१०)अश्मन्वती रेवतीः सꣳरभध्वमुत्तिष्ठत प्रतरता सखायः। अत्रा जहाम ये असन्नशेवाः शिवान् वयमभि वाजानुत्तरेम(१०)।

---

त्यजः' युद्धाभिमुख्येन शरीरन्त्यजन्ति। अथवा 'ये' पुरुषाः, 'सहस्रदक्षिणाः' विश्वजिदादिक्रतुषु सहस्रदक्षिणायुक्ताः। तांश्चिदित्यादि पूर्ववत्। युद्धाभिमुख्येन मृतस्योत्तमलोकः स्मर्यते, द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड् योगयुक्तश्च रणे चाभिमुखे हत इति। धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते इति च॥

अथ नवमीमाह। (९)"तपसा ये अनाधृष्याः • ताꣳश्चिदेवापि गच्छतात्"(९) इति। 'ये' पुरुषाः, अस्मिन् लोके 'तपसा', युक्ताः सन्तः 'अनाधृष्याः' केनाप्यतिरस्कार्याः* वर्त्तन्ते। 'ये' च अन्ये, स्वानुष्ठितेन 'तपसा', स्वर्गं 'गताः'। 'ये' च अन्ये, 'महत् तपः चक्रिरे'। अनेन तपस्वित्वमात्रमुक्तं, अनाधृष्या इत्यनेन अणिमादिसिद्धिपर्यन्तं तपो विवक्षितं। ताꣳश्चिदित्यादि पूर्ववत्॥

कल्पः। अघनेन दहनदेशमुदीचीस्तिस्रः कर्षूः खात्वा अश्मभिः सिकताभिश्च प्रकीर्य अयुग्मैरुदकुम्भैरपः परिस्राव्य तासु स्नातवः सङ्क्रामन्ते, अश्मन्वती रेवतीरिति। पाठस्तु। (१०)"अश्मन्वती

---

* देवैरप्यतिरस्कार्या इति E चिह्नितपुस्तकपाठः।

(११)यद्वै देवस्य सवितुः पवित्रꣳ सहस्रधारं विततमन्तरिक्षे। येनापुनादिन्द्रमनार्तमार्त्यै तेनाहं माꣳ स-

---

रेवतीः सꣳरभध्वं॰वाजानुत्तरेम"(१०) इति। कर्षूः, कुल्याः, तत्रत्यासु अप्सु अवगाहनाय ज्ञातयः परस्परं सम्बोध्यन्ते। हे 'सखायः', 'अश्मन्वतीः' पाषाणयुक्ताः,* 'रेवतीः' धनहेतुभूताः आपः 'संरभध्वं' प्रविशत,† 'उत्तिष्ठत' उत्साहवन्तः सन्तः प्रत्युद्गच्छत। अनेन क्रमेण 'प्रतरत' कुल्यात्रयं प्रकर्षेण तरत। 'अत्र' अस्मिन् दहनदेशे, 'अशेवाः' सेवितुमशक्याः दुःखविशेषाः, 'ये' केचित्, 'असन्' पूर्वमासन्, तान् सर्वान् 'जहाम' परित्यजाम। 'शिवान्' सुखहेतून्, 'वाजान्' गतिविशेषान् अन्नविशेषान् वा, 'अभिलक्ष्य 'वयं', 'उत्तरेम' उत्तीर्णा भवाम॥

कल्पः। जघनेन कर्षूः पर्णशाखे निहत्य अबलेन शुल्बेन बध्वा विनिःसर्पन्ति, यद्वै देवस्य सवितुः पवित्रं सहस्रधारं विततमन्तरिक्षे। ये नापुनादिन्द्रमनार्त्तमार्त्त्यै तेनाहं माꣳ सर्वतनुं पुनामि इति। (११मन्त्रः।) 'सवितुः' प्रेरकस्य सूर्यस्य, 'देवस्य', सम्बन्धि 'पवित्रं' शुद्धिकारणं, 'यद्वै' यदेव शुल्वं, 'सहस्रधारं' बहुसन्धिकं, 'अन्तरिक्षे', 'विततं' प्रसृतं, 'येन' सूर्यरूपेण, शुल्वेन, पुरा 'आर्त्यै' आर्त्तेः सकाशात्, 'इन्द्रं', 'अनार्त्तं अपनात्' आर्त्ता यथा

---

* पूषायुक्ता इति F, K, चिह्नितपुस्तकद्वयपाठः।
† निविशतेति F, K, चिह्नितपुस्तकद्वयपाठः।

वंतनुं पुनामि(११)। (१२)या राष्ट्रात् पन्नादपयन्ति शाखा अभिमृता नृपतिमिच्छमानाः। धातुस्ताः सर्वाः पवनेन पूताः प्रजयाऽस्मान् रय्या वर्चसा सꣳसृजाथ(१२)। (१३)उद्वयन्तमसस्परि पश्यन्तो ज्योतिरुत्तरं। देवं देवत्रा

---

न भवति तथा शोधितवान्। 'तेन' शुल्बेन, 'अहं', प्रेतस्य ज्ञातिं 'मां' मद्रूपां, 'सर्वतनुं' कृत्स्नशरीरं, 'पुनामि' शोधयामि॥

कल्पः। जघन्यो व्युदस्यति, या राष्ट्रात् पन्नादपयन्ति शाखा अभिमृता नृपतिमिच्छमानाः। धातुस्ताः सर्वाः पवनेन पूताः प्रजयाऽस्मान् रय्या वर्चसा सꣳसृजाथेति। (१२ मन्त्रः।)शुल्बस्याधस्तात् ये ज्ञातयो निर्गच्छन्ति तेषां मध्ये पश्चात् निर्गच्छन् दहनकर्त्ता पुरुषः शाखाद्वयमनेन मन्त्रेण व्युदस्येत्। 'अभिमृताः' अनुक्रमेण पूर्वं मृताः पुरुषाः, 'नृपतिमिच्छमानाः' मनुष्याणां पालकं स्वामिनमिच्छन्तः, 'पन्नात्' प्राप्तात्, 'राष्ट्रात्', 'याः' 'शाखाः', 'अपयन्ति' अपसारयन्ति, 'ताः' सर्वाः शाखाः, 'धातुः', सम्बन्धिना 'पवनेन' शुद्धिहेतुना, 'पूताः' शोधिताः। तादृश्यः हे शाखाः, 'अस्मान्', प्रजादिभिः संयोजयत॥

कल्पः। उद्वयन्तमसस्परीत्यादित्यमुपस्थायेति। पाठस्तु। (१३)"उद्वयन्तमसस्परि ० ज्योतिरुत्तमं"(१३) इति। 'वयं', 'तमसः उत्तरं ज्योतिः' तमसो विनाशकत्वेन उत्कृष्टं सूर्यसम्बद्धं ज्योतिः,

सूर्यमगन्म ज्योतिरुत्तमम्(१३)। (१४)धाता पुनातु सविता पुनातु। अग्नेस्तेजसा सूर्यस्य वर्चसा(१४) ॥ २ ॥

धेहि, उत्तरेम, अष्टौ च ॥ ३ ॥

---

'उत्परिपश्यन्तः' उत्कर्षेण सर्वतः अवलोकयन्तः, 'देवत्रा' देवेषु मध्ये, 'सूर्यं', देवं, 'उत्तमं', 'ज्योतिरूपं, 'अगन्म' प्राप्ताः स्म ॥

कल्पः। अनवेक्षमाणाः अपोऽवगाहन्ते, धाता पुनातु सविता पुनात्विति। अग्नेस्तेजसा सूर्यस्य वर्चसेति मन्त्रशेषः।(१४ मन्त्रः।) 'धाता' जगतः स्रष्टा प्रजापतिः, अग्निसम्बन्धेन 'तेजसा', 'पुनातु' शोधयतु। 'सविता' प्रेरको देवः, सूर्यसम्बन्धिना 'तेजसा', 'पुनातु' ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

अथ चतुर्थोऽनुवाकः ।

(१)यन्ते अग्निममन्थाम वृषभायेव पक्तवे । इमन्तꣳ शमयामसि क्षीरेण चोदकेन च(१) । (२)यं त्वमग्ने समदहस्त्वमु निर्वापया पुनः । क्याम्बूरत्र जायतां पाकदूर्वा व्यल्कशा(२) । (३)शीतिके शीतिकावति ह्लादुके ह्लादु-

---

कल्पः । अपरेद्युस्तृतीयस्यां पञ्चम्यां सप्तम्यां वा अस्थीनि सञ्चिन्वन्ति, क्षीरोत्सिक्तेन उदकेन उदुम्बरशाखया प्रक्षालयन् शरीराणि अवोक्षति, यन्ते अग्निममन्थामेति पञ्चभिरिति । तत्र प्रथमामाह । (१)"यन्ते अग्निममन्थाम ० क्षीरेण चोदकेन च"(१) इति । हे प्रेतशरीर 'ते' तव, 'पक्तवे' पाकार्थं, 'वृषभायेव' यथा पशवे, तथा यं 'अग्निं अमन्थाम' । पशुष्वन्येषु हि पशोः पाकार्थमग्निर्मथ्यते, निर्मथ्यं वा कुर्यादिति श्रुतेः । 'तमिमं' अग्निं, अनेन 'क्षीरेण चउदकेन च', 'शमयामसि' शान्तं कुर्मः ॥

अथ द्वितीयामाह । (२)"यं त्वमग्ने समदहः ० पाकदूर्वा व्यल्कशा"(२) इति । हे 'अग्ने', 'त्वं', 'यं' प्रेतदेहं, 'समदहः' सम्यग्दग्धवानसि । 'त्वमु' तादृशस्त्वमेव, 'पुनर्निर्वापय' इतः स्थानात् पुनरपि निःसारय । 'अत्र' देशे, 'क्याम्बूः' कियताप्यम्बुना युक्ता काचिदोषधिः, 'पाकदूर्वा' अल्पया दूर्वया युक्ता, 'व्यल्कशा' विविधशाखायुक्ता, 'जायतां' उत्पद्यतां ॥

अथ तृतीयामाह । (३)"शीतिके शीतिकावति ० ह्लादिꣳ

कावति । मण्डूक्यासु सङ्गमयेमᳲ स्वग्निᳲ शमय(३) । (४)
शन्ते धन्वन्या आपः शमु ते सन्त्वनूक्याः । शन्ते समुद्रि-
या आपः शमु ते सन्तु वर्ष्याः(४) । (५)शन्ते स्रवन्तीस्तनु-
वे शमु ते सन्तु कूप्याः । शन्ते नीहारो वर्षतु शमु पृ-
ष्ठाऽवशीयतां(५) ॥ १ ॥

---

शमय"(३) इति । शीतेन जलेन युक्ता भूमिः, शीतिका, ह्लादकारिणा चीरेण युक्ता भूमिः, ह्लादुका । हे 'शीतिके' भूमे, 'शीतिकावति' शीतिकाभूमियुक्ते स्थाने, 'मण्डूक्यासु' मण्डूकस्रवनयोग्यासु अप्सु, 'सङ्गमय' प्रापय । हे 'ह्लादुके', 'ह्लादुकावति' ह्लादुकायुक्ते स्थानविशेषे, 'मण्डूक्यासु' मण्डूकस्रवनयोग्यासु अप्सु, 'सङ्गमय' 'इमं' प्रेतदेहं, प्रापय, 'अग्निं', च 'सुष्ठु' 'शमय' ॥

अथ चतुर्थीमाह । (४)"शन्ते धन्वन्या आपः ० सन्तु वर्ष्याः"(४) इति । धन्वनि मरुदेशे भवाः 'धन्वन्याः', तादृश्यः 'आपः', हे प्रेतदेह 'ते' तव, 'शं' 'सन्तु' सुखहेतवो भवन्तु । अनूपदेशे भवाः 'अनूक्याः', आपः, 'शं सन्तु' सुखहेतव एव भवन्तु । तथा समुद्रे भवाः 'समुद्रियाः', वर्षे भवाः 'वर्ष्याः', ताः सर्वा अपि 'ते', सुखहेतवो भवन्तु ।

अथ पञ्चमीमाह । (५)"शन्ते स्रवन्तीस्तनुवे ० शमु पृष्ठाऽवशीयतां"(५) इति । 'स्रवन्तीः' नदीगता आपः हे प्रेत 'ते', 'तनुवे',

(६)अवसृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्व-धाभिः। आयुर्वसान उपयातु शेषꣳ सङ्गच्छतां तनुवा जातवेदः(६)। (७)सङ्गच्छस्व पितृभिः सꣳ स्वधाभिः स-

---

'शं' सुखहेतवः भवन्तु। कूपे भवाः 'कूप्याः', तास्च 'ते', सुखहेतवः भवन्तु। 'नीहारः' हिमरूपः, 'ते', सुखार्थं 'वर्षतु' वृष्टिवत् स्रवतु। 'पृष्वा' जलविन्दुः, 'शमु' सुखार्थमेव, 'अवशीयतां' अधःपततु।

कल्पः। अतएवाङ्गारान् दक्षिणान् निर्वर्त्य तिस्रः स्रुवाहुतीर्जुहोति, अवसृजेति, प्रतिमन्त्रमिति। तत्र प्रथमामाह। (६)"अवसृज पुनरग्ने० तनुवा जातवेदः"(६) इति। हे 'अग्ने', 'यः' प्रेतः पुमान्, 'आहुतः' चितौ मन्त्रेण समर्पितः सन्, 'स्वधाभिः' स्वधाकारसमर्पितैरुदकादिभिः* सह, 'चरति'। तं प्रेतं 'पितृभ्यः' पितृप्राप्त्यर्थं, 'पुनरवसृज' भूयः प्रेरय। अयं प्रेतः, 'आयुर्वसानः' आच्छादयन् आयुषा युक्त इत्यर्थः। 'शेषं' भोगं, 'उपयातु' प्राप्नोतु। हे 'जातवेदः', सोयं प्रेतः 'तनुवा सङ्गच्छतां' शरीरेण सङ्गतो भवतु॥

अथ द्वितीयामाह। (७)"सङ्गच्छस्व पितृभिः ० सविता दधातु"(७) इति। हे प्रेत त्वं 'पितृभिः', 'सङ्गच्छ' सङ्गतो भव। 'स्वधाभिः' स्वधाकारसमर्पितैर्द्रव्यैः, सङ्गतो भव। 'परमे व्योमन्,

---

* उदकाञ्जलिभिरिति E चिह्नितपुस्तकपाठः।

मिष्टापूर्त्तेन परमे व्योमन्। यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवः सविता दधातु[७]। [८]यत्ते कृष्णः शकुन आतुतोद पिपीलः सर्प उतवा श्वापदः। अग्निष्टद्विश्वा-

---

उत्कृष्टे स्वर्गे, 'इष्टापूर्त्तेन' श्रौतस्मार्त्तकर्मफलेन, सङ्गतो भव 'भूम्यै' भूम्यां, 'यत्र' यस्मिन् देशविशेषे, 'वृणसे' जन्म प्रार्थयसे, 'तत्र', 'गच्छ'। 'सविता देवः', त्वां 'तत्र', 'दधातु' स्थापयतु॥

अथ तृतीयामाह। [८]"यत्ते कृष्णः शकुनः ० ब्राह्मण-माविवेश"[८] इति। हे प्रेत तव देहे 'कृष्णः', 'शकुनः' पक्षिविशेषः, 'यत्' अङ्गं, 'आतुतोद' ईषद्व्यथितमकरोत्। 'पिपीलः' पिपीलिका वा, 'सर्पः', वा 'यत्' अङ्गं, 'आतुतोद'। 'उतवा' अथवा, 'श्वापदः'* अन्योपि जीवः, व्यापत्तिहेतुः, 'आतुतोद'। अयं 'अग्निः', देवः 'तत्' अङ्गं, 'विश्वात्' सर्वस्मादुपद्रवात्, 'अनृणं' ऋणरहितं, उपद्रवरहितं, 'कृणोतु' करोतु। 'यश्च सोमः', 'ब्राह्मणे' एतदीये ब्राह्मणशरीरे, 'आविवेश' यागकाले प्रविष्टवान्, सोपि 'अनृणं', करोतु॥

कल्पः। अथैनत् आदग्धं उदकुम्भैः स्वेवोचितमवोक्ष्य या अस्य स्त्रीणां मुख्या सा सव्ये पाणौ नीललोहिताभ्यां सूत्राभ्यां त्रियध्य

---

* श्ववत्पादा यस्य व्याघ्रादेः सः, अपि वा तुतोद इति E चिह्नितपुस्तकपाठः।

इन्तृणं कृणोतु सोमश्च यो ब्राह्मणमाविवेशं(८)। (९)उत्तिष्ठाऽतस्तनुवꣳ सम्भरस्व मेह गात्रमवहा मा शरीरं। यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवः सविता दधातु। इदन्त एकम्पर ऊंत एकं तृतीयेन ज्योतिषा सं-

---

अग्न्याधानमन्वाख्याय अपामार्गेण सकृदुपहृत्य दन्तः शिरसो वा अस्थि गृह्णाति, उत्तिष्ठाऽतस्तनुवꣳ सम्भरस्व मेह गात्रमवहा मा शरीरं। यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवः सविता दधात्विति, इदन्त एकमिति द्वितीयं, पर ऊत एकमिति तृतीयं, तृतीयेन ज्योतिषा संविशस्वेति चतुर्थं, संवेशनस्तनुवे चारुरेधीति पञ्चमं, प्रियो देवानां परमे सधस्थे इति षष्ठं इति। (९ मन्त्रः।) हे प्रेत 'अतः' अस्मात् दहनदेशात्, 'उत्तिष्ठ'। 'तनुवं' शरीरं, 'सम्भरस्व' सम्पादय, 'इह' दहनदेशे, 'गात्रं' अङ्गं, एकमपि 'मा अवहाः' मा परित्यज। 'शरीरं', अपि 'मा अवहाः', मा परित्यज। यत्रेत्यादि पूर्ववत्। हे प्रेत 'ते' तव सम्बन्धि, 'इदमेकं' अस्थि, 'उत' अपिच, 'परः' परस्तात्, 'ते' तव सम्बन्धि, 'एकं' अस्थि, हे प्रेत एतदस्थिरूपेण पूर्वद्वयापेक्षया 'तृतीयेन', 'ज्योतिषा' प्रकाशेन, 'संविशस्व' संयुक्तो भव। 'तनुवे' शरीरसिद्ध्यर्थं, 'संवेशनः' सर्वेषामस्थ्नां योजयिता, 'चारुरेधि' रमणीयो भव। 'परमे सधस्थे' उत्कृष्टे सहोपवेशनस्थाने, 'देवानां', 'प्रियः', भव॥

विश्वस्व। संवेशनस्तनुवै चारुरेधि प्रियो देवानां परमे सधस्थे(९)। (१०)उत्तिष्ठ प्रेहि प्रद्रवौकः कृणुष्व परमे व्योमन्। यमेन त्वं यम्या संविदानोत्तमन्नाकमधिरोहे-मं(१०)। (११)अश्मन्वती रेवतीर्यद्दे देवस्य सवितुः पवित्रं

कल्पः। अथैतान्यस्थीनि अद्भिः प्रक्षाल्य कुम्भे वाससे वा कृत्वा आदाय उपोत्तिष्ठति, उत्तिष्ठ प्रेहि प्रद्रवौकः कृणुष्व परमे व्योमन्। यमेन त्वं यम्या संविदानोत्तमं नाकमधिरोहेममिति। (१०मन्त्रः।) हे प्रेत अस्मात् स्थानात् 'उत्तिष्ठ'। उत्थाय च 'प्रेहि' प्रकर्षेण गच्छ। गमनकालेऽपि 'प्रद्रव' शीघ्रं गच्छ। गत्वा च 'परमे व्योमन्' उत्कृष्टे स्वर्गे, 'ओकः' 'कृणुष्व' स्थानं कुरु। कृत्वा च 'त्वं', 'यमेन' 'यम्या' च स्त्रीपुरुषाभ्यामुभाभ्यां सह, 'संविदाना' संविदानः, ऐकमत्यं प्राप्तः सन्, 'इदमुत्तमं नाकं' स्वर्गभोगं, 'अधिरोह' प्राप्नुहि॥

कल्पः। शम्यां पलाशे वा कुम्भं निधाय जघनेन कुम्भं कर्ष्वादिसमानमाम्नानात् मृदा स्नातीत्येके इति। तत्र पूर्वोक्तानां मन्त्राणां प्रतीकानि दर्शयति, अश्मन्वती रेवतीर्यद्दे देवस्य सवितुः पवित्रं या राष्ट्रादुद्यन्तमपस्परि धाता पुनात्विति। (११मन्त्रः।)॥

सोमयाजिनस्तु पुनर्दहनं कर्त्तव्यं, पुनर्दहनान्तं सोमयाजिन इति सूत्रेऽभिहितत्वात्। तत्प्रकारस्तु कल्पे दर्शितः, अथ यदि पुनर्धक्ष्यन्तः स्युः, अतएवागारान् दक्षिणाम् निवर्त्य तिस्रो रात्रीरिध्मा दहन-

या राष्ट्रात्पन्नादुद्वयं तमसस्परि धाता पुनातु(११)। (१२)अस्मात् त्वमधिजातोऽस्ययं त्वदधिजायतां*। अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा(१२) ॥ २ ॥

अवशीयतां॰, सधस्थे, पञ्च च ॥ अनु॰ ४ ॥

---

वदन्नकाशं जोषयित्वा अग्निमुपसमाधाय सम्परिस्तीर्य अपरेणाग्निं दर्भान् संस्तीर्य तेषु कृष्णाजिने शम्यायां दृषदुपलाभ्यामेवाङ्गमं शरीराणि सुसम्पिष्टानि पेषयित्वा आज्यकुम्भे समुदायुत्य* अग्निहोत्रहवण्या जुहोति, अस्मात् त्वमधिजातोऽसीति। पाठस्तु। (१२) "अस्मात् त्वमधिजातोऽस्ययं • लोकाय स्वाहा"(१२) इति। द्वितीयानुवाके व्याख्यातो मन्त्रः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके षष्ठप्रपाठके चतुर्थोऽनुवाकः॥ ४ ॥

---

* "अयं त्वदधिजायतां" इत्यस्य स्थाने द्वितीयानुवाके "त्वदयं जायतां पुनः" इति पाठः।

* समवधाय इति E चिह्नितपुस्तकपाठः।

अथ पञ्चमोऽनुवाकः ।

(१)आयातु देवः सुमनाभिरूतिभिर्यमो ह वेह प्रयताभिरक्ता । आसीदताꣳ सुप्रयते ह बर्हिष्यूर्जाय जात्यै मम शत्रुहत्यै(१) । (२)यमे इव यतमाने यदेतं प्र वां

---

अथ पञ्चमोऽनुवाकः ।

पञ्चमेऽनुवाके यमयज्ञोऽभिधीयते, स च कल्पसूत्रे एवमुपक्रान्तः, यमयज्ञं स्वयं प्रोक्तं प्रवक्ष्ये बलिमुत्तमं । मासि मासि तु कर्त्तव्योऽन्तकाय तु बलिस्तथेति । तत्र मन्त्रविनियोग एवमभिहितः, "आयातु देवः सुमनाभिरूतिभिर्यमो ह वेह प्रयताभिरक्ता । आसीदताꣳ सुप्रयते ह बर्हिष्यूर्जाय जात्यै मम शत्रुहत्योमिति, यममावाहयति । तत्र आवाहनार्थः प्रणवः अध्याहृतः । (१ मन्त्रः ।) मन्त्रे 'ह'शब्दः प्रसिद्ध्यर्थः, 'वा'शब्दः समुच्चये । प्रसिद्धः 'यमः', 'देवः', 'सुमनाभिः' सौमनस्ययुक्तैः, 'ऊतिभिः' अस्मदीयरक्षणैः, सहितः, 'इह' यमयज्ञाख्ये कर्मणि, 'आयातु' । तथा 'प्रयताभिः' नियताभिः, 'ऊतिभिः', 'अक्ता' सम्बद्धा, यमी च 'आयातु' । 'मम' यजमानस्य, 'ऊर्जाय' अन्नसिद्धये, 'जात्यै' उत्तमजातिसिद्धये, 'शत्रुहत्यै' शत्रुबधाय च, 'सुप्रयते' सुष्ठुनियते, 'बर्हिषि', 'ह' प्रसिद्धौ एतौ दम्पती, 'आसीदतां' उपविशतां ॥

कल्पः । यमे इव यतमाने यदेतमिति च इति । आवाहयतीत्यनुवर्त्तते । पाठस्तु । (२)"यमे इव यतमाने ० भवतमिन्दवे

भरन्मानुषा देवयन्तः। आसीदतꣳ स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नः(२)। (३)यमाय सोमꣳ सुनुत यमाय जुहुता हविः। यमꣳ ह यज्ञो गच्छत्वग्निदूतो

---

नः"(२) इति। 'इव'शब्दः एवकारार्थः। 'यत्' यदा, 'यतमाने' प्रयत्नं कुर्वाणे, 'यमे इव' यमो यमौ चेत्येते एव, युवां, 'एतं' अस्मिन् कर्मण्यागच्छतं,। तदानीं 'देवयन्तः' देवानात्मन इच्छन्तः, 'मानुषाः' यजमानाः, 'वां' युवां, 'प्रभरन्' प्रकर्षेण भरन्तु, पोषयन्तु। 'स्वमु लोकं' स्वोचितमेव स्थानं, 'विदाने' जानन्तौ, युवां, 'आसीदतं' उपविशतं, 'नः' अस्माकं, 'इन्दवे' आह्लादाय, 'स्वासस्थे' सुखासनस्थाने, 'भवतं' तिष्ठतं॥

कल्पः। मध्यमस्यामुत्तरवेद्यां यमाय हविर्निवेदयन्ते, यमाय सोमꣳ सुनुत यमाय जुहुता हविः। यमꣳ ह यज्ञो गच्छत्वग्निदूतो अरङ्कृत इति। (३ मन्त्रः।) हे ऋत्विजः यमदेवार्थं 'सोमं सुनुत' लतात्मकं सोममभिषुणुत, तथा यमार्थं 'हविः', 'जुहुत'। अग्निर्दूतो यस्मिन् यज्ञे सोयं 'अग्निदूतः'। अग्नेर्दूतत्वमन्यत्राम्नातं, अग्निर्देवानां दूत आसीदिति। 'अरङ्कृतः' बहुभिर्द्रव्यैरलङ्काररूपैर्युक्तः, तादृशः 'यज्ञः', 'यमं ह' यममेव, 'गच्छतु'। ओङ्कारस्त्वध्याहृतः॥

अरङ्कृतः[३]। [४]यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत। स नो देवेष्वायमद्दीर्घमायुः प्रजीवसे[४]। [५]यमाय मधुमत्तमꣳ राज्ञे हव्यं जुहोतन। इदन्नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः[५] ॥ १ ॥

[६]योऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी। यमं

---

कल्पः। प्रतीच्यामुत्तरवेद्यां, यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत। स नो देवेष्वायमद्दीर्घमायुः प्रजीवसे, ओमिति। (४ मन्त्रः।) हे ऋत्विजः यमार्थं घृतयुक्तं 'हविर्जुहोत'। यूयं 'च', प्रकर्षेण 'तिष्ठत'। 'देवेषु', मध्ये यः यमो देवः 'सः', 'प्रजीवसे' प्रकृष्टजीवनार्थं, 'नः' अस्माकं, 'दीर्घमायुः', 'आयमत्' प्रयच्छतु॥

कल्पः। प्राच्यामुत्तरवेद्यां, यमाय मधुमत्तमꣳ राज्ञे हव्यं जुहोतन। इदन्नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः, ओमिति। (५ मन्त्रः।) हे ऋत्विजः 'यमाय राज्ञे', 'मधुमत्तमं' अतिशयेन मधुरं, 'हव्यं', 'जुहोतन' जुहुत। 'पूर्वजेभ्यः' सृष्ट्यादावुत्पन्नेभ्यः, अतएव 'पूर्वेभ्यः' अस्मत्तः पूर्वभाविभ्यः, 'पथिकृद्भ्यः' शोभनमार्गकारिभ्यः, 'ऋषिभ्यः', 'इदं' प्रत्यक्षं यथा भवति तथा, 'नमः', अस्तु॥

कल्पः। योऽस्य कौष्ठ्येति तिसृभिर्यमगाथाभिस्तिः प्रदक्षिणं परिगायन्ति, इति। तत्र प्रथमामाह। [६]"योऽस्य कौष्ठ्य जगतः० राजाऽनपरोध्यः"[६] इति। कोष्ठं सम्पूर्णं धनमर्हतीति इति 'कौष्ठ्यः', तादृशः 'यः' यमः, 'एक इत्' एक एव,'पार्थिवस्य' पृथिव्यां भवस्य,

भङ्ग्यश्रवो गाय यो राजाऽनपरोध्यः(६)। (७)यमं गाय भङ्ग्यश्रवो यो राजाऽनपरोध्यः। येनाऽऽपो नद्यो धन्वानि येन द्यौः पृथिवी दृढा(७)। (८)हिरण्यकक्ष्यान्त्सुधुरान् हिरण्याक्षानयःशफान्। अश्वाननश्यतो दानं

'अस्य' सर्वस्य, 'जगतः', 'वशी' वशेन युक्तः, सर्वं जगत् तदधीनमित्यर्थः। 'यः' च यमः, 'राजा','अनपरोध्यः' केनाप्यपरोद्धुमशक्यः, तं 'यमं', प्रति 'भङ्ग्यश्रवः' एतन्नामकं गीतं, हे पुरुष 'गाय', भङ्गीरितिसङ्गीतशास्त्रोक्ता भङ्गीमर्हतीति भङ्ग्यं, श्रवणीयं श्रवः, भङ्ग्यञ्च तच्छ्रवश्चेति 'भङ्ग्यश्रवः', शास्त्रीयलक्षणोपेतत्वाच्छ्रोत्रसुखकरोयमित्यर्थः॥

अथ द्वितीयामाह। (७)"यमं गाय भङ्ग्यश्रवः ॰ येन द्यौः पृथिवी दृढा"(७) इति। 'यः' यमः, 'राजा', केनाप्यपरोद्धुमशक्यः, 'येन' यमेन, 'आपः', धृता इति शेषः। तथा 'नद्यः', येन, धृताः, 'धन्वानि' मरुस्थलानि, येन, धृतानि, 'द्यौः', 'येन', धृता, 'दृढा', 'पृथिवी', च येन, धृता। तादृशं 'यमं', प्रति, पूर्वोक्तं 'भङ्ग्यश्रवः', 'गाय'॥

अथ तृतीयामाह। (८)"हिरण्यकक्ष्यान् ॰ यमोराजाऽभितिष्ठति"(८) इति। अनश्यां शकटानां रथानां शतं यस्य यमस्य सोयं 'अनश्यतः', तादृशः 'यमः', 'राजा', 'दानं' फलप्रदानं उद्दिश्य, अत्र समागच्छतु। 'अश्वान्','अभितिष्ठति' रथेषु योजयति। कीदृशानश्वान्, 'हिरण्यकक्ष्यान्' सौवर्णाभरणैः युक्ताः कक्ष्याः

यमो राजाऽभितिष्ठति(८)* । (९)यमो दाधार पृथिवीं यमो विश्वमिदं जगत् । यमाय सर्वमित्तस्थे यत्प्राणद्वायुरक्षितं(९) । (१०)यथा पञ्च यथा षड् यथा पञ्चदशर्षयः । यमं यो विद्यात्स ब्रूयाद्यथैक ऋषिर्विजानते(१०) ॥ २ ॥

प्रदेशाः येषां ते 'हिरण्यकक्ष्याः', तान्, शोभनं धुरं रथवहनस्थानं येषां ते 'सुधुराः', तान्, शृङ्गारार्थं हिरण्यनिर्मिते अक्षिणी येषां ते 'हिरण्याक्षाः', तान्, पाषाणयुक्तमार्गेषु रक्षार्थं निर्मितैः अयोमयैः वलयैः युक्ताः शफाः येषां ते 'अयःशफाः', तान्, 'अनशतः', इति पाठे नाशरहितान्, अश्वान्, इति व्याख्येयं ॥

कल्पः । यमो दाधारेत्यनुवाकशेषेण हविरुद्धरन्ति, इति । तत्र प्रथमामाह । (९)"यमो दाधार ० प्राणद्वायुरक्षितं"(९) इति । 'पृथिवीं', सर्वां 'यमः', 'दाधार' धृतवान् । तथा 'विश्वं' सर्वं, 'इदं' 'जगत्', 'यमः', धृतवान् । 'यत्प्राणत्' अस्मिन् जगति श्वासयुक्तं यत् अस्ति, यदप्यन्यत् 'वायुना रक्षितं', वस्तु अस्ति, 'सर्वमित्' सर्वमेव, 'यमाय' यमार्थं, 'तस्थे' तस्थौ, अवस्थितं ॥

अथ द्वितीयामाह । (१०)"यथा पञ्च यथा षड् ० ऋषिर्विजानते"(१०) इति । 'पञ्च' भूतानि, 'यथा', वर्त्तन्ते, 'षट्' ऋतवः, 'यथा', वर्त्तन्ते, 'पञ्चदश' तिथयः, 'यथा', वर्त्तन्ते,'ऋषयः'

* अधितिष्ठति E, k, चिह्नितपुस्तकद्वयभाष्यसम्मतः, F, चिह्नितपुस्तकधृतमूलसम्मतश्चायं पाठः ।

(११)त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् । गाय-
त्री त्रिष्टुप् छन्दाꣳसि सर्वा ता यम आहिता(११) । (१२)अ-
हरहर्नयमानो गामश्वं पुरुषं जगत् । वैवस्वतो न तृ-

---

च वसिष्ठादयः, यथा वर्त्तन्ते, तं प्रकारं सर्वं 'सः' पुमान्, 'ब्रूयात्' वक्तुं शक्तः । कः पुमानिति स उच्यते, 'यो यमं', वेद सः पुमान् 'ब्रूयात्,' इत्यन्वयः । यमो हि नियन्तृत्वेन भूतर्त्तुतिथ्यादिकं सर्वं जगत् यथायथं प्रवर्त्तयति । अतो यमस्य माहात्म्यं विद्वान् इदमित्थमिति सर्वं वक्तुं शक्नोति । 'यथा', 'एकः ऋषिः' एक एव सर्वज्ञः परमेश्वरः, 'विजानते' विशेषेण जगत् जानाति, तमपि प्रकारान्तरं यममाहात्म्याभिज्ञ एव वक्तुमुत्सहते ॥

अथ तृतीयामाह । (११)"त्रिकद्रुकेभिः पतति ० यम आहिता"(११) इति । त्रिकद्रुकेभिर्ज्योतिर्गौरायुरिति त्रिकद्रुका इति सूत्रकारेणोक्तत्वात् ते त्रयो यागाः 'त्रिकद्रुकाः', तैर्यागैः 'षट्', 'उर्वीः' भूमीः, 'पतति' प्राप्नोति । ताश्च ऊर्व्यः शाखान्तरमन्त्रे समाम्नाताः, षण्मोर्वीरꣳहसस्पान्तु द्यौश्च, पृथिवी च 'आपश्च, ओषधयश्च, ऊर्क् सूनृता च इति । 'बृहत्' परं ब्रह्म, 'एकमित्' एकमेव । 'गायत्र्यादीनि तु 'छन्दांसि' छन्दोरूपेण व्यवस्थितानि । एवं नानाविधं यज्जगदस्ति 'सर्वा ता' तत् सर्वं जगत्, 'यम आहिता' यमे प्रतिष्ठितं, नियामकत्वादेव जगद्यवस्थाहेतुत्वं यमस्य युक्तमित्यर्थः ॥

अथ चतुर्थीमाह । (१२)"अहरहर्नयमानः ० मानवेर्यमः"(१)

ष्यति पञ्चभिर्मानवैर्यमः(१२)। (१३)वैवस्वते विविच्यन्ते यमे राजनि ते जनाः। ये चेह सत्येनेच्छन्ते य उ चानृतवादिनः(१३)। (१४)ते राजन्निह विविच्यन्तेऽथा यन्ति त्वामुप। देवाꣳश्च ये नमस्यन्ति ब्राह्मणाꣳश्चापचित्यति(१४)।

---

इति। अयं 'वैवस्वतः' सूर्यस्य पुत्रः, 'यमः', 'पञ्चभिर्मानवैः' पञ्चसङ्ख्याकैः मुख्यैः दूतविशेषैः सहितः सन्, 'अहरहः' प्रतिदिनं, गवादीन् 'नयमानः' यमलोके प्रापयन्, 'न तृप्यति' अलमेतावतेत्येवं तृप्तिं न प्राप्नोति, प्राणिनो नेतुं आलस्यरहितः इत्यर्थः॥

अथ पञ्चमीमाह। (१३)"वैवस्वते विविच्यन्ते ० य उ चानृतवादिनः"(१३) इति। 'इह' लोके, 'ये च' पुरुषाः, 'सत्येन', वर्त्तितुं 'इच्छन्ति', 'ये' अपि 'च', अन्ये पुरुषाः, 'अनृतवादिनः', 'ते' द्विविधा अपि, 'जनाः', 'वैवस्वते' सूर्यस्य पुत्रे, 'यमे', 'राजनि', स्थिते सति, तद्भृत्यैः 'विविच्यन्ते'। तत्र सत्यवादिनः स्वर्गन्नयन्ति, अनृतवादिनो नरकन्नयन्ति, इत्येवं तद्विवेकः॥

अथ षष्ठीमाह। (१४)"ते राजन्निह विविच्यन्ते ० ब्राह्मणाꣳश्चापचित्यति"(१४) इति। 'ये' च पुरुषाः, इह लोके 'देवान्', 'नमस्यन्ति' उपासते, येऽपि 'च', अन्ये 'ब्राह्मणान्', 'अपचित्यति' सुवर्णदानान्नदानादिना पूजयन्ति, 'ते' द्विविधा अपि, हे 'राजन्', 'इह' त्वदीये लोके, 'विविच्यन्ते', तत्र उपासका ब्रह्मलोके नी-

(१५)यस्मिन् वृक्षे सुपलाशे देवैः सम्पिबते यमः। अत्रा नो विश्पतिः पिता पुराणा अनुवेनति(१५) ॥ ३ ॥

पथिकृद्भ्यः, विजानते, अनुवेनति ॥ अनु० ५ ॥

---

यन्ते दानादिकर्मनिष्ठास्तु स्वर्गलोके नीयन्ते इति तद्विवेकः। 'अथ' यस्मादेवं तस्मात्, सर्वेऽपि हे यम 'त्वामुपयन्ति' ॥

अथ सप्तमीमाह। (१५)"यस्मिन् वृक्ष ० अनुवेनति"(१५) इति। 'यमः', राजा, 'देवैः', अन्यैः सह, 'सुपलाशे' शोभनपर्णोपेते, 'यस्मिन् वृक्षे' सोमसवननामके, तदश्वत्थः सोमसवन इति श्रुत्यन्तरात्। 'सम्पिबते' सम्भूय सोमपानं करोति। 'अत्र' अस्मिन् वृक्षे, 'विश्पतिः' प्रजानां स्वामी, 'नः' अस्माकं, 'पिता', 'पुराणाः' पुरातनान् देवान्, 'अनुवेनति' अनुगच्छति। त एते अष्टापि मन्त्रा यममाहात्म्यप्रतिपादकाः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

अथ षष्ठोऽनुवाकः।

(१)वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सꣳ शतधारमेतं। तस्मिन्नेष पितरं पितामहं प्रपितामहं बिभरत्पिन्वमाने(१)। (२)द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमञ्च यो-

---

अथ षष्ठोऽनुवाकः।

पूर्वानुवाके पितृमेधगतयमविशेषमन्त्रप्रसङ्गात् बुद्धिस्थो यमयज्ञोऽभिहितः। स च स्वतन्त्रपुरुषार्थो नतु पितृमेधाङ्गभूतः। अथ प्रासङ्गिकम्परिसमाप्य प्रकृतः पितृमेधशेष एवोच्यते। चयनान्तमग्निचित इति सूत्रेऽभिहितत्वात् अग्निचिद्विषयं लोष्टचयनमुच्यते। कल्पः। अग्निमुपसमाधाय जघनेन अग्निं तिस्रः पालाशो मेध्यो निहत्य तासामन्तरेण अस्थिकुम्भं निधाय तदुपरिष्टात् कृद्धं कृष्णामध्युद्यम्य दध्ना मधुमिश्रेण पूरयति, वैश्वानरे हविरिदं जुहोमीति। पाठस्तु। (१)"वैश्वानरे हविरिदं ० बिभरत्पिन्वमाने"(१) इति। 'वैश्वानरे' अग्निसदृशे कुम्भे, 'इदं' वाजिनमिश्रदधिरूपं, 'हविः', 'जुहोमि'। कीदृशं हविः, 'साहस्रं' सहस्रसङ्ख्योपेतं, 'उत्सं' प्रवाहरूपं, 'शतधारं' शतच्छिद्रेषु पतन्तीभिर्धाराभिर्युक्तं, 'एषः' वैश्वानरो देवः, 'पिन्वमाने, वर्धमाने, पूर्यमाणे कुम्भे, 'एतं' अस्मदीयं, 'पितरं', 'पितामहं', 'प्रपितामहं', च 'बिभरत्' बिभर्तु॥

कल्पः। विचरन्तं अभिमन्त्रयते, द्रप्सश्चस्कन्दे, इमं समुद्रमिति द्वाभ्यामिति। तत्र प्रथमामाह। (२)"द्रप्सश्चस्कन्द ० सप्त होत्राः"(२)

निमनु यश्च पूर्वः। तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः[२]। [१]इमꣳ समुद्रꣳ शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये। घृतं दुहानामदितिं जना-

---

इति। 'द्रप्सः' विन्दुः, सः 'पृथिवीमनु चस्कन्द', पृथिव्यां पतित इत्यर्थः। स च द्रप्सो हुतः सन् स्थानत्रयेऽनुसञ्चरति, द्युलोके, अन्तरिक्षलोके, भूलोके च। तदेतदभिप्रेत्य स्मर्यते, अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति। सोऽयमर्थो द्यामित्यादिनाऽभिधीयते। 'द्यामिमञ्च योनिमनु' अन्तरिक्षरूपमिदं स्थानमनुसञ्चरति, 'यश्च पूर्व' योपि पूर्वः* पृथिवीमनुचस्कन्देतिपूर्वोक्तस्थानविशेषः, तमप्यनुसञ्चरति। 'तृतीयं योनिं' द्युलोकरूपमादित्यस्थानं, 'अनु', सञ्चरति। तमिमन्त्रिषु स्थानेषु 'अनुसञ्चरन्तं', 'द्रप्सं', 'जुहोमि' मनसा हुतमिव भावयामि। कुत्र होम इति तदुच्यते, 'अनुसप्तहोत्राः', इति। यस्यान्दिशि द्रप्सः पतितः तद्व्यतिरिक्ता होमयोग्याः, सप्त दिशो याः सन्ति, तास्वनुक्रमेण जुहोमि। यथा अयं द्रप्सः हुतः आदित्यादिस्थानत्रयेषु सञ्चरन् उपकरोति तथा भावयामीत्यर्थः॥

अथ द्वितीयामाह। [२]"इमꣳ समुद्रꣳ॰ परमे व्योमन्"[१] इति। हे 'अग्ने', 'इमं' कुम्भं, 'जनाय' प्रेतपुरुषार्थं, 'मा हिꣳसीः'

---

* योऽपि पय इति E चिह्नितपुस्तकपाठः।

याऽग्ने मा हिंꣳसीः परमे व्योमन्[३] । [४]अपेत वीत वि च सर्पताऽतो येऽत्र स्थ पुराणा ये च नूतनाः । अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै[४] । [५]सवितै-

---

हिंसितं मा कुरु, किन्तु 'परमे व्योमन्' उत्तमे विविधरक्षणे, स्थितं कुरु । कीदृशमिमं, 'समुद्रं' समुद्रवत् प्रभूतं, 'शतधारं' शतसङ्ख्याकधारोपेतं, 'उत्सं' प्रस्रवणयुक्तं, 'भुवनस्य मध्ये', 'व्यच्यमानं' सिच्यमानं, अभिव्यज्यमानं वा, 'घृतं दुहानां' घृतकारणं दधि दुहानं, 'अदितिं' अखण्डनीयं ॥

कल्पः । व्यष्टायां हरिण्या पलाशशाखया शमीशाखया वा श्मशानायतनं सम्मार्ष्टि, अपेत वीतेति । पाठस्तु । [४]"अपेत वीत वि च ० ददात्ववसानमस्मै"[४] इति । यमेन नियुक्ताः पुरुषाः पुरातना नूतनाश्च सर्वस्याम्भूमौ व्याप्य वर्त्तन्ते, तान् सम्बोध्य इदमुच्यते, हे यमदूताः यूयं 'पुराणाः', 'अत्र' अग्निचेत्रे, 'स्थ' पूर्वं स्थिताः । 'ये च नूतनाः', यूयं अत्र स्थ, ते सर्वे यूयं 'अपेत' अस्मात् स्थानात् अपगच्छत, 'वीत' परस्परं वियुज्य गच्छत, 'अतो विसर्पतः' अस्मात् स्थानाद्विदूरं गच्छत, 'अहोभिः' दिवसैः, 'अक्तुभिः' रात्रिभिश्च, 'अद्भिः' जलैश्च, 'व्यक्तं' विशेषेण सम्बद्धं, 'अवसानं' इदं स्थानं, 'अस्मै' यजमानाय, 'यमो ददातु' ॥

कल्पः । सवितैतानि शरीराणि इति सीरं युनक्ति, षड्गवं द्वादशगवं चतुर्विंशतिगवं वेति । पाठस्तु । [५]'सवितैतानि शरीराणि

तानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे। तेभि-र्युज्यन्तामघ्नियाः(५) ॥ १ ॥

(१)शुनं वाहाः शुनन्नाराः शुनं कृषतु लाङ्गलं।

---

तेऽभियुज्यन्तामघ्नियाः"(५) इति। 'सविता' प्रेरकः परमेश्वरः, 'मातुः' मातृस्थानीयायाः पृथिव्याः, 'उपस्थे' उत्सङ्गे, 'एतानि' 'शरीराणि' शरीरावयवस्वरूपाण्यस्थीनि, 'आदधे' स्थापितवान्, 'तेभिः', तैर्निमित्तभूतैः, 'अघ्नियाः' गावः, बलीवर्दाः, 'युज्यन्तां' लाङ्गलेन सम्बध्यन्तां ॥

कल्पः। शुनं वाहा इति द्वाभ्यां प्रसव्यावृत्ताः षट् पराचीः सीताः कृषति। तत्र प्रथमामाह। (१)"शुनं वाहाः शुनन्नाराः शुनमस्मासु धत्तं"(१) इति। लाङ्गलं वहन्ति इति 'वाहाः' बलीवर्दाः, ते 'शुनं' सुखं यथा भवति तथा, वहन्त्विति शेषः। बलीवर्दानां प्रेरका मनुष्याः 'शुनं' सुखं यथा भवति तथा, प्रेरयन्त्विति शेषः। 'लाङ्गलं', च 'शुनं' सुखं यथा भवति तथा, 'कृषतु'। 'वरत्राः' चर्ममय्यो रज्जवोपि, 'शुनं' सुखं यथा भवति तथा, 'बध्यन्तां'। 'अष्ट्रां' आरां, तीक्ष्णाग्रलोहयुक्तं बलीवर्दप्रेरकं दण्डञ्च, 'उदिङ्गय' हे कीनाश, बलीवर्दप्रेरणार्थमुद्यताङ्कुरु, 'शुनासीरा' हे वाय्वादित्यौ, 'शुनं' सुखं, 'अस्मासु', 'धत्तं' सम्पादयतं॥

शुभं वर्चा बध्यन्ताᳬ शुनमष्ट्रामुदिङ्गय शुनासीरा शुनमस्मासु धत्तं(६)। (७)शुनासीराविमां वाचं यद्दिवि चक्रथुः पयः। तेनेमामुपसिञ्चतं(७)। (८)सीते वन्दामहे त्वाऽर्वाची सुभग भव। यथा नः सुभगा ससि यथा नः सुफला ससि(८)। (९)सवितैतानि शरीराणि पृथिव्यै मा-

अथ द्वितीयामाह। (७)"शुनासीराविमां वाचं ० तेनेमामुपसिञ्चतं"(७) इति। शुनः वायुः, सीरः, आदित्यः, हे 'शुनासीरौ' वाय्वादित्यौ, 'इमां' पूर्वोक्तां शुनमस्मासु धत्त मित्येतादृशीं, 'वाचं', श्रुत्वा 'दिवि' अन्तरिक्षे, 'यत्' 'पयः' उदकं, 'चक्रथुः' सम्पादितवन्तौ, 'तेन' उदकेन, 'इमां' भूमिं, 'उपसिञ्चतं' सिक्तां, कुरुतं॥

कल्पः। उद्यम्य लाङ्गलं, सीते वन्दामहे इति सीताः प्रत्यवेक्ष्यते, इति। पाठस्तु। (८)"सीते वन्दामहे त्वार्वाची ० यथा नः सुफला ससि"(८) इति। लाङ्गलपद्धतिः सीता, हे 'सीते', त्वां 'वन्दामहे' नमस्कुर्मः। हे 'सुभगे' सौभाग्ययुक्ते सीते, 'अर्वाची' अधः प्रसृता,* 'भव'। 'नः' अस्मान् प्रति, 'यथा' येन प्रकारेण, 'सुभगा' सौभाग्ययुक्ता, 'ससि' भवसि, 'यथा', च 'सुफला ससि' शोभनफलोपेता भवसि। तथा अर्वाची भवेति पूर्वत्रान्वयः॥

कल्पः। सवितैतानि शरीराणि इति मध्ये कृष्टस्य अस्थिकुम्भं निदधाति, इति। पाठस्तु। (९)"सवितैतानि शरीराणि ० तेभिरदिते

* अधःप्रगता इति E चिह्नितपुस्तकपाठः।

नुरूपस्य आदधे। तेभिरदिते शम्भव[९]। [१०]विमुच्य-ध्वमघ्नियाः देवयाना अतारिष्म तमसस्पारमस्य। ज्योतिरापाम सुवरगन्म[१०]॥ [११]प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते सुवः। इरा विश्वस्मै भुवनाय जायते यत् पर्जन्यः पृथिवीꣳ

---

शम्भव"[९] इति। सवितेत्यादिः पूर्ववत्। 'तेभिः' ऋषिभिः निमित्तभूतैः, हे 'अदिते' भूमे, 'शं' सुखहेतुः, 'भव'॥

कल्पः। विमुच्यध्वमघ्निया देवयाना इति दक्षिणे अंसे बलीवर्दान्विमुच्य, इति। पाठस्तु। [१०]"विमुच्यध्वमघ्नियाः ० ज्योतिरापाम सुवरगन्म"[१०] इति। हे 'अघ्नियाः' बलीवर्दाः, 'विमुच्यध्वं' विमुक्ता भवत। 'देवयानाः' देवान् प्रति गमनवन्तः,* वयं, 'अस्य' मनुष्यजन्मरूपस्य, 'तमसः' अन्धकारस्य, 'पारं' परभागं प्रति, 'अतारिष्म' तारितवन्तः। 'ज्योतिः' स्वर्गमार्गप्रकाशकं सुकृतरूपं साधनं, 'आपाम' प्राप्नुवाम, 'सुवः' स्वर्गं, 'अगन्म' वयं प्राप्तवन्तः॥

कल्पः। उदपात्रेण उदुम्बरशाखया वा उक्षति, प्र वाता वान्ति इति। पाठस्तु। [११]"प्र वाता वान्ति पतयन्ति ० पृथिवीꣳ रेतसाऽवति"[११] इति। 'वाताः' पुरोवायवः, 'प्रवान्ति' प्रकर्षेण गच्छन्ति, तेन वायवः 'विद्युतः', 'पतयन्ति' पतिताः कुर्वन्ति। 'ओषधीः'

---

* प्रतिगच्छन्त इति K चिह्नितपुस्तकपाठः।

रेतसाऽवति[११]।[१२]यथा यमाय हार्म्यमवपन् पञ्च मानवाः। एवं वपामि हार्म्यं यथाऽसाम जीवलोके भूरयः[१२]। [१३]चित स्थ परिचित ऊर्ध्वचितः श्रयध्वं पितरो

---

ओषधयश्च, 'उज्जिहते' उद्गच्छन्ति। 'सुवः' तन्निमित्तं सुखं, 'पिन्वते' वर्धते। 'विश्वस्मै भुवनाय' सर्वप्राण्युपकारार्थं, 'इरा' अन्नं, 'जायते'। 'यत्' यस्मात्कारणात्, 'पर्जन्यः' मेघः, 'पृथिवीं', 'रेतसा' स्वकीयेनोदकेन, 'अवति' रक्षति। तस्मात् पूर्वोक्तमन्नादिकमुपपन्नं॥

कल्पः। पात्र्यां सर्वौषधीः संयुत्य आवपति, यथा यमायेति। पाठस्तु। [१२]"यथा यमाय हार्म्यमवपन् पञ्च॰जीवलोके भूरयः"[१२] इति। 'यथा', यमलोके 'पञ्च मानवाः' पञ्चसङ्ख्याकाः मनुष्यरूपाः मुख्या यमदूताः, 'हार्म्यं' हर्म्यस्य योग्यं गृहोपकरणजातं, 'अवपन्' सम्पादितवन्तः। 'एवं', अहमपि 'हार्म्यं' हर्म्यस्य गृहस्य योग्यं गृहोपकरणभूतमोषधिजातं, 'वपामि' प्रक्षिपामि। 'यथा' येन प्रकारेण, 'जीवलोके' जनसमूहे, 'भूरयः' प्रभूता, वयं 'असाम' अभवाम, तथा कुर्म इति शेषः॥

कल्पः। चित स्थ परिचित इत्यपरिमिताभिः शर्कराभिः परिश्रित्य, इति। पाठस्तु। [१३]"चित स्थ परिचितः ॰ तया देवतया"[१३] इति। हे शर्कराः यूयं 'चितः' सम्पादिता भवथ, 'परिचितः स्थ' परितः स्थापिताः भवथ, 'ऊर्ध्वचितः' सर्वाभ्य इष्टकाभ्य

देवता। प्रजापतिर्वः सादयतु तया देवतया[१३]।
[१४,१५]आप्यायस्व, सन्ते[१४,१५] ॥ २ ॥

अग्निर्याः, अगन्म, सप्त च ॥ अनु० ६ ॥

अथ सप्तमोऽनुवाकः ।

[१]उत्ते तभ्नोमि पृथिवीं त्वत्परीमं लोकं निदधन्मो अहꣳ रिषं। एताꣳ स्थूणां पितरो धारयन्तु तेऽत्रा यमः

---

ऊर्ध्वं सम्पादिताः स्थ, तादृशीनां युष्माकं 'पितरो देवता' पितृदेवत्या यूयं, 'प्रजापतिः', देवः, तादृशीः 'वः' युष्मान्, 'सादयतु' अत्र स्थापयतु । 'तया' प्रजापतिरूपया, 'देवतया', अङ्गिरखध्रुवासीदेति शेषः। अङ्गिरोभिः स्थापिताः यथा ध्रुवास्तथात्रापि ध्रुवाः सत्यस्तिष्ठत ॥

कल्पः। आप्यायस्व समेतु त इति सिकता व्यूहति, उत्तरया त्रिष्टुभा राजन्यस्येति। उभयोः प्रतीके दर्शयति। आप्यायस्व, सन्ते इति। आप्यायस्व समेतु ते, सन्ते पयाꣳसि समुयन्तु वाजा इति मन्त्रद्वयं, (१४,१५ मन्त्रौ।) मा नो हीꣳसीर्जनितेत्यनुवाके व्याख्यातं॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके षष्ठप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ सप्तमोऽनुवाकः।

कल्पः। लोष्टान् प्रतिदिशमन्वीक्षमाण उपदधाति, उत्ते तभ्नोमि इत्येतैः प्रतिमन्त्रमिति। तत्र प्रथममाह। [१]"उत्ते तभ्नोमि

सादनात्ते मिनोतु(१)। (२)उपसर्प मातरं भूमिमेतामु-रुव्यचसं पृथिवीꣳ सुशेवां। ऊर्णम्रदा युवतिर्द-क्षिणावत्येषा त्वा पातु निर्ऋत्या उपस्थे(२)। (३)उच्छ्म-

---

पृथिवीं ० सादनात्ते मिनोतु''(१) इति। हे लोष्ट 'ते' त्वदर्थं, 'पृथिवीं', 'उत्तभ्नोमि' उत्कर्षेण स्तब्धां करोमि। हे पृथिवि 'त्वत्परि' तवोपरि, 'इमं' 'लोकं' लोक्यते दृश्यते इति लोकः लोष्टः, तं, 'निदधन्' स्थापयन्, 'अहं','मो रिषं' तव हिंसां मा करोमि, 'एतां' लोष्टरूपां, 'स्थूणां' स्तम्भं, 'ते' तव, भारो यथा न भवति तथा 'पितरो धारयन्तु'। 'अत्र' अस्मिन् देशे, 'यमः', देवः, हे लोष्ट 'ते' तव, 'सादनात्' स्थापननिमित्तं, 'मिनोतु' स्थानं करोतु ॥

अथ द्वितीयामाह। (२)''उपसर्प मातरं ० निर्ऋत्या उपस्थे''(२) इति। हे लोष्ट 'एतां' 'भूमिं', 'उपसर्प' प्राप्नुहि। कीदृशीं, 'मातरं' मातृस्थानीयां, 'उरुव्यचसं' बहुविस्तारां, 'पृथिवीं' प्रथितां प्रसिद्धां, 'सुशेवां' सुष्ठु सेवितुं योग्यां। 'ऊर्णम्रदा' कम्बलवत् मृदुभूता, 'युवतिः' नित्यतरुणी, 'दक्षिणावती' कौशलयुक्ता, सा 'एषा' पृथिवी, 'उपस्थे' स्वोत्सङ्गे, 'निर्ऋत्याः' पापदेवतायाः सकाशात्, हे लोष्ट त्वां 'पातु' ॥

अथ तृतीयामाह। (३)''उच्छ्मञ्चस्व पृथिवि मा ०

स्व पृथिवि मा विबाधिथाः सूपायनाऽस्मै भव सूपवञ्चना। माता पुत्रं यथा सिचाऽभ्येनं भूमि वृणु[३]। [४]उच्छ्मञ्चमाना पृथिवी हि तिष्ठसि सहस्रं मित उप हि श्रयन्तां। ते गृहासो मधुश्चुतो विश्वाऽहाऽस्मै शरणाः

---

सिचाऽभ्येनं भूमि वृणु"[३] इति। हे 'पृथिवि', लोष्टमेनं 'उच्छ्मञ्चस्व' उत्कर्षेण सुखयुक्तं कुरु। 'मा विबाधिथाः' अस्य बाधां माकार्षीः,। 'अस्मै' लोष्टाय, सूपायनं निवासस्थानं, भोग्यद्रव्यं वा, यस्याः सा 'सूपायना',। सुष्ठु उपवञ्चनं, स्वेच्छागमनं, यस्याः सा 'सूपवञ्चना',। तादृशी भव। 'यथा', लोके 'माता', 'पुत्रं', 'सिच' वस्त्रेण प्रावृणोति, तथा 'एनं' लोष्टं, 'अभिवृणु' अस्य प्रावरणं कुरु॥

अथ चतुर्थीमाह। [४]"उच्छ्मञ्चमाना पृथिवी हि,० शरणाः सन्त्विह"[४] इति। हे 'पृथिवि', 'हि' यस्मात्, 'उच्छ्मञ्चमाना' उत्कर्षेण सुखं कुर्वाणा, 'तिष्ठसि'। तस्मात् कारणात् 'मितः' मीयमानाः, 'सहस्रं' लोष्टाः, 'उपश्रयन्तां' त्वामाश्रयन्तु, एतं वा मुख्यं लोष्टमाश्रयन्तु। 'ते' सर्वे लोष्टाः, 'मधुश्चुतः' माधुर्यरसस्राविणः, 'गृहाः', भूत्वा 'विश्वाहा' सर्वेष्वप्यहःसु, 'अस्मै' स्थाप्यमानलोष्टाय, 'शरणाः', 'अत्र', रक्षितारः, 'सन्तु'॥

कल्पः। तिलमिश्राभिर्धानाभिः चिरपञ्चं परिकिरति, स्वो-

सन्त्वत्र(४) । (५)एणीर्धाना हरिणीरर्जुनीः सन्तु धे-
नवः । तिलवत्सा ऊर्जमस्मै दुहाना विश्वाहा सन्त्वन-
पस्फुरन्तीः(५) ॥ १ ॥

(६)एषा ते यमसादने स्वधा निधीयते गृहे । अ-
क्षितिर्नाम ते असौ(६) । (७)इदं पितृभ्यः प्रभरेम बर्हि-

---

धाना इति । पाठस्तु । (५)"एणीर्धाना हरिणीरर्जुनीः ० सन्त्वनपस्फुरन्तीः"(५) इति । याः 'धानाः', सन्ति ताः 'एणीः' मिश्रवर्णाः, 'हरिणीः' हरितवर्णाः, 'अर्जुनीः' श्वेतवर्णाश्च, 'धेनवः', सन्तु । तिलाः वत्सस्थानीया यासान्ताः 'तिलवत्साः', तादृश्यो धानाः 'अस्मै' प्रेताय, 'ऊर्जं' अन्नरसं, 'दुहानाः', 'विश्वाहा' सर्वेष्वहःसु, 'अनपस्फुरन्तीः' अपस्फुरणेन प्रातिकूल्यप्रतिभासेन रहिताः, 'सन्तु'॥

कल्पः । अभिवान्यायै दुग्धस्यार्धशरावे मन्थः त्रिरपसव्योपमथितः* आमपात्रस्थः तं दक्षिणत उपदधाति, एषा ते यमसादने इति । पाठस्तु । (६)'एषा ते यमसादने ० नाम ते असौ"(६) इति । हे प्रेत 'ते' तव, 'यमसादने' यमस्य स्थाने, 'गृहे', 'एषा' मन्थरूपा, 'स्वधा' अन्नात्मिका, 'निधीयते' स्थाप्यते । 'असौ', हे देवदत्तनामक प्रेत 'ते' तव, 'अक्षितिर्नाम' क्षयरहिता खलु ॥

कल्पः । समूलं बर्हिर्दक्षिणा स्तृणाति, इदं पितृभ्यः प्रभरेम बर्हिः इति । पाठस्तु । (७)"इदं पितृभ्यः ० यम्या संविदानः"(७)

---

* त्रिः प्रसव्योपमथित इति F, K, चिह्नितपुस्तकद्वयपाठः ।

देवेभ्यो जीवन्त उत्तरम्भरेम। तत्त्वमारोहासो मेध्यो भव यमेन त्वं यम्या संविदानः(७)। (८)मा त्वा वृक्षौ सम्बाधिष्टां मा माता पृथिवि त्वं। पितॄन् ह्यत्र गच्छास्येधासं यमराज्ये(८)। (९)मा त्वा वृक्षौ सम्बाधेथां मा

---

इति। 'इदं' 'बर्हिः', 'पितृभ्यः' पित्रर्थं, 'प्रभरेम' प्रकर्षेण स्तृणीम। वयन्तु 'जीवन्तः', एव 'तत्त्वमारोहासः' परमार्थतत्त्वमारोढुकामाः, 'देवेभ्यः' देवार्थं, 'उत्तरं' उन्नततरं, अतिशयेनोत्कृष्टतरं, बर्हिः 'भरेम' सम्पादयाम। हे प्रेत 'त्वं', 'यमेन', 'यम्या', च 'संविदानः' ऐकमत्यङ्गतः, 'मेध्यो भव' अमृतसेवनयोग्यो भव॥

कल्पः। पालाशान् परिधीन् परिदधाति, मा त्वा वृक्षाविति, पूर्वापरावुत्तरया दक्षिणोत्तराविति। तत्र प्रथमामाह। (८)"मा त्वा वृक्षौ सम्बाधिष्टां॰ गच्छास्येधासं यमराज्ये"(८) इति। हे प्रेत त्वां 'वृक्षौ' पूर्वापरपरिधिरूपावेतौ, 'मा सम्बाधिष्टां' बाधितं मा कुरुतं। हे 'पृथिवि', 'त्वं', अपि 'माता' मातृस्थानीया सती, मा बाधिष्ठाः। 'हि' प्रसिद्धान्, 'पितॄन्', 'अत्र' स्थाने, 'गच्छासि' हे प्रेत प्राप्नुहि। 'यमराज्ये' यमस्य देशे, 'एधासं' एधस्व, वर्धस्व॥

अथ द्वितीयामाह। (९)"मा त्वा वृक्षौ सम्बाधेथां॰ यमराज्ये विराजसि"(९) इति। हे प्रेत त्वां 'वृक्षौ' दक्षिणोत्तर-

माता पृथिवी मही। वैवस्वतꣳ हि गच्छासि यमराज्ये विराजसि[९]। [१०]नलं प्लवमारोहैतन्नलेन पथोऽन्विहि। स त्वं नलप्लवो भूत्वा सन्तर प्रतरोत्तर[१०] ॥ २ ॥

[११]सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ-

---

परिधिरूपावेतौ, 'मा सम्बाधेथां' सम्बाधितं मा कुरुतां । 'माता' मातृस्थानीया, 'मही' महती, 'पृथिवी', मा बाधिष्ट । 'हि' प्रसिद्धं, 'वैवस्वतं' सूर्यपुत्रं यमं, 'गच्छासि' प्राप्नुहि । 'यमराज्ये' यमस्य देशे, 'विराजसि' विशेषेण राजमानो भव ॥

कल्पः । मध्ये नलेषीकान् निदधाति, नलं प्लवमिति । पाठस्तु । [१०]"नलं प्लवमारोह ० सन्तर प्रतरोत्तर"[१०] इति । नल-शब्देन जलमध्ये समुत्पन्नः तृणविशेष उच्यते। हे प्रेत त्वं 'नलं' 'प्लवं' तृणविशेषरूपं प्लवनहेतुं, 'एतं' 'आरोह'। तेन 'नलेन', 'पथः' मार्गान्, 'अन्विहि' त्वं अनुक्रमेण प्राप्नुहि, । 'सः' तादृशः, 'त्वं', 'नलप्लवः' नलरूपेण प्लवेन युक्तः, 'भूत्वा', 'सन्तर' पितृलोक-मार्गरूपं समुद्रं सम्यक् तर, 'प्रतर' प्रकर्षेण तर, 'उत्तर' उत्कर्षेण तर । मार्गे नानाविधोपद्रवपरिहाराभिप्रायेण नानाविधन्तरण-मुच्यते ॥

कल्पः । पुराणेन सर्पिषा शरीराणि सुसन्तृप्तानि सन्तर्प्य उत्त-रत आसीनः अनन्वीक्षमाणो दर्भेषु निवपति, सवितैतानि शरीराणि इति । पाठस्तु । [११]"सवितैतानि शरीराणि ० तेभ्यः पृथिवि

आदधे। तेभ्यः पृथिवि शम्भव(११)। (१२)षड्ढोता सूर्यन्ते चक्षुर्गच्छतु वातमात्मा द्याञ्च गच्छ पृथिवीं च धर्मणा। अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः(१२)। (१३)परं मृत्यो अनुपरेहि पन्थां यस्ते स्व-

---

शम्भव"(११) इति। 'एतानि' 'शरीराणि' शरीरावयवरूपाणि अस्थीनि, मातृस्थानीयायाः पृथिव्याः 'उपस्थे' उत्सङ्गे, 'सविता' प्रेरको देवः, 'आदधे' सर्वतः स्थापयति। हे 'पृथिवि', 'तेभ्यः' अस्थिभ्यः, 'शं' सुखहेतुः, 'भव'॥

कल्पः। अथैनमुपतिष्ठन्ते, षड्ढोता सूर्यन्ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथीं च धर्मणा। अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः इति। (१२मन्त्रः।)यः षड्ढोतृसञ्ज्ञको मन्त्राभिमानी देवः अस्ति तदनुग्रहेण हे प्रेत त्वदीयं 'चक्षुः', 'सूर्यङ्गच्छतु', इति योजनीयं। अयञ्च मन्त्रः प्रथमानुवाके व्याख्यातः॥

कल्पः। भुक्तभोगेन वाससा अस्थिकुम्भन्निमृज्योपर्युपरि शिरो दक्षिणा व्युदस्यति, परं मृत्यो अनुपरेहि पन्थामिति, अथास्य कपालानि सुसम्भिन्नानि सम्भिनत्ति यथा एषु उदकन्न तिष्ठेत्,इति। पाठस्तु। (१३)"परम्मृत्यो अनुपरेहि०रीरिषो मोत वीरान्"(१३) इति। हे 'मृत्यो', 'देवयानादितर', 'यः' पन्थाः, 'ते स्वः' तव

इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरान्[१३]। [१४]शं वातः शꣳ हि ते घृणिः शमु ते सन्त्वोषधीः। कल्पन्तां मे दिशः

---

स्वभूतः, तं,'परं पन्थां' देवयानात इतरं तं मार्गं, 'अनुपरेहि' अनुक्रमेण प्राप्नुहि। 'चक्षुष्मते' साधुदर्शिने, 'शृण्वते' अस्मदिशनीनां श्रोत्रे, 'ते' तुभ्यं, एकं वचनं 'ब्रवीमि'। 'नः' अस्मदीयां, 'प्रजां' पुत्रादिरूपां, 'मा रीरिषः' मा विनाशय, 'उत' अपिच, 'वीरान्' शूरान् भृत्यानपि, मा रीरिषः, ॥

कल्पः। भुक्तभोगेन वाससा शरीराणि प्रच्छाद्य उदपात्रेण उदुम्बरशाखया वोक्षति, शं वात इति। पाठस्तु। [१४]"शं वातः शꣳ हि ते घृणिः०कल्पन्ताम्मे दिशः शग्माः"[१४] इति। 'वातः' वायुः, 'ते' तव, 'शं' सुखं, करोतु। 'घृणिः' दीप्यमानः आदित्यः, 'हि' प्रसिद्धः, 'ते' तव, 'शं' सुखं, करोतु। ओषध्यश्च 'ते' तव, शं, सुखं प्रति हेतवः, 'सन्तु'। 'दिशः', सर्वाः, 'मे' मम, 'शग्माः' सुखप्रापिकाः,* 'कल्पन्तां' समर्था भवन्तु ॥

कल्पः। इष्टकाः प्रतिदिशमनन्वीक्षमाण† उपदधाति, पृथिव्यास्त्वा

---

* सुखदायिका इति E चिह्नितपुस्तकपाठः।

† प्रतिदिशमन्वीक्षमाण इति F चिह्नितपुस्तकपाठः।

शुग्माः[१४] । [१५]पृथिव्यास्त्वा लोके सादयाम्यमुष्य शर्माऽसि पितरो देवता । प्रजापतिस्त्वा सादयतु तया देवतया[१५] ॥ [१९, २०]अन्तरिक्षस्य त्वा दिवस्त्वा दिशां त्वा नाकस्य त्वा पृष्ठे ब्रध्नस्य त्वा विष्टपे सादयाम्यमुष्य शर्मा-

---

लोके सादयामि इत्येतैः प्रतिमन्त्रं प्रतिदिशं मध्ये पञ्चमोन्तां द-क्षिणेन षष्ठीमिति । तत्र प्रथममन्त्रमाह । [१५]"पृथिव्या-स्त्वा लोके०तया देवतया"[१५] इति । हे इष्टके त्वां 'पृथिव्याः', 'लोके' स्थाने, 'सादयामि' स्थापयामि । 'अमुष्य' प्रेतस्य, 'शर्मा-सि' सुखहेतुरसि । 'पितरः', तव 'देवताः' स्वामिभूताः, 'प्रजा-पतिः', देवः, त्वां अत्र 'सादयतु' स्थापयतु ।'तया' प्रजापति'देव-तया' स्थापिता सती, ध्रुवा सीद, यथाङ्गिरोभिः स्थापिता, तद्वत्। अत्राङ्गिरस्वध्रुवा सीदेत्येतावदध्याहर्त्तव्यं ॥

अथ द्वितीयादीन् षष्ठ्यन्तान् पञ्चमन्त्रानाह । [१९,२०]"अन्तरिक्षस्य त्वा दिवस्त्वा ० प्रजापतिस्त्वा सादयतु तया देवतया"[१९,२०] इति । हे द्वितीयेष्टके त्वां 'अन्तरिक्ष-स्य', लोके सादयामीत्यनुषज्य पूर्ववद्व्याख्येयं । हे तृतीयेष्टके त्वां 'दिवः', लोके सादयामि । हे चतुर्थेष्टके त्वां 'दिशां', लोके सादयामि । हे पञ्चमेष्टके त्वां 'नाकस्य पृष्ठे' स्वर्गस्योपरि, साद-

ऽसि पि॒तरो॑ दे॒वता॑। प्र॒जाप॑तिस्त्वा सा॒दयतु॒ तया॑ दे॒वत॑या[११,२०] ॥ ३ ॥

अन॑पस्फुरन्तीः, उत्त॑र, दे॒वत॑या, द्वे च॑ ॥ अनु॰ ७ ॥

अथाष्टमोऽनुवाकः।

[१]अ॒पू॒पवा॑न् घृ॒तवा॑ꣳश्च॒रुरे॒ह सी॑दतूत्त॒भ्नु॒वन् पृ॑थि॒-

---

यामि। हे षष्ठेष्टके त्वां 'ब्रध्नस्य' आदित्यस्य, 'विष्टपे' स्थाने, 'साद-यामि'। सर्वत्रानुषङ्गद्योतनाय सादयामीत्यादेः पुनः पाठः ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके षष्ठप्रपाठके सप्तमोऽनुवाकः॥ ७ ॥

---

अथाष्टमोऽनुवाकः।

कल्पः। एवं चरून्, अपूपवानिति, प्रतिमन्त्रमिति। तत्र प्रथममन्त्रमाह। [१,४]"अपूपवान् घृतवाꣳश्चरुरेह सीदतूत्तभ्नुवन्॰ प्रजापतिस्त्वा सादयतु तया देवतया[१,४]। पक्का भक्ष्याः पिष्टविकाराः अपूपाः, ते यस्य चरोः सन्ति सः अयं 'अपूपवान्'। तथा 'घृतवान्' प्रभूतघृतयुक्तः, तादृशः 'चरुः', 'इह' अस्मिन् स्थाने, पूर्वस्यां दिशि 'आसीदतु' उपविशतु,। किं कुर्वन्, 'पृथिवीं', एतां

वीं द्यामुतोपरि। योनिकृतः पथिकृतः सपर्यत ये दे-
वानां घृतभागा इह स्थ। एषा ते यमसादने स्वधा
निधीयते गृहेऽसौ। दशाक्षरा ताः रक्षस्व तां गोपाय-
स्व तां ते परिददामि तस्यां त्वा मा दभन् पितरो दे-
वता। प्रजापतिस्त्वा सादयतु तया देवतया[१]। [१,१]

---

'उत्तभ्नुवन्' ऊर्ध्वं स्तब्धां कुर्वन्, 'उत' अपि च, 'द्यां' द्युलोकं, 'उपरि' ऊर्ध्वभागे, उत्तभ्नुवन्। 'देवानां', मध्ये ये देवविशेषा यूयं 'इह' अस्मिन् उपधाने, 'घृतभागाः स्थ' घृतसेविनो भवथ। ये यूयं 'योनिकृतः' स्थानकारिणः, 'पथिकृतः' मार्गकारिणश्च, सन्तः 'सपर्यत' परिचरत। 'असौ' देवदत्तादिनामक हे प्रेत, 'ते' तव, 'यमसादने' यमस्य स्थाने, 'गृहे', 'एषा स्वधा' एतत्स्वरूपमन्नं, 'निधीयते' नितरां स्थाप्यते। दशसङ्ख्याकानि अक्षराणि मन्त्रविशेषरूपेण प्रतिपादकानि यस्यास्तद्रूपायाः स्वधायाः सन्ति, सा इयं 'दशाक्षरा', तादृशी या स्वधा विद्यते, 'तां' स्वधां, हे प्रेत 'रक्षस्व'। 'तां गोपायस्व'। स्वरूपस्योपद्रवाभावः, रक्षणं। भोगदशायामपि उपद्रवाभावः, गोपायेत्यनेनोच्यते। 'तां' तादृशीं स्वधां, 'ते' तुभ्यं, 'परिददामि'। अत्र देवतारूपा ये पितरः ते सर्वे 'तस्यां' स्वधायां, त्वां प्रेतं, 'मा दभन्' हिंसितं मा कुर्वन्तु। प्रजापतिरित्यादि पूर्ववत्॥

अपूपवान्घृतवान् क्षीरवान् दधिवान् मधुमाꣳश्च-रेह सीदन्तूत्तभ्नुवन् पृथिवीं द्यामुतोपरि । योनि-क्षतः पथिकृतः सपर्यत ये देवानाꣳ घृतभागाः क्षीर-भागा दधिभागा मधुभागा इह स्थ । एषा ते यमसादने स्वधा निधीयते गृहꣳसौ । अक्षताक्षरा सहस्राक्षराऽयुता-क्षराऽच्युताक्षरा ताꣳ रक्षस्व तां गोपायस्व तां ते परि-ददामि तस्यां त्वामादभन् पितरो देवता । प्रजा-पतिस्त्वा सादयतु तया देवतया(१,५) ॥ १ ॥

अपूपवानसौ, दश* ॥ अनु० ८ ॥

---

अथ दक्षिणादिमध्यान्तचतुर्दिक्षु चरुप्रधानविषयान् मन्त्रानाह । (१,५)"अपूपवान् घृतवान् क्षीरवान् ० सादयतु तया देवतया"(१,५) इति । अत्र घृतवानित्यादिपदचतुष्टयेन मन्त्रभेदो द्रष्टव्यः । घृतभागा इत्यादीन्यपि चत्वारि पदानि, अक्षताक्षरेत्यादीन्यपि चत्वारि पदानि, चतुर्ष्वपि मन्त्रेषु विभज्य योजनीयानि । 'घृतं' सम्यक् पक्वं पयः, 'क्षीरं' पयोमात्रं । अन्यत् पूर्ववत् ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके षष्ठप्रपाठके अष्टमोऽनुवाकः ॥ ८ ॥

---

* अपूपवान् दश इति J चिह्नितपुस्तकपाठः ।

अथ नवमोऽनुवाकः।

(१)एतास्ते स्वधा अमृताः करोमि यास्ते धानाः परि-किराम्यत्र। तास्ते यमः पितृभिः संविदानोऽत्र धेनूः काम-दुघाः करोतु(१)। (२)त्वामर्जुनौषधीनां पयो ब्रह्माण इ-द्विदुः। तासां त्वा मध्यादाददे* चरुभ्यो अपिधातवे(२)।

---

अथ नवमोऽनुवाकः।

कल्पः। तिलाभिमिश्राभिर्धानाभिस्त्रिः प्रसव्यं परिकिरति, एतास्ते स्वधा अमृताः करोमि इति। पाठस्तु। (१)"एतास्ते स्वधा अमृताः ० कामदुघाः करोतु"(१) इति। हे प्रेत 'ते' त्वदर्थं, 'अत्र' अस्यां चितौ, 'या धानाः' भृष्टतण्डुलरूपाः, 'परि-किरामि' परितो विक्षिपामि। 'एताः' धानाः, 'ते' त्वदर्थं, 'अमृताः' विनाशरहिताः, 'स्वधाः' अन्नरूपाः, 'करोमि'। 'यमः', देव, 'ते' त्वदर्थं, 'पितृभिः', 'संविदानः' ऐकमत्यङ्गतः सन्, 'ताः' धानाः, 'अत्र' स्थाने, 'कामदुघाः' कामप्रापिकाः, 'धेनूः' धेनुरूपाः, 'करोतु'॥

कल्पः। ओषधिस्तम्बान् प्रतिदिशमन्वोक्षमाण उपदधाति, त्वा-मर्जुनेति, प्रतिमन्त्रमिति। तत्र प्रथमामाह। (२)"त्वामर्जुनौषधीनां' चरुभ्यो अपिधातवे"(२) इति। तेषु मन्त्रेषु अर्जुनदूर्वाकाश-दर्भशब्दाः तृणविशेषवाचिनः, प्रसिद्धाः। हे 'अर्जुना'ख्यतृण,

---

* आददे इति A, B, G, J, I, चिह्नितपुस्तकपञ्चकपाठः।

(२)दूर्वाणाᳬ स्तम्बमाहरैतां प्रियतमां मम। इमां दिशं मनुष्याणां भूयिष्ठाऽनु विरोहतु(२)। (४)काशानाᳬ स्तम्बमाहर रक्षसामपहत्यै। य एतस्यै दिशः पराभवन्नघायवो यथा ते नाभवन् पुनः(४)। (५)दर्भाणाᳬ स्त-

---

,त्वां,' 'ब्राह्मणः' अभिज्ञा विप्राः, 'ओषधीनां पय इत्' सर्वासामोषधीनां सारमेव, 'विदुः' जानन्ति। 'तासां' ओषधीनां,'मध्यात्' सकाशात्, त्वां 'आदधे' आनीय स्थापयामि। किमर्थं, 'चक्षुभ्यः' 'अपिधातवे' चक्षुणामपिधानार्थं॥

अथ द्वितीयामाह। (२)"दूर्वाणाᳬ स्तम्बमाहर० भूयिष्ठाऽनु विरोहतु"(२) इति। हे प्रेत 'दूर्वाणां', सम्बन्धिनं 'स्तम्ब', 'आहर' स्वीकुरु। 'एतां' दूर्वां, 'मम' स्वस्य, 'प्रियतमां', विद्धीति शेषः। 'मनुष्याणां', सम्बन्धिनीं 'इमां' दक्षिणां, 'दिशं', 'अनु', सा दूर्वा 'भूयिष्ठा' प्रभूता, 'विरोहतु' विविधमङ्कुरमुत्पादयतु॥

अथ तृतीयामाह। (४)"काशानाᳬ स्तम्बमाहर ० यथा ते नाभवन् पुनः"(४) इति। हे प्रेत 'काश'ख्यानां तृणानां 'स्तम्बं', 'आहर' स्वीकुरु। किमर्थं, 'रक्षसामहत्यै'। 'एतस्यै' पश्चिमायाः, 'दिशः', 'अघायवः' अघं पापमुपद्रवमिच्छन्तः, 'ये' वैरिणः, 'पराभवन्' पराकर्त्तारः आसन्। 'ते' वैरिणः, 'यथा', 'पुनः', 'नाभवन्' न भविष्यन्ति, तथा काशस्तम्बं स्वीकुरु॥

अथ चतुर्थीमाह। (५)"दर्भाणाᳬ स्तम्बमाहर ० काष्ठ-

न्वमाहर पितृणामोषधीं प्रियां । अन्वस्यै मूलं जीवा-
द्नु काण्डमथो फलं⁽⁵⁾ ॥ १ ॥

⁽¹,⁰⁾लोकं पृणता अस्य सूददोहसः⁽¹,⁰⁾ । ⁽⁸⁾शं वातः
शं हि ते घृणिः शमु ते सन्त्वोषधीः कल्पन्तां ते दिशः
सर्वाः⁽⁸⁾ । ⁽⁹⁾इदमेव मेतोऽपरामार्तिमाराम काञ्चन

---

मथो फलं"⁽⁵⁾ इति । हे प्रेत दर्भसम्बन्धिनं 'त्वम्', स्तोकुरु ।
इमां 'ओषधीं', 'पितृणां', 'प्रियां', विद्धीति शेषः । 'अस्यै' दर्भ-
रूपाया ओषध्याः, 'मूलं', 'अनुजीवात्' अनुक्रमेण जीवतु । तथा
'काण्डं', 'फलं', च 'अनु' क्रमेण, जीवतु, वर्धतामित्यर्थः ॥

कल्पः । लोकं पृणेति लोकम्पृणा उपदधाति, उत्तरया पुरीषम-
नुविकिरति इति । तयोर्मन्त्रयोः प्रतीके दर्शयति । ⁽¹,⁰⁾"लोकं पृण-
ता अस्य सूददोहसः"⁽¹,⁰⁾ इति । लोकं पृण छिद्रं पृणेत्येको मन्त्रः ।
ता अस्येति द्वितीयः । एतौ चोभौ अपेत वीत इत्यनुवाके व्याख्यातौ ॥

कल्पः । उदपात्रेण उदुम्बरशाखया वा उक्षति, शं वात इति ।
पाठस्तु । ⁽⁸⁾"शं वातः शं हि० ते दिशः सर्वाः"⁽⁸⁾ इति । अयं
मन्त्रः सप्तमानुवाके व्याख्यातः । ते सर्वा इत्येतावानेव विशेषः ॥

कल्पः । उपतिष्ठते, इदमेवेति । पाठस्तु । ⁽⁹⁾"इदमेव मेतोप-
रां ० मित्रेण वरुणेन च"⁽⁹⁾ इति । इदानीं वर्त्तमानं 'इदमेव'
एकं राष्ट्रं सम्पन्नं, 'इतः', 'अपरां', 'कां', चिदपि 'आर्तिं', 'आराम'

तथा तद॒श्विभ्यां॑ कृतं मि॒त्रेण॒ वरु॑णेन च(९)। (१०)वरु॒णो॒ वा॑रयादि॒दं दे॒वो वन॒स्पतिः॑। आर्त्यै॒ निर्ऋ॑त्यै॒ द्वेषा॒च्च॒ वन॒स्पतिः॑(१०)। (११)विधृ॑तिरसि॒ विधा॑रया॒स्मद॒घा द्वे॒षा॑ꣳसि(११)। (१२)शमि॒ शमा॑य॒स्मद॒घा द्वेषा॑ꣳसि(१२)।

---

मा प्राप्नुवाम। 'तत्' अस्मदभीष्टं, 'अश्विभ्यां', देवाभ्यां, 'मित्रेण', 'वरुणेन', 'च', 'तथा कृतं' सम्पादितं॥

कल्पः। वारुणशाखां पुरस्तान्निदधाति, वरुणो वारयादिति। पाठस्तु। (१०)"वरुणो वारयादिदं ० द्वेषाच्च वनस्पतिः"(१०) इति। अयं 'वरुणा'ख्यः 'वनस्पतिर्देवः', 'इदं' कष्टं, 'वारयात्' निवारयतु। तथा सः 'वनस्पतिः', 'आर्त्यै' अन्यस्या अपि बाधायाः, 'निर्ऋत्यै' पापदेवतायाः, 'द्वेषाच्च', वैरिकृतात्, पालयत्विति शेषः॥

कल्पः। विधृतिलोष्टमुत्तरतः, विधृतिरसि इति। पाठस्तु। (११)"विधृतिरसि ० द्वेषाꣳसि"(११) इति। हे लोष्ट त्वं 'विधृतिः' विधारकः, 'असि'। अतः 'अस्मत्तः' सकाशात्, 'अघा' पापानि, 'द्वेषांसि' वैराणि च, 'विधारय' वियुज्यान्यत्र स्थापय॥

कल्पः। शमीशाखां पश्चात्, शमि शमयेति। पाठस्तु। (१२)"शमि शमय ० द्वेषाꣳसि"(१२) इति। हे 'शमि' एतन्नामकवृक्ष, 'अस्मत्' अस्मत्तः, 'अघा' पापानि, 'द्वेषांसि' वैराणि च, 'शमय'॥

(१३)यव यवयास्मद्द्वेषाꣳसि(१३)। (१४)पृथिवीं गच्छान्तरिक्षं गच्छ दिवं गच्छ दिशो गच्छ सुवर्गच्छ सुवर्गच्छ दिशो गच्छ दिवं गच्छान्तरिक्षं गच्छ पृथिवीं गच्छापो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः(१४)। (१५,१९)अश्मन्वती रेवतीर्यद्दे देवस्य सवितुः पवित्रं या राष्ट्रात्पन्नादुद्वयन्तमसस्परि धाता पुनातु(१५,१९) ॥ २ ॥

अथो फलं, धाता पुनातु ॥ अनु० ९ ॥

---

कल्पः। यवं दक्षिणतः, यव यवयेति। पाठस्तु। (१३)"यव यवय० द्वेषाꣳसि"(१३) इति। पूर्ववद्व्याख्येयं ॥

कल्पः। अथैनमुपतिष्ठते, पृथिवीमिति। पाठस्तु। (१४)"पृथिवीं गच्छान्तरिक्षं०प्रतितिष्ठा शरीरैः"(१४) इति। आरोहावरोहाभ्यां पृथिव्यादिस्वर्गपर्यन्तप्राप्तिवाक्यानि स्पष्टानि। अपोवेत्यादिस्तु प्रथमानुवाके व्याख्यातः ॥

कल्पः। जघनेन चितिं कर्ष्वादि समानमिति। तन्मन्त्राणां प्रतीकानि दर्शयति। अश्मन्वतीरेवतीः, यद्दे देवस्य सवितुः पवित्रं, या राष्ट्रात्पन्नात्, उद्वयन्तमसस्परि, धाता पुनात्विति। (१५,१९-मन्त्राः।) एते च मन्त्रास्तृतीयानुवाके व्याख्याताः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके षष्ठप्रपाठके नवमोऽनुवाकः॥ ९ ॥

अथ दशमोऽनुवाकः।

(१)आरोहतायुर्जरसं गृणाना अनुपूर्वं यतमाना यतिष्ट। इह त्वष्टा सुजनिमा सुरत्नो दीर्घमायुः कर-तु जीवसे वः(१)। (२)यथाऽहान्यनुपूर्वं भवन्ति यथर्तव

अथ दशमोऽनुवाकः।

कल्पः। नवम्यां व्युष्टायां यज्ञोपवीती अन्तरा ग्रामं श्मशान-ञ्चाग्निमुपसमाधाय सम्परिस्तीर्य अपरेणाग्निं लोहितं चर्म आनडुहं प्राचीनग्रीवमुत्तरलोमास्तीर्य तद्देतसमालिनो ज्ञातीनारोहयति, आरोहत इति। पाठस्तु। (१)"आरोहतायुर्जरसङ्गृणानाः ० करतु जीवसे वः"(१) इति। हे ज्ञातयः यूयं 'जरसं गृणानाः' जराव-स्थां प्रार्थयमानाः, 'आयुः' आयुषो हेतुभूतं चर्म, 'आरोहत'। 'अनुपूर्वं' ज्येष्ठमनु कनिष्ठो यथा भवति तथा, 'यतमानाः' प्रयत्नं कुर्वन्तः, 'यतिष्ट' आरोहणप्रयत्नं कुरुत, 'इह' कर्मणि, 'त्वष्टा' हविषां पापानां तनूकर्त्ता, अयमाग्निः, 'सुजनिमा' शोभ-नजन्मा, 'सुरत्नः' भक्तेभ्यो देयैः शोभनैरत्नैरुपेतः, 'वः' युष्मभ्यं, 'दीर्घमायुः,' करोतु। 'जीवसे' जीवनाय*॥

कल्पः। अथैताननुपूर्वान् प्रकल्पयति, यथाऽहानि इति। पाठस्तु। (२)"यथाहान्यनुपूर्वं ० आयूंषि कल्पयैषां"(२) इति।

* 'इह' अस्मिन् कर्मणि, 'वः' युष्माकं, जीवनाय, 'सुजनिमा' शोभनजनेोपेतः, 'सुरत्नः' शोभनाभरणोपेतः, 'त्वष्टा' प्रजापतिः,'दीर्घमायुः', 'करतु' करोतु, 'जीवसे' जीवनाय। इति F चिह्नितपुस्तकपाठः।

ऋतुभिर्यन्ति क्लृप्ताः। यथा न पूर्वमपरो जहात्येवा धातरायूꣳषि कल्पयैषां[१]। [२]न हि ते अग्ने तनुवे क्रूरं चकार मर्त्यः। कपिर्बभस्ति तेजनं पुनर्जरायु गौरिव। अप नः शोशुचदघमग्ने शुशुध्या रयिं। अप नः शोशुच-

---

'यथा', लोके 'अहानि' दिनानि, 'अनुपूर्वं' 'भवन्ति' प्रतिपत् द्वितीयातृतीया चेत्येवमनुक्रमेणैव वर्त्तन्ते। 'यथा', च वसन्ता'ऋतवः', 'ऋतुभिः', उत्तरोत्तरैः, 'क्लृप्ताः' सम्बद्धाः, 'यन्ति' गच्छन्ति, वर्त्तन्ते। 'यथा', च 'पूर्वं' पितरं, ज्येष्ठं वा, 'अपरः' पुत्रः, कनिष्ठो वा, 'न जहाति' न परित्यजति। हे 'धातः' प्रजापते, 'एव' एवं, अनेनैव प्रकारेण, 'एषां' ज्ञातीनां, 'आयूंषि', 'कल्पय' सम्पादय॥

कल्पः। अथ वारुणेन स्रुवेण वारुण्यां स्रुचि चतुर्गृहीतमाज्यं गृहीत्वा जुहोति। न हि ते अग्ने तनुवे क्रूरं चकार मर्त्यः। कपिर्बभस्ति तेजनं पुनर्जरायु गौरिव। अप नः शोशुचदघमग्ने शुशुध्या रयिं। अप नः शोशुचदघं मृत्यवे स्वाहेति। (३मन्त्रः।) हे 'अग्ने', 'ते' तव, 'तनुवे' शरीरार्थं, 'मर्त्यः' मनुष्यः, 'क्रूरं' उग्रं व्यापारं, 'न हि चकार'। 'कपिः' 'कपित्वचेष्टाकारी मनुष्यः, 'पुनः', 'तेजनं' उत्तेजनं यथा भवति तथा, 'बभस्ति' दीपयति। तत्र दृष्टान्तः, 'गौरिव जरायुः' यथा गौः स्वगर्भस्य रक्षार्थं जरायुपटं सम्पादयति, न तु क्रूरं करोति, तद्वत्। 'नः' अस्मदीयं, 'अघं'

द्वयं मृत्यवे स्वाहा(३)। (४)अनड्वाहमन्वारभामहे स्वस्तये। स न इन्द्र इव देवेभ्यो वह्निःसम्पारणो भव(४)॥१॥

(५)इमे जीवा वि मृतैराववर्त्तिन्नभूद्भद्रा देवहूतिर्नो अद्य। प्राञ्चोऽगामा नृतये हसाय द्राघीय आयुः प्र-

---

पापं, 'अपशोशुचत्' अपगतं यथा भवति तथा दीप्यतां, दह्यतां। हे 'अग्ने', 'रयिं' धनं, 'शुशुग्ध्य' अतिशयेन शुद्धं कुरु। पुनरपि 'नः' अस्माकं, पापं अपगतं यथा भवति तथा दह्यतां। तदर्थं 'मृत्यवे', देवाय, स्वाहुतमिदमस्तु॥

कल्पः। उत्तरेणाग्निं रोहितोऽनड्वान् प्राङ्मुखोऽवस्थितो भवति तं ज्ञातयोऽन्वाभरन्ते, अनड्वाहमिति। पाठस्तु। (४)"अनड्वाहमन्वारभामहे॰सम्पारणो भव"(४) इति। 'स्वस्तये' क्षेमाय, एतं 'अनड्वाहं', वयं 'अन्वारभामहे' हस्तेन स्पृशामहे। हे अनड्वन् 'सः' त्वं, 'देवेभ्यः' देवार्थं, 'इन्द्र इव', 'नः' अस्मदर्थं, 'वह्निः' दाहकः,* 'सम्पारणः' सम्यक् पारं प्रति नेता च, 'भव'॥

कल्पः। प्राञ्चो गच्छन्ति, इमे जीवा इति। पाठस्तु। (५)"इमे जीवाः॰प्रतरान्दधानाः"(५) इति। 'इमे जीवाः' ज्ञातयः, 'मृतैः', वियुज्य 'आववर्त्तिन्' आवृत्ताः। केनाभिप्रायेणेति तदुच्यते, 'अद्य' अस्मिन् दिने, 'नः' अस्माकं, 'भद्रा' कल्याणरूपा, 'देव-

---

* वाहक इति K चिह्नितपुस्तकपाठः।

तरां दधानाः(५)। (६)मृत्योः पदं योपयन्तो यदैम द्राघीय आयुः प्रतरां दधानाः। आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवथ यज्ञियासः(६)। (७)इमं जीवेभ्यः परिधिं दधामि मा नोऽनुगादपरो अर्द्धमेतं। शतं

ऋतिः' देवानामाक्रानक्रिया, 'अभूत्' भवति। 'नृतये'* मनुष्यवय-निमित्तं, 'हसाय' हास्यार्थं, हर्षार्थमित्यर्थः। 'प्राञ्चः' प्राञ्चः, प्राङ्मुखाः सन्तः, 'अगाम' वयं गच्छामः। कीदृशा वयं, 'द्राघीय आयुः' अत्यन्तं दीर्घमायुः, 'प्रतरां' इति, प्रकर्षेण, 'दधानाः' धारयन्तः॥

कल्पः। जघन्यः शमीशाखया पदानि लोपयते,† मृत्योः पद-मिति। पाठस्तु। (६)"मृत्योः पदं योपयन्तः ०भवथ यज्ञियासः"(६) इति। 'मृत्योः' मृत्युरूपस्य अनडुहः, 'पदं'‡ स्थानं,'यो लोपयन्तः' रजसा प्रच्छाद्यमानाः सन्तः, 'यदा', 'एम' गच्छामः, तदा वयं पूर्ववत् 'द्राघीय आयुः', 'प्रतरां' प्रकर्षेण, 'दधानाः', 'प्रजया धनेन', च 'आप्यायमानाः' वर्द्धमानाः सन्तः,'यज्ञियासः' यज्ञयोग्याः, 'शुद्धाः' शरीरशुद्धियुक्ताः, 'पूताः' द्रव्यशुद्धियुक्ताः, च 'भवथ'। हे ज्ञातय इति द्रष्टव्यं॥

कल्पः। अथ एभ्यः अध्वर्युर्दक्षिणतो अस्मानं परिधिं दधाति, इमं जीवेभ्यः परिधिं दधामि इति। पाठस्तु। (७)"इमं जीवेभ्यः०

* मृजये मनुष्यजयनिमित्तं इति F चिह्नितपुस्तकपाठः।

† शमीशाखया अनडुत्पदानि संलोपयन्नेति इति E चिह्नितपुस्तकपाठः।

‡ भूरूपमिति E चिह्नितपुस्तकपाठः।

जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दध्महे पर्वतेन(७)। (८)इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सम्मृशन्तां। अनश्रवो अनमीवाः सुशेवा आरोहन्तु जनयो योनिमग्रे(८)। (९)यदाञ्जनन्त्रैककुदञ्जातं हिम-

---

दध्महे पर्वतेन"(७) इति। 'इमं' अस्मानं, 'जीवेभ्यः' जीवानामर्थे, 'परिधिं' परिधानहेतुं, 'दधामि' स्थापयामि। 'नः' अस्माकं मध्ये, 'अपरः' यः कोपि, 'एतं' 'अर्द्धं' आयुषो भागं, 'माऽनुगात्' माऽनुगच्छतु। किन्तु 'पुरूचीः' विस्तृतिं गताः, 'शरदः' संवत्सरान्, 'शतं जीवन्तु'। 'पर्वतेन' पर्वतसदृशेन पाषाणेन, 'मृत्युं', 'तिरोदध्महे' तिरोभूतं कुर्मः॥

कल्पः। अथैताः पत्नयो नयने सर्पिषा सम्मृशन्ति, इमा नारीरिति। पाठस्तु। (८)"इमा नारीः ० योनिमग्रे"(८) इति। 'इमा नारीः' एतास्स्त्रियः, 'अविधवाः' वैधव्यरहिताः, 'सुपत्नीः' शोभनपतियुक्ताः सत्यः, 'आञ्जनेन' अञ्जनहेतुना, 'सर्पिषा', 'सम्मृशन्तां' चक्षुषी संस्पृशन्तु। 'अनश्रवः' अश्रुरहिताः, 'अनमीवाः' रोगरहिताः, 'सुशेवाः' सुष्ठु सेवितुं योग्याः, 'जनयः' जायाः, 'अग्रे' इतः परं, 'योनिं' स्वस्थानं, 'आरोहन्तु' प्राप्नुवन्तु॥

कल्पः। कुशतरुणकेस्त्रैककुदेनाञ्जनेनाङ्क्ते, यदाञ्जनमिति। पाठस्तु। (९)"यदाञ्जनं त्रैककुदं ० अरातीर्जम्भयामसि"(९) इति।

वतस्परि। तेनामृतस्य मूलेनारातीर्जम्भयामसि(९)। (१०)यथा त्वमुद्भिनत्स्योषधे पृथिव्या अधि एवमिम उद्भिन्दन्तु कीर्त्या यशसा ब्रह्मवर्चसेन(१०)। (११)अजोऽ-

---

'हिमवतस्परि' हिमवत्पर्वतस्योपरि, 'जातं' उत्पन्नं, 'त्रैककुदं' त्रिककुत्पर्वतसम्बन्धि, 'यत्' 'आञ्जनं', विद्यते। 'अमृतस्य मूलेन' सुखस्य कारणेन, 'तेन' अञ्जनेन, 'अरातीर्जम्भयामसि' शत्रून्वि-नाशयामः॥

कल्पः। अथैतानि कुशतरुणकानि समुच्छ्रित्य दर्भस्तम्बे निद-धाति, यथा त्वमिति। पाठस्तु। (१०)यथा त्वमुद्भिनत्स्योषधे ० यशसा ब्रह्मवर्चसेन"(१०) इति। हे 'ओषधे' दर्भस्तम्ब, 'पृथिव्याः', उपरि 'यथा त्वं', 'उद्भिनत्सि' उत्पद्यसे, 'एवं', 'इमे' कुशाः, 'कीर्त्यादिभिः सह 'उद्भिन्दन्तु' उत्पद्यन्तां। कीर्त्तियशसोः, लोकद्वयगतत्वेन भेदः॥

कल्पः। अजश्चैतदहः पचते यवौदनश्च, अजोसीत्यजस्य प्राश्नीयात् इति। पाठस्तु। (११)"अजोसि ० द्वेषाꣳसि"(११) इति। हे पक्वद्रव्य, त्वं 'अजोसि' अजसम्बन्ध्यसि, अतः 'अस्मत्', सकाशात्, 'अघा' पापानि, 'द्वेषांसि' वैराणि च, 'अज' अपगमय॥

कल्पः। यवौदनस्य च प्राश्नाति, यवोसि इति। पाठस्तु।

स्यजाऽस्मदघा द्वेषांꣳसि[११]। [१२]यवोऽसि यवयाऽस्मद्-
घा द्वेषांꣳसि[१२] ॥ २ ॥

सम्यारणो भव, जम्भयामसि, चीणि च ॥ अनु० १० ॥

---

अथ एकादशोऽनुवाकः ।

[१]अप नः शोशुचदघमग्ने शुशुध्या रयिं । अप नः

---

[१२]"यवोसि ० द्वेषाꣳसि[१२] इति । हे ओदन त्वं 'यवोसि' यवसम्बन्ध्यसि, अतः 'अस्मत्तः सकाशात्, अघा' पापानि, 'द्वेषांसि' वैराणि च, 'यवय' पृथक् कुरु ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके षष्ठप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

अथ एकादशोऽनुवाकः ।

पूर्वानुवाके मृत्यवे स्वाहेति यो होम उक्तः, तदनन्तरमेवैतर्मन्त्रैर्द्वादश स्रुवाहुतीर्जुहुयात् । तत्र प्रथमं मन्त्रमाह । [१]"अप नः शोशुचत् ० शोशुचदघं"[१] इति । पूर्वानुवाके व्याख्यातो मन्त्रः ॥

शोशुचदघं(१)। (२)सुक्षेत्रिया सुगातुया वसूया च यजामहे। अप नः शोशुचदघं(२)। (३)प्र यद्भन्दिष्ठ एषां प्रास्माकासश्च सूरयः। अप नः शोशुचदघं(३)। (४)प्र यदग्नेः सहस्वतो विश्वतो यन्ति सूरयः। अप नः शोशुचदघं(४)। (५)प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयं। अप नः शोशुचदघं(५) ॥ १ ॥

---

अथ द्वितीयमाह। (२)"सुक्षेत्रिया सुगातुया ० शोशुचदघं"(२) इति। 'सुक्षेत्रिया' शोभनक्षेत्रयोग्यया, 'सुगातुया' शोभनगतियोग्यया, 'वसूया च' धनप्राप्तिहेतुभूतयापि, अनया आहुत्या 'यजामहे' पूजयामः। अप न इत्यादि पूर्ववत् ॥

अथ तृतीयमाह। (३)"प्र यद्भन्दिष्ठ ० शोशुचदघं"(३) इति। 'यत्' यदा, 'एषां' ज्ञातीनां, 'भन्दिष्ठः' अतिशयेन भद्रः पुरुषार्थः, प्राप्यते, तदानीं 'आस्माकासः' अस्मत्सम्बन्धिनः, 'सूरयश्च' विद्वांसोऽपि, पुत्रपौत्रादयः, प्राप्यन्तां ॥

अथ चतुर्थमाह। (४)"प्र यदग्नेः ० शोशुचदघं"(४) इति। यच्छब्दः प्रसिद्धिवाची। 'यत्' प्रसिद्धाः, 'सूरयः' विद्वांसः, 'सहस्वतः' बलवतः, 'अग्नेः', सकाशात्, 'प्रयन्ति' प्रकर्षेण प्राप्नुवन्ति ॥

अथ पञ्चममाह। (५)"प्र यत्ते अग्ने ० शोशुचदघं"(५) इति। हे 'अग्ने', वयं 'ते' तव, 'यत्' प्रसिद्धाः, 'सूरयः', 'ते' त्वदीयाः,

(६)त्वꣳ हि विश्वतोमुख विश्वतः परिभूरसि। अप नः शोशुचदघ(६)। (७)द्विषो नो विश्वतो मुखाऽति नावेव पारय। अप नः शोशुचदघ(७)। (८)स नः सिन्धुमिव नावयाऽतिपर्षा स्वस्तये। अप नः शोशुचदघ(८)।

---

प्राप्ताः, अतः, 'वयं', अपि, 'ते' त्वदीयाः, 'प्रजायेमहि' 'प्रकर्षेण भूयास्म* ॥

अथ षष्ठमाह। (६)"त्वꣳ हि विश्वतोमुख ० शोशुचदघं"(६) इति। हे 'विश्वतोमुख' सर्वतो ज्वालायुक्त अग्ने, 'त्वं', 'विश्वतः' सर्वत्र, 'परिभूरसि' वैरिणां परिभवसि॥

अथ सप्तममाह। (७)"द्विषो नो विश्वतोमुख ० शोशुचदघं"(७) इति। हे अग्ने 'नः' अस्माकं, 'द्विषः' द्वेषिणः, 'मुखा' मुखानि, 'विश्वतः' सर्वस्माद्देशात्, 'अतिपारय' अतीत्य परतो नय। तत्र दृष्टान्तः। 'नावेव' यथा नावा परतस्तारयन्ति तद्वत्। यद्वा हे 'विश्वतोमुख' अग्ने, 'द्विषः' शत्रून्, 'अतिपारय', इति व्याख्येयं॥

अथाष्टममाह। (८)"स नः सिन्धुमिव ० शोशुचदघं"(८) इति। हे अग्ने 'सः' त्वं, 'नः' अस्माकं, 'स्वस्तये' क्षेमाय, 'अतिपर्ष' दुःखजातमतीत्य परतः प्रापय। तत्र दृष्टान्तः, 'नावया सिन्धुमिव' यथा लोके नावा समुद्रन्तारयन्ति तद्वत्॥

---

* हे अग्ने ये वयं ते तव सूरय स्तोढनामैतत् प्रकर्षेण स्तोतारः। यच्छब्दश्रुतेस्तच्छब्दोध्याहर्त्तव्यः। ते वयं प्रजायेमहि प्रजां प्राप्नयाम, तव प्रसादेन तव स्वभूता इति K चिह्नितपुस्तकपाठः।

(९)आपः प्रवणादिव यतीरपाऽस्मत्स्यन्दतामघं। अपं नः शोशुचदघं(९)। (१०)उद्दनादुदकानीवाऽपाऽस्मत्स्यन्दतामघं। अपं नः शोशुचदघं(१०)॥ (११)आनन्दाय प्रमोदाय पुनरागाꣳ स्वान् गृहान्। अपं नः शोशुचदघं(११)। (१२)न वै तत्र प्रमीयते गौरश्वः पुरुषः पशुः।

---

अथ नवममाह। (९)"आपः प्रवणादिव० शोशुचदघं"(९) इति। 'प्रवणात्' निम्नदेशात् निमित्तभूतात्, 'यतीः' गच्छन्त्यः,* 'आप इव', 'अस्मत्तः सकाशात्, 'अघं' पापं, 'अपेत्य' 'स्यन्दतां' प्रवाहरूपेण गच्छतु॥

अथ दशममाह। (१०)"उद्दनादुदकानीव ० शोशुचदघं"(१०) इति। 'उद्दनात्' उन्नतप्रदेशस्थादनात् सकाशात्, अधः कुल्यया समागतानि 'उदकानि', यथा निम्नदेशं प्रति स्यन्दन्ते। तथा अस्मत्तः सकाशात्, 'अघं' अपेत्य 'स्यन्दतां'॥

अथैकादशमाह। (११)" आनन्दाय० शोशुचदघं"(११) इति। 'आनन्दाय' मरणाभावनिमित्तसन्तोषाय, 'प्रमोदाय' विषयभोगनिमित्तप्रकृष्टहर्षाय, 'पुनः', अपि स्वकीयान् 'गृहान्', प्रति 'आगां' आगतोऽस्मि॥

अथ द्वादशमाह। (१२)"नवै तत्र प्रमीयते ० शोशुचदघं" (१२)इति। 'यत्र' यस्मिन् देशे, 'इदं ब्रह्म' पूर्वोक्तं होममन्त्रजातं,

---

* निर्गता इति K चिह्नितपुस्तकपाठः।

यत्रेदं ब्रह्म क्रियते परिधिर्जीवनाय कमपं नः शोशुचदघं(१२) ॥ २ ॥

अघं, अघं, चत्वारि च ॥ अनु० ११ ॥

---

अथ द्वादशोऽनुवाकः ।

(१)अपश्याम युवतिमाचरन्तीं मृताय जीवां परिणी-

---

'जीवनाय' जीवनार्थं, 'कं' सुखं, यथा भवति तथा, 'परिधिः' परिधानं क्रियते। 'तत्र' देशे, 'गौः', 'अश्वः', वा 'पुरुषः', अन्यो वा 'पशुः', 'न' एव 'प्रमीयते' सर्वथा न म्रियते। अतस्तदर्थं 'नः' अस्मदीयं, 'अघं', 'अपशोशुचत्' अपेत्य दग्धं भवतु ॥

इति सायनाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके षष्ठप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

---

अथ द्वादशोऽनुवाकः ।

राजगव्या हननमुत्सर्गश्चेति द्वौ पक्षौ, तत्र हननपक्षे मन्त्राः पूर्वमेवोक्ताः, अथोत्सर्गपक्षे मन्त्रा उच्यन्ते। कल्पः। यद्युत्सृजन्ति, अपश्याम युवतिमाचरन्तीं, सपत्ना नः स्वस्तये इत्यन्ताभिः तिसृभिः प्रसव्यं राजगवीमग्नीन् प्रेतं दारुचितिं च परिणीयेति। तत्र प्रथमामाह। (१)"अपश्याम युवतिमाचरन्तीं०

यमानाम्। अन्धेन या तमसा प्रावृतासि प्राचीमवाचीमवयन्नरिष्ट्यै[१)]। [२)]मयैतां मांस्तां म्रियमाणा देवी सती पितृलोकं यदैषि। विश्ववारा नभसा संव्ययन्त्यु-

---

अवाचीमवयन्नरिष्ट्यै"[१)] इति। 'मृताय' मृतपुरुषार्थं, 'परिणीयमानां', 'जीवां' जीवन्तीं, 'युवतीं' यौवनवत्पुष्टाङ्गीं, युवतित्वेन भावितां वा वृद्धां, 'आचरन्तीं' आगच्छन्तीं, राजगवीं वयं 'अपश्याम'। 'या' राजगवी त्वं, 'अन्धेन तमसा' जरातिशयेन* मरणभीत्या वा दृष्टिप्रसारणाभावेन अत्यन्तनिविडेन तमसा, 'प्रावृता', भवसि। 'अरिष्ट्यै' अहिंसार्थं, 'प्राचीं' प्राङ्मुखीं, 'अवाचीं' अवाङ्मुखीं, तां राजगवीं, 'अवयन्' वयं अवैमः, जानीमः॥

अथ द्वितीयामाह। [२)]"मयैतां मांस्तां॰पयसा वृणीहि"[२)] इति। 'मया', 'म्रियमाणा' प्रपीड्यमाणा, राजगवी, 'एतां' रचितां त्वां, 'मांस्तां' मन्यतां, अहमनेन रचिता नतु मरिष्यामि इत्येवं निश्चिनोत्वित्यर्थः। हे राजगवि 'यत्' यस्मात्कारणात्, अनेनोपाकरणमात्रेण 'देवी' देवतात्मिका, 'सती', 'पितृलोकं', प्रति 'एषि' आगच्छसि। 'विश्ववारा' सर्वैर्वरणीया, प्रार्थनीया, 'नभसा' आकाशमार्गेण, 'संव्ययन्ती' द्युलोकं संवृण्वती, हे राजगवि तथाविधा त्वं 'नः' अस्माकं, 'उभौ लोकौ' एतल्लोकपरलोकौ,

---

* अन्धकारातिशयेनेति K चिह्नितपुस्तकपाठः।

भ्यो नो लोको पयसा वृणीहि[१]। [२]रयिष्ठामग्निं मधुमन्तमूर्मिणमूर्जस्वन्तं त्वा पयसोपसꣳसदेम। सꣳ रय्या सम् वर्चसा सचस्वा नः स्वस्तये[२]। [४]ये जीवा ये च मृता ये जाता ये च जन्त्याः। तेभ्यो घृतस्य धार-

---

'पयसा' क्षीरेण, अभ्या'वृणीहि' आवृतौ कुरु, क्षीरपूर्णौ कुरु इत्यर्थः॥

अथ हतीयामाह। [२]"रयिष्ठामग्निं ० सचस्वा नः स्वस्तये"[२] इति। हे अग्ने, वयं त्वां 'अग्निं', 'पयसा' पयोमुख्यभोग्यद्रव्यनिमित्तं, 'उपसꣳसदेम' समीपे सम्यक् प्राप्नुयाम। कीदृशमग्निं, 'रयिष्ठां' धने अवस्थितं, धनप्रदमित्यर्थः। 'मधुमन्तं' मधुरद्रव्ययुक्तं, 'ऊर्मिणं' उत्कर्षयुक्तं, 'ऊर्जस्वन्तं' बलवन्तं। हे अग्ने 'स्वस्तये' क्षेमार्थं, 'नः' 'अस्मान्,' 'रय्या' धनेन, 'संसचस्व' सम्यग्योजय, 'वर्चसा' कान्त्यापि, सꣳसचस्व॥

कल्पः। ये जीवा इत्यभिमन्त्र्य, इति। पाठस्तु। [४]"ये जीवा ये च ० मधुधारा व्युन्दती"[४] इति। 'ये जीवाः' अस्मत्कुले जीवन्तो ये पुरुषाः सन्ति, 'ये च मृताः', सन्ति, 'ये', अपि इदानीं 'जाताः' उत्पन्नाः, 'ये च जन्याः' इतः परं जनयितव्याः, 'तेभ्यो धारयितुं' तान् सर्वान् पोषयितुं, 'घृतस्य', सम्बन्धिनी 'मधुधारा'

यितुं मधुधारा व्युन्दती(४)। (५)माता रुद्राणां दुहिता वसूनाꣳ स्वसाऽऽदित्यानाममृतस्य नाभिः। प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट(५)। (६)पिबतूदकं तृणान्यत्तु। ओमुत्सृजत(६)॥ १२॥

---

मधुररसोपेता, तया धारया, 'व्युन्दती' विशेषेण क्लेदनयुक्ता वर्त्तते॥

कल्पः। मातारुद्राणामिति द्वाभ्यामुत्सृजन्ति, इति। तत्र प्रथमामाह। (५)"माता रुद्राणां दुहिता ० गामनागामदितिं वधिष्ट"(५) इति। इयं राजगवी 'रुद्राणां', एकादशसङ्ख्याकानां, 'माता' मातृस्थानीया, 'वसूनां', अष्टसङ्ख्याकानां, 'दुहिता' पुत्त्रीस्थानीया, 'आदित्यानां', द्वादशसङ्ख्याकानां, 'स्वसा' भगिनीस्थानीया, 'अमृतस्य नाभिः' ऐहिकस्यामुष्मिकसुखस्य च नाभिस्थानीया, अतः कारणात् 'चिकितुषे' ज्ञानयुक्ताय, 'जनाय' 'ऋत्विक्समूहाय, 'नु' क्षिप्रं, 'प्रवोचं', प्रकर्षेण कथयामि। किं कथ्यते इति तदुच्यते, 'अनागां' अपराधरहितां, 'अदितिं' अखण्डनीयां, 'गां' राजगवीं, अनुस्तरणरूपेणोपाकृतां, 'मा वधिष्ट' हे जनाः अस्या वधं मा कुरुत॥

अथ द्वितीयामाह। (६)"पिबतूदकं ० ओमुत्सृजत"(६) इति।

वधिष्ट, द्वे च॥ अनु० १२॥

परे युवाꣳसं, प्रविद्वान्। भुवनस्य, अभ्यावर्त्तस्व। अजोऽभागः, अयं वै, चतुश्चत्वारिꣳशत् (१)॥ य एतस्य, त्वत्, पञ्च(२)॥ प्रकेतुना, इदन्ते, नाके सुपर्णं, ये युध्यन्ते, तपसा, अश्मन्वतीरेवतीः सꣳरभध्वं, अष्टाविꣳशतिः,(३)॥ यन्ते,यत्ते,उत्तिष्ठाऽतः,इदन्ते, उत्तिष्ठ प्रेहि,अश्मन्,यद्वै, उद्वयं, अयं,पञ्चविꣳशतिः(४)॥ आयातु, त्रिꣳशत्(५)॥ वैश्वानरे, तस्मिन्, दृप्सः, इमं, अपेत, अहोभिः, युज्यन्तामग्नियाः। अदिते, पारं, वः, आप्यायस्व, सप्तविꣳशतिः(६)॥ उत्ते तभ्नोमि,अक्षितिः, तेभ्यः पृथिवि, षड्ढोता, परं, मे, शग्माः, पृथिव्याः, अन्तरिक्षस्य, द्वात्रिꣳशत्(७)॥ अपूपवान्, असौ, दश(८)॥ शत दश* एतास्ते, ते दिशः सर्वाः,अश्मन्, विꣳशतिः(९)॥ आरोहत, तनुवै क्रूरञ्चकार, पुनः, मृत्यवे, मा नोऽनुगात्, दध्महे, इमा नारीः, परिः, त्रयोविꣳशतिः(१०)॥ अप नः,सुक्षेत्रिया,प्र यन्नन्दिष्ठ,प्र यदग्नेः,प्र यत्ते अग्ने,त्वꣳ हि, द्विषः,स नः सिन्धुं, आपः

---

इयं राजगवी यत्र क्वापि स्वेच्छया 'उदकं पिबतु'। 'तृणानि', च

---

* आदर्शमात्रेषु एतद्वाक्यं वर्त्तते। परन्तु तदभिप्रायो नानुमीयते।

प्रवणात्, उद्वनात्, आनन्दाय, न व तच्च, चतुर्विंꣳश-
तिः(११) ॥ अपश्याम, वृणीहि, द्वादश । द्वादश (१२) ॥
परे युवाꣳसं, आयातुः एतास्तौ सप्तविंꣳशतिः (२७) ॥
ॐ तत्सत् । सन्त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च ।
ॐ शान्तिः शान्तिः शान्तिः । हरिः ॐ ॥

भचयतु । 'ओम्' वयमङ्गीकुर्मः । 'उत्सृजत' हे जनाः ब्रह्मणेनां राजगवीं परित्यजत ॥

यो दर्शपूर्णमासादिपितृमेधान्त ईरितः ।
कर्मकाण्डः समग्रोयं व्याख्यातो बालबुद्धये ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

समाप्तश्च षष्ठप्रपाठकः ॥

# तैत्तिरीय आरण्यके

## सप्तमप्रपाठके प्रथमोऽनुवाकः ॥

हरिः ॐ ।

शं नो मित्रः शं वरुणः । शं नो भवत्वर्य्यमा । शं न इन्द्रो बृहस्पतिः । शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि ॥ तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारं । ॐ शान्तिः शान्तिः शान्तिः ॥ १ ॥

सत्यं वदिष्यामि, पञ्च च ॥ अनु० १* ॥

अथ द्वितीयोऽनुवाकः ।

ॐ शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलं । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ॥ १ ॥

* पूर्व्वपठितानुवाकेषु शान्तिमन्त्रा अनुवाकेषु न गणिताः । अत्र तु तद्विपरीतम् ॥

शीक्षां, पञ्च ॥ अनु० २ ॥

---

अथ तृतीयोऽनुवाकः ।

सह नौ यशः। सह नौ ब्रह्मवर्चसं। अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः। पञ्चस्वधिकरणेषु। अधिलोकमधिज्योतिष*मधिविद्यमधिप्रजमध्यात्मं। ता महासꣳहिता इत्याचक्षते। अथाधिलोकं। पृथिवी पूर्वरूपं। द्यौरुत्तररूपं। आकाशः सन्धिः॥ १ ॥

वायुः सन्धानं। इत्यधिलोकं। अथाधिज्योतिषं*। अग्निः पूर्वरूपं। आदित्य उत्तररूपं। आपः सन्धिः। वैद्युतः सन्धानं। इत्यधिज्योतिषं*। अथाधिविद्यं। आचार्यः पूर्वरूपं॥ २ ॥

अन्तेवास्युत्तररूपं। विद्या सन्धिः। प्रवचनꣳ सन्धानं। इत्यधिविद्यं। अथाधिप्रजं। माता पूर्वरूपं। पितोत्तररूपं। प्रजा सन्धिः। प्रजननꣳ सन्धानं। इत्यधिप्रजं॥ ३ ॥

अथाध्यात्मं। अधरा हनुः पूर्वरूपं। उत्तरा हनुरुत्तररूपं। वाक् सन्धिः। जिह्वा सन्धानं। इत्यध्या-

---

* अधिज्यौतिषमिति सर्वत्र B, J, चिह्नितपुस्तकद्वयपाठः ।

त्मं । इतीमा मंहासꣳहिताः । य एवमेता महासꣳ-
हिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः ।
ब्रह्मवर्चसेनान्नाद्येन सुवर्गेण लोकेन ॥ ४ ॥

सन्धिः, आचार्य्यः पूर्व्वरूपं, इत्यधिप्रजं,लोकेन, ॥
अनु० ॥ ३ ॥

---

अथ चतुर्थोऽनुवाकः ।

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृ-
तात्सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य
देव धारणो भूयासं । शरीरं मे विचर्षणं । जिह्वा
मे मधुमत्तमा । कर्णाभ्यां भूरिविश्रुवं । ब्रह्मणः
कोशोऽसि मेधयाऽपिहितः । श्रुतं मे गोपाय । आ-
वहन्ती वितन्वाना ॥ १ ॥

कुर्वाणाऽचीरमात्मनः । वासांꣳसि मम गावश्च ।
अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां
पशुभिः सह स्वाहा । आ मा यन्तु ब्रह्मचारिणः स्वाहा ।
वि मा यन्तु ब्रह्मचारिणः स्वाहा । प्र मा यन्तु ब्रह्म-
चारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा ।
शमायन्तु ब्रह्मचारिणः स्वाहा ॥ २ ॥

यशो जनेऽसानि स्वाहा। श्रेयान् वस्यसोऽसानि स्वाहा। तं त्वा भग प्रविशानि स्वाहा। स मा भग प्रविश स्वाहा। तस्मिन्त्सहस्रशाखे। नि भगाऽहं त्वयि मृजे स्वाहा। यथाऽऽपः प्रवता यन्ति। यथा मासा अहर्जरं। एवं मां ब्रह्मचारिणः। धातरायन्तु सर्वतः स्वाहा॥ प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व॥ ३॥

वितन्वाना, शमायन्तु ब्रह्मचारिणः स्वाहा, धातरायन्तु सर्वतः स्वाहा, एकं च॥ अनु० ४॥

---

अथ पञ्चमोऽनुवाकः।

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः। तासामु ह स्मैतां चतुर्थीं। माहाचमस्यः प्रवेदयते। मह इति। तद्ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः। भूरिति वा अयं लोकः। भुव इत्यन्तरिक्षं। सुवरित्यसौ लोकः॥ १॥

मह इत्यादित्यः। आदित्येन वाव सर्वे लोका महीयन्ते। भूरिति वा अग्निः। भुव इति वायुः। सुवरित्यादित्यः। मह इति चन्द्रमाः। चन्द्रमसा

वाव सर्वाणि ज्योतींꣳषि महीयन्ते। भूरिति वा ऋचः। भुव इति सामानि। सुवरिति यजूꣳषि ॥ २ ॥

मह इति ब्रह्म। ब्रह्मणा वाव सर्वे वेदा महीयन्ते। भूरिति वै प्राणः। भुव इत्यपानः। सुवरिति व्यानः। मह इत्यन्नं। अन्नेन वाव सर्वे प्राणा महीयन्ते। ता वा एताश्चतस्रश्चतुर्द्धा। चतस्रश्चतस्रो व्याहृतयः। ता यो वेद॥ स वेद ब्रह्म। सर्वेऽस्मै देवा बलिमावहन्ति ॥ ३ ॥

असौ लोकः, यजूꣳषि, वेद, द्वे च॥ अनु० ५ ॥

---

अथ षष्ठोऽनुवाकः ।

स य एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एष स्तन इवावलम्बते। सेन्द्रयोनिः। यत्रासौ केशान्तो विवर्त्तते। व्यपोह्य शीर्षकपाले। भूरित्यग्नौ प्रतितिष्ठति। भुव इति वायौ ॥ १ ॥

सुवरित्यादित्ये। मह इति ब्रह्मणि। आप्नोति स्वाराज्यं। आप्नोति मनसस्पतिं। वाक्पतिश्चक्षुष्पतिः। श्रोत्रपतिर्विज्ञानपतिः। एतत् ततो भवति। आकाश-

शरीरं ब्रह्म। सात्म प्राणारामं मन आनन्दं। शान्तिसमृद्धममृतं॥ इति प्राचीनयोग्योपास्व॥ २॥

वायौ, अमृतं, एकञ्च॥ अनु० ६॥

---

अथ सप्तमोऽनुवाकः।

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशः*। अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि। आप ओषधयो वनस्पतय आकाश आत्मा। इत्यधिभूतं। अथाध्यात्मं। प्राणोऽपानो व्यान उदानः समानः। चक्षुः श्रोत्रं मनो वाक्त्वक्। चर्म माꣳसꣳ स्नावास्थि मज्जा। एतदधिविधाय ऋषिरवोचत्। पाङ्क्तं वा इदꣳ सर्वं॥ पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोतीति॥ १॥

सर्व्वं, एकञ्च॥ अनु० ७॥

---

अथ अष्टमोऽनुवाकः।

ओमिति ब्रह्म। ओमितीदꣳ सर्वं। ओमित्येतदनुकृतिर्ह स्म वा अप्योश्रावयेत्याश्रावयन्ति। ओमिति सामानि गायन्ति। ओꣳशोमिति शस्त्राणि शꣳस-

---

* अवान्तरदिशा इति B, J, चिह्नितपुस्तकद्वयपाठः।

न्ति। श्रोमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। श्रोमिति ब्रह्मा प्रसौति। श्रोमित्यग्निहोत्रमनुजानाति। श्रोमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति। ब्रह्मैवोपाप्नोति॥ १॥

श्रों, दश॥ अनु० ८॥

---

अथ नवमोऽनुवाकः।

ऋतञ्च स्वाध्यायप्रवचने च। सत्यञ्च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रञ्च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषञ्च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च॥ प्रजनश्च स्वाध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपो नित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः॥ १॥

प्रजा च स्वाध्यायप्रवचने च, षट् च॥ अनु० ९॥

अथ दशमोऽनुवाकः ।

अहं वृक्षस्य रेरिवा । कीर्त्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि । द्रविणꣳ सुवर्चसं । सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनं॥१॥

अहꣳ, षट् ॥ अनु० १० ॥

---

अथ एकादशोऽनुवाकः ।

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मञ्चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यं । धर्मान्न प्रमदितव्यं । कुशलान्न प्रमदितव्यं । भूत्यै न प्रमदितव्यं । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं ॥ १ ॥

देवपितृकार्याभ्यां न प्रमदितव्यं । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकꣳ सुचरितानि । तानि त्वयोपास्यानि ॥ २ ॥

नो इतराणि। एके चास्मच्छ्रेयाꣳसो ब्राह्मणाः। तेषां त्वयासनेन प्रश्वसितव्यं। श्रद्धया देयं। अश्रद्धयाऽदेयं। श्रिया देयं। ह्रिया देयं। भिया देयं। संविदा देयं। अथ यदि ते कर्म विचिकित्सा वा वृत्तविचिकित्सा वा स्यात्॥ ३॥

ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते तत्र वर्त्तेरन्। तथा तत्र वर्त्तेथाः। अथाभ्याख्यातेषु। ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्म्मकामाः स्युः। यथा ते तेषु वर्त्तेरन्॥ तथा तेषु वर्त्तेथाः। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनं। एवमुपासितव्यं। एवमु चैतदुपास्यं॥ ४॥

स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं, तानि त्वयोपास्यानि, स्यात्, तेषु वर्त्तेरन्, सप्त च॥ अनु० ११॥

---

अथ द्वादशोऽनुवाकः।

शन्नो मित्रः शं वरुणः। शन्नो भवत्वर्यमा। शन्न इन्द्रो बृहस्पतिः। शन्नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वा-

मेव प्रत्यक्षं ब्रह्माऽवादिषं। ऋतमवादिषं। सत्यम-
वादिषं॥ तन्मामावीत्। तद्वक्तारमावीत्। आवी-
न्माम्। आवीद्वक्तारम्। ॐ शान्तिः शान्तिः शान्तिः॥ १॥

सत्यमवादिषं, पञ्च च॥ अनु० १२॥

शन्नः,(१)॥ शीक्षाम्,(२)॥ सह नौ,(३)॥ यश्छन्दसां,
(४)॥ भूः,(५)॥ स यः,(६)॥ पृथिवी,(७)॥ ओमिति,
(८)॥ ऋतञ्च,(९)॥ अहं,(१०)॥ वेदमनूच्य,(११)॥
शन्नः, द्वादश॥ १२॥

शन्नः, मह इत्यादित्यः, नो इतराणि, त्रयोविंश-
तिः॥ २३॥

समाप्तः सप्तमः प्रपाठकः।

# तैत्तिरीये आरण्यके

अष्टमप्रपाठके प्रथमोऽनुवाकः।

हरिः ॐ

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु। मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः॥

ॐ ब्रह्मविदाप्नोति परं। तदेषाऽभ्युक्ता। सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान्त्सह ब्रह्मणा विपश्चितेति। तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नं। अन्नाद्रेतः। रेतसः पुरुषः*। स वा एष पुरुषोऽन्नरसमयः। तस्येदमेव

---

* अन्नाद्रेतः। रेतसः पुरुष इति परिवर्त्ते अन्नात्पुरुष इति B. J चिह्नितपुस्तकद्वये पाठः।

शिरः। अयं दक्षिणः पक्षः। अयमुत्तरः पक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥ अनु० १॥

---

अथ द्वितीयोऽनुवाकः।

अन्नाद्वै प्रजाः प्रजायन्ते। याः काश्च पृथिवीꣳ श्रिताः। अथो अन्नेनैव जीवन्ति। अथैनदपि यन्त्यन्ततः। अन्नꣳ हि भूतानां ज्येष्ठं। तस्मात्सर्वौषधमुच्यते। सर्वं वै तेऽन्नमाप्नुवन्ति। येऽन्नं ब्रह्मोपासते। अन्नꣳ हि भूतानां ज्येष्ठं। तस्मात्सर्वौषधमुच्यते। अन्नाद्भूतानि जायन्ते। जातान्यन्नेन वर्द्धन्ते। अद्यतेऽत्ति च भूतानि। तस्मादन्नं तदुच्यत इति। तस्माद्वा एतस्मादन्नरसमयात्। अन्योऽन्तर आत्मा प्राणमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधतां। अन्वयं पुरुषविधः। तस्य प्राण एव शिरः। व्यानो दक्षिणः पक्षः। अपान उत्तरः पक्षः। आकाश आत्मा। पृथिवी पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥ अनु० २॥

अथ तृतीयोऽनुवाकः।

प्राणं देवा अनुप्राणन्ति। मनुष्याः पशवश्च ये। प्राणो हि भूतानामायुः। तस्मात्सर्वायुषमुच्यते। सर्वमेव त आयुर्यन्ति। ये प्राणं ब्रह्मोपासते। प्राणो हि भूतानामायुः। तस्मात्सर्वायुषमुच्यत इति। तस्यैष एव शारीर आत्मा। यः पूर्व्वस्य। तस्माद्वा एतस्मात्प्राणमयात्। अन्योऽन्तर आत्मा मनोमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य* पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य यजुरेव शिरः। ऋग्दक्षिणः पक्षः। सामोत्तरः पक्षः। आदेश आत्मा। अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥ अनु० ३॥

---

अथ चतुर्थोऽनुवाकः।

यतो वाचो निवर्त्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचनेति। तस्यैष एव शारीर आत्मा। यः पूर्व्वस्य। तस्माद्वा एतस्मान्मनोमयात्। अन्योऽन्तर आत्मा वि-

---

* एतस्येति B चिह्नितपुस्तकपाठः।

ज्ञानमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधतां। अन्वयं पुरुषविधः। तस्य श्रद्धैव शिरः। ऋतं दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥ अनु० ४॥

---

अथ पञ्चमोऽनुवाकः।

विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपि च। विज्ञानं देवाः सर्वे। ब्रह्म ज्येष्ठमुपासते। विज्ञानं ब्रह्म चेद्वेद। तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा। सर्वान् कामान्त्समश्नुत इति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधतां। अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥ अनु ५॥

अथ षष्ठोऽनुवाकः।

असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। अथातोऽनुप्रश्नाः। उताविद्वानमुं लोकं प्रेत्य। कश्चन गच्छतीऽ। आहो विद्वानमुं लोकं प्रेत्य। कश्चित्समश्नुताऽउ। सोऽकामयत। बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदꣳ सर्वमसृजत। यदिदं किञ्च। तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्। निरुक्तञ्चानिरुक्तञ्च। निलयनञ्चानिलयनञ्च। विज्ञानञ्चाविज्ञानञ्च। सत्यञ्चानृतञ्च सत्यमभवत्। यदिदं किञ्च। तत्सत्यमित्याचक्षते। तदप्येष श्लोको भवति॥ अनु० ६॥

---

अथ सप्तमोऽनुवाकः।

असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मानꣳ स्वयमकुरुत। तस्मात्तत्सुकृतमुच्यत इति। यद्वै तत्सुकृतं। रसो वै सः। रसꣳ ह्येवायं लब्ध्वाऽऽनं-

न्द्री भवति। को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषो मन्वानस्य। तदप्येष श्लोको भवति॥ अनु० ७॥

---

अथ अष्टमोऽनुवाकः।

भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चम इति। सैषाऽऽनन्दस्य मीमाꣳसा भवति। युवा स्यात् साधुयुवाऽध्यायिकः। आशिष्ठो दृढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः। ते ये शतं मानुषा आनन्दाः॥ १॥

स एको मनुष्यगन्धर्व्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं मनुष्यगन्धर्वाणामानन्दाः। स एको देवगन्धर्वाणामानन्दः। श्रोत्रियस्य

चाकामहतस्य। ते ये शतं देवगन्धर्वाणामानन्दाः। स एकः पितृणां चिरलोकलोकानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं पितृणां चिरलोकलोकानामानन्दाः। स एक आजानजानां देवानामानन्दः॥ २॥

श्रोत्रियस्य चाकामहतस्य। ते ये शतमाजानजानां देवानामानन्दाः। स एकः कर्मदेवानां देवानामानन्दः। ये कर्मणा देवानपि यन्ति। श्रोत्रियस्य चाकामहतस्य। ते ये शतं कर्मदेवानां देवानामानन्दाः। स एको देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं देवानामानन्दाः। स एक इन्द्रस्यानन्दः॥ ३॥

श्रोत्रियस्य चाकामहतस्य। ते ये शतमिन्द्रस्यानन्दाः। स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं बृहस्पतेरानन्दाः। स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य॥ ४॥

स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः।

स य एवंवित्। अस्माल्लोकात्प्रेत्य। एतमन्नमयमात्मानमुपसङ्क्रामति। एतं प्राणमयमात्मानमुपसङ्क्रामति। एतं मनोमयमात्मानमुपसङ्क्रामति। एतं विज्ञानमयमात्मानमुपसङ्क्रामति। एतमानन्दमयमात्मानमुपसङ्क्रामति। तदप्येष श्लोको भवति॥ अनु० ८॥

---

अथ नवमोऽनुवाकः।

यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चनेति। एतꣳ ह वाव न तपति। किमहꣳ साधु नाकरवं। किमहं पापमकरवमिति। स य एवं विद्वानेते आत्मानꣳ स्पृणुते। उभे ह्येवैष एते आत्मानꣳ स्पृणुते। य एवं वेद। इत्युपनिषत्॥ अनु० ९॥

ब्रह्मवित्, इदं, अयं, इदं, एकविꣳशतिः(१)। अन्नात्, अन्नरसमयात्, प्राणः, व्यानः, अपानः, आकाशः, पृथिवी पुच्छꣳ,षड्विꣳशतिः(२)। प्राणं, यजुः, ऋक्,साम,आदेशः,अथर्वाङ्गिरसः पुच्छं,द्वाविꣳशतिः(३)। यतः, श्रद्धा, ऋतꣳ, सत्यं, योगः, महः, अष्टादश(४)।

विज्ञानं, प्रियं मोदः, प्रमोदः, आनन्दः, ब्रह्म पुच्छं, द्वा-
विंꣳशतिः(५)। असन्नेव, अष्टाविंꣳतिः,(६)। असत्,
षोडश(७)। भीषास्मात्, मानुषः, मनुष्यगन्धर्वाणां,
देवगन्धर्वाणां, पितृणां, चिरलोकलोकानां, आजा-
नजानां, कर्मदेवानां देवानां, इन्द्रस्य, बृहस्पतेः,
प्रजापतेः, ब्रह्मणः, स यश्च, सङ्क्रामति, एकपञ्चा-
शत्(८)। यतः, कुतश्चन, एकादश(९)॥

ब्रह्मवित्, य एवं वेद, इत्युपनिषत्* ॥

सह नाववतु। सह नौ भुनक्तु। सह वीर्य्यं कर-
वावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै।
ॐ शान्तिः शान्तिः शान्तिः।

इति ब्रह्मानन्दवल्ली ॥ ॐ तत्सत् ॥

समाप्तोऽष्टमः प्रपाठकः।

---

* B, J सञ्ज्ञकपुस्तकद्वये ब्रह्मविदित्यादिपाठो नास्ति।

नवमप्रपाठके प्रथमोऽनुवाकः ।

हरिः ॐ ।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥

भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत्प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ अनु० १ ॥

अथ द्वितीयोऽनुवाकः ।

अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति ।

अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ अनु० २ ॥

---

अथ तृतीयोऽनुवाकः ।

प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ अनु० ३ ॥

---

अथ चतुर्थोऽनुवाकः ।

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति ।

तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा ॥ अनु० ४ ॥

अथ पञ्चमोऽनुवाकः।

विज्ञानं ब्रह्मेति व्यजानात्। विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते। विज्ञानेन जातानि जीवन्ति। विज्ञानं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा। अनु० ५ ॥

अथ षष्ठोऽनुवाकः।

आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति। सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिता। स य एवं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति।

महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्त्या॥ अनु॰ ६॥

---

अथ सप्तमोऽनुवाकः।

अन्नं न निन्द्यात्। तद्व्रतं। प्राणो वा अन्नं। शरीरमन्नादं। प्राणे शरीरं प्रतिष्ठितं। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितं। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति। प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्त्या॥ अनु॰ ७॥

---

अथाष्टमोऽनुवाकः।

अन्नं न परिचक्षीत। तद्व्रतं। आपो वा अन्नं। ज्योतिरन्नादं। अप्सु ज्योतिः प्रतिष्ठितं। ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितं। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान् कीर्त्त्या॥ अनु॰ ८॥

---

अथ नवमोऽनुवाकः ।

अन्नं बहु कुर्वीत । तद्व्रतं । पृथिवी वा अन्नं । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितं । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्त्या ॥ अनु० ९ ॥

---

अथ दशमोऽनुवाकः ।

न कञ्चन वसतौ प्रत्याचक्षीत । तद्व्रतं । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नꣳ राद्धं । मुखतोऽस्मा अन्नꣳ राध्यते । एतद्वै मध्यतोऽन्नꣳ राद्धं । मध्यतोऽस्मा अन्नꣳ राध्यते । एतद्वा अन्ततोऽन्नꣳ राद्धं । अन्ततोऽस्मा अन्नꣳ राध्यते ॥ १ ॥

य एवं वेद । क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्म्मेति हस्तयोः । गतिरिति पाद-

योः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः ।
अथ दैवीः। तृप्तिरिति वृष्टौ । बलमिति विद्युति ॥ २ ॥

यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजा-
तिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । तत्प्रति-
ष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपा-
सीत । महान् भवति । तन्मन इत्युपासीत । मा-
नवान् भवति ॥ ३ ॥

तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मे-
त्युपासीत । ब्रह्मवान् भवति । तद्ब्रह्मणः परिमर
इत्युपासीत । पर्य्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि
येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे । यश्चासा-
वादित्ये । स एकः ॥ ४ ॥

स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमय-
मात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुपसङ्क्रम्य ।
एतं मनोमयमात्मानमुपसङ्क्रम्य । एतं विज्ञानमय-
मात्मानमुपसङ्क्रम्य । एतमानन्दमयमात्मानमुपसङ्क्र-
म्य । इमाँल्लोकान् कामान्नी कामरूप्यनुसञ्चरन् ।
एतत्साम गायन्नास्ते । हा३ वु हा३ वु हा३ वु ॥ ५ ॥

अहमन्न[१]* महमन्न[१]* महमन्नं[१]*। अहमन्ना-दो[२]* अहमन्नादो[२]* अहमन्नादः। अहꣳ श्लो[१]*क-कृदहꣳ श्लो[१]*ककृदहꣳ श्लो[१]*ककृत्। अहमस्मि प्रथमजा ऋताइस्य। पूर्व्वं देवेभ्योऽमृतस्य नाइभा-यि। यो मा ददाति स इदेव माऽऽवाः। अहमन्न-मन्नमदन्त माइऽद्मि। अहं विश्वं भुवनमभ्यभवाꣳ। सुवर्न ज्योतीः†। य एवं वेद। इत्युपनिषत् ॥ ६ ॥ अनु० १० ॥

राध्यते, दिद्युति, मानवान् भवति, एकः, हाइवु, य एवं वेद, एकञ्च‡ ॥

भृगुः, तस्मै, यतो वै, विशन्ति तद्विजिज्ञासस्व तत्, त्रयोदश(१)। अन्नं,(२। प्राणः,(३)। मनः,(४)। विज्ञानं, तद्विज्ञाय, तं, तपसा, द्वादश, द्वादश,(५)। आनन्दः, इति, सैषा, दश,(६)। अन्नं न निन्द्यात्, प्राणः, शरीरं,(७)। अन्नं न परिचक्षीत, आपः,

---

* एते अङ्काः B, J चिह्नितपुस्तकद्वये न सन्ति।

† ज्योतिरिति ऋलेकारान्तः पाठो भाष्यसम्मतः।

‡ राध्यते इत्याद्यनुवाकसङ्ग्रहः B, J चिह्नितपुस्तकद्वये नास्ति।

ज्योतिः,(८)। अन्नं बहु कुर्वीत, पृथिव्यामाकाशः, एकादशैकादश(९)। न कश्चनैकषष्टिः, दश* ॥ १० ॥

सह नाववतु। सह नौ भुनक्तु। सह वीर्य्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ भृगुरित्युपनिषत्† । शन्नो मित्रः ॥ आविदक्कारं ॥ ॐ शान्तिः ॥

इति तैत्तिरीयोपनिषत्सम्पूर्णा ॥

समाप्तो नवमः प्रपाठकः ॥ ० ॥

---

* न कश्चनैकषष्टिरेकान्नविंशतिरेकान्नविंशतिः। इति B चिह्नितस्य मुद्रितस्य च पुस्तकस्य पाठः।

† भृगुरित्युपनिषदित्यादिपाठः B, J चिह्नितपुस्तकद्वये नास्ति। मुद्रितपुस्तके तु वर्त्तते।

श्रीगणेशाय नमः।

# तैत्तिरीये आरण्यके

## दशमप्रपाठके प्रथमोऽनुवाकः।

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः॥ हरिः ॐ।

(१)अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे म-

---

## तैत्तिरीये आरण्यकभाष्ये

### दशमप्रपाठके प्रथमोऽनुवाकः।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम्॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
वारुण्युपनिषद्युक्ता ब्रह्मविद्या ससाधना।
याज्ञिक्यां खिलरूपायां सर्वशेषोऽभिधीयते॥

यथा बृहदारण्यके सप्तमाष्टमाध्यायौ खिलकाण्डत्वेनाचार्यै-

हतो महीयान्। शुक्रेण ज्योतींषि समनुप्रविष्टः

---

हृदाहृतौ, तथेयं नारायणीया व्याख्या याज्ञिक्युपनिषदपि खिलकाण्डरूपा तल्लक्षणोपेतत्वात्। कर्म्मोपासनब्रह्मकाण्डेषु त्रिष्वपि यद्यद्वक्तव्यमवशिष्टं तस्य सर्वस्याभिधानेन प्रकीर्णकरूपं खिलत्वं। बृहदारण्यके सप्तमाध्याये पूर्णमदः पूर्णमित्यादिना ब्रह्मतत्त्वमभिहितं। ॐ खं ब्रह्मेत्यादिभिरष्टमाध्यायगतैस्तु यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेदेत्यादिभिर्वाक्यैर्नानाविधान्युपासनान्यभिहितानि। स यः कामयेत महान् प्राप्नुयामित्यादिना मन्थाख्यं कर्माऽभिहितं। तथा पुत्रविशेषादिकामनायुक्तानां तत्कर्माण्यभिहितानि। एवमत्राप्यम्भस्य पारे इत्यादिना ब्रह्मतत्त्वमभिहितं। आदित्यो वा एष एतन्मण्डलमित्यादिनोपासनमभिहितं। भूरन्नमग्नये पृथिव्यै स्वाहेत्यादिना कर्माण्यभिहितानि। तत्र कर्मणां बाहुल्याद्याज्ञिकीत्युच्यते। उपक्रमे ब्रह्मतत्त्वाभिधानादुपसंहारे च ब्रह्मज्ञानसाधनानां सत्यादीनां सन्यासान्तानामभिधानादुपनिषदित्युच्यते। तदीयपाठसम्प्रदायस्तु देशविशेषेषु बहुविध उपलभ्यते। तत्र यद्यपि शाखाभेदः कारणं, तथापि तैत्तिरीयशाखाध्यापकैस्तत्तद्देशनिवासिभिः शिष्टैरादृतत्वात् सर्व्वोऽपि पाठ उपादेय एव। तत्र द्रविडानां चतुःषष्ट्यनुवाकपाठः। आन्ध्राणामशीत्यनुवाकपाठः। कर्णाटकेषु केषाञ्चिच्चतुःसप्ततिपाठः। अपरेषां नवाशीतिपाठः। तत्र वयं पाठान्तराणि यथासम्भवं सूचयन्तोऽशीतिपाठं प्राधान्येन व्याख्यास्यामः। तत्र प्रथमानुवाकस्यादौ काश्चिदृचो ब्रह्मत्वं प्रतिपाद-

प्रजापतिश्चरति गर्भे अन्तः(१)। (२)यस्मिन्निद॒ꣳ सं च वि चैति सर्वं यस्मिन् देवा अधि विश्वे निषेदुः। तदेव

यन्ति। तासु प्रथमामृचमाह। (१)"अम्भस्य पारे ० चरति गर्भे अन्तः"(१) इति। 'अम्भस्य' बहुविधसमुद्रमध्यवर्त्तिजलस्य, 'पारे' परतीरे, यः 'महान्' प्रौढः, लोकालोकपर्वतादिः, ततः अपि 'महीयान्' महत्तरः, अयं परमेश्वरः, 'भुवनस्य' पृथिव्यादिलोकस्य, 'मध्ये', यः 'महान्' मेर्वादिः, ततोपि महत्तरः, 'नाकस्य पृष्ठे' स्वर्गस्योपरि, यः 'महान्' ब्रह्मलोकादिः, ततोपि महत्तरः। तथा छन्दोगा आमनन्ति। 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः' इति; 'स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेद॒ꣳ सर्वं' इति च। स परमेश्वरः। 'शुक्रेण' भासकेन जीवचैतन्यरूपेण, 'ज्योतींषि' निर्मलत्वेन भासकानि अन्तःकरणानि सम्यक् 'अनुप्रविष्टः'। तत् सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः। 'गर्भे' ब्रह्माण्डरूपे, 'अन्तः' मध्ये, 'प्रजापतिः' विराड्रूपो भूत्वा, 'चरति' वर्त्तते। विराड्रूपमाथर्वणिका आमनन्ति। 'अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृतास्य वेदा वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी' इत्यादि। अग्निः, प्रकाशयुक्तो द्युलोकः, सर्व्वव्यापी परमेश्वरः। वस्तुतः तथाविध एव सन् मायावशाद् देहेषु जीवरूपेण ब्रह्माण्डे च विराड्रूपेणावस्थित इत्यर्थः॥

द्वितीयामृचमाह। (२)"यस्मिन्निद॒ꣳ ० परमे व्योमन्"(२)

भूतं तद् भव्यमा इदं तदक्षरे परमे व्योमन्⁽¹⁾। ⁽²⁾येनावृतं खञ्च दिवं महीञ्च येनादित्यस्तपति तेजसा

---

इति। 'इदं' सर्वं जगद्, 'यस्मिन्' अव्याकृते मूलकारणे, 'समेति च व्येति च' सृष्टिकाले समुत्पन्नं सत् सङ्गतमपि भवति। सं चेति पाठे सुखमपि प्राप्नोतीति व्याख्येयं। व्यत्ययेन वा गतमिति द्रष्टव्यं। संहारकाले विलीनं सत् विगतमपि भवति। 'अधि' अधिका हिरण्यगर्भविराडादयोऽग्नीन्द्रादयश्च 'विश्वे' सर्वे 'देवाः', 'यस्मिन्' अव्यक्ते, मूलकारणे 'निषेदुः' नितरामाश्रित्यावस्थिताः। 'तदेव' सृष्टिसंहारयोर्देवानाञ्च आधारभूतं अव्याकृतमेव। 'भूतं' अतीतं जगत्, 'भव्यं' भविष्यज्जगत्, 'इदं' वर्त्तमानमपि जगत्, 'तद्' तदेवाव्याकृतं। 'आ' इत्याश्चर्ये, आसीदिति प्रसिद्धिर्वा। तस्यान्तर्गतं तादृशमव्याकृतं, 'अक्षरे' विनाशरहिते, 'परमे' उत्कृष्टे, 'व्योमन्' आकाशवदमूर्त्ते परमात्मनि, वर्त्तते इति शेषः॥

तृतीयामृचमाह। ⁽²⁾"येनावृतं ० परमे प्रजाः"⁽²⁾ इति। वाजसनेयिनो गार्ग्यब्राह्मणे परमात्मन्याश्रिते यदव्याकृतमभिधीयते, एतस्मिन्नेव खल्वक्षरे गार्ग्य आकाश ओतश्च प्रोतश्चेति तत्पूर्वस्यामृच्यभिहितं, अस्यां तु तेनाव्याकृतेनोपहितं, तेन कारणेन व्याप्ता अत एवोक्ताः, सर्व्वेऽपि सद्रूपतया भासन्ते। 'येन' परमेश्वरेण, अनुगृहीतः, 'आदित्यः', 'तेजसा' स्वकीयं मण्डलया भास्वद्रूपेण* 'भ्राजसा च' प्रसारितरश्मिरूपया दीप्त्या च, 'तपति' सर्वमिदं

---

* भास्वरूपेण इति P चिह्नितपुस्तकपाठः।

आजसा च । यमन्तः समुद्रे कवयो वयन्ति तदक्षरे[*] परमे प्रजाः[३] । [४]यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यचसर्ज भूम्यां । यदोषधीभिः पुरुषान्

---

जगदभितप्तं प्रकाशितञ्च करोति । 'कवयः' तत्त्वविदः, 'यं' परमात्मानं, 'समुद्रे अन्तः' समुद्रोपलक्षितस्य कृत्स्नस्य जगतो मध्ये, तन्तूनिव 'वयन्ति'. यथा पटस्वरूपे तन्तवोऽनुवताः तथा जगति ब्रह्मतत्त्वमनुगतं पश्यन्ति । तच्च ब्रह्मतत्त्वं 'अक्षरे' विनाशरहिते, 'परमे' उत्कृष्टे निजस्वरूपे अवस्थाय 'प्रजाः', उत्पादयन्तीति शेषः । स्वरूपेऽवस्थानं छन्दोगाः प्रश्नोत्तराभ्यामामनन्ति । "स भगवः कस्मिन् प्रतिष्ठितः" इति "स्वे महिम्नीति" आधारान्तरराहित्यमेव, स्वस्मिन्नेव अवस्थानं । "यदक्षर" इति पाठेऽपि तच्छब्दोऽर्थत्वेन व्याख्येयः ॥

चतुर्थीमृचमाह । [४]"यतः प्रसूता जगतः ० भूतानि चराचराणि"[४] इति । पूर्वमन्त्रे जगत्कारणमव्याकृतोपहितं यच्चैतन्यमुक्तं तस्यात्र जगदुत्पादनञ्च प्रपञ्च्यते । "आत्मन आकाशः सम्भूतः" इत्यारभ्य "अन्नात् पुरुषः" इत्यन्तेन ग्रन्थेन पूर्वमभिहिता 'जगतः प्रसूतिः' । 'प्रसूतिः' सूतिः उत्पत्तिः, यस्मादव्याकृतोपहिताच्चैतन्यात्, 'प्रसूता' प्रवृत्ता, तच्चैतन्यं कारणभूतं 'तोयेन' जलोपलक्षितेन भूपञ्चकेन, 'जीवान्' मनुष्यगवादीन् जीवदेहान्, 'व्यससर्ज' 'भूम्यां'

---

* यदक्षरे इति J, M, N, O चिह्नितपुस्तकचतुष्टयपाठः ।

पशूꣳश्च विवेश भूतानि चराचराणि(४)। (५)अतः परं नान्यदणीयसꣳ हि परात्परं यन्महतो महान्तं। यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्(५)॥ ॥ १ ॥

(६)तदेवर्त्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनां।

---

जगत्यां विशेषेणोत्सृजत्। व्यचसर्जेति पाठेऽपि तथैव व्याख्येयं। तथा चैतन्यरूपं मायाविशिष्टं कारणं 'ओषधीभिः' व्रीहियवादिभिरूपलक्षितमन्नं भूत्वा, मनुष्यान्, 'पशूꣳश्च', तदुपलक्षितस्थावरजङ्गमशरीराणि सर्वाण्यपि प्र'विवेश' वृक्षादिषु स्थावरेषु वृष्टिजलरूपेण प्रवेशः। तेन चैतन्येन सर्वं जगत् परिदृश्यतमिति शेषः॥

पञ्चमीमृचमाह। (५)"अतः परं ० तमसः परस्तात्"(५)इति। पूर्ववाक्योक्तेन जगत्कारणत्वाकारेणोपलक्षितं शुद्धं वस्तु अत्र निरूप्यते। यत् वस्तु, 'परात्' उत्कृष्टात् हिरण्यगर्भादेरपि, 'परं' अत्यन्तमुत्कृष्टं, 'यत्', च 'महतः' आकाशादेः, 'महान्तं', 'यत्', अपि 'एकं' सजातीयविजातीयरहितं, 'अव्यक्तं' इन्द्रियागम्यं, 'अनन्तरूपं' देशकालवस्तुपरिच्छेदरूपं, 'विश्वं' जगदात्मकं, 'पुराणं' अनादिसिद्धं, 'तमसः परस्तात्' अज्ञानात् पृथग् वर्त्तते। 'अतः' वस्तुनः, 'अन्यत्' वस्तु, 'अणीयसं' अत्यन्तदुर्लक्ष्यं, 'परं' उत्कृष्टं 'न', अस्ति॥

इष्टापूर्त्तं बहुधा जातं जायमानं विश्वं बिभर्त्ति भुवनस्य नाभिः(१)। (०)तदेवाग्निस्तद्वायुस्तत्सूर्य्यस्तदु चन्द्रमाः। तदेव शुक्रममृतं तद् ब्रह्म तदापः स प्रजापतिः(०)।

---

विश्वविशेषणेन यत्सर्वं जगदात्मकत्वमुक्तं तदेतत् षष्ठीसप्तमीभ्यां ऋग्भ्यां प्रपञ्चयति। (१)"तदेवर्त्तं ० भुवनस्य नाभिः(१)। (०)तदेवाग्निस्तद्वायुः ० स प्रजापतिः"(०) इति। मनसा यथा वस्तुचिन्तनं 'ऋतं' वा तदुच्चारणं 'सत्यं', एतदुभयमपि 'तदेव' अधिष्ठानरूपं ब्रह्मैव, 'कवीनां' वेदशास्त्रपारङ्गतानां, परमुत्कृष्टं प्रमाणत्वेनादरणीयं यद् 'ब्रह्म' वेदरूपं वस्तु, तदपि स्वाधिष्ठानभूतपरब्रह्मात्मकमेव। 'इष्टं' दर्शपूर्णमासादि श्रौतं कर्म्म। 'पूर्त्तं' वापीकूपादिस्मार्त्तं कर्म, तदुभयमपि 'तदेव ब्रह्म'। तथा 'बहुधा जातं' पूर्वकल्पतत्पूर्वकल्पादिरूपेण बहुप्रकारमुत्पन्नं, इदानीमपि तथा 'जायमानं', 'विश्वं' सर्वं जगत्, 'भुवनस्य नाभिः' चक्रनाभिवत् सर्वस्य लोकस्याधारभूतः परमात्मा, 'बिभर्त्ति'। अत आधेयं सर्वमधिष्ठानस्वरूपमेव। अग्निवायुसूर्यचन्द्रमसोऽपि 'तदेव'। तथा 'शुक्रं' दीप्यमानं नक्षत्रादिकं, 'अमृतं' देवैः सेव्यं पीयूषं, एतदुभयमपि 'तदेव' अधिष्ठानरूपमेव, यद् 'ब्रह्म' हिरण्यगर्भरूपं, 'तत्', अपि तदधिष्ठानात्मकमेव, याः 'आपः' जलोपलक्षितानि पञ्चभूतानि, यश्च प्रजापतिर्विराड्रूपः, तदुभयमधिष्ठानरूपमेव। यद्यत् जगत् अविद्यादृष्ट्या नानाविधं प्रतीयते, तत्सर्वं विद्यादृष्ट्या अखण्डैकरसं

(८)सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि। कला मु-हूर्त्ताः काष्ठाश्चाहोरात्राश्च सर्वशः(८)।(९)अर्द्धमासा मासा

---

ब्रह्मैव। अतएव दृष्टिद्वयमभिप्रेत्य वाजसनेयिन आमनन्ति। 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति इत्यविद्यादृष्टिः, यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्' इति विद्यादृष्टिः। ननु 'प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तमः' इति विष्णुपुराणे कालस्य नित्यत्वाभिधानात्, विद्यादृष्ट्यापि ब्रह्मरूपत्वं नास्तीत्याशङ्क्याह। पुराणस्याविद्यादृष्टिविषयत्वमभिप्रेत्य विद्यादृष्ट्याकालस्य ब्रह्मत्व-विवक्षया ब्रह्मणः सकाशादुत्पत्तिः॥

अष्टमीनवमीभ्यां दर्शयति। (८)"सर्वे निमेषाः ० अहोरात्राश्च सर्वशः"(८)। (९)"अर्द्धमासा मासाः ० अन्तरिक्षमथो सुवः"(९) इति। निमिर्नाम जनकस्य पूर्वज आद्यो मिथिलेश्वर आ-सीदिति उपनिषदि वर्ण्यते, देववरप्रसादात् येषु अक्षिपक्ष्मपातेषु ते निमिषाः, त एव 'निमेषाः', इत्युच्यन्ते, पक्ष्मपातपरिमिताः सूक्ष्मकालविशेषा इत्यर्थः। ते 'सर्वे', अपि 'विद्युतः' स्वयम्प्रकाश-मानात्, 'पुरुषात्' परिपूर्णात् परमेश्वरात्, 'अधिजज्ञिरे' आधिक्ये-नोत्पन्नाः। निमेषेभ्योऽपि अधिकाः कालविशेषाः 'काष्ठाः'। ता-भ्योऽप्यधिकाः 'कलाः'। ताभ्योऽधिकाः 'मुहूर्त्ताः'। तेभ्योऽप्यधिकाः 'अहोरात्राः'। तथाच पूर्वग्रन्थकारैरुक्तं।

'अष्टादश निमेषास्तु काष्ठास्त्रिंशत्तु ताः कलाः।

ऋतवः संवत्सरश्च कल्पन्ताम्* । स आपः प्रदुघे उभे इमे अन्तरिक्षमथो सुवः(९) । (१०)नैनमूर्द्ध्वं न तिर्यञ्चं न

---

तास्तु त्रिंशत् क्षणस्ते तु मुहूर्त्तो द्वादशास्त्रियाम् ॥
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च' ।

'च'कारावनुक्तसमुच्चयार्थौ । तदेव 'सर्वशः', इत्यनेन स्पष्टीक्रियते । लवत्रुट्यादिकाः सर्वे कालविशेषाः समुत्पन्ना इत्यर्थः । लवत्रुट्योः स्वरूपं पूर्वाचार्यैरुक्तम् ।

'नलिनीपत्रसंहत्यां सूक्ष्मसूच्याऽभिभेदने ।
दले दले तु यः कालः स कालो लववाचकः ॥
लवैस्त्रुटिः स्यात् त्रिंशद्भिः' इति ।

'अर्द्धमासाः' शुक्लकृष्णपक्षरूपाः । 'मासाः', चैत्रवैशाखाद्याः । 'ऋतवः' वसन्तग्रीष्माद्याः । ते सर्वेऽपि परमेश्वरात् 'अधिजज्ञिरे' । तथा 'संवत्सरश्च', प्रभवति, प्रभवादिरूपः । 'कल्पताम्' परमेश्वरादुत्पन्नः । अत एव स्वप्रयोजनसमर्थो भवति । कल्पन्तामितिबहुवचनपाठे सर्वेऽपि कालविशेषाः स्वस्वप्रयोजनसमर्था इति योज्यम् । 'सः' परमेश्वरः, स्वनिर्मितेन कालविशेषेणोपहितः सन्, तत्तत्कालौचित्येन 'आपः प्रदुघे' जलोपलक्षितां पृथिवीं दुग्धवान्, प्राणिनामपेक्षितं भोग्यजातं पृथिव्यां सम्पादितवानित्यर्थः । तथैव 'अन्तरिक्षं', एकं स्थानं, 'अथो' अपि च, 'सुवः' स्वर्गः अपरं स्थानं,

---

* षट्सु आदर्शपुस्तकेषु "कल्पन्ताम्" इति पाठो दृश्यते ; केवलं P चिह्नितपुस्तके "कल्पताम्" इति पाठो वर्त्तते ।

मध्ये परिजग्रभत्। न तस्येशे कश्चन तस्य नाम महद्यशः[१०]॥ २॥

[११]न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति क-

---

'इमे उभे' स्थाने, 'प्रदुघे', तयोरपि स्थानयोर्भोग्यवस्तूनि सम्पादितवानित्यर्थः॥

ननु काललोकादिसर्वकारणस्य सर्वत्रानुगतत्वात् कुतः प्राणिभिरसौ न दृश्यत इत्याशङ्क्य तस्य परमात्मन ऊर्द्ध्वत्वाद्याकारविशेषाभावात् रूपाद्यभावाच्च, इति मन्त्रद्वयेन दर्शयति। [१०]"नैनमूर्द्ध्वं ० नाम महद्यशः"[१०]। [११]"न सन्दृशे तिष्ठति ० अमृतास्ते भवन्ति"[११] इति। कश्चिदपि पुरुषः, 'एनं' परमात्मानं, स्तम्भवदूर्द्ध्वाकारं, उपरिस्थितशालावंशवत्तिर्य्यगाकारं वा, दृश्यान्तर्वर्त्तिदेवदत्तवत् क्वचित् 'मध्ये', अवस्थितं वा। 'न परिजग्रभत्' नैव परिगृह्णाति। ऊर्द्ध्वाद्याकाराणां तस्मिन्नभावात्। किञ्च 'तस्य' परमात्मनः, 'कश्चन' कोऽपि पुरुषः, 'नेशे' नेष्टे, मम ग्रहणसौकर्यार्थमीदृग्रूपो भवेति नियन्तुं न समर्थः। अत एव 'तस्य' परमात्मनः, 'महद्यशः', इति 'नाम', सम्पन्नं, अत्यन्तस्वतन्त्रत्वेन तदीययशसोऽभ्यधिकत्वात्। किञ्च 'अस्य' परमात्मनः, 'रूपं' नीलपीतादिकं, 'न सन्दृशे' प्राणिनां दृष्टिविषये, न स्वं 'तिष्ठति'। अशब्दमस्पर्शमरूपमित्यादिश्रुतेः। अतः 'कश्चन' कुशलोऽपि पुमान्, अत्यन्तपटुना 'चक्षुषा', तं 'न पश्यति'। कथं तर्हि गुरुशास्त्रोपदेशयुक्तो गृह्णातीति चेत् उच्यते, 'हृदा' हृदयपुण्डरीक-

श्वनैनं। हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदु-रमृतास्ते भवन्ति[११]। [१२]अद्भ्यः सम्भूतो हिरण्यगर्भ

---

मध्यवर्त्तिना, 'मनीषा' भौतिक*वस्तुगोचराणि मनसा ईष्टे इति मनीट् तथाविधेन, 'मनसा' अन्तःकरणेन, 'अभिक्लृप्तः' सर्वतो निश्चितो भवति। योगयुक्तं हि मनः लौकिकीर्मनोवृत्तीर्नियमयति, तेन च अन्तर्मुखेनैकाग्रेण मनसा परमात्मा अनुभवितुं शक्यते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति श्रुतेः। 'ये' पुरुषाः, 'एनं' परमात्मानं, एकाग्रेण मनसा 'विदुः' साक्षात् कुर्वन्ति, 'ते' पुरुषाः, 'अमृताः' मरणरहिताः, 'भवन्ति'। देहात् प्राणानामुत्क्रान्तिः, मरणं, तच्च तत्त्वविदो नास्ति। न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्त इति श्रुतेः॥

उक्तार्थदार्ढ्याय प्रदेशान्तरपठितत्वात् मन्त्रानुदाहरति। "अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ" इति। (१२ मन्त्रः)। अद्भ्यः सम्भूतः पृथिव्यै रसाच्चेत्ययमनुवाकश्चातुर्होत्रीयचयनमन्त्रप्रकरणे समाम्नातः। तस्यानुवाकस्य प्रदर्शनार्थमद्भ्यः सम्भूत इति प्रतीकमिदं पठितं। तस्मिन्ननुवाके तमेवं विद्वानमृत इह भवतीति परमात्मतत्त्वविदो मरणराहित्यमुक्तं। हिरण्यगर्भः समवर्त्तताग्र इत्याद्यष्टावृचः संहितायाश्चतुर्थकाण्डे प्रथमप्रपाठके समाम्नाताः। ता अपि वेदितव्यस्य परमात्मन उपलक्षकत्वेन हिरण्यगर्भाद्यभिधानाच्चोपयुक्ताः॥

---

* लौकिकीति P चिह्नितपुस्तकपाठः।

इत्यष्टौ(१२)। (१३)एष हि देवः प्रदिशोऽनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः। स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः(१३)। (१४)विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतः

---

यथा हिरण्यगर्भादयः परमात्मोपलक्षकाः, तथा परमात्मना सृष्टं दिगादिकं जगद्धिरण्यमूर्त्तिश्च परमात्मानमुपलक्षयतीति मन्त्रद्वयेन दर्शयति। (१३)"एष हि देवः ० तिष्ठति विश्वतोमुखः"(१३)। (१४)"विश्वतश्चक्षुरुत ० देव एकः"(१४) इति। विद्वद्भिरनुभूयमानः 'देवः' स्वप्रकाशः परमात्मा, 'प्रदिशः' प्रकृष्टाः प्राच्याद्याः, आग्नेय्याद्याश्च विदिशः 'सर्वाः', 'अनु', प्रविश्यावस्थितः। प्रवेशस्य श्रुत्यन्तरप्रसिद्ध्यर्थः 'हि'शब्दः। तथा 'पूर्वो जातः' हिरण्यगर्भस्वरूपत्वेनायमेव प्रथममुत्पन्नः, 'हि'शब्देन हिरण्यगर्भः समवर्त्ततेति मन्त्रप्रसिद्धिः सूच्यते। 'स उ' स एव परमेश्वरः, 'गर्भे अन्तः' ब्रह्माण्डरूपस्य गर्भस्य मध्ये, वर्त्तते। 'सः', एव 'विजायमानः' देवतिर्यगादिरूपेण इदानीं जायते, इतः परमपि 'जनिष्यमाणः', 'सः', एव। स च 'प्रत्यङ्' अन्नमयादिकोशेभ्यः आन्तरः, 'मुखाः' देहेन्द्रियाध्यक्षत्वेन मुख्यः, 'विश्वतः', सर्वतः, मुखानि, रूपाद्युपलब्धिद्वाराणि चक्षुरादीनि, यस्यासौ 'विश्वतोमुखः', तादृशोऽयं जगदधिष्ठातृत्वेन 'तिष्ठति'। स च ब्रह्माण्डरूपं देहं धृत्वा सर्वप्राणिदेहस्वरूपत्वात् तदीयैः सर्वैश्चक्षुरादिभिर्युक्त इति 'विश्वतश्चक्षुः', इत्यादि-

स्यात् । सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जन-यन् देव एकः(१४) । (१५)वेनस्तत् पश्यन् विश्वा भुव-नानि विद्वान् यत्र विश्वं भवत्येकनीडं । यस्मिन्निदꣳ सञ्च विचैकꣳ स ओतः प्रोतश्च विभुः प्रजासु(१५)। (१६)प्र

---

पदैरभिधीयते । तत्तल्लोकनिवासिनां प्राणिनां चक्षूंषि तत्र तत्र स्थितानि एव एतदीयानि भवन्ति । अतोऽस्य सर्वत्र चाक्षुष्ट्वं। एवं विश्वतोमुखत्वादिकमपि द्रष्टव्यं । स च परमेश्वरः, 'बाहुभ्यां 'सन्नमति' बाहुसदृशाभ्यां धर्माधर्माभ्यां निमित्तकारणाभ्यां सर्वं जगद्वशीकरोति । तथा 'पतत्रैः' पतनशीलैः पञ्चीकृतपञ्चमहा-भूतैः, 'सन्नमति' सर्वं जगदुत्पादयति । एवमयं 'देवः', द्यावा-पृथिव्यादिकं कृत्स्नं जगत् उत्पादयन् 'एकः', एव अवतिष्ठते ॥

उक्तार्थे श्रद्धातिशय्यमुत्पादयितुं मन्त्रद्वयेन गन्धर्ववृत्तान्तं दर्शयति । (१५)"वेनस्तत्पश्यन् ० विभुः प्रजासु(१५)। (१६)प्र त-द्वोचे ० सवितुः पिता सत्"(१६) इति । 'वेनो नाम गन्धर्वः', सर्वप्राणिनां 'गुहासु' बुद्धिषु, 'निहितं', 'अमृतं' विनाश-रहितं, 'तत्' वस्तु, स्वानुभवेन 'विद्वान्', 'प्रवोचे नु' शिष्येभ्यः प्रोवाच खलु । कीदृशो वेनः, 'यत्र' यस्मिन् परमात्मवस्तुनि, 'विश्वं' सर्वं जगत्, 'एकनीडं भवति' एकत्वेन विश्रममवस्थितं सत् तादात्म्यं प्राप्नोति । 'तत्' वस्तु, गुरुशास्त्रप्रसादेन 'पश्यन्' साक्षात् कुर्वन्, 'विश्वा भुवनानि' सर्वानपि लोकान्, 'विद्वान्' जानन्

तद्वाचे अमृतं नु विद्वान् गन्धर्वो नाम निहितं गुहा-
सु ॥ ३ ॥

त्रीणि पदा निहिता गुहासु यस्तद्वेद सवितुः पिता
संत्[१६]। [१७]स नो बन्धुर्जनिता स विधाता धामानि

---

वर्त्तते। आत्मसाक्षात्कारे हि सर्वं जगत् तदात्मकमित्यवगति-र्भवति। किञ्च तेन दृष्टे 'यस्मिन्' वस्तुनि परमात्मनि, 'इदं' जगत्, 'सञ्च वि च' समुत्पद्यते विलीनञ्च भवति। 'एकं' अद्वितीयतत्त्वरूपः, 'सः' परमात्मा, 'विभुः' व्यापी सन्, 'प्रजासु', सर्वासु, दीर्घतन्तुवत् 'ओतः', तिर्यक्तन्तुवत् 'प्रोतश्च', अवतिष्ठते। 'गुहासु' प्राणिनां बुद्धिषु, 'त्रीणि पदा' जाग्रत्स्वप्नसुषुप्तिरूपाणि त्रीणि स्थानानि, 'निहिता' अवस्थितानि। 'यः' अयं गन्धर्वः, 'तत्' जागराद्यधि-ष्ठानं, 'वेद'। स गन्धर्वः 'सवितुः' उत्पादकस्य, स्वकीयजनकस्यापि, 'पिता सत्' जनको भवति। लोकप्रसिद्धः पिता पुत्रस्य देहमात्रं जनयति। ब्रह्मतत्त्वाभिज्ञस्तु परमात्मरूपेण सर्वजगदुत्पादकत्वा-ल्लोकप्रसिद्धस्य स्वजनकस्यापि समुत्पादको भवति। यस्ता विजा-नात् सवितुः पिता सदिति श्रुत्यन्तरात् ॥

तस्य परमेश्वरस्य व्यवहारकाले सर्वप्राण्युपकारकत्वं परमार्थ-दर्शिनो मुक्तिप्रदत्वञ्च मन्त्रद्वयेन दर्शयति। [१७]"स नो बन्धुः ० धामान्यभ्यैरयन्त[१७]। [१८]परि द्यावापृथिवी ० भवत् प्रजा-सु"[१८] इति। 'सः' परमेश्वरः, 'नः' अस्माकं सर्वेषां, 'बन्धुः',

वेद भुवनानि विश्वा। यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त[१७]। [१८]परि द्यावापृथिवी यन्ति सद्यः परि लोकान् परि दिशः परि सुवः। ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत् प्रजासु[१८]।

---

अस्मदनुष्ठितसुकृतानुसारेण हितकारित्वात्। 'जनिता' उत्पादकः, सर्वस्रष्टृत्वात्। 'सः', च 'विधाता' जगतो निर्माता सन्, 'विश्वा भुवनानि' सर्वानुत्तमाधमलोकान्, 'धामानि' तेषु लोकेषु देवादीनां योग्यानि स्थानानि च, 'वेद' जानाति। 'यत्र तृतीये' लोके स्वर्गाख्ये, 'देवाः' इन्द्रादयः, 'अमृतमानशानाः' सुधां पिबन्तः, 'धामानि' स्वकीयस्थानानि, 'अभ्यैरयन्त' सर्वतः प्राप्तवन्तः, ततः सर्वं विदित्वा तत्तदनुष्ठितकाम्यकर्मानुसारेण फलं प्रयच्छतीत्यर्थः। ये तु मुमुक्षवः ते सर्वे विदिततत्त्वाः सन्तः 'द्यावापृथिवी' लोकद्वयं, 'सद्यः परियन्ति' बोधक्षण एव सर्वतो व्याप्नुवन्ति, तथा 'लोकान्' अवशिष्टानन्तरिक्षादीन्, 'परियन्ति'। 'दिशः' प्राच्याद्याः, 'परियन्ति'। 'सुवः' स्वर्गलोकभोगं परियन्ति। सर्वात्मकत्वेन सर्वव्याप्तिरुक्ता। 'ऋतस्य' तस्य परब्रह्मणः, 'तन्तुं' अविच्छेदेनावस्थानं, 'विततं' विस्तीर्णं यथा भवति तथा, 'विचृत्य' गुरुशास्त्रमुखात् निश्चित्य, 'तत्' ब्रह्मतत्त्वं, 'अपश्यत्' यः साक्षात्कृतवान्, स एव 'प्रजासु', मध्ये 'तत्' ब्रह्मतत्त्वं, 'अभवत्'। तथाच श्रुत्यन्तरं, 'ब्रह्मविद् ब्रह्मैव भवति' इति ॥

(१९)परीत्य लोकान् परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च । प्रजापतिः प्रथमजा ऋतस्यात्मनात्मानमभिसम्बभूव(१९) । (२०)सदसस्पतिमद्भुतं प्रिय-

---

अम्भस्य पार इत्यादिना तदभवत् प्रजास्वित्यन्तेन ग्रन्थेन प्रतिपादितां ब्रह्मविद्यामुपसंहरति, (१९)“परीत्य लोकान् ० आत्मानमभिसम्बभूव”(१९) इति । ‘ऋतस्य’ सत्यस्य ब्रह्मणः, ‘प्रथमजाः’ प्रथमकार्यभूतः, ‘प्रजापतिः’ हिरण्यगर्भः, ‘लोकान्’ भूरादीन्, ‘भूतानि’ देवमनुष्यादिप्राणिदेहान्, ‘प्रदिशः’ आग्नेय्याद्याः, ‘दिशश्च’ प्राच्याद्याः, ‘परीत्य’ सर्व्वतो व्याप्य, सृष्टिकाले सृष्ट्वा पुनरपि ‘परीत्य’ स्थितिकाले रक्षित्वा, ‘आत्मना’ स्वस्वरूपेण, तद्विषयकतत्त्वज्ञानेन इत्यर्थः । ‘आत्मानं’ सत्यज्ञानादिलक्षणं, ‘अभिसम्बभूव’ सर्व्वतः सम्यक् प्राप्तवान् ॥

तदेवं ब्रह्मविद्या प्रतिपादिता, अथ तत्प्राप्तिसाधनभूताः सोपाधिकब्रह्मध्यानजपहोमादिकर्माङ्गभूताः मन्त्राः कर्म्मकाण्डे पूर्वमनुक्ता अस्मिन् खिलकाण्डे अभिधीयन्ते ते । तत्र एकेन मन्त्रेण ब्रह्मप्राप्त्यर्थमन्तर्य्यामिणं प्रार्थयते । (२०)“सदसस्पतिमद्भुतं ० सनिं मेधामयासिषम्”(२०) इति । सीदत्यस्मिन् अव्याकृते कारणे सर्वं जगत् इति, ‘सदः’, तस्य, ‘पतिं’ पालकमन्तर्यामिणं, ‘अयासिषं’ अहं प्राप्तवान् अस्मि, शीघ्रं प्राप्तवान्, इत्यनया विवक्षया भूतार्थनिर्देशः । कीदृशं सदसस्पतिं, ‘अद्भुतं’ आश्चर्य्यरूपं, मनसाप्यचिन्त्यरचनारूपस्य जगतोऽनायासेन निर्मा-

मिन्द्रस्य काम्यं। सनिं मेधामयासिषं(२०)। (२१)उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम ॥ ४ ॥

पशूꣳश्च मह्यमावह जीवनं च दिशो दिश(२१)। (२२)मा नो हिꣳसीज्जातवेदो गामश्वं पुरुषं जगत्।

---

त्वं, 'इन्द्रस्य' देवराजस्य, अपि 'प्रियं', सोऽप्यन्तर्य्यामिणं त्वा प्राप्स्यामीत्येवमाशास्ते। अत एव सर्वैरन्यैः 'काम्यं' अपेक्षणीयं, 'सनिं' कर्म्मफलस्य दातारं, 'मेधां' श्रुताधीतग्रन्थधारणशक्तिं, प्रयच्छन्तमिति शेषः ॥

अथ वह्न्युपाधिकं परमेश्वरं प्रति इष्टप्राप्तिं प्रार्थयते। (२१)"उद्दीप्यस्व जातवेदोऽपघ्नं ∘ जीवनं च दिशो दिश"(२१) इति। जाते प्राणिशरीरे जाठराग्निस्वरूपेण विद्यते अवतिष्ठते इति जातवेदाः। अथवा जातानुत्पन्नान् यजमानान् तत्तत्-फलदानाय वेत्ति स्वचित्ते निश्चिनोतीति जातवेदाः। हे 'जात-वेदः', मदनुग्रहार्थम् उत्कर्षेण 'दीप्यस्व'। किं कुर्व्वन्, 'मम', अनिष्टकारिणीं 'निर्ऋतिं' पापदेवतां, 'अपघ्नन्' विनाशयन्। तां विनाश्य ततो मदर्थं 'पशून्' गवाश्वादीन्, 'जीवनं' दीर्घायुष्यं, 'च'काराभ्यामन्यदपि सर्व्वं भोग्यजातं 'आवह' सम्पादय। ततः सुखनिवासार्थं 'दिशः' प्राच्याद्याः, निवासयोग्यानि तत्तद्दिगवस्थानानि, 'दिश' देहि ॥

सम्पादितानां गवाश्वादीनामविनाशं प्रार्थयते। (२२)"मा नो हिꣳसीज्जातवेदः ∘ श्रिया मा परिपातय"(२२) इति। हे 'जात-

अविभ्रदग्न आगहि श्रिया मा परिपातय(२२)।
(२१)पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि*।
तन्नो रुद्रः प्रचोदयात्(२१)। (२४)तत्पुरुषाय विद्महे

देवः', तत्प्रसादात् मदीयं गवादिकं निर्ऋतिः 'मा हिंसीत्' मा विनाशयतु। 'जगच्छब्देन गवादिव्यतिरिक्तं गृहक्षेत्रादिकं विवक्षितं। हे 'अग्ने', त्वं 'अविभ्रत्' अधारयन्, अस्मदपराधं मनस्यधारयित्वा 'आगहि' अस्मदनुग्रहार्थमागच्छ, ततो मां 'श्रिया' धनधान्यादिसम्पदा, 'परिपातय' सर्व्वतः प्रापय॥

इत ऊर्द्धं तेषु तेषु देशेषु श्रुतिपाठा अत्यन्तविलक्षणाः, तत्र विद्यातीर्थप्रभृतिभिः पूर्व्वैर्निबन्धनकारैर्द्राविडपाठस्यादृतत्वात् वयमपि तमेवादृत्य व्याख्यास्यामः। तत्र षड्भिर्गायत्रीभिरात्मप्राप्तिद्वारभूता देवताविशेषाः प्रार्थ्यन्ते। तत्र आदौ विश्वरूपधरं प्रार्थयते। (२१)"पुरुषस्य विद्म ० तन्नो रुद्रः प्रचोदयात्"(२१) इति। विश्वतश्चक्षुरित्यादिमन्त्रोक्तो विराट् पुरुषः 'सहस्राक्षः', तस्य, 'पुरुषस्य', स्वरूपं 'विद्म' जानीमहि, लभेमहि वा। तदर्थं तस्य विराड्रूपस्य 'महादेवस्य', स्वरूपं 'धीमहि' ध्यायेमः। तत्र ध्याने 'नः' अस्मान्, 'रुद्रः' विराड्रूपः महादेवः, 'प्रचोदयात्' प्रचोदयतु प्रेरयतु॥

अथ बिभ्रद्दोर्भिः कुठारे मृगमभयवरौ सुप्रसन्नो महेश-

* तत्पुरुषाय विद्महे सहस्राक्षस्य धीमहीतिपाठे गायत्रीछन्दः प्रतितिष्ठति, परन्तु आदर्शपुस्तकेषु सर्वत्र मूलधृतपाठो दृश्यते।

महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्[२४]। [२५]तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्तिः प्रचोदयात्[२५]। [२६]तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि ॥ ५ ॥

तन्नो नन्दिः प्रचोदयात्[२६]*। [२७]तत्पुरुषाय विद्महे महासेनाय धीमहि। तन्नः षण्मुखः प्रचोदयात्[२७]। [२८]तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि। तन्नो गरुडः प्रचोदयात्[२८]। [२९]वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि। तन्नो ब्रह्म प्रचोदयात्[२९]। [३०]नारा-

---

इत्याद्यागमप्रसिद्धमूर्त्तिधरं रुद्रं प्रार्थयते। [२४]"तत्पुरुषाय विद्महे ० रुद्रः प्रचोदयात्"[२४] इति। 'तं' आगमप्रसिद्धं पुरुषाकारं महादेवं, जानीमो ध्यायेमश्च। तस्मिन् ध्याते अस्मान् 'रुद्रः', प्रेरयतु ॥

बीजापूरगदेक्षुकार्मुकेत्याद्यागमप्रसिद्धमूर्त्तिधरं विनायकं प्रार्थयते। [२५]"तत्पुरुषाय विद्महे ० दन्तिः प्रचोदयात्"[२५] इति। गजसमानवक्त्रत्वेन दीर्घस्य तुण्डस्य रत्नकलशादिधारणार्थं वक्रत्वं। 'दन्तिः' महादन्तः ॥

पुराणादिषु प्रसिद्धपक्षिराजमूर्त्तिधरं देवं प्रार्थयते। [२८]"तत्पुरुषाय विद्महे ० तन्नो गरुडः प्रचोदयात्"[२८] इति। शोभनपतनसाधनपक्षोपेतः 'सुवर्णपक्षः' ॥

---

* २६, २७, २९ मन्त्रत्रयं भाष्ये न धृतं।

यणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्(१०)। (११)वज्रनखाय विद्महे तीक्ष्णदꣳष्ट्राय धीमहि ॥ ६ ॥

तन्नो नारसिꣳहः प्रचोदयात्(११)*। (१२)भास्कराय विद्महे महाद्युतिकराय धीमहि। तन्नो आदित्यः प्रचोदयात्(१२)। (१३)वैश्वानराय विद्महे लालीलाय धीमहि। तन्नो अग्निः प्रचोदयात्(१३)। (१४)कात्यायनाय

---

अर्काभाभं किरीटान्वितमकरलसत्कुण्डलमित्याद्यागमप्रसिद्ध-मूर्त्तिधरं देवं प्रार्थयते। (१०)"नारायणाय विद्महे ॰ विष्णुः प्रचोदयात्"(१०) इति। नरशरीराणामुपादानरूपाण्यब्नादिपञ्च-भूतानि नारशब्देन उच्यन्ते, तेषु भूतेषु या आपो मुख्याः ता अयनमाधारो यस्य विष्णोः सोयं 'नारायणः', समुद्रजलशायी-त्यर्थः। तथा च स्मर्य्यते। आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः प्रोक्तास्तेन नारायणः स्मृत इति। स च कृष्णावतारे वसुदेवस्य पुत्रत्वात् 'वासुदेवः', स च स्वकीयेन वास्तवेन परब्रह्मरूपेण व्यापित्वात् 'विष्णुः'। ता एता गायत्र्य-श्चित्तशुद्ध्यर्थं ध्यानपुरःसरं जपितव्याः ॥

हेमप्रख्यामिन्दुखण्डात्तमौलिमित्यागमप्रसिद्धमूर्त्तिधरीं दुर्गां

---

* ११, १२, १३, १६, १७, एतेषां मन्त्राणां व्याख्या अस्मल्लब्धपुस्तक-त्रयेषु न दृश्यते।

विद्महे कन्यकुमारी धीमहि। तन्नो दुर्गिः प्रचोदयात्[२४]। [२५]सहस्रपरमा देवी शतमूला शताङ्कुरा। सर्व्वꣳ हरतु मे पापं दूर्व्वा दुःस्वप्ननाशिनी[२५]। [२६]काण्डात्काण्डात् प्ररोहन्ती परुषः परुषः परि॥ ७॥

एवा नो दूर्वे प्रतनु सहस्रेण शतेन च[२६]। [२७]या शतेन प्रतनोषि सहस्रेण विरोहसि। तस्यास्ते देवीष्टके विधेम हविषा वयं[२७]। [२८]"अश्वक्रान्ते रथक्रान्ते

---

प्रार्थयते। [२४]"कात्यायनाय विद्महे ० दुर्गिः प्रचोदयात्"[२४] इति। कृत्तिं वस्ते इति कात्यो रुद्रः, स एव अयनं, अधिष्ठानम् उत्पादको यस्या दुर्गायाः सा 'कात्यायनी'। कुत्सितमनिष्टं निवारयति इति कुमारी, कन्या चासौ कुमारी च इति 'कन्यकुमारी', 'दुर्गिः', दुर्गा, लिङ्गादिव्यत्ययः सर्व्वत्र छान्दसो द्रष्टव्यः॥

अथ स्नानाङ्गभूता मन्त्रा उच्यन्ते। तत्र शिरसि मृत्तिकया सह दूर्व्वां धारयितुं दूर्व्वाभिमन्त्रणमन्त्रमाह। [२५]"सहस्रपरमा देवी ० दूर्व्वा दुःस्वप्ननाशिनी"[२५] इति। येयं दूर्व्वाभिमानिनी देवता सा 'मे पापं हरतु'। कीदृशी, 'सहस्रसङ्ख्याकेभ्यः पावनहेतुभ्यो द्रव्येभ्यः 'परमा' उत्कृष्टा, सा च 'देवी' द्योतनात्मिका शतसङ्ख्याकानि मूलानि यस्याः सा 'शतमूला'। तथा 'शताङ्कुरा'। शतशब्देन बहुत्वमात्रमत्र उपलक्ष्यते। दुःस्वप्नकृतमनिष्टफलं, नाशयति इति 'दुःस्वप्ननाशिनी'॥

विष्णुक्रान्ते वसुन्धरा। शिरसा धारयिष्यामि रक्षस्व मां पदे पदे"(३८)। (३९)"भूमिर्धेनुर्धरणी लोकधारिणी*। उद्धृतासि वराहेण कृष्णेन शतबाहुना"(३९)। (४०)"मृ-

---

अथ मृत्तिकाभिमन्त्रणमन्त्राः, तत्र प्रथममन्त्रमाह। (३८)"अश्व-क्रान्ते रथक्रान्ते ० रक्षस्व मां पदे पदे"(३८) इति। येयं भूमिः तामश्वाः शुद्धिहेतवः स्वपदैराक्रामन्ति तादृशी भूमिः 'अश्व-क्रान्ता'। अग्निचयन उखानिर्माणार्थमृत्खनन†प्रदेशस्य अश्वाक्रमण-विधानादश्वपादानां मृच्छुद्धिहेतुत्वं गम्यते। तथा 'रथक्रान्ता' रथसञ्चरणेन चुण्णा सती शुद्धा भवति। तथा त्रिविक्रमावतारे विष्णुः स्वयं पदेन भूमिमाक्रामति, ततोऽपि शुद्धत्वं। अश्वरथ-विष्णुभिराक्रान्ते शुद्धे हे भूमे 'वसुन्धरा' सर्व्वाणि वस्तूनि धार-यन्ती सती स्नानकर्म्मण्येतस्मिन् मदीय'शिरसा' धारिता देवी द्योतमाना त्वं 'मां', स्नानार्थं जलमध्ये गच्छन्तं 'पदे पदे', 'रक्षस्व'॥

द्वितीयमन्त्रमाह। (३९)"उद्धृतासि वराहेण ० धरणी लोक-धारिणी"(३९) इति। हे मृत्तिके, त्वं भूमिरूपा सती कृष्ण-वर्णेन शतसङ्ख्याकबाहुयुक्तेन वराहावतारेण पूर्व्वं 'उद्धृतासि'। कीदृशी भूमिः, 'धेनुः' कामधेनुवत् प्रीणयित्री, 'धरणी' सत्त्वानां धारयित्री, 'लोकधारिणी' प्राणिनामपि धारयित्री॥

---

* एष मूलपुस्तकसम्मतः पाठः। अत्र तु पदच्युतिरस्ति। तथा-सायणभाष्यपुस्तकेषु एतद्दलमुद्धृतासीत्यादिदलस्य परस्मिन् वर्तते।

† मृत्खननेति तै० पाठः।

त्तिके हृतं मे पापं यन्मया दुष्कृतं कृतं। त्वया हतेन पापेन जीवामि शरदः शतं*"(४०)। (४१)मृत्तिके देहि मे पुष्टिं त्वयि सर्व्वं प्रतिष्ठितं(४१) ॥ ८ ॥

(४२)मृत्तिके प्रतिष्ठिते सर्व्वं तन्मे निर्णुद मृत्तिके। तया हतेन पापेन गच्छामि परमाङ्गतिं। यत इन्द्र भयामहे ततो नो अभयं कृधि। मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि। स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः। स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु। आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी। सोमो विश्वान्यतसावनानि नार्वागिन्द्रं प्रतिमानानि देभुः ॥ ९ ॥

---

तृतीयमन्त्रमाह। (४०)"मृत्तिके हृत मे ० जीवामि शरदः शतं"(४०) इति। स्पष्टोऽर्थः ॥

पादद्वयात्मकं चतुर्थं मन्त्रमाह। (४१)"मृत्तिके देहि ० सर्व्वं प्रतिष्ठितं"(४१) इति। यद्यत् पुष्टिसाधनं यवगोधूमादिद्रव्यं तत्सर्व्वं हे 'मृत्तिके त्वयि प्रतिष्ठितं'। तस्मात् मह्यं 'पुष्टिं' 'देहि' ॥

---

* मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रितेति A, B, D, N, O. चिह्नितपुस्तकपाठः।

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः। सबुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः। स्योनापृथिवि भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः[४२]। [४३]गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं। ईश्वरीꣳ सर्वभूतानां तामिहोपह्वये श्रियं[४३]। [४४]श्रीर्मे भजतु। अलक्ष्मीर्मे नश्यतु। विष्णुमुखा वै देवाश्छन्दोभिरिमां लोकाननपजय्यमभ्यजयन्। महाꣳ इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु॥ १०॥

---

पञ्चममन्त्रमाह। [४३]"गन्धद्वारां दुराधर्षां ० तामिहोपह्वये श्रियं"[४३] इति। 'तां' मृत्तिकाभिमानिनीं देवतां, 'इह' अस्मिन् स्नानकर्मणि, 'उपह्वये' सामीप्येनाह्वयामि। कीदृशीं, 'गन्धद्वारां' घ्राणग्राह्यो गन्ध उपलब्धिद्वारं यस्याः सा गन्धद्वारा। अत एव गन्धवती पृथिवी इति तार्किका लक्षणमाहुः। 'दुराधर्षां' प्रतिकूलैः पुरुषैः असुरादिभिराधर्षितुं तिरस्कर्तुमशक्यां। 'नित्यपुष्टां' सर्वदा ब्रीहिधान्यैः परिपूर्णां, 'करीषिणीं' बहुलेन गोमयेन युक्तां, गोमहिषादिपशुयुक्तां इत्यर्थः। 'सर्वभूतानां' देवतिर्यङ्मनुष्यरूपाणां प्राणिदेहानां, 'ईश्वरीं' उत्पादकत्वेन नियन्त्रीं, 'श्रियं' सर्वैः सेव्यां॥

स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान्द्वेष्टि। सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते। कक्षीवन्तं य औशिजं। शरीरं यज्ञशमलं कुसीदं तस्मिन्त्सीदतु योऽस्मान्द्वेष्टि। चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि। तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिन्तरेम। सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहञ्छूर विद्वान्। जहि शत्रूꣳरपमृधो नुदस्वाथाभयं कृणुहि विश्वतो नः(४४)। (४५)*सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः(४५)। (४६)आपो हि ष्ठा मयोभुवस्तान ऊर्जे दधातन॥ ११॥

---

नाभिदघ्ने जले प्रविश्य जलाभिमन्त्रणमन्त्रमाह। (४५)“सुमित्रा न आपः ० यं च वयं द्विष्मः”(४५)* इति। या एताः ‘आपः’, ता एताः, तज्जन्या व्रीहियवाद्योषधयः,’ च ‘नः’ अस्मान् प्रति, ‘सुमित्राः’ स्नानपानभोजनादावनुकूलाः, ‘सन्तु’।‘यः’ शत्रुः,

---

* अस्मल्लब्धचतुर्षु मूलपुस्तकेषु अङ्कानुक्रमेण मन्त्रा लिखिताः। परन्तु भाष्यकारः प्रथमं ४७ मन्त्रं व्याख्याय ततः ४५ मन्त्रं व्याख्यातवान्। अत एवात्र मन्त्रक्रमस्थापनाय भाष्यपाठव्यतिक्रमः कृतोऽस्माभिः।

महेरणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः(४६) । (४७)हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः । यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः(४७) । (४८)यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतं । तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु

---

अस्मान्तु द्वेषं करोति यस्मिंश्च 'वयं', द्वेषं कुर्मः, उभयविधाय 'तस्मै' शत्रवे, मे 'दुर्मित्राः' प्रतिकूलाः, 'भूयासुः' पान-भोजनादौ ज्वराजीर्णादिमुत्पादयन्तु ॥

एतैर्मन्त्रैरभिमन्त्रितां मृत्तिकामनुलिप्य नद्यादिजलप्रदेशे जलाधिपतिप्रार्थनार्थं मन्त्रद्वयमाह । (४७)"हिरण्यशृङ्गं वरुणं ० पापेभ्यश्च प्रतिग्रहः"(४७) । (४८)"यन्मे मनसा वाचा ० पुनन्तु पुनः पुनः"(४८) इति । सुवर्णमयं शृङ्गवत् उपर्य्यवस्थितं मुकुटं यस्य असौ 'हिरण्यशृङ्गः', तादृशं । 'वरुणं' जलाधिपतिं, 'प्रपद्ये' अनुग्रहार्थं प्राप्नोमि । तादृशो वरुणस्त्वं मया 'याचितः' प्रार्थितः सन्, 'तीर्थं' अवतरणस्थानं, 'देहि' । किञ्च, 'असाधूनां' पापिनां, गृहे 'मया यद्भुक्तं', तथा 'पापेभ्यः' पापिनां सकाशात्, 'प्रतिग्रहः', 'च', यः कृतः ॥ अन्यदपि

पुनः पुनः(४८)। (४९)नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः(४९)॥ १२॥

(५०)यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात्(५०)। (५१)अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्र-

---

'यत्' 'दुष्कृतं', मानसं वाचिकं कायिकं वा अनुष्ठितं 'मे' मदीयं, तत् सर्व्वं इन्द्रादयो देवाः तदा तदा 'पुनन्तु' शोधयन्तु ॥

जलावस्थितदेवान् प्रति नमस्कारमन्त्रं दर्शयति। "(४९)नमोऽग्नयेऽप्सुमते ० वारुण्यै नमोऽद्भ्यः"(४९) इति। आपो यस्याग्नेः सन्ति सोयं 'अप्सुमान्' जलमध्ये निगूढ इत्यर्थः। तथाविधाय, 'अग्नये', 'इन्द्राय वरुणाय', वरुणपत्न्यै, जलाभिमानिदेवताभ्यश्च 'नमस्कारोस्तु' ॥

निमज्जनप्रदेशे दुष्टजलापनयनमन्त्रमाह। (५०)"यदपां क्रूरं ० तदपगच्छतात्"(५०) इति। 'अपां', सम्बन्धि 'यत्' 'क्रूरं' रूपं, मरणकारणम् आवर्त्तादिकं, 'यत्', च 'अमेध्यं' निष्ठीवनादिदुष्टं, 'यत्' अपि 'अशान्तं' वातश्लेष्मादिजनकं, 'तत्' सर्व्वं, अस्मान्निमज्जनप्रदेशात् अपगच्छतु ॥

निमज्जनमन्त्रावाह। (५१)"अत्याशनादतीपानाद्यच्च ० पाचिना अघमर्षंतु"(५१)। (५२)"सोऽहमपापो विरजः ० गच्छेद् ब्रह्म-

ह्यात्। तन्नो वरुणो राजा पाणिना व्यपमर्शतु(५१)। (५२)सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः। नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्मसलोकतां(५२)। (५३)यश्चाप्सु वरुणः स पुनात्वघमर्षणः(५३)। (५४)इमं मे गङ्गे यमुने

---

लोकतां"(५२) इति। देवपितृमनुष्यादिभ्यग्रमतीत्य भुक्तं 'अत्याशनं'। देवर्षिपितृतर्पणमतीत्य पीतमुदकं 'अतीपानं'। उच्छास्त्रवर्त्ती यः पुमान् तस्मात्, यो 'धनप्रतिग्रहः'। एतैरत्यशनातिपान-दुष्प्रतिग्रहैः सम्पादितं यत् पापं मे मदीयं, 'तत्' सर्व्वं, 'वरुणो राजा' जलस्वामी, स्वकीयेन 'पाणिना', अपनयतु॥ ततः पापरहितः 'सोऽहं', रजोगुणरहितः, संसारकारणरागद्वेषादिदोषात् 'निर्मुक्तः'। अत एव अनुष्ठास्यमानः पापरहितः स्वर्ग-स्योपरिभागं, 'आरुह्य', ब्रह्मणा हिरण्यगर्भेण समानभोक्तृत्वं* 'गच्छेत्' गच्छेयं॥

तीर्थभूतानां गङ्गादिनदीनामावाहनमन्त्रमाह। (५४)"इमं मे गङ्गे यमुने ० शृणुह्या सुषोमया"(५४) इति। हे गङ्गाद्या नद्यः, यूयं, परुष्ण्यादिभिर्नदीभिः सह 'मे' मदीयं, 'इमं' 'स्तोमं' स्तोत्रं, 'शृणुहि' शृणुत। श्रुत्वा तत्र 'आसचत' आगत्य अस्मे तद्द्वारेण मयि च समवेता भवत। 'गङ्गायमुनासरस्वत्यः', प्रसिद्धाः। 'शुतुद्रि', इति नद्यन्तरस्य सम्बोधनं। 'मरुद्वृधे',

---

* समानलोकत्वमिति तै० चिह्नितपुस्तकपाठः।

सरस्वति शुतुद्रि स्तोमं सचता परुष्णिया। असिक्नि-
या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया[१४]। [१५]
ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत। ततो रात्रिर-
जायत ततः समुद्रो अर्णवः॥ १३॥

समुद्रादर्णवादधि संवत्सरो अजायत। अहोरात्राणि
विदधद्विश्वस्य मिषतो वशी। सूर्य्याचन्द्रमसौ धाता
यथापूर्व्वमकल्पयत्। दिवञ्च पृथिवीं चान्तरिक्ष-

---

'आर्जीकीये', इत्यन्ययोर्नद्योः सम्बोधनद्वयं। "परुष्णिया असि-
क्निया वितस्तया सुषोमया" इति पदचतुष्टयं इतोषाणां
नदीचतुष्टयवाचकं॥

जले निमग्नस्य प्राणायामार्थमघमर्षणसूक्तमाह। [१५]"ऋतं च
सत्यं चाभीद्धात्तपसः ० दिवञ्च पृथिवीं चान्तरीक्षमथो
सुवः"[१६] इति। 'ऋतं' मानसं यथार्थसङ्कल्पनं। 'सत्यं'
वाचिकं यथार्थभाषणं। 'च'काराभ्यामन्यदपि शास्त्रीयं धर्मजातं
समुच्चीयते। तत् सर्व्वं 'अभीद्धात्' अभितः प्रकाशमानात्
परमात्मनः, उत्पन्नं। कदा समुत्पन्नं, इति उच्यते। 'तपसोऽधि'
स्रष्टव्यपर्य्यालोचनरूपात् तपसः ऊर्द्ध्वं। स तपस्तप्त्वा इदं
सर्व्वमसृजत इति श्रुत्यन्तरात्। यस्य ज्ञानमयन्तप इति श्रुत्य-
न्तराच्च। 'ततः' स्वप्रकाशात् परमेश्वरात्, 'रात्रिः', उत्पन्ना।

मखो सुवः(५५) । (५६)यत् पृथिव्याꣳ रजः स्वमान्तरिक्षे विरोदसी। इमाꣳ स्तदापो वरुणः पुनात्वघमर्षणः(५६) । (५७)पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः(५७) । (५८)एष भूतस्य मध्ये भुवनस्य गोप्ता। एष पुण्यकृताम्

---

अक्षोप्येतदुपलक्षणं । 'ततः' तस्मात् परमेश्वरात्, 'समुद्रः', उत्पन्नः । सामान्योक्तस्य* लवणोदक्षीरोददध्यादिविशेषमभिप्रेत्यार्णवशब्देन पुनर्विशेष्यते । अवान्तरभेदयुक्तात् 'समुद्रात्', 'अधि' ऊर्द्ध्वं, समुद्रोपलक्षितः कृत्स्नः कालः समुत्पन्नः । स च उत्पादकः परमेश्वरः, अहोरात्रोपलक्षितान् सर्व्वान् कालविशेषान् 'विदधत्' सृजन्, 'मिषतः' निमेषादियुक्तस्य, 'विश्वस्य' सर्वस्य प्राणिजातस्य, 'वशी' स्वामी भूत्वा, वर्त्तते । स तादृशः, 'धाता' परमेश्वरः, सूर्य्यादिदेवान्, 'पृथिव्यादिलोकांश्च 'यथापूर्व्वं' अतीतसृष्टौ यस्य यादृशं रूपं तादृशमनतिक्रम्य, 'अकल्पयत्' सङ्कल्पमात्रेण सम्पादितवान् । दिवश्चेत्युपात्तत्वात् 'सुवः'शब्देन भोगविशेषो विवक्षितः ॥

अघमर्षणं कृत्वा तत ऊर्ध्वमवगाहनार्थास्तिस्र ऋचो दर्शयति । (५६)"यत् पृथिव्याꣳ ० पुनात्वघमर्षणः"(५६) । (५७)"एष भूतस्य मध्ये ० मृत्योर्हिरण्मयं"(५७) । (५८) "द्यावापृथिव्योः ०

---

* समानोक्तस्येति F चिह्नितपुस्तकपाठः ।

लोकानेष मृत्योर्हिरण्मयं[५८]। [५९]द्यावापृथिव्योर्हिरण्मयꣳ सꣳश्रितꣳ सुवः ॥ १४ ॥

---

सुवः सꣳशिशाधि"[५८]। इति 'पृथिव्यां', वर्त्तमानानां अस्माकं 'स्वं रजः' स्वकीयं पापं, 'यत्', अस्ति। 'आन्तरीक्षे' सर्व्वतोन्तरिक्षलोके, 'विरोदसी' विशेषेण रोदसोर्द्यावापृथिव्योः, यत्पापमस्ति। अत्र रोदसोः पृथक् उक्तत्वात् पृथिव्यां इतिपदेन भूमेरधस्ताद्वर्त्तमानः पातालोको विवक्षितः। सर्व्वेष्वपि लोकेषु तत्तज्जन्मान्यनुभवताम् अस्माकं यत् पापम् आसीत्, 'तत्' सर्व्वं पापं, तदनुष्ठातॄन् 'इमान्' अस्मांश्च, 'वरुणः', 'पुनातु' शोधयतु, पापं विनाश्य शुद्धानस्मान् करोतु। कीदृशो वरुणः, 'आपः' जलस्वामित्वेन तद्रूपः। अघानि मर्षयति विनाशयति इति 'अघमर्षणः' ॥ तादृशः, 'एषः' वरुणः, 'भूतस्य' अतीतस्य, 'भुवनस्य' प्राणिजातस्य, 'गोप्ता' रक्षिता। तथा भाव्यस्य, भविष्यतोपि अयतः 'गोप्ता'। 'एषः' वरुणः, 'पुण्यकृतां' ज्योतिष्टोमादिकारिणां, 'लोकान्', प्रयच्छति इति शेषः। 'एषः' वरुणः, 'मृत्योः' सर्वप्राणिमारकस्य यमस्य, सम्बन्धिनं 'हिरण्मयं' लोकविशेषं, पापिनां प्रयच्छतीति शेषः॥ यच्च 'हिरण्मयं' ब्रह्माण्डरूपं, 'सुवः' स्वर्गशब्दोऽभिधेयं, 'द्यावापृथिव्योः' द्युलोकभूलोकयोः, 'संश्रितं' प्रवर्त्तते। हे वरुण,

स नः सुवः सꣳशिंशाधि[११]।[१०]आर्द्रं ज्वलति ज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि। योऽहमस्मि ब्रह्माहमस्मि। अहमस्मि ब्रह्माहमस्मि। अहमेवाहं

'सः', त्वं 'नः' अस्मान् प्रति, 'सुवः' तादृशं स्वर्गलोकं, 'संशिशाधि' सम्यक् अनुशाधि ॥

इति तिसृभिः ऋग्भिः स्नातवतः पुरुषस्य आचमनार्थं मन्त्रमाह। [१०]"आर्द्रं ज्वलति ० मां जुहोमि स्वाहा"[१०] इति। यत् एतत् उदकरूपं 'आर्द्रं', तदेतत् स्वाधिष्ठानचैतन्येन 'ज्वलति' प्रकाशते। तच्च अधिष्ठानरूपं 'ज्योतिः', 'अहमस्मि'। देहेन्द्रियादिभ्यो विवेचितस्य मम तदेवाधिष्ठानं-चैतन्यं स्वरूपं इत्यर्थः। तदेव उपपादयते, 'ज्योतिर्ज्वलति', इत्युक्तं तत् 'ज्योतिः', ब्रह्मैव। अतो 'ज्योतिरहमस्मि', इति वाक्येन 'ब्रह्माहमस्मि', इत्युक्तं भवति, नच पूर्वसिद्ध* जीवात्मनः स्वरूपं विनाश्य रूपान्तरस्य ब्रह्मत्वलक्षणस्य प्राप्तिर्भवति। किन्तु 'योऽहं' पुरा जीवः, 'अस्मि', स एव इदानीं 'अहं ब्रह्मास्मि'। वस्तुतो ब्रह्मण्येव मयि पूर्वमज्ञानाज्जीवत्वमारोपितमासीत्। तस्मिन् अज्ञाने विवेकेनापनीते सति वस्तुतः पूर्वसिद्धमेव 'ब्रह्मस्वरूपं इदानीं अनुभविता 'अस्मि,' नतु नूतनं किञ्चित

* पूर्वसिद्धेति E चिह्नितपुस्तकपाठः।

मां जुहोमि स्वाहा(१०)। (११)अकार्य्यकार्य्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः। वरुणोऽपामघमर्षणस्तस्मात्पापात् प्रमुच्यते(११)। (१२)रजोभूमिस्त्वं माᳲ रोदयस्व प्रवदन्ति

---

ब्रह्मत्वमागतं। तस्मात् 'अहमेव,' अहंब्रह्मभावानुभववेलाया-मपि* पूर्वसिद्धोऽहमेव न तु योषित्यग्निध्यानवदुपचरितं ब्रह्मत्वं। तादृशः 'अहं', अन्नरूपं 'मां', 'जुहोमि' उदराग्नौ प्रक्षिपामि। हविःप्रदानवाची 'स्वाहा'शब्दः। मद्देहवर्त्तिभ्यो देवेभ्यो अन्न-रूपं हविर्दत्तम् इत्यर्थः॥

आचमनात् ऊर्ध्वं पुनरपि स्नाने मन्त्रमाह। (११)"अकार्य्य-कार्य्यवकीर्णी ० तस्मात् पापात्प्रमुच्यते"(११) इति। अकार्य्यं शास्त्रप्रतिषिद्धं कलञ्जभक्षणादिकं, तत्कर्तुं शीलं यस्यासौ 'अकार्य्यकारी'। प्रतिषिद्धस्त्रीगमनवान् 'अवकीर्णी,'। ब्राह्मण-सुवर्णहर्त्ता 'स्तेनः'। वेदवेदाङ्गविद् ब्राह्मणः, गर्भो वा भ्रूणः, तं हन्ति इति 'भ्रूणहा'। गुरुदारगामी तु 'गुरुतल्पगः'। एतादृशपापकारिणम् अपि मां 'अघमर्षणः' पापविनाशकः, 'अपां', स्वामी 'वरुणः', 'तस्मात्' सर्वस्मात्, 'पापात्', 'प्रमुच्यते' मोचयति॥

रहस्यपापक्षयार्थं स्नानमन्त्रमाह। (१२)"रजोभूमिस्त्वं माᳲ

---

* अहं ब्रह्मत्वानुभववेलायामिति F, चिह्नितपुस्तकपाठः। अहं ब्रह्मतत्त्वानभववेलायामिति E चिह्नितपुस्तकपाठः।

धीराः(१२)* । (१२)आक्रान्त्समुद्रः प्रथमे विधर्मन् जनयन् प्रजा भुवनस्य राजा ॥ वृषा पवित्रे अधि सानो अव्ये बृहत् सोमो वावृधे सुवान इन्दुः(१२) ॥ १५ ॥

---

० पुनात्वघमर्षणः"*(१२) इति । 'रजः' रजःपापस्य, 'भूमिः' स्थानभूतः, अहं, अतो हे देव 'त्वं', तत्पापफलभूत-यातनया 'मां रोदयस्व' । यद्यप्येतत्तवोचितं तथापि 'धीराः' बुद्धिमन्तः, शास्त्रपारङ्गताः, मामनुगृह्णत एवं 'प्रवदन्ति' । तदीयं वाक्य-मुदाह्रियते । 'ऋषयः' वशिष्ठमुख्याः, एनं स्नानकारिणं 'पुनन्तु' शोधयन्तु । तथा 'वसवः' अष्टसङ्ख्याकाः, एनं 'पुनन्तु' । 'वरुणः', अपि एनं 'पुनातु' । 'अघमर्षणः' पापविनाशकोऽन्योऽपि देवः, एनं 'पुनातु' । एवं धीरैर्महद्भिरनुगृहीतत्वात् वृष्यादिभिः पूतं मां त्वमपि यमदेव मा बाधस्व, अनुगृहाण, इत्यर्थः ।

स्नानादूर्ध्वं जप्यं मन्त्रमाह । (१२)"आक्रान्त्समुद्रः प्रथमे ० वावृधे सुवान इन्दुः"(१२) इति । समुद्रवत् प्रौढ़त्वात् समोदाख्यपरमानन्दस्वभावत्वात् वा 'समुद्रः' परमात्मा, स च सर्वं जगत् 'आक्रान्' आक्रान्तवान्, व्याप्तवान् । किं कुर्वन्, 'प्रथमे' सृष्टेरादिकाले, 'प्रजा जनयन्' । कीदृशे प्रथमकाले,

---

* भाष्यपुस्तकद्वयधृतमूलपाठे प्रवदन्ति धीरा इत्यस्योत्तरं पुनन्तु ऋषयः पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षण इत्यधिकः पाठः । अस्मल्लब्धचतुर्ष्वपि मूलपुस्तकेषु नैष पाठो दृश्यते ।

परस्तात्[१] । यस्माः[२] । गुहासु[३] । मम[४] । चक्रतु-ण्डाय धीमहि[५] । तीक्ष्णदंष्ट्राय धीमहि[६] । परि[७] । प्रतिष्ठितं[८] । देभुः[९] । यच्छतु[१०] । दधातन[११] । अक्षुः[१२] । अर्णवः[१३] । सुवः[१४] । राजा, एकं च[१५] ।

रुद्रो रुद्रश्च दन्तिश्च नन्दिः षण्मुख एव च ।
गरुडो ब्रह्मविष्णुश्च नारसिंहस्तथैव च ॥
आदित्योऽग्निश्च दुर्गिश्च क्रमेण द्वादशाभसि ।

म(१) । म(२) । व(३) । च(४) । म(५) । सु(६) । वे(७) । ना(८) । व(९) । भा(१०) । वे(११) । का-त्यायनाय(१२) ॥

---

'विधर्मन्' प्राणिभिः पूर्वकल्पे अनुष्ठिता विविधा धर्मा यस्मिन् काले स्वफलदानार्थं उद्बोध्यन्ते, सोऽयं विधर्मा तस्मिन् । स च परमात्मा 'भुवनस्य', पालकत्वात् 'राजा' । स्वभक्तानां कामानां वर्षणहेतुत्वात् 'वृषा' । इन्दुः, सर्वत्र व्याप्तवान् । किञ्च । 'सानो' सानौ, पर्वतपार्श्वभागे । श्रुत्यन्तरे तं ब्रह्म-गिरिः इत्याचक्षत इति श्रवणात् ब्रह्मावबोधयोग्यो देहो गिरिः, तदवयवः सानुः, हृदयपुण्डरीकं, तच्च 'पवित्रं' वाह्य-देहावयववदुच्छिष्टस्पर्शादिदोषाभावात् शुद्धं,'अधि' पुरुषार्थहे-तुध्यानस्थानत्वात् इतरावयवेभ्योऽप्यधिकं, अतएव आद्रुणाम-

(१४)जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं

---

वनस्य पावनस्य हेतुत्वात् 'श्रयं'' हिमवत्पुत्र्या गौर्या ब्रह्मविद्याभिमानिरूपत्वात् गौरीवाचक उमाशब्दो ब्रह्मविद्यामुपलक्षयति। अत एव तलवकारोपनिषदि ब्रह्मविद्यामूर्त्तिप्रस्तावे ब्रह्मविद्यामूर्त्तिः पठ्यते, बहुशोभमाना तु मां हैमवतीं होवाच इति। तद्विषयः परमात्मा तया उमया सह वर्त्तमानत्वात् 'सोमः', स च यानौ हृदयपुण्डरीके 'वृहत्' ब्रह्म यथा भवति तथा, 'वावृधे' वृद्धिं प्राप्तः, पूर्वं अविद्यावृतत्वेन सङ्कुचितो जीवो भूत्वा तस्यामविद्यायां विद्ययापनीतायां ब्रह्मत्वाविर्भावात् प्रवृद्ध इव भासत इत्यर्थः। स च सोमः, 'सुवानः' जीवानां धर्माधर्मयोः प्रेरकः, 'इन्दुः' फलदानेन चन्द्रवदाह्लादहेतुः॥

अथानिष्टपरिहारार्थत्वेन जप्या मन्त्रा उच्यन्ते। तत्रैकामृचामाह। (१४)"जातवेदसे सुनवाम ० नावेव सिन्धुं दुरितात्यग्निः''(१४) इति। वेदांसि वेदनानि ज्ञानानि तानि जातान्युत्पन्नानि यस्मात् अग्नेः सोऽयं जातवेदाः, आधानेन संस्कृतेऽग्नौ पश्चात्तदा तदा कर्त्तव्यविषयाणि ज्ञानान्युत्पद्यन्ते, तस्मै 'जातवेदसे'। यागकाले लतात्मकं 'सोमं', 'सुनवाम' अभिषुतं करवाम। स्वयं सर्वं वेत्ति इति 'वेदः' अग्निः,

दुरितात्यग्निः(१४)। (१५)तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टां। दुर्गां देवीꣳ शरणमहं प्रपद्ये सुतरसि तरसे नमः(१५)। (१६)अग्ने त्वं पारया

---

स च 'अरातीयतः' अस्माखरातित्वं शत्रुत्वमिच्छतः पुरुषान्, 'निदहाति' नितरां भस्मीकरोति। किञ्च। 'सः' अग्निः, 'नः' अस्माकं, 'विश्वा दुर्गाणि' सर्वा आपदः, 'अतिपर्षत्' अतिशयेन पालितवान्, इत्यर्थः। किञ्च। यथा लोके 'नावा', 'सिन्धुं' समुद्रं, नाविकस्तारयति, तथा 'अग्निः', 'दुरितानि', पापानि, अतिशयेन तारयति इति शेषः॥

द्वितीयामृचमाह। (१५)"तामग्निवर्णान्तपसा ० सुतरसि तरसे नमः"(१५) इति। येयं नवदुर्गा कल्पादिषु मन्त्रशास्त्रेषु प्रसिद्धा, 'तां दुर्गां देवीं', 'अहं शरणं प्रपद्ये'। कीदृशीं, अग्निसमानवर्णां', 'तपसा' स्वकीयेन सन्तापेन, 'ज्वलन्तीं' शत्रून्दहन्तीं, विशेषेण रोचते स्वयमेव प्रकाशत इति विरोचन, परमात्मा, तेन दृष्टत्वात् 'वैरोचनीं', 'कर्मफलेषु' स्वर्गपशुपुत्रादिषु निमित्तभूतेषु, 'जुष्टां' उपासकसेवितां। हे 'सुतरसि' सुष्ठु संसारतरणे हेतो देवि, 'तरसे' तारयित्र्यै तुभ्यं, 'नमः', अस्तु॥

तृतीयामृचमाह। (१६)"अग्ने त्वं पारया ० तनयाय शंयोः"(१६) इति। हे अग्ने 'नव्यः' स्तोतव्यः, 'त्वं', 'अस्मान्', 'स्वस्तिभिः',

नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः(११) । (१०)विश्वानि नो दुर्गहा जातवेदः सिन्धुन्न नावा दुरिताऽतिपर्षि । अग्ने अत्रिवन्मनसा गृणानोऽस्माकं

---

क्षेमकारिभिः उपायैः, 'विश्वा दुर्गाण्यति' सर्वा आपदोऽतिशयेन लङ्घयित्वा, 'पारय' संसारस्य परतीरन्नय । 'नः', अस्माकं, त्वत्प्रसादात् 'पूश्च' या निवासयोग्या पुरी सत्यपि, पृथिवी, सा विस्तीर्णा भवतु । 'उर्वी' सर्वस्य निष्पादनयोग्या भूमिरपि, 'बहुला', भवतु । त्वञ्च 'तोकाय तनयाय' अस्मदपत्याय तदीयपुत्राय च, 'शंयोर्भव' सुखस्य मिश्रयिता भव ॥

चतुर्थीमृचमाह । (१०)"विश्वानि नो दुर्गहा ० बोधयिता तनूनां"(१०) इति । हे 'जातवेदः', 'दुर्गहा' सर्वासामापदामपहन्ता, । त्वं 'विश्वानि दुरिता' सर्वाणि पापानि, 'नावा', 'सिन्धुं न' समुद्रमिव, 'नः' अस्मान्, 'अतिपर्षि' अतिशयेन तारयसि । हे 'अग्ने', 'अत्रिवत्' आध्यात्मिकादितापत्रयरहितत्वेन अत्रिशब्दवाच्यो जीवन्मुक्तो महर्षिः, "आत्मौपम्येन भूतानां दयां कुर्वीत मानवः" इत्येतच्छास्त्रमनुसृत्य, "सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः" इत्येवं मनसा यथा यथा सर्वदा भावयति, तथा त्वमपि 'मनसा', 'गृणानः' गुणान् उच्चारयन् भावयन्,

बोध्यविता तनूनाम्(१७)। (१८)पृतनाजितꣳ सहमानमुग्रमग्निꣳ हुवेम परमात्सधस्थात्। स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरितात्यग्निः(१८)। (१९)प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि। स्वाञ्चाग्ने तनुवं पिप्रयस्वास्मभ्यञ्च सौभगमायजस्व(१९)। गोभिर्जुष्टमयुजो निषिक्तं तवेन्द्र विष्णो-

---

'अस्माकं', 'तनूनाम्', 'अविता' रक्षिता भूत्वा, 'बोधि' बुध्यस्व, सावधानो भवेत्यर्थः॥

पञ्चमीमृचमाह। (१८)"पृतनाजितꣳ सहमानमुग्रमग्निꣳ ० अति दुरितात्यग्निः"(१८) इति। पृतना परकीयसेना जयतीति 'पृतनाजित्', तं, अतएव 'सहमानं' शत्रूनभिभवन्तं। 'उग्रं' भीतिहेतुं, 'अग्निं' 'परमात्' उत्कृष्टात् 'सधस्थात्' सहैः स्थेयैः सहावस्थानदेशात्, 'हुवेम' आह्वयाम। स न इत्यादि पूर्ववत्। किञ्च 'अग्निर्देवः' 'क्षामत्' अस्मदपराधान् क्षममाणः, 'अति दुरिता' अतिशयितानि पातकानि ब्रह्महत्यादीनि अतिलङ्घयतीति शेषः॥

षष्ठीमृचमाह। (१९)"प्रत्नोषि कमीड्यो ० सौभगमायजस्व"(१९) इति। हे अग्ने त्वं 'अध्वरेषु' यागेषु, 'ईड्यः' स्तुत्यः सन् 'कं' सुखं, 'प्रत्नोषि' विस्तारयसि। 'सनाच्च' कर्मफलस्य दातापि सन् 'होता' होमनिष्पादकः, 'नव्यः' स्तुत्योऽपि भूत्वा 'सत्सि'

रनुसञ्चरेम। नाकस्य पृष्ठमभिसंवसानो वैष्णवीं लोक इह मादयन्तां॥

अग्निः, चत्वारि च॥ अनु० १॥

---

अथ द्वितीयोऽनुवाकः।

(१)भूरग्नये पृथिव्यै स्वाहा भुवो वायवेऽन्तरिक्षाय स्वाहा सुवरादित्याय दिवे स्वाहा भूर्भुवः सुवश्चन्द्र-

---

सीदसि, यागदेशे तिष्ठसि। अतो हे 'अग्ने', 'स्वाहा' स्वकीयामपि, 'तनुवं', 'पिप्रयस्व' अस्मदीयहविषा प्रीणय, ततः 'अस्मभ्यम्', 'शोभगं' शोभनभाग्योपेतत्वं, 'आयजस्व' सर्वतो देहि॥

इति सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि प्रथमोऽनुवाकः॥

---

अथ द्वितीयोऽनुवाकः।

अथ होमार्थान्महाव्याहृतिसञ्ज्ञकान् मन्त्रानाह। (१)"भूरग्नये पृथिव्यै ० भूर्भुवः सुवरोम्"(१) इति। भूर्भुवः सुवरोमिति त्रीणि पदान्यव्ययानि तानि च व्यस्तरूपेण समस्तरूपेण च मन्त्रचतुष्टयरूपतां* प्रतिपाद्याग्न्यादिदेवताप्रतिपादकानि। तथा सत्ययमर्थः सम्पद्यते। 'भूः', इत्यनेन मन्त्रेण प्रतिपाद्याग्नये, तन्मन्त्र-

---

* चतुष्टयपरतामिति Q चिह्नितपुस्तकपाठः।

मसे दिग्भ्यः स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवरोम्(१) *॥ अनु० †२ ॥

---

प्रतिपाद्यायै 'पृथिव्यै', च 'स्वाहा' सुहुतमिदं द्रव्यमस्तु इति। एवमुत्तरेष्वपि त्रिषु मन्त्रेषु योज्यं। अत्र द्रव्यविशेषस्यानुक्तत्वात् सर्वहोमसाधारणमाज्यमेव द्रव्यमित्यवगन्तव्यम्। फलविशेषस्यानुक्तत्वात् पापक्षयोऽत्रसाधारणं फलं द्रष्टव्यं‡। चतुर्भिर्मन्त्रैर्यथाशक्ति हुत्वा अन्ते प्राङ्मुखः 'नमो देवेभ्यः', इति मन्त्रेणोपतिष्ठेत। पश्चाद्दक्षिणाभिमुखः 'स्वधा पितृभ्यः', इति मन्त्रेणोपतिष्ठते। 'स्वधा'शब्दः पितृप्रियं नमस्काराद्युपचारं ब्रूते। 'भूर्भुवः सुवः', इति लोकत्रयेऽपि पापरहितो भवामि। 'ॐ' इत्ययं शब्दः अङ्गीकारवाचित्वात् तत्र तत्रोचितार्थाङ्गीकारं प्रतिपादयति। नारायणाख्येनेश्वरेण मुनिना वा दृष्टत्वादयं प्रपाठको नारायणीयः॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि द्वितीयोऽनुवाकः॥

---

* सुवरम ओम् इति B, J, N, O चिह्नितपुस्तकचतुष्टयपाठः।

† अस्मल्लब्धेषु चतुर्षु मूलपुस्तकेषु भूरन्नये पृथिव्यै इत्यनुवाकस्तृतीयत्वेन परिगणितः। परन्तु भाष्यकारेणायमनुवाको द्वितीयत्वेन परिगृहीतः।

‡ एतं पापक्षयोऽत्र साधारणं फलमिति Q चिह्नितपुस्तकपाठः।

अथ तृतीयोऽनुवाकः।

(१)भूरन्नमग्नये पृथिव्यै स्वाहा भुवोऽन्नं वायवेऽन्तरिक्षाय स्वाहा सुवरन्नमादित्याय दिवे स्वाहा भूर्भुवः सुवरन्नं चन्द्रमसे दिग्भ्यः स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवरन्नमोम्(१) ॥ अनु० ३ ॥

---

अथ चतुर्थोऽनुवाकः।

(१)भूरग्नये च पृथिव्यै च महते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादि-

---

अथ तृतीयोऽनुवाकः।

अन्नसमृद्धिकामस्य तेष्वेव मन्त्रेषु पाठान्तरमाह। (१)“भूरन्नमग्नये पृथिव्यै ० सुवरन्नमोम्”(१) इति। अन्नद्रव्यं स्वाहुतमस्तु। समृद्धं ‘अन्नं’, ‘ओम्’ प्राप्नोमि, इत्येतावानेव विशेषः॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि तृतीयोऽनुवाकः॥

---

अथ चतुर्थोऽनुवाकः।

पूजाकामस्य पुनरप्यन्यपाठमाह। (१)“भूरग्नये च ० सुवर्महरोम्”(१) इति। ‘महते’ प्रौढाय पूज्याय, वा हिरण्य-

त्याय॑ च दि॒वे च॑ मह॒ते च॒ स्वाहा॒ भूर्भुव॒: सुव॑श्च॒न्द्र-म॑से च॒ नक्ष॑त्रेभ्यश्च दि॒ग्भ्यश्च॑ मह॒ते च॒ स्वाहा॒ नमो॑ दे॒वेभ्य॑: स्व॒धा पि॒तृभ्यो॒ भूर्भुव॒: सुव॒र्मह॒रोम्[१] ॥

अनु॰ ४ ॥

---

अथ पञ्चमोऽनुवाकः ।

[१]पाहि नो॑ अग्न एन॑से स्वा॒हा । पाहि नो॑ विश्व-

---

गर्भाय, 'च'कारैस्तत्तद्देवतानां सेवका देवाः परिगृह्यन्ते । ते-भ्योऽपि स्वाहुतमित्युक्तं भवति । 'महरोम्' पूजां प्राप्नवामि ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरार-ण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्या-मुपनिषदि चतुर्थोऽनुवाकः ॥

---

अथ पञ्चमोऽनुवाकः ।

पूर्वत्र भूरग्नये इत्यनुवाके सर्वसाधारणाः पापक्षयार्था होम-मन्त्रा उक्ताः । अथ प्रतिबन्धनिवारणेन मुमुक्षोर्ज्ञानप्राप्त्यर्था होममन्त्रा उच्यन्ते । [१]"पाहि नो अग्ने ० व्रतक्रतो स्वाहा"[१] इति । हे 'अग्ने', 'नः' अस्मान्, 'एनसः' ज्ञानप्रतिबन्धकात् पापात्, 'पाहि' रक्ष । तुभ्यमिदं स्वाहुतमस्तु । 'नः' अस्माकं, 'विश्व-वेदसे' कृत्स्नतत्त्वज्ञानसिध्यर्थं, 'पाहि' तत्साधनसम्पादनेन पालय, तदर्थं तुभ्यं इदं स्वाहुतमस्तु । विशेषेण भानं दीप्तिः विभा सैव वसु धनं यस्याग्नेः सोऽयं विभावसुः । हे 'विभावसो', 'यज्ञं'

वेदसे स्वाहा। यमं पाहि विभावसो स्वाहा। सर्वं पाहि शतक्रतो स्वाहा[१] ॥

*पाहि नो अग्न एकया। पाह्युत द्वितीयया। पाह्यूर्जं तृतीयया। पाहि गीर्भिश्चतसृभिर्वसो स्वाहा ॥ अनु० ५ ॥

---

अथ षष्ठोऽनुवाकः।

(१)यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दांस्याविवेश। सताः शिक्यः† प्रोवाचोपनिषदिन्द्रो ज्येष्ठ

---

विविदिषाहेतुत्वेनास्माभिरनुष्ठीयमानं, 'पाहि' निर्विघ्नेन समाप्तिं नीत्वा पालय। शतसङ्ख्याकाः क्रतवो येनाग्निना निष्पाद्यन्ते सोऽयं शतक्रतुः। हे 'शतक्रतो', 'सर्वं' ज्ञानसाधनं गुरुशास्त्रादिकं, 'पाहि' ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि पञ्चमोऽनुवाकः ॥

---

अथ षष्ठोऽनुवाकः।

अथ ज्ञानप्रतिपादकसमस्तवेदान्तप्राप्तिकामेन जप्यं मन्त्रमाह। (१)"यश्छन्दसामृषभः ० भूर्भुवः सुवश्छन्द ओम्"(१) इति। 'यः' प्रणवः, 'छन्दसां' वेदानां मध्ये, 'ऋषभः' श्रेष्ठः, 'विश्वरूपः'

---

* एतन्मन्त्रस्य भाष्यं नास्ति।

† B, J, N, O, Q चिह्नितपुस्तके सचाः शिक्य इति पाठः।

इन्द्रियाय ऋषिभ्यो नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवश्छन्द ओम्[1] ॥ ६ ॥

---

सर्वजगदात्मकः, एतद्वेदसारत्वं विश्वरूपत्वञ्च सांहित्यामुपनिषदि प्रपञ्चितं। तादृशः प्रणवः 'छन्दोभ्यः' वेदेभ्यः, प्रादुर्भूत इति शेषः। वेदसारत्वेन प्रजापतेः प्रत्यभादित्यर्थः। सः पुनः 'छन्दांसि' गायत्र्यादीनि, 'आविवेश'। छन्दोभिरुपलक्षितेषु मन्त्रेषु प्रयोक्तव्यः। तथाच प्रपञ्चसारेऽभिहितं। अयं तु वेदादित्वात्सर्वमन्त्रूणां प्रयुज्यते आदाविति। तेन प्रणवेन प्रतिपाद्यः 'इन्द्रः' परमैश्वर्ययुक्तः परमात्मा, 'उपनिषत् प्रोवाच' उपनिषदं ब्रह्मविद्यां सर्ववेदान्तसिद्धां उक्तवान्। कीदृश इन्द्रः, 'सतां शिक्यः' सद्भिः कर्मानुष्ठायिभिरुपासकैर्ज्ञानिभिश्च प्राप्तुं शक्यः, 'ज्येष्ठः' कारणत्वेन सर्वस्मात्प्रथमः। किमर्थं विद्यामुक्तवानित्युच्यते। 'ऋषिभ्यः' ऋषीणामन्तर्मुखानां जिज्ञासूनां, 'इन्द्रियाय' ज्ञानसामर्थ्याय, अतोऽहं तत्प्रतिबन्धनिवारणाय 'देवेभ्यः पितृभ्यः', च 'नम'स्करोमि। 'भूर्भुवः सुवरोम्' लोकत्रयावस्थितम् प्राप्नोमि। देवानिति शेषः। एतदेवाभिप्रेत्य केचिद् भूर्भुवः सुवश्छन्द ओमिति पठन्ति ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि षष्ठोऽनुवाकः ॥

---

अथ सप्तमोऽनुवाकः ।

(१)नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ओम्(१) ॥ अनु० ७ ॥

अथाष्टमोऽनुवाकः ।

(१)ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपो दमस्तपः

---

अथ सप्तमोऽनुवाकः ।

अथ लब्धानां वेदानामविस्मरणाय जप्यं मन्त्रमाह । (१)"नमो ब्रह्मणे ० ममामुष्य ओम्"(१) इति । 'ब्रह्मणे' जगत्कारणाय, 'नमः', 'अस्तु'। तत्प्रसादान्मदीये चित्ते ग्रन्थतदर्थयोः 'धारणं', अस्तु । 'निराकरणं' विस्मरणं यथा न भवति तथा, 'धारयिता भूयासं' । 'अमुष्य' इत्थं प्रार्थयमानस्य 'मम', 'कर्णयोः', यत्किञ्चिद्वेदशास्त्रादिकं यदा कदाचिदपि 'श्रुतं', आसीत् तत्सर्वं हे देव 'मा च्योढ्वं' मा विनाशय । ततोऽहं 'ओम्' प्राप्नुयां, स्थिरं धारणमिति शेषः ।

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि सप्तमोऽनुवाकः ॥

श॒मस्तपो॒ दान॒ं तपो॒ य॒ज्ञं तपो॒ भूर्भुव॒ः सुव॒र्ब्रह्मै॒तदुपा॒स्स्वै॒तत्तपः[१] ॥ अनु० ८ ॥

---

अथाष्टमोऽनुवाकः ।

अथ ज्ञानसाधनं यत्तपश्चित्तैकाग्र्यमस्ति "मनसश्चेन्द्रियाणाञ्च ह्यैकाग्र्यं परमन्तपः" इति श्रुतेः । तत्तपः श्रौतस्मार्तसर्वकर्मस्वरूपतया प्रशंसति । यद्वा । तथाविधतपःसिद्ध्यर्थं जप्यं मन्त्रमाह । (१)"ऋतं तपः सत्यन्तपः ० ब्रह्मैतदुपास्स्वैतत्तपः"(१) इति । 'ऋतं' मनसा यथार्थवस्तुचिन्तनं, 'सत्यं' वाचा यथार्थभाषणं । 'श्रुतं' वेदस्य पूर्वोत्तरभागार्थावबोधायोभयोर्मीमांसयोः श्रवणं । 'शान्तं' शान्तिः बाह्येन्द्रियाभ्यन्तरेन्द्रियोपरतिः । 'दानं' धनेषु स्वत्वनिवृत्तिः परस्वत्वापादनपर्यन्ता । 'यज्ञः' अग्निहोत्रादिः । तदेतत्सर्वमर्वाचीनं 'तपः' भूरादिलोकत्रयात्मकं विराड्देहरूपं । यत् 'ब्रह्म', अस्ति, हे मुमुक्षो 'एतत्' ब्रह्म, 'उपास्स्व' विजातीयप्रत्ययरहितं सजातीयप्रत्ययप्रवाहं कुरु, तत् 'एतत्' उपासनं, उत्तमं 'तपः' ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि अष्टमोऽनुवाकः ॥

---

## अथ नवमोऽनुवाकः ।

(१)यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति यथासिधारां क-

## अथ नवमोऽनुवाकः ।

अथ विहितानुष्ठानरूपं पुण्यं ज्ञानसाधनतया प्रशंसति । निषिद्धाचरणं* ज्ञानप्रतिबन्धकतया निन्दति । (१)"यथा वृक्षस्य सम्पुष्पितस्य ० आत्मानं जुगुप्सेत्"(१) इति । लोके 'वृक्षस्य' उद्यानादौ स्थितस्य चम्पकपाटलकेतकीपुन्नागादेः, 'सम्पुष्पितस्य' सम्यग्विकसितपुष्पोपेतस्य, यः 'गन्धः' सुरभिः, अस्ति, सोऽयं 'दूरात्' देशात्, 'वाति' वायुना सहागच्छति । 'एवं', पुण्यकर्मणः, ज्योतिष्टोमादेः, सत्कीर्त्तिः सुगन्धसमाना 'दूरात् वाति' मनुष्यलोकात् स्वर्गं गच्छति, तस्मात् पुण्यमनुष्ठेयं । अथ पापस्य दृष्टान्त उच्यन्ते । 'यथा', लोके राजा अमात्यादीनां विनोदाय प्रवृत्तः वंशाग्रवृत्तादिदुर्घटव्यापारेष्वत्यन्तकुशलमनाः कश्चिद् 'कर्त्ते' कूपादावगाधे कस्मिंश्चिद्गर्त्तविशेषे, 'अविह्वितां' प्रसारितां, 'असिधारां' खड्गधारां, 'अवक्रामेत्' पादाभ्यां धाराया उपरिगन्तुं प्रवर्त्तते । तदानीमसौ मनस्येवं विचारयति, 'यत्' यदि, 'युवे ह्वे' हकारो व्यत्ययेन यकारस्थाने पठितः, अतएव केचिद् युवे युवे इति पठन्ति,—योमि योमि पुनः पुनः पादमसिधारया मिश्रयामीत्यर्थः । तदानीमहं 'विहृदिष्यामि', 'कर्त्ते

---

* निषिद्धाचरणरूपन्तु इति F चिह्नितपुस्तकपाठः ।

तँऽवँहितामवक्रामेद्यद्युवे हुवे* ह वा विह्वदिष्यामि कर्त्ते पतिष्यामीत्येवमनृतादात्मानं जुगुप्सेत्[१] ॥ अनु० ९ ॥

---

अथ दशमोऽनुवाकः ।

[१]अणोरणीयान्महतो महीयानात्मा गुहायां नि-

---

वा पतिष्यामि', अहमित्येतमर्थं 'ह'शब्दो ब्रूते। यकारस्थाने व्यत्ययेन हकारः। असिधारायां पादस्य दृढस्पर्शे पादच्छेदेनाहं विक्लिन्नो विवशो भविष्यामि, दृढस्पर्शाभावे त्वधोवर्त्तिन्यगाधे गर्त्ते पतिष्यामि, 'इति एवं', पापे वर्त्तमानः पुरुषः विचारयेत्। यदि पापं प्रकटं कुर्यां तदानीमिह लोके निन्दितो भविष्यामि, तत्परिहाराय अप्रकटं कुर्यां, तदापि नरके पतिष्यामीति, ईदृग्विचारयुक्तः पुरुषः 'अनृतात्' पापात्, 'आत्मानं', 'जुगुप्सेत्' धिङ् मां लोकद्वयभ्रंशहेतुमिति† निन्दित्वा पापात् निवारयेत्॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि नवमोऽनुवाकः ॥

इति प्रथमखण्डः समाप्तः ॥

---

अथ दशमोऽनुवाकः ।

यथोक्तप्रशंसोपेतपुण्यानुष्ठानेन निषिद्धाचरणवर्जितेन शुद्धान्तःकरणस्य पुरुषस्य तत्त्वमुपदेष्टुमयमनुवाक आरभ्यते। तत्र प्रथ-

---

* युवे युवे इति B, J, I, N, O, Q चिह्नितपुस्तकपाठः।

† नाशहेतुमिति E चिह्नितपुस्तकपाठः।

ह्रितोऽस्य जन्तोः। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं[१]। [२]सप्त प्राणाः प्रभवन्ति तस्मात्

मानमाह। [१]"अणोरणीयान्महतः ० प्रसादान्महिमानमीशं"[१] इति। सच्चिदानन्दैकरसः परमेश्वरः सर्वाधिष्ठत्वेन* सर्वस्य जगतः स्वरूपत्वादात्मशब्देनोच्यते। आत्मशब्दस्य स्वरूपवाचीति प्रसिद्धं। मायाकार्यभूते लौकिकव्यवहारे सूक्ष्मत्वेन प्रसिद्धः, परमाणुद्व्यणुकादिरणुशब्दवाच्यः। तस्मादप्ययमात्मा अतिशयेन सर्वसूक्ष्मत्वात् 'अणीयान्' आकाशदिगादयः परिमाणाधिक्यत्वाल्लोके महच्छब्दवाच्याः। ततोऽप्ययं 'आत्मा', अतिशयेनाधिक्यत्वात् 'महीयान्'। परमाणुद्व्यणुकादीनां अस्मदादिप्रत्यक्षगम्यत्वाभावेऽपि योगिजनचक्षुर्गम्यत्वमस्ति। तदप्यात्मनो नास्तीत्यभिप्रेत्य अणीयस्त्वमुक्तं। आकाशदिगादीनामेकब्रह्माण्डवर्त्तित्वात् तादृशब्रह्माण्डलक्षकोट्यधिष्ठानत्वमभिप्रेत्य महीयस्त्वमुक्तं। तादृशः परमात्मा 'अस्य' देवमनुष्यादिरूपस्य, 'जन्तोः', 'गुहायां निहितः'। गुहाशब्देन हृदयपुण्डरीकमध्यवर्त्तिनी बुद्धिरुच्यते। गुहसंवरण इत्यस्माद्धातोरुत्पन्नो गुहाशब्दः। बुद्धिश्च हृदयपुण्डरीकेन संवृता तन्मध्यवर्त्तिनीत्वात् तस्यां बुद्धावस्य परमात्मनो निहितत्वं नाम विद्ययोपलभ्यमानत्वं, नतु बुद्धावाधेयत्वं। सर्वजगदाधारस्य तदसम्भवात्। 'तं' तथावस्थितं, 'ईशं', शमादिगुणयुक्तोऽधिकारी पुरुषः

* सर्वाधिष्ठानत्वेनेति Q चिह्नितपुस्तकपाठः।

सप्तार्चिषः समिधः सप्त जिह्वाः। सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयान्निहिताः सप्त सप्त[२]।

'पश्यति' साक्षात्करोति। स चाधिकारः 'धातुः प्रसादात्', उपजायते। धाता, जगतो विधाता परमेश्वरः, तस्य प्रसादः, अनुग्रहः। तथा च पूर्वाचार्यैरुक्तं। "ईश्वरानुग्रहादेषां पुंसामद्वैतवासना। महाभयकृतत्राणा द्विचाणां यदि जायते"* इति। कीदृशमीशं, 'अक्रतुं' सङ्कल्परहितं, स्त्र्यन्नपानादिभोगजातं समीचीनमितिसङ्कल्पनं जीवस्यैव न त्वीशस्य। सङ्कल्पहेतुभूतान्तःकरणोपाधेरभावात्। अतो निरुपाधिकत्वात् 'महिमानं' अतिशयेन महान्तं। ईदृशं परमेश्वरं साक्षात्कृत्य 'वीतशोकः' जन्ममरणादिशोकरहितो भवति॥

द्वितीयामृचमाह। [१]"सप्त प्राणाः प्रभवन्ति ॰ निहिताः सप्त सप्त"[२] इति। शुद्धान्तःकरणैर्ज्ञातव्यो यः परमात्मा उक्तः। तत्र शाखाचन्द्रन्यायेनोपलक्षणार्थं जगत्कारणत्वमुच्यते। 'तस्मात्' परमात्मनो मायाशक्तिविशिष्टात्, 'सप्त प्राणा प्रभवन्ति'। अन्यत्र सप्त वै शीर्षण्याः प्राणा† इत्युक्तत्वात्। शिरोवर्त्तिसप्तच्छिद्रगताः सप्तसङ्ख्याकाश्चक्षुरादयः प्राणाः परमेश्वरादुत्पद्यन्ते। द्वे चक्षुषी, द्वे श्रोत्रे, द्वे नासिके, मुखमेकमिति सप्तत्वं। तेषां चक्षुरादीनां स्वस्वविषयप्रकाशनशक्तयः 'सप्तार्चिषः'। तैरर्चिभिर्ज्ञेय-

* द्विजानामेव जायते इति Q चिह्नितपुस्तकपाठः।

† प्राणाः प्राणा इत्युक्तत्वात् इति F चिह्नितपुस्तकपाठः।

(१)अतः समुद्रा गिरयश्च सर्वेऽस्मात् स्यन्दन्ते सिन्धवः सर्वरूपाः । अतश्च विश्वा ओषधयो रसाश्च येनैष भूत-

---

माणलेन 'सप्त'सङ्ख्याका विषयाः 'समिधः'। विषयैर्हीन्द्रियाणि समिध्यन्ते प्रकाशयुक्तानि क्रियन्ते। यद्येकस्यापि चक्षुरिन्द्रियस्य गोलकभेदेन द्वित्वं । तथा रूपस्याप्येकस्य वामदक्षिणरूपद्या-हकचक्षुर्वृत्तिभेदात् द्वित्वं द्रष्टव्यं । एवं शब्दगन्धयोर्द्वित्वे सति विषया सप्त सम्पद्यन्ते। अथवा समिच्छब्देन सप्तसङ्ख्या न सम्बध्यते किन्तु जिह्वाशब्देन। अग्निजिह्वानाञ्च सप्तत्वमाथर्वणि-कैराम्नातं। "काली कराली च मनोजवा च सुलोहिता चापि सुधूम्रवर्णा। स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः" इति॥ ताश्च परमेश्वरात् प्रभवन्ति। 'इमे' भूरादयः, 'सप्त'सङ्ख्याकाः 'लोकाः', 'तस्मात् प्रभवन्ति'। तेषु सप्तसु लोकेषु देवमनुष्यादिशरीरवर्त्तिनः 'प्राणाः', 'चरन्ति'। तादृशा लोका उत्पन्ना इति पूर्वेणान्वयः। गुहा, बुद्धिः, तस्यां शेते, उपलभ्यते, इति 'गुहाशयः' परमेश्वरः, तस्मात्, उत्पन्नाः सप्तर्षयः। 'सप्त' समुद्रा इत्यादिकाः, 'सप्त'सङ्ख्याकाः पदार्थविशेषाः, 'निहिताः' तत्र तत्रावस्थापिताः॥

तृतीयामृचमाह। (१)"अतः समुद्राः ० भूतस्तिष्ठत्यन्तरा-त्मा"(१) इति। क्षीरोदधिप्रभृतयः 'समुद्र'विशेषाः, मेरुप्रभृ-तयः 'गिरि'विशेषाश्च, 'अस्मात्' परमेश्वरात्, 'सर्वे', प्रभवन्ति। गङ्गागोदावर्य्यादयः 'सर्वरूपाः' बहुविधाः, नद्यः, अस्मात्,

स्तिष्ठत्यन्तरात्मा[३]। [४]ब्रह्मा देवानां पदवीः कवीना-मृषिर्विप्राणां महिषो मृगाणां। श्येनो गृध्राणाꣳ स्वधि-तिर्वनानाꣳ सोमः पवित्रमत्येति रेभन्[४]। [५]अजामेकां

---

परमेश्वरात्, उत्पन्नाः 'स्यन्दन्ते' प्रवहन्ति। ब्रीहियवाद्याः 'विश्वाः' सर्वाः, 'ओषधयः', च, मधुराम्लादयः 'रसाश्च', 'अतः' परमेश्वरात्, प्रभवन्ति। 'एषः' अहम्प्रत्ययेन गम्यमानः, 'अन्तरात्मा' स्थूलदेहचिदात्मनोर्मध्यवर्त्ती लिङ्गदेहः, 'येन' ओषधिरसेन, 'भूतः' सम्बद्धः सन्, शरीरे 'तिष्ठति'। तादृशो रस उत्पन्न इति पूर्वत्रान्वयः॥

चतुर्थीमृचमाह। [४]"ब्रह्मा देवानां ० पवित्रमत्येति रेभन्"[४] इति। अन्तर्बहिर्वर्त्तिनां प्राणसमुद्रादीनामचेतनानां सृष्टिमुक्ता चेतनेषु परमेश्वरस्योत्कृष्टरूपेणावस्थानमुच्यते। 'देवानां' अग्नीन्द्रादीनां मध्ये, 'ब्रह्मा' चतुर्मुखो भूत्वा परमेश्वरो नियामकत्वेनावतिष्ठते। तथा 'कवीनां' काव्यनाटकादिकर्तॄणां पुरुषाणां मध्ये, 'पदवीः', भूत्वावतिष्ठते। व्याकरणे निष्पन्नः सुप्शब्दविशेषः पदं तद्वेति गच्छतीति 'पदवीः' शब्दसामर्थ्या-भिज्ञो व्यासवाल्मीक्यादिरूप इत्यर्थः। 'विप्राणां' वैदिकमार्ग-वर्त्तिनां ब्राह्मणानां मध्ये, 'ऋषिः' तत्तन्मन्त्रप्रवर्त्तको वशिष्ठा-दिरूपः, बभूव। 'मृगाणां' चतुष्पदां मध्ये, सत्त्वाधिक्येन युक्तः 'महिषः', बभूव। 'गृध्रोपलक्षितानां' सर्वेषां पक्षिणां मध्ये प्रबलः 'श्येनः', बभूव। 'वनानां' वृक्षसमूहरूपाणां मध्ये, छेदनार्थः

लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीꣳ सरूपां। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः(५) ॥ १ ॥

---

'स्वधितिः' परशुः, बभूव। यागहेतुभूतवल्ल्यात्मकः 'सोमः', भूत्वा 'रेभन्' मन्त्रशब्दयुक्तः सन्, 'पवित्रं' शुद्धिकारणं गङ्गाजलकुशदर्भादिद्रव्यजातं सर्वं, 'अत्येति' ॥

पञ्चमीमृचमाह। (५)"अजामेकां लोहितशुक्लकृष्णां ० भुक्तभोगामजोऽन्यः"(५) इति। व्यवहारदशायां परमेश्वरस्य चतुर्मुखब्रह्मादिशरीरेषु विशेषेणावस्थानमभिधाय यथोक्तजगत्सृष्टेर्मूलकारणभूतां मायाशक्तिमुपजीव्य बद्धमुक्तपुरुषव्यवस्था प्रदर्श्यते। न जायत इति 'अजा' मूलप्रकृतिरूपा माया। न ह्यनादेस्तस्या जन्म सम्भवति। सा च माया 'एका' इतरस्य सर्वस्य जगतस्तत्कार्यत्वात्। यदासौ तेजोऽबन्नानि त्रीणि भूतानि उत्पाद्य* तद्रूपाऽवतिष्ठते। तदानीं 'लोहितशुक्लकृष्ण'वर्णैरुपेता भवति। तथा छान्दोगा आमनन्ति। "यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य" इति। अन्नशब्देनात्र पृथिवी उपलक्ष्यते। रजःसत्त्वतमोगुणा वा लोहितादिशब्दैरुपलक्ष्यन्ते। गुणत्रयात्मिका मायेत्युक्तं भवति। सा च देवतिर्यङ्मनुष्यादिरूपां गुणत्रयात्मिकत्वेन 'सरूपां', बहुविधां, 'प्रजां', 'जनयति'। न जायत इति 'अजः' जीवः, तस्यापि माया-

---

* त्रीणि रूपाण्युत्पाद्य इति F चिह्नितपुस्तकपाठः।

(१)हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा

---

वदनादित्वादुत्पत्तिर्नास्ति। तादृशो जीवो द्विविधः। आसक्तो विरक्तश्चेति। तयोर्मध्ये 'एकः' आसक्तो यो जीवः, पूर्वोक्तामजां मायां 'जुषमाणः' प्रीतिपूर्वकं सेवमानः, 'अनुशेते' तदनुसारेणैव वर्त्तते। विषयानेव भुञ्जानो विवेकरहितो जन्ममरणप्रवाहरूपेण सञ्चरतीत्यर्थः। 'अन्यो अजः' विरक्तो जीवः, 'भुक्तभोगां', 'एनां' मायां, 'जहाति' परित्यजति। विरक्तः प्रागेव भोगान् भुक्त्वा तद्दूपरिष्टाज्जिहासन्ते। तादृशैर्भोगैर्युक्ता माया भुक्तभोगा, तां मायां तत्त्वविवेकेन बाधत इत्यर्थः॥

षष्ठीमृचमाह। (१)"हंसः शुचिषत् ० ऋतं बृहत्"(१) इति। यः पुमान् विवेकेन मायां परित्यजति तस्य सर्वमपि जगद् ब्रह्मरूपेणावभासत इत्येवमात्रोऽर्थोऽत्र प्रदर्श्यते। तदर्थमादौ जगदनूद्यते। हन्ति सर्वदा गच्छतीति 'हंसः' आदित्यः, स च शुचौ शुद्धे मण्डले ज्योतिर्मये सीदतीति 'शुचिषत्', सूत्रात्मरूपेण जगन्निवासहेतुत्वात्। 'वसुः' वायुः, तद्रूपः सन्, अन्तरिक्षे सीदतीति 'अन्तरिक्षसत्'। होमनिष्पादक आहवनीयाद्यग्निः 'होता' तद्रूपेण सोमयागाद्यङ्गभूतायां वेद्यां सीदतीति 'वेदिषत्'। अमावास्यादितिथिविशेषमनपेक्ष्य भोजनयाच्ञार्थी तत्र तत्र गच्छन् पुरुषो वैदेशिकः 'अतिथिः'। तद्रूपेण दुरोणेषु गृहेषु परकीयेषु सीदतीति 'दुरोणसत्'। नृषु

ऋतजा अद्रिजा ऋतं बृहत्(१)। [*(०)यस्माज्जाता न परा नैव किञ्चनास य आविवेश भुवनानि विश्वा।

मनुष्येषु कर्म्माधिकारिजीवरूपेण सीदतीति 'नृषत्'। वरे श्रेष्ठे क्षेत्रे काशीद्वारावत्यादौ पूजनीयदेवरूपेण सीदतीति 'वरसत्'। ऋते सत्ये वैदिके कर्म्मणि फलरूपेण सीदतीति 'ऋतसत्'। व्योम्नि आकाशे नक्षत्रादिरूपेण सीदतीति 'व्योमसत्'। अब्जा नदीसमुद्रादिगताभ्यः शङ्खमकरादिरूपेण जायत इति 'अब्जाः'। गोभ्यः क्षीरादिरूपेण जायत इति 'गोजाः'। ऋतं सत्यवचनं तस्मात् कीर्त्तिरूपेण जायत इति 'ऋतजाः'। अद्रिभ्यः पर्वतेभ्यो वृक्षादिरूपेण जायत इति 'अद्रिजाः'। हंस इत्यारभ्य अद्रिजा इत्यन्तेनोक्तं यज्जगदस्ति तज्जगत् 'ऋतं' सत्यं, 'बृहत्' ब्रह्म, अज्ञानिदृष्ट्या जगद्रूपेण भासमानं सर्वं ज्ञानिदृष्ट्या ब्रह्मैवेत्यर्थः॥

सप्तमीमृचमाह। (०)"यस्माज्जाता ० स षोडशी"(०) इति। हंसादेः सर्वस्य जगतो ब्रह्मरूपत्वं यदुक्तं तदत्र प्रतिपाद्यते। ब्रह्मव्यतिरिक्तं वस्तु किञ्चिदस्तीति वदन्वादी प्रष्टव्यः। किमचेतनं जगद् ब्रह्मव्यतिरिक्तं? आहोस्वित् चेतनो जीवः। अचेतनत्वपक्षेऽपि किं सृष्टेरूर्द्ध्वभावि वस्तु ब्रह्मव्यतिरिक्तं उत पूर्व्वभावि। न तावदूर्ध्वभाविनो व्यतिरिक्तत्वमित्युच्यते। 'जाता' सृष्टेरूर्ध्वमुत्पन्ना

* [ ] एतच्चिह्नक्रोडीकृताः सप्तमन्त्रा अस्मत्सन्नेषु B, J, N, O चिह्नितेषु मूलपुस्तकेषु न पठिताः। एतेषामत्र निवेशे दशतिसङ्ख्या वृद्धिर्जायते। परन्तु E, M, Q चिह्नितभाष्यपुस्तकत्रयेषु एषां व्याख्यानात् अत्र परिगृहीताः।

प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतीꣳषि सचते स षोडशी(७)। (८)विधर्तारꣳ हवामहे वसोः कुविद-

---

प्रजा, 'यस्मात्' परमेश्वरात्, 'परा' व्यतिरिक्ता, 'न', भवति। नापि पूर्वभाविनो व्यतिरिक्तत्वमुच्यते, सृष्टेः पूर्वं 'किञ्चन' किमपि ब्रह्मव्यतिरिक्तं वस्तु, 'नैवास', "एकमेवाद्वितीयम्" इति श्रुत्यन्तरात्। नापि चेतनस्य जीवस्य ब्रह्मव्यतिरिक्तत्वमित्युच्यते। यः, परमेश्वरः, 'विश्वा भुवनानि' सर्वलोकवर्त्तीनि शरीराणि, 'आविवेश' जीवरूपेण प्रविवेश। "अनेन जीवेन आत्मानुप्रविश्य" इति श्रुत्यन्तरात्। सः 'प्रजापतिः' प्रजापालकः परमेश्वरः, 'प्रजया' स्वस्मादुत्पन्नया देवतिर्यगादिरूपया, 'संविदानः' संसर्गं तादात्म्यं लभमानो वर्त्तते। 'सः' परमेश्वरः, 'त्रीणि ज्योतीꣳषि' अग्न्यादित्यचन्द्ररूपाणि, 'सचते' समवैति, तादात्म्यसम्बन्धं प्राप्नोति। कीदृशः परमेश्वरः, 'षोडशी' प्रश्नोपनिषत्प्रोक्तषोडशकलोपेतः। तत्र हि प्राणश्रद्धादिकं कृत्स्नमपि जगत् षोडशावयवरूपं। "परमात्मा ससर्ज वै" इति श्रुत्यन्तरात्। तथा सति मृद्घटन्यायेन कार्यकारणयोरव्यतिरेकात् षोडशकलारूपेण जगता सह तादात्म्यसम्बन्धादयं षोडशी इत्युच्यते॥

अष्टमीमृचमाह। (८)"विधर्तारꣳ हवामहे ० सवितारं नृचक्षसं"(८) इति। यथोक्तब्रह्मतत्त्वज्ञानलाभाय परमेश्वरप्रार्थनारूपाः केचिन्मन्त्रा इत आरभ्योच्यन्ते। 'वसोः' धनस्य ब्रह्मज्ञानरूपस्य, 'विधर्तारं' विशेषेण सम्पादयितारं, परमेश्वरं, 'हवामहे'

नाति नः। सवितारं नृचक्षसं(८)। (९)अद्या नो देव सवितः प्रजावत्सावीः सौभगं। परा दुष्वप्नियꣳ सुव(९)। (१०)विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रं तन्म आसुव(१०)। (११)मधु वाता ऋता-

अस्मदनुग्रहार्थं आह्वयामः। 'नः' अस्माकं तादृशानां, 'कुवित्' प्रभूतं तत्त्वज्ञानरूपं धनं, 'वनाति' सम्भजते, स परमेश्वरो ददातीत्यर्थः। कीदृशं विधर्तारं, 'सवितारं' अस्मद्बुद्धेः प्रेरकं। 'नृचक्षसं' नृणां मनुष्याणां अधिकारिणां आचार्यरूपेण तत्त्वविद्याप्रवक्तारं॥

नवमीमृचमाह। (९)"अद्या नो देवसवितः ० दुष्वप्नियꣳ सुव"(९) इति। हे 'सवितः' प्रेरकदेव, 'अद्य' अस्मिन् दिने, 'नः' अस्माकं विद्यार्थिनां, 'प्रजावत्' शिष्यप्रशिष्यादिप्रजोपेतं, 'सौभगं' आचार्यरूपं भाग्यं, 'सावीः' प्रेरय, प्रयच्छेत्यर्थः। 'दुष्वप्नियं' दुष्टस्वप्नसदृशं द्वैतप्रतिभासं, 'परासुव' निराकुरु॥

दशमीमृचामाह। (१०)"विश्वानि देव ० तन्म आसुव"(१०) इति। हे 'सवितः' प्रेरकदेव, 'दुरितानि' ज्ञानप्रतिबन्धकानि पापानि, 'विश्वानि' सर्वाणि, 'परासुव' पराकुरु। 'भद्रं' कल्याणं, असम्भावनाविपरीतभावनारहितं तत्त्वज्ञानं, 'यद्', अस्ति 'तत्', 'मे' मह्यं उपासकाय, 'आसुव' साकल्येन प्रयच्छ॥

एकादशीमृचमाह। (११)"मधुवाता ऋतायते ० सन्त्वोषधी"(११) इति। 'ऋतायते' ऋतं परं ब्रह्म तदिच्छति मह्यं,

यत् मधुं क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः(११)। (१२)मधुं नक्तमुतोषसि मधुंमत्पार्थिवꣳ रजः। मधु द्यौ-

---

'वाताः' वायवः, 'मधु' माधुर्योपलक्षितं सुखं यथा भवति तथा, वान्तु इति शेषः। प्रबले तु वायौ रोगोत्पत्त्या तत्त्वज्ञानविघ्नः सम्पद्यते। अतः स माभूदिति वायोरानुकूल्यं प्रार्थ्यते। एवमुत्तरत्रापि तत्तदानुकूल्यं द्रष्टव्यं। 'सिन्धवः' नद्यः, 'मधु क्षरन्ति' इति मधुरं आरोग्यकरमुदकं सम्पादयन्त्वित्यर्थः। 'ओषधीः' व्रीहियवादयः, अपि 'नः' अस्माकं, 'माध्वीः' मधुराः पथ्यरूपाः, 'सन्तु'॥

द्वादशीमृचमाह। (१२)'मधु नक्तमुतोषसि ० रस्तु नः पिता"(१२) इति। 'नक्तं' रात्रौ, 'उत' अपि च, 'उषसि' प्रभाते, दिवसेऽपि, विद्यार्थिनः 'मधु' मधुरं अनुकूलं सुखं, 'अस्तु' कालकृतोऽपि विघ्नो माभूदित्यर्थः। 'पार्थिवं रजः' पृथिव्यामवस्थितं शयनादिस्थानगतं रजोऽपि, 'मधुमत्' माधुर्योपेतं, कण्टकपाषाणादिराहित्येनानुकूलं 'अस्तु'। 'नः' अस्माकं, 'पिता' पितृसदृशी, 'द्यौः', अपि 'मध्वस्तु' अतिवृष्ट्यादिप्रातिकूल्यरहितास्तु। "द्यौः पिता पृथिवी माता" इति मन्त्रान्तराद्दिवः पितृत्वं॥

त्रयोदशीमृचमाह। (१३)"मधुमान्नः ० भवन्तु नः"(१३) इति। 'वनस्पतिः' चूतपनसादिः, 'नः' अस्मान् प्रति, 'मधुमान्' मधुरफलोपेतो जीवनहेतुः, 'अस्तु'। 'सूर्यः', अपि प्रभूतं सन्तापमकृत्वा 'मधुमान्' माधुर्येण अनुकूलप्रकाशनेन युक्तः, 'अस्तु'। 'गावः',

रस्तु नः पिता[१२]। [१३]मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्य्यः। माध्वीर्गावो भवन्तु नः[१३] *।] [१४]घृतं मिमिक्षिरे घृतमस्य योनिर्घृते श्रितो घृतमुवस्य धाम। अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यं[१४]। [१५]समुद्रादूर्मिर्मधुमाꣳ उदारदुपाꣳशुना

---

अपि 'नः' 'अस्मान् प्रति, 'माध्वीः' जीवनहेतुमधुरचीरोपेताः, 'भवन्तु' ॥

चतुर्दशीमृचमाह। [१४]"घृतं मिमिचिरे ० वक्षि हव्यं"[१४] इति। भोग्यजातस्य स्नानयोग्यदेहानुकूल्यं प्रार्थ्य स्नानसाधन-यागादिकर्महेतोरग्नेरानुकूल्यं प्रार्थ्यते। पूर्वं यजमाना अग्न्या-वाहनीयादिरूपे 'घृतं', 'मिमिचिरे' सिक्तवन्तः। मिह सेचन इति धातुः। तद् 'घृतं', 'अस्य' अग्नेः, 'योनिः' उत्पत्तिकारणं। घृतेन ज्वालाभिवृद्धिदर्शनात्। अतोऽयमग्निः 'घृते श्रितः' घृतं आश्रित्य अवस्थितः। 'घृतं', एव 'अस्य', अग्नेः 'धाम' स्थानं, तेजोहेतुर्वा। हे अग्ने 'अनुष्वधं' स्वधामनु अस्मदीयं हविः-स्वरूपमनुसृत्य 'आवह' देवान् अत्रानय, आनीय च 'मादयस्व' हृष्टान् कुरु। हे 'वृषभ' श्रेष्ठ, 'स्वाहाकृतं' स्वाहाकारेण अस्मा-भिर्दत्तं 'हव्यं', 'वक्षि' वह, देवान् प्रापय ॥

पञ्चदशीमृचमाह। [१५]"समुद्रादूर्मिः ० अमृतस्य नाभिः"[१५] इति। 'समुद्र'वदतिप्रभूतात् परमात्मनः 'ऊर्मि'वदूर्मो जड-

सममम्तत्वमानट्। घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः(१५)। (१६)वयं नाम प्रब्रवामा

---

प्रपञ्चः 'मधुमान्' भोग्यत्वेन माधुर्ययुक्तः, 'उदारत्' उदगच्छत्, उत्पन्न इत्यर्थः। यथा लोके समुद्रात् तरङ्गा उत्पद्यन्ते। एवं ह्रि चिदेकरसात् परमात्मनो जडं भोग्यजातं सर्वमुत्पन्नं। घृक्षरण-दीप्त्योरिति धातोरुत्पन्नो घृतशब्दः। 'घृतं' दीप्तं, स्वप्रकाशं ब्रह्मे-त्यर्थः। तस्य ब्रह्मणो यत् 'नाम' प्रणवरूपं, 'गुह्यं' सर्ववेदेषु गोप्य-मस्ति। तथा च कठैराम्नातं। "सर्वे वेदा यत्पदमामनन्ति प्रस्तुत्य तत्ते पदं सङ्ग्रहेण ब्रवीमि ओमित्येतत्" इति। तेन प्रणवरूपेण 'उपांशुना' ध्यानकाले शनैरुच्चार्यमाणेन, 'अमृ-तत्वं' उत्पत्तिविनाशरहितं ब्रह्मतत्त्वं, 'समानट्' सम्यगानशे, प्रा-प्नोतीत्यर्थः। तच्च प्रणवाख्यं नाम 'देवानां जिह्वा' देवैः ध्यान-परैः निरन्तरं उच्चार्यमाणत्वेन जिह्वेव सर्वदा मुखमध्ये वर्त्तते। किञ्चेदं प्रणवरूपं नाम 'अमृतस्य' विनाशरहितस्य मोक्षस्य, 'नाभिः' रथचक्रस्य नाभिरिवाश्रयभूतं। अनेन हि मुक्तिरूपं फलं प्राप्यते। अतएव कठैराम्नातं। "एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्" इति। एतस्मादपि प्रणवस्य मोक्षसाधन-त्वमुक्तं॥

षोडशीमृचमाह। (१६)"वयं नाम ० अवमीद्गौर एतत्"(१६) इति। 'वय' ज्ञानार्थिनः पुरुषाः, 'अस्मिन्' ज्ञान'यज्ञे', 'घृतेन' दीप्तेन स्वप्रकाशेन ब्रह्मणा निमित्तभूतेन, प्रणवरूपं 'नाम',

घृतेनास्मिन् यज्ञे धारयामा नमोभिः। उप ब्रह्मा शृ-
णवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत्(११)। (१०)च-
त्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो

---

'प्रणवाम' सर्वदा ध्यायन्त उच्चारयाम। ततः 'नमोभिः' नमस्कारैर्युक्ता वयं, चित्ते ब्रह्मतत्त्वं सर्वदा 'धारयाम'। ध्यानस्य यज्ञत्वं भगवतोक्तम्। "स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः" इति। 'शस्यमानं' अस्माभिः प्रणवेन स्तूयमानं, 'उपशृणवत्' पार्श्ववर्त्तिभिस्तत्त्ववेदिभिः स्तूयमानं, 'एतद्' ब्रह्मतत्त्वं, 'चतुःशृङ्गः' अकारोकारमकारनादरूपशृङ्गचतुष्टयोपेतः, 'गौरः' श्वेतः प्रणवाख्य ऋषभः,'अवमीत्' वान्तवान्, ब्रह्मतत्त्वं प्रत्यपादयदित्यर्थः। अकारादीनां प्रणवमात्राणां शृङ्गत्वमुत्तरतापनीये श्रुतं। "शृङ्गेष्वशृङ्गं संयोज्य" इति। निष्कामैरनुष्ठेयत्वेन निर्मलत्वात् प्रणवस्य गौरत्वं वृषभरूपत्वञ्च संहितोपनिषद्याम्नातं। "यश्छन्दसामृषभो विश्वरूपः" इत्येवमनेन प्रतिपादनमुपलक्ष्यते॥

अत्रर्ग्रूपमाह। (१०)"चत्वारि शृङ्गाः ० मर्त्यां२ आविवेश"(१०) इति। 'शृङ्गाः' प्रणवस्य यान्यकारादीनि शृङ्गाणि, तानि 'चत्वारि'। 'अस्य' प्रणवप्रतिपाद्यत्वेन प्रणवरूपस्य ब्रह्मणः, 'त्रयः पादाः' पद्यते गम्यते ब्रह्मतत्त्वमेभिरिति पादाः, अध्यात्मं विश्वतैजसप्राज्ञाः। अधिदैवं विराड्ढिरण्यगर्भाव्याकृतानि। 'द्वे शीर्षे' उत्तमाङ्गस्थानीये चिदचिद्रूपे द्वे शक्ती। तथैव 'अस्य' ब्रह्मणः, भूरादयः 'सप्त' लोकाः, 'हस्तासः' हस्तस्थानीयाः।

अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याꣳ आविवेश(१७) ॥ २ ॥

(१८)त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन्। इन्द्र एकꣳ सूर्य एकं जजान वेनादेकꣳ

---

'त्रिधा बद्धः' अकारोकारमकारेषु विश्वतैजसप्राज्ञैर्विराड्‌हिरण्यगर्भाव्याकृतैश्च त्रिःप्रकारेण सम्बद्धः, 'वृषभः' प्रणवः, 'महः' तेजोरूपं ब्रह्मतत्त्वं, 'रोरवीति' अतिशयेन प्रतिपादयति। तदेव प्रतिपाद्यं स्पष्टीक्रियते। 'देवः' परमेश्वरः, 'मर्त्यान्' मनुष्यदेहान्, 'आविवेश' सर्वतः प्रविष्टः। "स एष इह प्रविष्ट आनखाग्रेभ्यः" इति श्रुत्यन्तरात् ॥

अष्टादशीमृचमाह। (१८)"त्रिधाहितं ० मिष्टतनुः"(१८) इति। 'त्रिधा हितं' शरीरे विश्वतैजसप्राज्ञाख्येन त्रिप्रकारेण ब्रह्माण्डे विराड्‌हिरण्यगर्भाव्याकृताख्येन च त्रिःप्रकारेणावस्थितं। 'घृतं' दीप्तं स्वप्रकाशं ब्रह्मतत्त्वं, 'देवासः' देववत् सात्त्विका अन्तर्मुखाः पुरुषाः, 'गवि'वाचि, तत्त्वमस्यादिवेदरूपायां, 'अन्वविन्दन्' अनुक्रमेण लब्धवन्तः। कीदृशं घृतं, 'पणिभिर्गुह्यमानं' पणव्यवहारे स्तुतौ चेति धातुः। पणिभिः स्तोतृभिः उपदेष्टृभिराचार्यैः परमरहस्यत्वेन गोप्यमानं। त्रिधा हितं इत्येतदेव विविच्यते। 'इन्द्रः' परमैश्वर्ययुक्तो विराट् पुरुषः, 'एकं' जागरणरूपं, 'जजान' उत्पादितवान्। 'सूर्य'शब्दस्तेजसस्थितेन हिरण्यगर्भमुपलक्षयति। स च हिरण्यगर्भः 'एकं' स्वप्नरूपं, 'जजान'। वेनेति धातुः कान्तिकर्मा। 'वेनात्'

स्वधया निष्टतक्षुः(१८)।(१९)यो देवानां प्रथमं पुरस्ताद्विश्वाधिको* रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानꣳ स नो देवः शुभया स्मृत्या संयुनक्तु(१९)। (२०)यस्मात् परं

---

सर्वं दुःखराहित्येन कमनीयादव्याकृतात् एकं सुषुप्तरूपं निष्पन्नमिति शेषः। स्वस्मिन्नेव धीयतेऽवस्थाप्यत इत्याश्रयान्तररहिता ब्रह्मरूपा चित् स्वधाशब्देनोच्यते। "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इति श्रुत्यन्तरात्। तया 'स्वधया' ब्रह्मरूपया चिता, पूर्वोक्ता इन्द्रसूर्यवेनाः 'निष्टतक्षुः' जागरणादिकं निष्पादितवन्तः। एताभ्यां द्वाभ्यां ऋग्भ्यां प्रणवतत्प्रतिपाद्यार्थौ प्रपञ्चितौ॥

एकोनविंशीमृचमाह। (१९)"यो देवानां ० स्मृत्या संयुनक्तु"(१९) इति। 'यः' देवः, 'हिरण्यगर्भं', 'पश्यत' साक्षात्करोति। कीदृशं हिरण्यगर्भं, 'देवानां प्रथमं' अग्नीन्द्रादीनां मध्ये आदिभूतं, 'पुरस्तात् जायमानं' अग्नीन्द्राद्युत्पत्तेः पूर्वमेवोत्पद्यमानं। अनेन प्राथम्यं स्पष्टीकृतं। कीदृशो देवः, 'विश्वाधिकः' विश्वस्य जगतः कारणत्वेन तस्मादधिकः, 'रुद्रः' रुत्, वैदिकः शब्दः, तं द्रवति प्राप्नोति, वेदप्रतिपाद्य इत्यर्थः। 'महर्षिः' ऋषीणां अतीन्द्रियद्रष्टृणां मध्ये महान्, "यः सर्वज्ञः सर्ववित्" इत्यादिश्रुतिप्रतिपाद्य इत्यर्थः। 'स देवः' तादृशः परमेश्वरः, 'नः' अस्मान्, 'शुभया स्मृत्या' सर्वसंसारनिवर्त्तकत्वेन शोभनया

---

* विश्वाधिप इति B, J, N, O चिह्नितपुस्तकपाठः।

नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्॥(२०)। (२१)न कर्मणा न प्रजया धनेन त्यागेनैके

---

ब्रह्मतत्त्वानुस्मृत्या, 'संयुनक्तु' संयुक्तान् करोतु। सोऽयं मन्त्रो ब्रह्मविद्यालब्धये जपितव्यमिति मन्त्रलिङ्गादवगम्यते॥

विंशीमृचमाह। (२०)"यस्मात् परं ० पुरुषेण सर्वं"(२०) इति। यदुक्तं ऋभया स्मृत्या संयुनक्तु इति तत्र स्मरणीयं तत्त्वमत्र निर्दिश्यते। 'यस्मात्' ब्रह्मतत्त्वात्, 'परं' उत्कृष्टं, 'अपरं' निकृष्टं वा वस्तु, 'किञ्चित्', अपि 'नास्ति'। 'यस्मात्' ब्रह्मतत्त्वात्, 'अणीयः' अत्यल्पं वस्तु, 'नास्ति'। तथा 'ज्यायः' अधिकमपि, 'कश्चित्' किञ्चिदपि वस्तु, 'नास्ति'। परापरशब्दाभ्यां गुणोत्कर्षनिकर्षौ विवक्षितौ। ज्यायोऽणीयःशब्दाभ्यां परिमाणोत्कर्षापकर्षौ। सर्वप्रकारोत्कर्षापकर्षनिषेधेनाद्वितीयत्वं सिध्यति। यथा लोके 'वृक्षः' गमनागमनरहितः, एकत्रैव स्तब्धः, अवतिष्ठते, तद्वद्यमद्वितीयः 'एकः' परमेश्वरः, 'स्तब्धः' निर्विकारः, 'दिवि' द्योतनात्मके स्वप्रकाशस्वरूपे, 'तिष्ठति'। 'तेन पुरुषेण' पूर्णेन* चिदेकरसेन परमात्मना, 'सर्वमिदं' जगत्, 'पूर्णं', अन्यदाकारो नास्ति ब्रह्मतत्त्वमेवावस्थितमित्यर्थः॥

एकविंशीमृचमाह। (२१)न कर्मणा ० यतयो विशन्ति"(२१) इति। यथोक्तब्रह्मतत्त्वानुस्मरणस्यान्तरङ्गं सर्वत्यागरूपं साधन-

---

* पुराणेनेति F चिह्नितपुस्तकपाठः।

अमृतत्वमानशुः । परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो* विशन्ति(२१) । (२२)वेदान्तविज्ञानसुनि-

---

मत्रोच्यते। अग्निहोत्रादिकं सहस्रसंवत्सरसत्रान्तं यत् कर्म तेन 'कर्मणा', तत् 'अमृतत्वं', 'न', लभ्यते । "प्रजया पितृभ्यः" इति श्रुतेः, पितृविषयात् ऋणात् विमोचनहेतुर्या पुत्रादिरूपा प्रजा, तयापि 'अमृतत्वं' 'न', लभ्यते। "दाने सर्वं प्रतिष्ठितं तस्मात् दानं परमं वदन्ति" इति श्रुतेः। धनदानस्य बहुविधफलसाधनत्वावगमात्तस्य † दानस्य निष्पादकं यद्धनमस्ति तेन 'धनेन', अपि 'अमृतत्वं', 'न', लभ्यते। किन्तर्हि कर्मप्रजाधनादीनां सर्वेषां लौकिकवैदिकव्यापाराणां 'त्यागेन', 'एके' केचिदेवान्तर्मुखाः 'अमृतत्वं', 'आनशुः' प्राप्नुवन्ति । 'यत्' अमृतत्वं, 'यतयः' इन्द्रियनियमनशीलाः, 'विशन्ति' प्राप्नुवन्ति। तत् अमृतत्वं, 'नाकं' 'परेण' स्वर्गादप्युत्कृष्टं सत्, 'गुहायां' स्वकीयबुद्धावेकाग्रायां, 'निहितं' अवस्थितं सत्, 'विभ्राजते' विशेषेण दीप्यते, अन्तर्मुखैरनुभूयत इत्यर्थः ॥

द्वाविंशीमृचमाह । (२२)"वेदान्तविज्ञानसुनिश्चितार्थाः ० परिमुच्यन्ति सर्वे"(२२) इति। पूर्वस्यामृचि त्यागस्य मोक्षसाधनत्वमुक्तं। अन्यत्र "तरति शोकमात्मवित्"। "ज्ञानादेव तु कैवल्यं प्राप्यते। येन मुच्यते" इत्यादि श्रुतिस्मृतिषु ज्ञानस्यैव मोक्षहेतु-

---

* विभ्राजदेतद्यतय इति B, J, N चिह्नितपुस्तकपाठः ।

† साधनत्वावगम्यत्वस्येति F चिह्नितपुस्तकपाठः ।

श्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्म-लोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे (२२)।

---

समुच्यते। अतोऽस्मिन्नपि विरोधपरिहाराय ज्ञानसन्न्यासयो-र्मोक्षे पृथगुपयोग उच्यते। वेदान्ताः, उपनिषद्वाक्यानि, तै-रुत्पन्नं सर्वसंसारनिवर्त्तकत्वेन विशिष्टं ज्ञानं यदस्ति तेन नि-श्चितः, जीवब्रह्मैक्यलक्षणोऽर्थः, यैः पुरुषैः ते 'वेदान्तविज्ञान-सुनिश्चितार्थाः'। 'सन्न्यासयोगात्' सन्न्यासः, पूर्वोक्तः प्रजादि-त्यागः, तत्पूर्वको योगः, प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपाणां पञ्चानां चित्तवृत्तीनां निरोधो योगः, "योगश्चित्तवृत्तिनि-रोधः" इति पतञ्जलिना सूचितत्वात् तस्माद् योगात्। 'शुद्ध-सत्त्वाः' विषयभोगव्यावृत्तचित्ताः। अतएव 'यतयः' नियमवन्तो-स्ताः। तेन ज्ञानं तत्त्वप्रकाशनेन अविद्यानिवर्त्तकं। त्यागस्तु विषयभोगनिवृत्तिद्वारा चित्तशुद्धिहेतुरिति पृथगुपयोग उक्तो भवति। ब्रह्मणः, लोकः, दर्शनं साक्षात्कारः, तस्मिन्, उत्पन्ने सति संसारिविलक्षणाः, 'ते' पुरुषाः। वैलक्षण्यद्योतनार्थः 'तु'शब्दः। तादृशाः पुरुषाः 'सर्वे', 'परिमुच्यन्ति'। ज्ञानिषु देवमनुष्य-त्वादिकृत उत्तमानुत्तमभावोऽप्रयोजक* इति विवक्षया सर्व इत्युक्तं। कदा मुच्यन्त इत्याशङ्क्य परान्तकाल इत्युक्तं। सत्य-ज्ञाने यो देहपातावसरः सोऽयं अपरान्तकालः। पुनर्देहस्य विद्यमानत्वात्। नष्टे त्वज्ञाने यो देहपातावसरः सोऽयं परा-

---

* उत्तमाधमभावोऽप्रयोजन इति F चिह्नितपुस्तकपाठः।

(२१)दहरं[*] विपाप्म वरवेश्मभूतं[†] यत्पुण्डरीकं पुरमध्यसंस्थं। तत्रापि दहं[‡] गगनं विशोकस्तस्मिन् यदन्त-

स्तदुपासितव्यम् ॥

---

न्तकाशः, पुनर्देहग्रहणरहितत्वात्। तस्मिन् ‘परान्तकाले’, संसारबन्धान्मुच्यन्ते। नन्वज्ञानिनोऽपि प्रलयकाले स्थूलसूक्ष्मशरीरद्वयलक्षणाद्[§] बन्धान्मुच्यन्त एवेत्याशङ्क्य परामृतादित्युक्तं। जगत्कारणत्वेनोत्कृष्टं परं। तत्त्वज्ञानमन्तरेण विनाशरहितत्वादमृतत्वं। तादृशात् ‘परामृतात्’ अव्याकृतात्, अज्ञानिनः प्रलयकालेऽपि न मुच्यन्ते। ज्ञानिनस्तु देहपातावसर एव तादृशादव्याकृतादपि मुच्यन्त इति विशेषः॥

अथैकविंशीमृचमाह। (२१)“दहरं विपापं ० यदन्तस्तदुपासितव्यं”(२१)। तत्त्वं ज्ञातुमसमर्थस्यात्रोपासनमुच्यते। ‘यत्’, एतत् ‘पुण्डरीकं’ अष्टदलं हृदयकमलं, अस्ति। कीदृशं, ‘दहरं’ अल्पं, अङ्गुष्ठमात्रपरिमितत्वात्। ‘विपाप्मं’ चित्तैकाग्र्यस्थानत्वेन पापरहितं, ‘वरवेश्मभूतं’ वरस्य श्रेष्ठस्य परमात्मनः उपलब्धिस्थानत्वेनोपास्तिस्थानत्वेन च गृहरूपं। ‘पुरमध्यसंस्थं’ हस्तपा-

---

* दह्रं इति J, N चिह्नितपुस्तकपाठः।

† परमेश्म इति B, J, N चिह्नितपुस्तकपाठः। परवेश्म इति O, चिह्नितपुस्तकपाठः।

‡ दह्रं इति B, J, N चिह्नितपुस्तकधृतपुस्तकपाठः। दहरं इति O चिह्नितपुस्तकपाठः। दहरे इति F चिह्नितपुस्तकधृतपाठान्तरटीकासम्मतः पाठः।

§ स्थूलसूक्ष्मद्वयशरीरलक्षणादिति F चिह्नितपुस्तकपाठः।

स्तदुपासितव्यम्(२३)। (२४)यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परः स महेश्वरः(२५) ॥ ३ ॥

---

हादिभिः सर्वैरवयवैः पूर्यत इति पुरं, तस्य मध्ये कुक्षुरस्यो-रन्तरावस्थितं, 'तत्रापि' तस्मिन्नपि पुण्डरीके, 'दह्रे' अल्पप्रदेशे, 'गगनं' आकाशवदमूर्त्तं ब्रह्मरूपं, अस्ति*, ब्रह्मणः सर्वगतत्वेऽपि घटाकाशवत् पुण्डरीकस्थानापेक्षयाल्पत्वमुपचर्यते। तथा च श्रुत्यन्तरं। "अथ यदिदमस्मिन् ब्रह्मपुरे दह्रं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः" इति। दहराकाशस्य च ब्रह्मत्वं दह-राधिकरणे निर्णीतं। अतएव 'विशोकं' शोकरहितं गगन-शब्दवाच्यं ब्रह्म। एवं सति 'तस्मिन्' पुण्डरीके, 'अन्तः' मध्ये, 'यद्' ब्रह्मतत्त्वं, अस्ति, 'तत्', 'उपासितव्यं' विजातीयप्रत्यय-रहितेन सजातीयप्रत्ययप्रवाहेण चिन्तनीयं ॥

चतुर्विंशीमृचमाह। (२४)"यो वेदादौ ० स महेश्वरः"(२५) इति। 'वेदानां' अग्निमीळे पुरोहितं, इषे त्वोर्ज्जे त्वेत्यादीनां आदिः, उपक्रमः, तस्मिन्नुपक्रमे 'यः' 'स्वरः' यो वर्णः, प्रणव-रूपोऽस्ति स च स्वरः, प्रणवः, 'वेदान्ते च' उपनिषदि,

---

* 'शुद्धं', शरीरदोषैरपरामृष्टत्वात्। 'परस्यात्मनः, 'वेश्मभूतं' गृहभूतं, सर्वदा तत्रोपलभ्यमानत्वात्।'पुरस्य शरीरस्य, मध्ये संस्थितं, राज्ञ इव पुरमध्ये प्रासादः। 'तत्रापि', 'दहरं' पुण्डरीके, 'दहरं' सूक्ष्मं, 'गगनं' आकाशवदमूर्त्तं ब्रह्मरूपं, अस्ति। इति F चिह्नितपुस्तकधृतपाठान्तरम्।

अणोऽन्यः(१) आविवेश(२) सर्वं, चत्वारि (३) च ॥
अनु० १० ॥

---

अथ एकादशोऽनुवाकः।

(१)सहस्रशीर्षं* देवं विश्वाक्षं विश्वशंभुवं। विश्वं ना-

---

ओमित्येतदक्षरमिदं सर्वमित्यादिकायां, 'प्रतिष्ठितः' प्रतिपादितः, स च स्वरः प्रणवः ध्यानकाले प्रकृतावव्याकृते जगत्कारणे लीनो भवति। अकारोकारमकारेषु विराड्हिरण्यगर्भाव्याकृतानि ध्यात्वा विराड्रूपमकारमुकारे प्रविलाप्य तं चोकारं हिरण्यगर्भरूपं मूलप्रकृतिरूपे मकारे प्रविलापयेत्। 'तस्य', च 'प्रकृतौ 'लीनस्य प्रणवस्य 'यः परः' चतुर्थमात्रारूपेण नादे ध्यातव्य उत्कृष्टः, अस्ति। 'सः', अयं 'महेश्वरः', विज्ञेयः। अनेन मन्त्रेण पूर्वोक्तगगनशब्दवाच्यवस्तु प्रपञ्चितं॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि दशमोऽनुवाकः॥

---

अथ एकादशोऽनुवाकः।

पूर्वानुवाकान्ते हृदयपुण्डरीके उपास्यं यन्महेश्वरस्वरूपं नि-

---

* सहस्रशीर्षमिति J चिह्नितपुस्तकपाठः।

रा॒यणं दे॒वम॒क्षरं पर॒मं प्र॒भुं*⁽¹⁾। ⁽²⁾वि॒श्वतः॒ पर॒माम्नि॒त्य॒†

दिष्टं तस्मिन्नुपास्यगुणविशेषा अस्मिन्ननुवाके विशेषेण‡ प्रदर्श्यन्ते। तत्र प्रथममान्त्रमाह। ⁽¹⁾"सहस्रशीर्षं ० परमं प्रभुं"⁽¹⁾ इति। 'देवं' पूर्वोक्तं महेश्वरं, ध्यायेदिति शेषः। कीदृशं देवं, 'सहस्रशीर्षं' सहस्रशब्देनापरिमितत्वमुपलक्ष्यते। अनन्तशिरस्कं, इत्यर्थः। सर्वजगदात्मकं विराड्रूपं महेश्वरस्य देहः। तथा सति अस्मदादिशिरांसि सर्वाण्यपि तदीयान्येवेत्यनन्तशिरस्त्वं। अनेनैव न्यायेन विश्वानि सर्वाण्यस्मदीयानि अचाणि इन्द्रियाणि तदीयान्येवेति 'विश्वाचत्वं। विश्वस्य सर्वस्य जगतः शं, सुखं, अस्माद्भवतीति 'विश्वशम्भुः', तादृशं। उक्ते सहस्रशीर्षे विराड्रूपे देहे अवस्थितस्य महेश्वरस्य निजस्वरूपं द्वितीयार्धेनोच्यते। 'विश्वं' जगदात्मकं, अतोपि तस्य जगतोऽधिष्ठानव्यतिरेकेण वास्तवरूपाभावात् नारायणशब्दस्य निर्वचनं। "आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः प्रोक्तास्तेन नारायणः स्मृतः" इति। जगत्कारणेषु पञ्चभूतेषु अवस्थितमित्यर्थः। यद्वा, प्रकृतेः परः। तस्माज्जातानि यानि तानि नारशब्देनोच्यन्ते। तान्येतान्येव अयनं स्थानं यस्य स 'नारायणः'। स एवेन्द्रमित्रादिरूपेणावस्थितत्वात् 'देवः', इत्युच्यते। तथा च

* परमं पदमिति B, J, N, O चिह्नितपुस्तकपाठः।

† परमाशिवमिति B, J, N, O चिह्नितपुस्तकपाठः। परन्तु भाष्यासम्मतः।

‡ विस्तरेण इति F चिह्नितपुस्तकपाठः।

विश्वं नारायणꣳ हरिं। विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति(२)। (१)पतिं विश्वस्यात्मेश्वरꣳ शाश्वतꣳ शिवमच्युतं। नारायणं महाज्ञेयं विश्वात्मानं परायणं(१)।

शाखान्तरे मन्त्र आम्नातः। "इन्द्रं मित्रं वरुणमग्निमाहुः" इति। "न चरत्यचर अस्मृतः" इति वा, तस्माचरत्वं। कारणत्वेनोत्कर्षात् परमत्वं। नियन्तुं समर्थत्वात् प्रभुत्वं॥

द्वितीयामृचमाह। (१)"विश्वतः परमं ० तद्विश्वमुपजीवति"(२)। 'विश्वतः' जगतः जडवर्गात्, 'परमं' उत्कृष्टं, छन्दोभेदेन पुनरुक्तिपरिहारो द्रष्टव्यः। स्तुतिरूपत्वादनेन रूपेण ध्यातव्यत्वाच्च नास्ति पुनरुक्तिदोषः। विनाशरहितत्वान्नित्यत्वं। सर्वात्मकत्वाद्विश्वत्वं। नारायणत्वं पूर्वमवोक्तं। पापस्य अज्ञानस्य च हरणाद्धरित्वं। यत् 'इदं विश्वं', इदानीं अज्ञानदृष्ट्या प्रदृश्यते तत् सर्वं वस्तु तत्त्वदृष्ट्या 'पुरुषः' परमात्मा 'एव'। स च परमात्मा 'तद्विश्वं', 'उपजीवति' स्वस्य व्यवहारार्थं आश्रयति॥

तृतीयामृचमाह। (१)"पतिं विश्वस्य ० विश्वात्मानं परायणं"(१) इति। 'विश्वस्य' जगतः, पालकत्वात् 'पतिं'। 'आत्मनां' जीवानां, नियामकत्वात् 'ईश्वरं' नियन्तारं। निरन्तरं वर्त्तमानत्वात् 'शाश्वतं'। परममङ्गलत्वात् 'शिवं'। न च्यवत इति 'अच्युतं'। नारायणत्वं पूर्वमुक्तं। ज्ञेयेषु तत्त्वेषु मध्ये प्रौढत्वात् 'महाज्ञेयं'। जगदुपादानत्वेन तदभेदाद् 'विश्वात्मत्वं। उत्कृष्टाधारत्वात्* 'परायणत्वं। सर्वमप्यारोपितं जगदधिष्ठाने वर्त्तते॥

---

* उत्कृष्टाधारकत्वमिति F चिह्नितपुस्तकपाठः।

(४)नारायणः परो ज्योतिरात्मा नारायणः परः। नारायणः परं ब्रह्मतत्त्वं नारायणः परः(४)। नारायणपरो ध्याता ध्यानं नारायणः परः। (५)यच्च किञ्चिज्जगत्सर्वं* दृश्यते श्रूयतेऽपि वा ॥ १ ॥

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः(५)। (६)अ-

---

चतुर्थीमृचमाह। (४)"नारायणं परं ० नारायणः परः(४)" इति। पुराणेषु नारायणशब्देन व्यवह्रियमाणो यः परमेश्वरः स एव 'परं' उत्कृष्टं, सत्यज्ञानानन्दादिवाक्यैः† प्रतिपाद्यस्य 'ब्रह्मणः' 'तत्त्वं'। अतः 'नारायणः परः', एवात्मा तत्परो मूर्त्तिविशेषः। तथा 'परो ज्योतिः' यत् एतत् उत्कृष्टं ज्योतिः छन्दोगैः "परं ज्योतिरुपसम्पद्य" इत्याम्नातं, तदपि, 'नारायणः', एव तस्मात् 'नारायणः', परमात्मा' ॥

पञ्चमीमृचमाह। (५)"यच्च किञ्चित् ० व्याप्य नारायणः स्थितः"(५) इति। 'अस्मिन्' वर्त्तमाने जगति, 'यत्किञ्चित्' समीपवर्त्ति वस्तुजातं, 'दृश्यते'। 'अपि वा' दूरस्थं, 'श्रूयते'। 'तत् सर्वं' वस्तुजातं, अयं 'नारायणः', 'अन्तर्बहिश्च व्याप्य', 'अवस्थितः'। यथा कटकमुकुटाद्याभरणस्योपादानकारणं सुवर्णं अन्तर्बहिर्व्याप्यावतिष्ठते तद्वत् ॥

---

* जगत्यस्मिन्निति F चिह्नितपुस्तकपाठः।

† सत्यज्ञानादिवाक्यैरिति F चिह्नितपुस्तकपाठः।

नन्तमव्ययं कविꣳ समुद्रेऽन्तं विश्वशम्भुवं। पद्मकोशप्रतीकाशꣳ हृदयं चाप्यधोमुखं(६)। (७)अधो निष्ट्या वितस्त्यां तु नाभ्यामुपरि तिष्ठति। ज्वालमालाकुलं

---

षष्ठीमृचमाह। (६)"अनन्तमव्ययं ० चाप्यधोमुखं"(६) इति। अत्र पूर्वार्द्धेन नारायणस्य वास्तवस्वरूपं सङ्क्षेपेणोपन्यस्यते। 'अनन्तं' देशपरिच्छेदरहितं, 'अव्ययं' विनाशरहितं, 'कविं' चिद्रूपेण सर्वज्ञं, 'समुद्रे' अतिबहुजलेन समुद्रसदृशे संसारे, 'अन्तं' अवसानरूपं। यदा नारायणस्य स्वरूपं जानाति तदा संसारः क्षीयते* इत्यर्थः। 'विश्वशम्भुवं' सर्वस्य संसारसुखस्य उत्पत्तिकारणरूपं, "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुत्यन्तरात्। ईदृशं नारायणस्वरूपं उपासीतेति शेषः। उत्तरार्द्धेनोपास्तिस्थानमुच्यते। 'पद्मकोशप्रतीकाशं' यथा लोके अष्टदलकमलस्य कोशो मध्यच्छिद्रं तत्सदृशं, तच्च 'हृदय'शब्दवाच्यं, लौकिकं पद्मं ऊर्द्धाभिमुखं, हृदयपद्मं तु, 'अधोमुखं', इति विशेषः॥

सप्तमीमृचमाह। (७)"अधो निष्ट्या ० आयतनं महत्"(७) इति। 'निष्टिः' ग्रीवाबन्धः, तस्याः, 'अधस्तात्' वर्त्तते तथापि 'नाभ्यामुपरि' नाभिदेशस्योर्द्ध्वदेशभागे, 'वितस्त्यां' द्वादशाङ्गुलिपरिमिता वितस्तिः, तस्यां अतीतायां, उपरि 'तिष्ठति'। तदेतन्निष्टिनाभ्योर्मध्यदेशवर्त्तिकमलं 'हृदयं', इति 'विजानीयात्', 'तत्' च हृदयं,

---

* क्षीयते इति F. चिह्नितपुस्तकपाठः।

भातो* विश्वस्यायतनं महत्(७)। (८)सन्ततꣳ शिराभि-स्तु लम्बत्याकोशसन्निभं। तस्यान्ते सुषिरꣳ सूक्ष्मं त-स्मिन्सर्वं प्रतिष्ठितं(८)। (९)तस्य मध्ये महानग्निर्विश्वा-

---

'विश्वस्य' सर्वस्य जगतः, 'महदायतनं'। मनस्तावद्धृदयपुण्डरीके प्रवर्त्तते। "चन्द्रमा मनो भूत्वा हृदयं प्राविशत्" इति श्रुत्य-न्तरात्। तेन च मनसा स्वप्नवत् सर्वमिदं जगत् कल्पितं। "मनोमूलमिदं द्वैतं यत्किञ्चित् सचराचरं" इति सम्प्रदायविद्-भिरुक्तत्वात्॥

अष्टमीमृचमाह। (८)"सन्ततꣳ ० सर्वं प्रतिष्ठितं"(८) इति। 'आकोशः' पद्मस्य मुकुलं, तत् 'सन्निभं' तत्सदृशं, हृदयकमलं 'लम्बति' शरीरमध्येऽधोमुखत्वेनावलम्बते। तच्च 'शिराभिः' ना-डीभिः, 'सन्ततं' परितः सम्यग् व्याप्तं। "शतं चैका च हृदयस्य नाड्यः" इति श्रुत्यन्तरात्। 'तस्य' हृदयस्य, 'अन्ते' समीपे, 'सूक्ष्मं', 'सुषिरं' छिद्रं, सुषुम्णानाडीनालं, तिष्ठति 'तस्मिन्' सुषिरे, 'सर्वं' इदं जगत्, 'प्रतिष्ठितं' आश्रितं। तत्र मनसि प्रविष्टे सति सर्व-जगदाधारस्य ब्रह्मणोऽभिव्यज्यमानत्वात्॥

नवमीमृचमाह। (९)"तस्य मध्ये ० अजरः कविः"(९) इति। 'तस्य' सुषुम्णानालस्य, 'मध्ये', 'महान्' प्रौढः, 'अग्निः', वर्त्तते। स च 'विश्वार्चिः' बहुज्वालोपेतः, अतएव ज्वालाविशेषैः परि-तोऽवस्थितासु सर्वासु नाडीसु संचरणात् 'विश्वतोमुखः' बहुविधे-

---

* हृदयं तद्विजानीयादिति F चिह्नितपुस्तकपाठः।

र्विश्वतोमुखः। सोऽग्रभुग्विभजन् तिष्ठन्नाहारमजरः कविः(९)। तिर्यगूर्ध्वमधःशायी रश्मयस्तस्य सन्तता॥ (१०)सन्तापयति स्वं देहमापादतलमस्तकं। तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता(१०)। (११)नील-

---

श्वरूपः, 'सः' अग्निः, 'अग्रभुक्' स्वस्य पुरतः प्राप्तमन्नं भुङ्क्ते इति 'अग्रभुक्'। स च भुक्तं 'आहारं', शरीरे सर्वावयवेषु 'विभजन्' प्रसारयन्, 'तिष्ठन्' अवस्थित इत्यर्थः। तथा च भगवतोक्तं। "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधं" इति॥ तस्माद् भुक्तमन्नमसौ जरयति न तु स्वयं जीर्यत इति 'अजरः'। अतएव 'कविः' अभिज्ञः, कुशल इत्यर्थः॥

दशमीमृचमाह। (१०)"सन्तापयति ० अणीयोर्ध्वा व्यवस्थिता"(१०) इति। पादतलमारभ्य मस्तकपर्यन्तं कृत्स्नमपि स्वकीयं 'देहं', सर्वदा 'सन्तापयति'। सोऽयं शरीरगतः सन्तापः अग्निसद्भावे लिङ्गं। 'तस्य' ज्वालाविशेषैः कृत्स्नदेहव्यापिनोऽग्नेः, 'मध्ये', 'वह्निशिखा' काचित् ज्वाला, 'अणीया' अत्यन्तसूक्ष्मा, 'ऊर्ध्वा' सुषुम्णानाडीनालेनोर्ध्वब्रह्मरन्ध्रपर्यन्तं प्रसृत्य, 'व्यवस्थिता' विशेषेणावस्थिता॥

एकादशीमृचमाह। (११)"नीलतोयदमध्यस्थात् ० भास्वत्यणूपमा"(११) इति। तोयं उदकं ददातीति 'तोयदः' मेघः, स च वर्षितुं जलपूर्णत्वान्नीलवर्णः। तादृशस्य मेघस्य मध्ये स्थिता

तोयदमध्यस्था विद्युल्लेखेव भास्वरा। नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा(११)। (१२)तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः। स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट्(१२)॥ २॥

---

'विद्युल्लेखेव', मेघं पूर्वोक्ताग्निशिखा 'भास्वरा' प्रभावती, 'नीवारवोऽस्य 'शूकं' दीर्घं पुच्छं, यथा तनु भवति, तद्वदियं शिखा 'तन्वी'। या स्ववह्निज्वालेव 'पीता भास्वती' पीतवर्णा दीप्तियुक्ता, भवेत्। सा च 'अणूपमा' लौकिकीनां तनूनां सूक्ष्मवस्तूनां उपमा भवितुं योग्या॥

हार्दमीश्वरमाह। (१२)"तस्याः शिखाया ० परमः स्वराट्"(१२) इति। 'तस्याः' पूर्वोक्ताया वह्निशिखायाः, 'मध्ये,' जगत्कारणभूतः 'परमात्मा', । विशेषेण 'व्यवस्थितः' । तस्योपास्यत्वार्थमल्पस्थानत्वेऽपि न स्वयमल्पः, किन्तु सर्वदेवात्मकः 'ब्रह्मा' चतुर्मुखः, 'शिवः' गौरीपतिः, 'इन्द्रः' स्वर्गाधिपतिः, 'अक्षरः' जगद्धेतुमायाविशिष्टोऽन्तर्यामी ईश्वरः। "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इति भगवतोक्तत्वात्। 'परमः' मायारहितः शुद्धः चिद्रूपः। अत एव पारतन्त्र्याभावात् 'स्वराट्' स्वयमेव राजा। सहस्रशीर्षमित्यादिवाक्यप्रतिपाद्यं* तत्त्वं पद्मकोशप्रतीकाशमित्यादिवाक्योक्तप्रकारेण ध्यायेदिति तात्पर्यार्थः॥

---

* प्रतिपादितमिति Q चिह्नितपुस्तकपाठः।

अपि वा, सन्तता, षट् च ॥ अनु० ११ ॥

---

अथ द्वादशोऽनुवाकः।

*(१)ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः(१) ॥
अनु० १२ ॥

---

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि एकादशोऽनुवाकः ॥

---

अथ द्वादशोऽनुवाकः।

पूर्वोक्तप्रकारेणोपासीनस्य पुरुषस्योपास्यदेवतानमस्कारार्थं एकामृचमाह। (१)"ऋतꣳ सत्यं ० वै नमो नमः"(१) इति। यदेतत् 'परं ब्रह्म', तत् 'सत्यं' अबाध्यं। सत्यञ्च द्विविधं, व्यावहारिकं पारमार्थिकञ्च। हिरण्यगर्भादिकं रूपं व्यावहारिकं सत्यं। तन्निवारकेन पारमार्थिकसत्वं प्रदर्शयितुं ऋतं सत्यं इति विशेष्यते। अत्यन्तसत्यमित्यर्थः। तादृशं ब्रह्म सम्भक्तानुग्रहाय उमामहेश्वरात्मकं पुरुषरूपं भवति। तत्र दक्षिणे महेश्वरभागे 'कृष्ण'वर्णः। उमाभागे वामे 'पिङ्गल'वर्णः। स च योगेन

---

* उक्तमन्त्रोऽस्मत्सङ्गृहीतेषु B, J, N, O चिह्नितपुस्तकेषु नास्ति। परन्तु भाष्ये दृश्यमानत्वात् मूले निवेशितः।

अथ त्रयोदशोऽनुवाकः ।

[१]आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचा मण्डलꣳ स ऋचां लोकोऽथ य एष एत-

स्वकीयं रेतः ब्रह्मरन्ध्रे धृत्वा 'ऊर्ध्वरेताः,' भवति । त्रिनेत्रत्वात् 'विरूपाक्षः' तादृशं, परमेश्वरं अनुसृत्येति शेषः । 'विश्वरूपाय' जगत्कारणत्वेन सर्वजगदात्मकाय विरूपाक्षाय पुरुषायैव, 'नमस्कारः' अस्तु ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि द्वादशोऽनुवाकः ॥

अथ त्रयोदशोऽनुवाकः ।

इदानीमादित्यमण्डले परब्रह्मोपासनमाह । [१]"आदित्यो वा • हिरण्मयः पुरुषः"[१] इति । नारायणशब्दवाच्यः यः परमेश्वरः पूर्वानुवाकेऽभिहितः, स 'एषः', 'आदित्यो वै' सोपाधिकः सन् आदित्यरूपेणैव वर्त्तते । तस्य चादित्यस्य 'एतत्' अस्माभिः दृश्यमानं,'मण्डलं' वर्त्तुलाकारमुष्णं तेजः,'तपति' सन्तापं करोति। 'तत्र' तस्मिन् मण्डले, 'ताः' अध्यापकप्रसिद्धा "अग्निमीळे" इत्यादिकाः, 'ऋचः', वर्त्तन्ते । 'तत्' तस्मात् कारणात्, 'मण्डलं', 'ऋचा',

स्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषा मण्डलꣳ स यजुषां लोकः सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः(१) ॥

अनु० १३ ॥

---

निष्पादितमिति शेषः । मण्डलभाग ऋग्भिर्निष्पादितः । 'ऋचां' ऋगभिमानिदेवतानां, 'लोकः' निवासस्थानं । एवं ऋगात्मकत्वं मण्डलस्य ध्यात्वा 'अथ' अनन्तरं, सामात्मकत्वं तत्र ध्यातव्यं कथमिति तदुच्यते । 'एतस्मिन्मण्डले', 'य एषः' यदेतत्, 'अर्चिर्दीप्यते' भास्वरं तेजः प्रकाशते । 'तानि' अर्चिःस्वरूपाणि, बृहद्रथन्तरादि'सामानि', इति ध्यायेत् । 'सः' अर्चिर्भागः, 'साम्नां' सामाभिमानिदेवतानां, 'लोकः' निवासस्थानं । 'अथ' सामध्यानानन्तरं, यजुरात्मकं ध्यातव्यं कथमिति तदुच्यते । 'य एषः' शास्त्रप्रसिद्धः 'एतस्मिन्' दृश्यमाने, 'मण्डले', तदीये 'अर्चिषि', 'पुरुषः' देवतात्मा, वर्त्तते । 'तानि' देवतास्वरूपाणि, 'यजूंषि' इषे त्वोर्जे त्वा इत्यादीनि, ध्यायेत् । 'सः' यजुरात्मकः पुरुषः, 'यजुषा', निष्पादितं 'मण्डलं', इति ध्यायेत् । 'सः' यजुर्भागः, 'यजुषां' यजुरभिमानिदेवतानां, 'लोकः' निवासस्थानं । 'सैषा' मण्डलतदर्चिस्तत्पुरुषरूपा, 'त्रयी एव' ऋग्यजुःसामात्मिकैव, 'विद्या', 'तपति' प्रकाशते । 'यः' पुरुषोऽत्राभिहितः, 'एषः', 'अन्तरादित्ये' आदित्यमण्डलमध्ये, 'हिरण्मयः', वर्त्तते ।

अथ चतुर्द्दशोऽनुवाकः ।

(१)आ॒दि॒त्यो वै तेज॒ ओजो॒ बलं॒ यश॒श्चक्षुः॒श्रोत्र॑-
मा॒त्मा मनो॑ म॒न्युर्मनु॑र्मृ॒त्युः स॒त्यो मि॒त्रो वा॒युरा॑का॒शः

---

हिरण्मयत्वञ्च श्रुत्यन्तरे* प्रपञ्चितं। "अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते। हिरण्यश्मश्रुर्हिरण्यकेश आप्रनखात् सर्व एव सुवर्णः" इति ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययज्ञिक्यां याज्ञिक्यामुपनिषदि त्रयोदशोऽनुवाकः ॥

---

अथ चतुर्दशोऽनुवाकः ।

पूर्वोक्तस्यैवादित्यपुरुषस्य सर्वात्मकत्वलक्षणमवशिष्टमुपास्यगुणं दर्शयति। (१)"आदित्यो वै ० भूतानामधिपतिः"(१) इति। योऽयं 'आदित्यः', उपास्यत्वेनोक्तः, स एव तेजआद्यधिपत्यन्तसर्वजगदात्मकं, 'तेजः' दीप्तिः। 'ओजः' बलकारणं। 'बलं' शरीरशक्तिः। 'यशः' कीर्त्तिः। 'चक्षुःश्रोत्रे' वागिन्द्रिये। 'आत्मा' देहः। 'मनः' अन्तःकरणं। 'मन्युः' तद्धर्मः कोपः। 'मनुः' स्वायम्भुवादिः।

---

* शाखान्तरे इति F चिह्नितपुस्तकपाठः ।

प्राणो लोकपालः कः किं कं तत्सत्यमन्नमायुरमृतो* जीवो विश्वः कतमः स्वयम्भु ब्रह्मैतदमृत† एष पुरुष एष भूतानामधिपतिः(१) (२)ब्रह्मणः सायुज्यꣳ सलोक-

'मृत्युः' यमः। 'सत्यादयः सत्यवचनाद्यभिमानिनो देवताविशेषाः। 'कः' प्रजापतिः। 'किं' इत्यनेन वाचा विशेषनिर्देशानर्हं वस्तु-जातं विवक्षितं। 'कं' सुखं। 'तत्' शब्देन परोक्षं वस्तु विवक्षितं। 'सत्यं' अनृतवर्जनं। 'अन्नं' श्रीहियवादिकं। 'आयुः' शतसंवत्सरा-दिकं। 'अमृतः' मरणरहितः। 'जीवः' चिदात्मा। स च 'विश्वः' शरीरभेदेनानेकविधः। 'कतमः' अतिशयेन सुखस्वरूपः। 'स्वयम्भु' कारणान्तरादनुत्पन्नः प्रजापतिः। 'प्रजापतिः' प्रजापालको राजा-दिः। 'इति' शब्दः प्रदर्शनार्थः। इत्यादिकं सर्वमुदाहरणीयमि-त्यर्थः। तत्र संवत्सररूपस्य कालस्यादित्येन निष्पादितत्वात् 'संव-त्सरः', 'आदित्यस्वरूपः। 'य एषः' सर्वात्मकः, 'पुरुषः', सः 'एषः', 'भूतानां' प्राणिनां, 'अधिपतिः' स्वामी ॥

उपास्यगुणानभिधाय फलं दर्शयति। (२)"ब्रह्मणः सायुज्यꣳ॰ य एवं वेद"(२) इति। 'यः' पुमान्, 'एवम्' उक्तप्रकारेण, 'वेद' उपास्ते, सः पुमान् 'सायुज्यादिफलमाप्नोति। द्विविधमुपासनं,

* सत्यमन्नमृत इति B, J, N, O चिह्नितपुस्तकचतुष्टयपाठः।

† ब्रह्मैतदमृत इति मूलपुस्तकधृतपाठस्य परिवर्त्ते भाष्यपुस्तकत्रय-गृहीतमूलपाठे 'प्रजापतिः संवत्सर इति संवत्सरोऽसावादित्यो यः' इति पाठो वर्त्तते।

तांमाप्नोत्येतासामेव देवतानाꣳ सायुज्यꣳ सार्ष्टिताꣳ समानलोकतामाप्नोति य एवं वेद(१) (२)इत्युपनिषत्(२)॥ अनु० १४ ॥

---

हिरण्यगर्भोपासनं, तदवयवभूतदेवतोपासनं च इति। तत्र हिरण्यगर्भोपास्तौ भावनाधिक्ये सति 'ब्रह्मणः' हिरण्यगर्भस्य, 'सायुज्यं' सहभावतादात्म्यं, प्राप्नोति'। भावनामान्द्ये 'सलोकतां' हिरण्यगर्भेण सह एकलोकनिवासं, प्राप्नोति'। देवतोपास्तावपि भावनाधिक्ये सति 'एतासामेव' इत्यादीनां, 'देवतानां', 'सायुज्यं', प्राप्नोति'। भावनाया मध्यत्वे सति 'सार्ष्टितां' समानैश्वर्यतां, प्राप्नोति'। मान्द्ये तु 'समानलोकतां', प्राप्नोति'॥

उक्तमन्त्रजपविवक्षयोपास्तिप्रकारमुपसंहरति। (२)"इत्युपनिषत्"(२) इति। 'इति' एवं पूर्वोक्तैरनुवाकैरुक्ता, 'उपनिषत्' रहस्यभूता विद्या, समाप्तेति शेषः॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि चतुर्दशोऽनुवाकः॥

---

### अथ पञ्चदशोऽनुवाकः।

(१)घृणिः सूर्य* आदित्यो न प्रभावात्यक्षरं। मधु क्षरन्ति तद्रसं। सत्यं वै तद्रसमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्(१)† ॥ अनु० १५ ॥

---

### अथ पञ्चदशोऽनुवाकः।

उपासनायामसमर्थस्यादित्यदेवताविषयं जप्यं मन्त्रमाह। (१) "घृणिः सूर्यः ० भूर्भुवः सुवरोम्"(१) इति। 'घृणिः' दीप्तिमान्, 'सूर्यः' एतन्नामकः, 'आदित्यः' अदितिदेवतायाः पुत्रः। एतादृशोऽहमस्मि। ईदृशमादित्यं फलार्थिनः सर्वेऽपि 'अर्चयन्ति'। तथा 'तं' आदित्यं, उद्दिश्य 'तपः', चरन्तीति शेषः। 'सत्यं' अनृतवर्जनं, अनुतिष्ठन्तीति शेषः। 'मधु क्षरन्ति' मधुरं क्षीरादिकं नैवेद्यरूपेण समर्पयन्ति। 'तत्' आदित्यरूपं, 'ब्रह्म' वेदात्मकं, परं ब्रह्म वा। तथा 'तत्' आदित्यरूपं, 'आपः', 'आपः' जलरूपं, वृष्टिनिष्पादकत्वात्। तथा समुद्रादिगता या 'आपः', यच्चाग्न्यादिकं

---

* आदित्यस्तमर्चयन्ति तपः सत्यं मधु क्षरन्ति तद् ब्रह्म तदापआपो ज्योती रसोऽमृतमिति F, Q, चिह्नितपुस्तकद्वतमूलस्य; पाठो भाष्यसम्मतश्च। चतुर्षु मूलपुस्तकेषु उपर्युक्तः पाठो वर्त्तते।

† घृणिः सूर्य इति पञ्चदशानुवाकादारभ्य नमो हिरण्यबाहवे इत्येकोनविंशानुवाकपर्यन्तः पाठो अस्मल्लब्धमूलपुस्तकचतुष्टये स्थानान्तरे वर्त्तते। परन्तु भाष्यपुस्तकत्रयद्वतमूलक्रमेणात्र तत्पाठो निवेशितः।

अथ षोडशोऽनुवाकः ।

(१)सर्वो॑ वै रु॒द्रस्तस्मै॑ रु॒द्राय॒ नमो॑ अस्तु । पुरु॑षो॒ वै रु॒द्रः सन्म॒हो नमो॒ नम॑ः । विश्वं॑ भू॒तं भुव॑नं चि॒त्रं

---

'ज्योतिः', योऽपि मधुरादिः 'रसः', यच्च देवैः पातव्यं 'अमृतं', यदपि 'ब्रह्म' मन्त्रजातं, ये च 'भूर्भुवः सुवः' त्रयो लोकाः, तत् सर्वं 'ओम्' आदित्यरूपं भवतीत्यर्थः ॥

इति सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययाज्ञिक्यामुपनिषदि पञ्चदशोऽनुवाकः ॥

---

अथ षोडशोऽनुवाकः ।

रुद्रदेवताकं मन्त्रमाह । (१)"सर्वो वै० नमो अस्तु"(१) इति । यः 'रुद्रः' पार्वतीपतिः पुराणेषु प्रसिद्धः, स एव सर्वजीवरूपेण सर्वशरीरेषु प्रविष्टत्वात् 'तस्मै' सर्वात्मकाय, 'रुद्राय', 'नमो अस्तु'। प्रकृतिपुरुषयोर्मध्ये जडात्मिकां प्रकृतिमपोह्य* चिदात्मकः 'पुरुषः', यो विद्यते, स एव भक्तानुग्रहाय रुद्रमूर्त्तिरूपेणावभासते । तस्मात् वस्तुतः सः 'रुद्रः', 'सन् महः' "सदेव सोम्येदमग्र

---

* प्रकृतिं विनाश्येति F चिह्नितपुस्तकपाठः ।

बहुधा जातं जायमानञ्च यत्। सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु[१] ॥ अनु० १६ ॥

---

अथ सप्तदशोऽनुवाकः।

[१]कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वोचेम

---

आसीत्" इत्यादिप्रतिपाद्यमबाधितं सद्रूपं तेजः, तादृशाय रुद्राय पुनः पुनः 'नमस्कारः 'अस्तु'। यज्जडं 'विश्वं', अस्ति, यच्च 'भूतं' चेतनं प्राणिजातं, अस्ति, इत्थं चेतनाचेतनरूपेण विचित्रं' यत् 'भुवनं' जगत्, तत्रापि 'यत्' जगत्, 'जातं' पूर्वमेवोत्पन्नं, यत्, 'च', इदानीं 'जायमानं', सः 'सर्वः', अपि प्रपञ्चः, 'एष रुद्रः', 'हि' तद्व्यतिरेकेण वास्तवस्य जगतो निरूपयितुमशक्यत्वात्, तादृशाय सर्वात्मकाय 'रुद्राय', 'नमस्कारः 'अस्तु' ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि षोडशोऽनुवाकः ॥

---

अथ सप्तदशोऽनुवाकः।

रुद्रदेवताकं द्वितीयं मन्त्रमाह। [१]"कद्रुद्राय प्रचेतसे ० नमो अस्तु"[१] इति। कत्य शब्दायामितिधातोरुत्पन्नः कच्छब्दः। प्रशंसा-

शन्तमᳫं हृदे। सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु[१] ॥ अनु० १७ ॥

अथाष्टादशोऽनुवाकः।

[१]नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय

---

माह। ततः 'कद्रुद्रः' प्रशस्तो रुद्रः, तस्मै। 'प्रचेतसे' प्रकृष्टज्ञान-युक्ताय। 'मीढुष्टमाय' मिह सेचन इति धातुः, अभीष्टानां कामानां अतिशयेन सेक्त्रे, कामप्रदायेत्यर्थः। 'तव्यसे' अत्रादौ सकारस्य छान्दसो लोपः। स्तव्याय स्तोतुं योग्यायेत्यर्थः। 'हृदे' हृदयवर्त्तित्वेन रुद्ररूपत्वेन च, 'शन्तमं' अतिशयेन सुखकरं स्तुतिरूपवाक्यं, 'वोचेम' कथयाम। सर्वो हीति पूर्ववत् ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि सप्तदशोऽनुवाकः ॥

अथाष्टादशोऽनुवाकः।

पुनरपि तद्देवताकं मन्त्रान्तरमाह। [१]"नमो हिरण्यबाहवे ० नमो नमः"[१] इति। बाहुशब्दस्य सर्वावयवोपलक्षणत्वात् 'हिरण्यबाहवे' भक्तानुग्रहाय सुवर्णमयतत्तच्छरीरयुक्ताय, 'हि-

हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः(१) ॥ अनु० १८ ॥

---

अथ एकोनविंशोऽनुवाकः।

(१)यस्य वैकङ्कत्यग्निहोत्रहवणी भवति* प्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रतिष्ठित्यै(१) ॥ अनु० १९ ॥

---

रण्यपतये' अस्मदीयहिरण्यपालकाय। 'अम्बिका' जगन्माता पार्वती, तस्याः 'पतये' भर्त्रे। तस्या एव अम्बिकायाः ब्रह्मविद्यात्मको देह उमाशब्देनोच्यते। तादृश्याः 'उमा'याः 'पतये' स्वामिने रुद्राय, पुनः पुनः नमस्कारो अस्तु। अनेनानुवाकद्वयेनोक्तानां मन्त्राणां त्वरितरुद्राख्या मन्त्रकल्पेषु प्रसिद्धा। तद्विनियोगस्तु रुद्राध्यायजपप्रसङ्गेन कल्पेषु द्रष्टव्यः॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि अष्टादशोऽनुवाकः॥

---

अथ एकोनविंशोऽनुवाकः।

अथाग्निहोत्रकर्मणि होमसाधनद्रव्यस्य कारणभूतं वृक्षविशेषं विधत्ते। (१)"यस्य वैकङ्कती ० प्रतिष्ठित्यै"(१) इति। अग्निहोत्रे हविर्हूयते यया दर्व्या सेयं 'अग्निहोत्रहवणी', सा च 'वकङ्कती'

* भवति प्रतिष्ठिता इति F चिह्नितपुस्तकपाठः।

अथ विंशोऽनुवाकः ।

(१)कृणुष्व पाज इति पञ्च(१) ॥ अनु० २० ॥

विकङ्कताख्येन वृक्षेण निष्पादिता, 'यस्य', अग्निहोत्रिणः,'भवति'। 'अस्य' अग्निहोत्रिणः, 'आहुतयः' 'प्रतिष्ठिताः'। तथा अग्निहोत्रहवण्या प्रक्षिप्ताः सत्यः 'प्रतितिष्ठन्त्येव' फलप्रदा भवन्त्येव। 'अथो' अपि च, 'प्रतिष्ठित्यै' अनुष्ठातुश्चित्तशुद्धिद्वारा तत्त्वज्ञानप्रतिष्ठार्थं, सम्पद्यन्ते। मुमुक्षोश्चित्तशुद्धिद्वारा वेदोक्तानां सर्वकर्मणां मोक्षसाधनत्वं द्योतयितुं उपलक्षणत्वेन कर्माङ्गभूतो विकङ्कतवृक्षोऽत्र विहितः ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि एकोनविंशोऽनुवाकः ॥

---

अथ विंशोऽनुवाकः ।

अथ चित्तशुद्धिहेतूनां कर्मणां सङ्क्षेपेणोपयोगमस्मिन् मोक्षप्रकरणे सूचयित्वा प्रतिबन्धकनिवारकान् रक्षोघ्नमन्त्रान् जपत्वेन विधत्ते। (१)"कृणुष्व पाज इति पञ्च"(१) इति। संहितायाः प्रथमकाण्डे द्वितीयप्रपाठकस्यान्तिमानुवाके समाम्नाताः 'कृणुष्व पाजः' इत्याद्या ऋचः, 'पञ्च', जपितव्या इति शेषः ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि विंशोऽनुवाकः ॥

## अथ एकविंशोऽनुवाकः ।

(१)अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुरास्ते-
षाꣳ सर्वभूतानां माता मेदिनी महती मही सा-
वित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता क-

---

## अथ एकविंशोऽनुवाकः ।

जीवनहेतुक्षेत्रलाभद्वारा मुक्तिहेतुं पृथिवीदेवताकं मन्त्रमाह । (१) 'अदितिर्देवाः ० अमृतेति वसिष्ठः"(१) इति । अदितिशब्दोऽखण्डितेति व्युत्पत्त्या भूमिमाचष्टे । अतएव निघण्टुकारेण पृथिवीनामसु पठितः । 'देवादयः पञ्च जातिविशेषा अदितिरूपाः । एते च सर्वप्राणिदेहानामुपलक्षकाः । अतः 'तेषां सर्वभूतानां', देहोपादानत्वादियम् 'अदितिः'। 'माता' जननी । 'मेदिनी' मधुकैटभमेदसा जाता । अथवा मेदस्विनी कठिनेत्यर्थः । 'महती' गुणाधिका, तच्च सर्वप्राणिकृतोपद्रवासहिष्णुत्वेनावगन्तव्यं । 'मही' पूज्या । 'सावित्री' सवितुः प्रेरकस्यान्तर्यामिणः सम्बन्धिनी। 'गायत्री' गायकान् स्तोपासकांस्त्रायते रक्षतीत्यर्थः। 'जगती' जगदाश्रयभूता । 'उर्वी' अनेकसस्याढ्या। 'पृथ्वी' अनेकविस्तारवती । 'बहुला' निविडावयवा । 'विश्वा' सर्वात्मिका। 'भूता' प्राणिदेहोत्पत्तेः पूर्वमेव विद्यमाना । 'कतमा' अतिशयेन सुखरूपा। 'काया' सर्वप्राणिदेहरूपेण परिणता। 'सा' प्रसिद्धा । 'सत्या'

तमा क्काया सा सत्येत्यमृतेति वसिष्ठः(१) ॥ अनु० २१ ॥

अथ द्वाविंशोऽनुवाकः ।

(१)आपो वा इद्ँ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्रा-

---

व्यवहारदशायां बाधरहिता। 'इति' एवं, 'वसिष्ठः' महामुनिः, आह। तथैव 'अमृता' मरणरहिता चतुर्युगपर्यावर्त्तनेऽप्यवस्थिता, 'इति' एतमप्यर्थं, 'वसिष्ठः', एवाह। अतोऽस्य मन्त्रस्य वसिष्ठ-ऋषिः इत्यर्थः॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-रण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्या-मुपनिषदि एकविंशोऽनुवाकः ॥

अथ द्वाविंशोऽनुवाकः ।

तृष्णभावकृतोपद्रवपरिहारेणोपकारिणमब्देवताकं मन्त्रमाह। (१)"आपो वा ० सुवराप ओम्"(१) इति। यत् 'इदं' जगत्, अस्ति तत् 'सर्वं', 'आपो वै' जलमेव। कथमिति तदेव प्रपञ्च्यते। 'विश्वा भूतानि' सर्वाणि प्राणि शरीराणि, 'आपः' जलं, रेतोरूपेण तदु-त्पादकत्वात्। 'प्राणा वै' शरीरवर्त्तिवायवोऽपि, 'आपः', उदक-

डापो विराडापः स्वराडापश्छन्दाꣳस्यापो ज्योतीꣳष्यापो यजूꣳष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवः सुवराप ओम्(१) ॥ अनु० २२ ॥

---

पानेन प्राणानामाप्यायनात्। अत एव छन्दोगा आमनन्ति। "आपोमयः प्राणो नापिबतो विच्छेत्स्यते" इति। 'पशवः' गवादयोऽपि, 'आपः', क्षीरस्वरूपेण तत्र परिणतत्वात्। 'अन्नं' व्रीहियवादिकं, 'आपः', अन्नस्यान्नहेतुत्वं प्रसिद्धं। 'अमृतं' देवैरुपजीव्यं वस्तु, 'आपः', तद्रूपेणापि परिणतत्वात्। सम्यक् राजत इति सूत्रात्मा हिरण्यगर्भः 'सम्राट्'। विस्पष्टं राजत इति ब्रह्माण्डदेहः पुरुषः 'विराट्'। इन्द्रियादिनैरपेक्ष्येण स्वयमेव राजत इत्यव्याकृताभिमानी ईश्वरः 'स्वराट्'। 'छन्दांसि' गायत्र्यादीनि। 'ज्योतीꣳषि' आदित्यादीनि। 'यजूंषि' अनियताक्षरा मन्त्राः। 'सत्यं' यथार्थकथनं। 'सर्वा देवताः' इन्द्रादयः। 'भूर्भुवः स्वः' त्रयो लोकाः। सम्राडादिलोकत्रयान्तपदार्थरूपेण 'आपः', स्तूयन्ते। एताश्च 'आपः', मूलकारणं, परमात्मरूपेण प्रणवप्रतिपाद्या इति वक्तुं 'ओङ्कारः' पठितः॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि द्वाविंशोऽनुवाकः॥

---

अथ त्रयोविंशोऽनुवाकः ।

(१)आपः॑ पुनन्तु पृथि॒वीं पृ॑थि॒वी पू॒ता पु॑नातु॒ माम् । पुनन्तु॒ ब्रह्म॑ण॒स्पति॒र्ब्रह्म॑ पू॒ता पु॑नातु॒ माम् । यदुच्छि॑ष्ट॒मभो॑ज्यं॒ यद्वा॑ दु॒श्चरि॑तं॒ मम॑ । सर्वं॑ पुनन्तु॒ मामापो॑ऽस॒तां च॑ प्रति॒ग्रह॒ꣳ स्वाहा॑(१) ॥ अनु० २३ ॥

---

अथ त्रयोविंशोऽनुवाकः ।

माध्याह्निकसन्ध्यानुष्ठानेऽभिमन्त्रितजलपानार्थं मन्त्रमाह । (१)"आपः पुनन्तु ० प्रतिग्रहꣳ स्वाहा"(१) इति । याः 'आपः', सन्ति ताः 'पृथिवीं', 'पुनन्तु' प्रक्षालनेन शोधयन्तु । सा च 'पृथिवी', 'पूता' शुद्धा सती, 'मां' अनुष्ठातारं, 'पुनातु' शोधयतु । तथा 'ब्रह्मणः' वेदस्य, 'पतिः' पतिं, प्रतिपालकमाचार्यं एता आपः 'पुनन्तु' । तेनाचार्येणोपदिष्टं 'ब्रह्म' वेदस्वरूपं, 'पूता' स्वयं पूतं सत्, 'मां पुनातु' । अन्यभुक्तावशिष्टरूपं 'उच्छिष्टं', 'यत्', अस्ति यच्च 'अभोज्यं' भोक्तुमयोग्यं, तादृशं कदाचिन्मया भुक्तं । 'यद्वा', 'दुश्चरितं' अन्यदपि प्रतिषिद्धाचरणरूपं, 'मम', किञ्चित् सम्पन्नं तत् 'सर्वं', परिहृत्येति शेषः । ततो 'मामापः पुनन्तु' । तथा 'असतां' शूद्रादीनां, 'प्रतिग्रहञ्च', मया कृतं पुनन्तु । तदर्थमिदमभिमन्त्रितमुदकं 'स्वाहा' मदीयवक्त्राग्नौ स्वाहुतम् अस्तु ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि त्रयोविंशोऽनुवाकः ॥

## अथ चतुर्विंशोऽनुवाकः ।

[१]अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षम्*। मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । अहस्तदवलुम्पतु ।

## अथ चतुर्विंशोऽनुवाकः ।

सायंसन्ध्याकाले जलपानार्थं मन्त्रमाह । [१]'अग्निश्च मा० जुहोमि स्वाहा''[१] इति । योऽयं 'अग्निः', अस्ति, यः 'च', 'मन्युः' क्रोधाभिमानी देवः, ये 'च', 'मन्युपतयः' क्रोधस्वामिनः, तन्नियामकाः† देवाः, सन्ति, ते सर्वेऽपि 'मन्युकृतेभ्यः' मदीयकोपनिष्पादितेभ्यः, 'पापेभ्यः', 'मा' मां, 'रक्षन्तां' पापिनं मां तत्पापविनाशनेन पालयन्तु। किञ्च अतीतेन 'अह्ना', तस्मिन्नहनि 'यत् पापम्', 'अकार्षं' कृतवानस्मि। केन साधनेन, मनआदिभिः शिश्नान्तैरवयवैः, 'तत्' सर्वं पापं, 'अहरवलुम्पतु' अहरभिमानी देवो विनाशयतु । परहिंसादिचिन्तनं मानसं पापं । अप्रियानृतादिभाषणं वाचिकं । अभिचारहोमादिकं हस्तकृतं । पादेन गोब्राह्मणस्पर्शादिकं पादकृतं । अभोज्यभोजनमुदरकृतं । अगम्यागमनं शिश्नकृतं । अथवा किमनेन परिमितगणनेन 'यत् किं', अपि 'दुरितं', 'मयि', निष्पन्नं, 'इदं' पापजातं सर्वं, तत्कर्त्तारं 'मां' च लिङ्गशरीररूपं, 'अमृतयोनौ' मरणरहिते जगत्कारणे, 'सत्ये' बाधरहिते, 'ज्योतिषि' स्वयम्प्रकाशे वस्तुनि,

---

* पापमकार्षमिति F चिह्नितपुस्तकधृतमूलपाठः ।

† तस्मिन्नियामका इति F, Q चिह्नितपुस्तकपाठः ।

यत्किञ्च दुरितं मयि। इदमहं माममृतयोनौ। सत्ये ज्योतिषि जुहोमि स्वाहा(१) ॥ अनु० २४ ॥

अथ पञ्चविंशोऽनुवाकः।

(१)सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यद्राचिया* पापमकार्ष†। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। रात्रिस्तदवलुम्पतु। यत्किञ्च दुरितं मयि। इदमहं माममृतयोनौ। सूर्ये ज्योतिषि जुहोमि स्वाहा(१)॥ अनु०२५॥

'जुहोमि' प्रक्षिपामि, अहमनेन होमेन तत्सर्वं भस्मीकरोमीत्यर्थः। तदर्थं इदमभिमन्त्रितं जलं 'स्वाहा' मदीयवक्त्राग्नौ स्वाहुतमस्तु॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि चतुर्विंशोऽनुवाकः॥

अथ पञ्चविंशोऽनुवाकः।

प्रातःसन्ध्याकाले जलपानार्थं मन्त्रमाह। (१)"सूर्यश्च मा • जुहोमि स्वाहा"(१) इति। 'सूर्ये' अहर्निष्पादके सूर्योपाधिके। अन्यत् सर्वं पूर्ववद् व्याख्येयं॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि पञ्चविंशोऽनुवाकः॥

* यद्राच्येति F चिह्नितपुस्तकपाठः।

† पापमकारिषमिति F चिह्नितपुस्तकस्थमूलपाठः।

अथ षड्विंशोऽनुवाकः।

(१)आयातु वरदा देवी अक्षरं ब्रह्म सम्मितं। गायत्री छन्दसां माता इदं ब्रह्म जुषस्व नः*। ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि

अथ षड्विंशोऽनुवाकः।

सन्ध्यात्रये मार्जनादूर्द्ध्वं गायत्र्या आवाहनमन्त्रमाह। (१) "आयातु वरदा ० आवाहयामि"(१) इति। 'वरदा' अस्मदभीष्टवरप्रदा, 'देवी' गायत्रीछन्दोऽभिमानिनीदेवता, 'अक्षरं' विनाशरहितं, 'सम्मितं' सम्यग्वेदान्तप्रमाणेन निश्चितं, 'ब्रह्म' जगत्कारणं परतत्त्वं, उद्दिश्य, 'आयातु' आगच्छतु, अस्माकं ब्रह्मतत्त्वं बोधयितुमागच्छत्वित्यर्थः। अयमेवार्थ उत्तरार्द्धेन स्पष्टीक्रियते। 'छन्दसां' गायत्रीत्रिष्टुबादीनां, वेदानां वा, 'माता' जननीदेवता, 'गायत्री' गायत्रीशब्दाभिधेया, 'नः' अस्मान्, 'इदं ब्रह्म' वेदान्तप्रतिपाद्यं तत्त्वं, 'जुषस्व' जोषयतु, उपदिशत्वित्यर्थः। हे गायत्रि देवि त्वं 'ओजोऽसि' बलहेतुभूता अष्टमधातुरूपासि। 'सहोऽसि' शत्रूणामभिभवनशक्तिरसि। 'बलमसि' शरीरगतव्यवहारसामर्थ्यरूपासि। 'भ्राजोऽसि' दीप्तिरूपासि। 'देवानां' अग्नीन्द्रादीनां, 'धाम' तेजः, यत् अस्ति तन्-'नामासि' तदेव तव नामेत्यर्थः। 'विश्वं' सर्वजगद्रूपं, त्वमेव

* जुषस्व मे इति B, J, N, O, चिह्नितपुस्तकपाठः।

विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरों गायत्री-
मावाहयामि[१] ॥ अनु० २६ ॥

---

अथ सप्तविंशोऽनुवाकः ।

[१]ओं भूः । ओं भुवः । ओ३ँ सुवः । ओं महः ।
ओं जनः । ओं तपः । ओ३ँ सत्यं । ओं तत्स-

---

'असि' । 'विश्वायुः' सम्पूर्णायुःस्वरूपा, असि । उक्तस्यैव व्याख्यानं 'सर्वमसि सर्वायुरिति । 'अभिभूः' सर्वस्य पापस्य तिरस्कारहेतुः, 'ओम्' प्रणवप्रतिपाद्यपरमात्मा, असि । तादृशीं 'गायत्रीं', मदीये मनसि 'आवाहयामि' ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि षड्विंशोऽनुवाकः ॥

---

अथ सप्तविंशोऽनुवाकः ।

गायत्र्या आवाहनादूर्द्धं प्राणायामार्थं मन्त्रमाह । [१]"ॐ भूः । ॐ भुवः ० सुवरोम्"[१] इति । 'भूरादयः सत्यान्ता लोकप्रतिपादिकाः सप्त व्याहृतयः । तेषाञ्च लोकानां प्रणवप्रतिपाद्यब्रह्मस्वरूपत्वविवक्षया प्रत्येकं प्रणवोच्चारणं । तत्सवितुरित्यादिको

वितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो योनः प्रचोदयात् । ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्[1] ॥ अनु० २७ ॥

---

गायत्रीमन्त्रः । तत्प्रतिपाद्यस्य ब्रह्मत्वविवक्षया* तदादौ प्रणवोच्चारणं । मन्त्रस्य चायमर्थः । 'सवितुः' प्रेरकस्यान्तर्यामिणो देवस्य, 'वरेण्यं' वरणीयं श्रेष्ठं, 'तत्', 'भर्गः' तेजः, 'धीमहि' ध्यायेम । 'यः' सविता परमेश्वरः, 'नः' अस्मदीयाः, 'धियः' बुद्धिवृत्तीः, 'प्रचोदयात्' प्रकर्षेण तत्त्वबोधे प्रेरयतु, तस्य तेजो ध्यायेमेति पूर्वत्रान्वयः । आपो ज्योतिरित्यादिको गायत्र्याः शिरोमन्त्रः तस्याद्यन्तयोः प्रणवद्वयं पूर्ववदुच्चार्यते । याः 'आपः', नदीसमुद्रादिगताः, सन्ति । यच्च 'ज्योतिः' आदित्यादिकं, अस्ति । योऽपि 'रसः' मधुरास्वादिः षड्विधः, अस्ति । यदपि 'अमृतं' देवैः पातव्यं, अस्ति । तत्सर्वं 'ओं' प्रणवप्रतिपाद्यं ब्रह्म । किञ्च 'भूर्भुवः स्वः' इत्यभिहिता ये त्रयो लोकाः सन्ति, तेषां प्रणवप्रतिपाद्यं ब्रह्म । अस्य च मन्त्रस्य प्राणायामाङ्गत्वमन्तनादोपनिषदि प्रतिपाद्यते† । "सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते" इति ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि सप्तविंशोऽनुवाकः ॥

---

* ब्रह्मतत्त्वविवक्षयेति Q चिह्नितपुस्तकपाठः ।

† श्रूयते इति F चिह्नितपुस्तकपाठः ।

5 L 2

अथ अष्टाविंशोऽनुवाकः ।

(१)ॐ भूर्भुवः सुवर्महर्जनस्तपः सत्यं तद्ब्रह्म तदाप आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्(१) ॥ अनु० २८ ॥

---

अथ एकनत्रिंशोऽनुवाकः ।

(१)ओं तद् ब्रह्म । ओं तद्वायुः । ओं तदात्मा । ओं तत्सत्यं । ओं तत्सर्वं । ओं तत् पुरोर्नमः(१)॥ अनु०२९ ॥

---

अथ अष्टाविंशोऽनुवाकः ।

तस्मिन्नेव प्राणायामे विकल्पितं मन्त्रान्तरमाह । (१)"ॐ भूर्भुवः ० सुवरोम्"(१) इति । पूर्ववद्व्याख्येयं ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि अष्टाविंशोऽनुवाकः ॥

---

अथ एकोनत्रिंशोऽनुवाकः ।

पुनरपि विकल्पितं मन्त्रान्तरमाह । (१)"ॐ तद् ब्रह्म । ० पुरोर्नमः"(१) इति । 'ॐ' प्रणवप्रतिपाद्यं, 'तत्' सर्ववेदान्तप्रसिद्धं, 'ब्रह्म' तत्त्वं । तथा 'वायुः' सूत्रात्मरूपो हिर-

अथ त्रिंशोऽनुवाकः।

(१)उत्तमे शिखरे देवी* भूम्यां पर्वतमूर्धनि। ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखं(१)॥ अनु० ३०॥

---

ण्यगर्भः। 'ॐ' 'तत्' प्रणवप्रतिपाद्यं वेदान्तप्रसिद्धं ब्रह्मैव। तथैव 'आत्मा' जीवोऽपि। ॐ तदिति पूर्ववत्। 'सर्वं' जगत्, ॐ तदिति पूर्ववत्। 'पुरः' पुराणि स्थूलसूक्ष्मकारणशरीराणि, ॐ तदिति पूर्ववत्। तादृशाय ब्रह्मणे 'नमः', अस्तु। प्राणायामे शक्तितारतम्यमनुसृत्य विकल्पितं मन्त्रत्रयमुक्तं॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि एकोनत्रिंशोऽनुवाकः॥

---

अथ त्रिंशोऽनुवाकः।

जपादूर्द्धं गायत्रीदेवताया विसर्जनमन्त्रमाह। (१)"उत्तमे, शिखरे ० यथासुखं"(१) इति। 'भूम्यां', अवस्थितो यः 'पर्वतः' मेरुनामकः, तस्य 'मूर्धनि' उपरिभागे, यत् 'उत्तमं शिखरं', अस्ति तस्मिन्, इयं गायत्री 'देवी', तिष्ठति। तस्मात् कारणात् हे 'देवि', 'ब्राह्मणेभ्यः', त्वदुपासकेभ्यः, त्वदनुग्रहेण परितुष्टेभ्यः,

---

* शिखरे जाते इति B, J, N, O चिह्नितपुस्तकपाठः।

अथ एकत्रिंशोऽनुवाकः ।

(१) ॐ अन्तश्चरति भूतेषु गुहायां विश्वमूर्त्तिषु । त्वं यज्ञस्त्वं विष्णुस्त्वं वषट्कारस्त्वं* रुद्रस्त्वं ब्रह्मा त्वं प्रजापतिः(१) ॥ अनु० ३१ ॥

---

अनुज्ञानमभिव्याप्य 'यथासुखं' स्वकीयसुखमनतिक्रम्य, स्वस्थाने तस्मिन् उत्तमशिखरे 'गच्छ' ॥

इति सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि त्रिंशोऽनुवाकः ॥

---

अथ एकत्रिंशोऽनुवाकः ।

गायत्रीदेव्या विसर्जनादूर्ध्वं तत्त्वानुस्मरणभूतस्य ब्रह्मण उपस्थानमन्त्रमाह । (१)"ॐ अन्तश्चरति ० त्वं प्रजापतिः"(१) इति । 'विश्वमूर्त्तिषु' देवमनुष्यगन्धर्वादिनानाशरीरयुक्तेषु, 'भूतेषु' प्राणिषु, 'गुहायां' बुद्धौ, 'अन्तः' मध्ये, 'ॐ' प्रणवप्रतिपाद्यः परमात्मा, 'चरति' वर्त्तते । हे परमात्मन् यः 'यज्ञः' ज्योतिष्टोमादिः, सः 'त्वं', एव । यश्च 'विष्णुः' जगत्पालकः, योऽपि 'वषट्कारः' हविःप्रदानमन्त्रः, यश्च 'रुद्रः' संहर्ता, यश्च 'ब्रह्मा' जगत्स्रष्टा, यश्च 'प्रजापतिः' दक्षादिः प्रजापालकः, सः सर्वोऽपि 'त्वं', एव ॥

---

* वषट्कारस्त्वमिन्द्रस्त्वमिति N चिह्नितपुस्तकपाठः ।

अथ द्वात्रिंशोऽनुवाकः।

(१)अमृतोपस्तरणमसि(१) ॥ अनु० ३२ ॥

---

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि एकत्रिंशोऽनुवाकः॥

---

अथ द्वात्रिंशोऽनुवाकः।

अथ भोजनादावपां प्राशने मन्त्रमाह। (१)"अमृतोपस्तरणमसि"(१) इति। पीयमान हे जल त्वं 'अमृतं' विनाशरहितं, प्राणदेवतायाः 'उपस्तरणमसि' यथा शयानस्य पुंसः मञ्चकस्योपरितनं पटादिकमुपस्तीर्यते, तद्वत् प्राणदेवताया इदमुपस्तरणं। तथा च वाजसनेयिनः प्राणविद्यायां प्राणदेवताया जलवस्त्रत्वमामनन्ति*। "तस्माद्शिष्यन्नाचामेदशित्वाचामेदेतमेव तदन्नमनग्नं कुरुते" इति॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि द्वात्रिंशोऽनुवाकः॥

---

* जलवस्त्रत्वमामनन्ति इति Q चिह्नितपुस्तकपाठः।

अथ त्रयस्त्रिंशोऽनुवाकः।

(१) प्राणे निविष्टोऽमृतं जुहोमि प्राणाय स्वाहा। अपाने निविष्टोऽमृतं जुहोमि अपानाय स्वाहा। व्याने निविष्टोऽमृतं जुहोमि व्यानाय स्वाहा। उदाने निविष्टोऽमृतं जुहोमि उदानाय स्वाहा। समाने निविष्टोऽमृतं जुहोमि समानाय स्वाहा। ब्रह्मणि म आत्मामृतत्वाय(१) ॥ अनु० ३३ ॥

---

अथ त्रयस्त्रिंशोऽनुवाकः।

जलप्राशनादूर्ध्वं प्राणाहुतिमन्त्रान् दर्शयति। (१)"प्राणे निविष्टः ० आत्मामृतत्वाय"(१) इति। पञ्चसु शरीरगतवायुभेदेषु मध्ये प्रथमे 'प्राणनामके वायौ 'निविष्टः' आदरयुक्तोऽहं, 'अमृतं' स्वादुभूतं इदं हविः, 'जुहोमि' प्रक्षिपामि। तच्च 'प्राणदेवतायै' 'स्वाहा' स्वाहुतमस्तु। एवमपानादिषु योज्यं। एतैः पञ्चभिराहुतिभिः 'अमृतत्वाय' मोक्षाय, 'मे' मदीयः, 'आत्मा' जीवः, 'ब्रह्मणि' परमात्मनि, एकीभवत्विति शेषः ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि त्रयस्त्रिंशोऽनुवाकः ॥

अथ चतुस्त्रिंशोऽनुवाकः।

(१)*प्राणे निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। प्राणाय स्वाहा। *अपाने निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। अपानाय स्वाहा। *व्याने निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। व्यानाय स्वाहा। *उदाने निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। उदानाय स्वाहा। *समाने निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। समानाय स्वाहा। ब्रह्मणि म आत्मामृतत्वाय(१)॥ अनु० ३४॥

---

अथ चतुस्त्रिंशोऽनुवाकः।

प्राणाहुतिष्वेव विकल्पितानि मन्त्रान्तराणि दर्शयति। (१)"प्राणे निविष्टो ० म आत्मामृतत्वाय"(१) इति। हूयमान हे द्रव्यविशेष त्वं 'शिवः' शान्तो भूत्वा, मां प्र'विश'। किमर्थं। 'अप्रदाहाय' चुत्सम्पादितदाहशान्त्यर्थं। अन्यत् पूर्ववद्व्याख्येयं॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि चतुस्त्रिंशोऽनुवाकः॥

---

* अत्र सर्व्वत्र प्राणे अपाने इत्यादिपदानामग्रे श्रद्धायामिति पदस्य पाठो अस्मल्लब्धेषु चतुर्षु मूलपुस्तकेषु वर्त्तते।

अथ पञ्चत्रिंशोऽनुवाकः ।

(१)अमृतापिधानमसि(१) ॥ अनु० ३५ ॥

अथ षट्त्रिंशोऽनुवाकः ।

(१)श्रद्धायां प्राणे निविश्यामृतꣳ हुतं । प्राणमन्नेनाप्यायस्व । श्रद्धायामपाने* निविश्यामृतꣳ हुतं । अपानमन्नेनाप्यायस्व । श्रद्धायां व्याने निविश्यामृतꣳ हुतं ।

---

अथ पञ्चत्रिंशोऽनुवाकः ।

भोजनादूर्ध्वमपां प्राशने मन्त्रमाह । (१)"अमृतापिधानमसि"(१) इति । पीयमान हे जल त्वं 'अमृतं' अविनश्वरं, 'अपिधानं' आच्छादकं, 'असि' ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि पञ्चत्रिंशोऽनुवाकः ॥

अथ षट्त्रिंशोऽनुवाकः ।

भुक्तस्यानुमन्त्रणे मन्त्रमाह । (१)"श्रद्धायां प्राणे ० आत्मामृतत्वाय"(१) इति । वैदिककर्मणि विश्वासातिशयः 'श्रद्धा', तस्यां

---

* भाष्यधृतमूलपाठे अपानादिशब्दाग्रे श्रद्धायामिति पदं न पठितम् ।

व्यानमन्नेनाप्यायस्व। श्रद्धायामुदाने निविश्यामृतꣳ हुतं। उदानमन्नेनाप्यायस्व। श्रद्धायाꣳ समाने निविश्यामृतꣳ हुतं। समानमन्नेनाप्यायस्व। ब्रह्मणि म आत्मामृतत्वाय[१] ॥ अनु० ३६ ॥

---

अथ सप्तत्रिंशोऽनुवाकः।

[१]प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः। तेनान्नेनाप्यायस्व[१]॥ अनु० ३७ ॥

---

सत्यां, 'प्राणवायौ 'निविश्य' आदरातिशयं कृत्वा, 'अमृतं' अविनश्वरं, स्वादुभूतं इदं हविः मया 'हुतं', हे प्राणाभिमानिदेव हुतेन 'अन्नेन' 'आप्यायस्व' वर्द्धयस्व। स्पष्टमन्यत्॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि षट्त्रिंशोऽनुवाकः॥

---

अथ सप्तत्रिंशोऽनुवाकः।

अनुमन्त्रणादूर्द्ध्वं हृदयाभिमर्शने मन्त्रमाह। [१]"प्राणानां ० आप्यायस्व"[१] इति। हे हृदयवर्त्तिन् अहङ्कार त्वं वायुरूपाणां इन्द्रियरूपाणां च 'प्राणानां', 'ग्रन्थिरसि' परस्परमविश्लेषाय

अथ अष्टत्रिंशोऽनुवाकः ।

(१)अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्(१) ॥ अनु० ३८ ॥

---

प्ययनहेतुरसि । तादृशः त्वं 'रुद्रः' त्वदभिमानिदेवतारूपः 'अन्तकः' दुःखस्य विनाशकः, भूत्वा 'मा' मां, 'विश' मच्छरीरे प्रविष्टो भव । 'तेन' मन्त्रोक्तेन, 'अन्नेन' 'आप्यायस्व' मामभिवर्द्धय ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि सप्तत्रिंशोऽनुवाकः ॥

---

अथ अष्टत्रिंशोऽनुवाकः ।

क्षुधादिजनितचित्तविक्षेपशान्तेरूर्ध्वं भोक्तुर्जीवस्य परमेश्वररूपत्वानुसन्धानहेतुं मन्त्रं दर्शयति । (१)"अङ्गुष्ठमात्रः ० प्रीणाति विश्वभुक्"(१) इति । हृदयमध्यगत आकाशः स्वाङ्गुष्ठपरिमितः, तत्र वर्त्तमाना बुद्धिरपि तावती, तया विच्छिन्नो जीवरूपः पुरुषोऽपि 'अङ्गुष्ठमात्रः', स च स्वकीयया ज्ञानक्रियाशक्त्या 'अङ्गुष्ठं', 'समाश्रितः', 'च'कारान्मस्तकञ्चाश्रितः, आपादमस्तकव्यापीत्यर्थः । स चोपाधिसम्बन्धमन्तरेण स्वकीयेन वास्तवेन रूपेण 'सर्वस्य जगतः', 'ईशः' नियन्ता, अतएव 'विश्वभुक्' सर्वं

अथ ऊनचत्वारिंशोऽनुवाकः।

(१)मेधा देवी जुषमाणा न आगाद्विश्वाची भद्रा सुमनस्यमाना। त्वया जुष्टा जुषमाणा* दुरुक्तान् बृह-

---

जगद् भुङ्क्ते। तादृशः सः 'प्रभुः' ईश्वरः, 'प्रीणातु अनेन भोजनेन प्रसन्नो† भवतु॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि अष्टत्रिंशोऽनुवाकः॥

---

अथ ऊनचत्वारिंशोनुवाकः।

जीवात्मन ईश्वरेणाभेदज्ञानं यदस्ति तस्य ज्ञानस्य नैरन्तर्येण साधनं मेधाधीनं, अतो मेधाभिमानिदेवतां प्रार्थयतुमेकामृचमाह। (१)"मेधा देवी ० विदथे सुवीरा"(१) इति। ग्रन्थतदर्थयोर्धारणशक्तिः 'मेधा', तदभिमानिनी 'देवी', 'जुषमाणा' प्रीयमाणा सती, 'नः' अस्मान् प्रति, 'आगात्' आगच्छतु। कीदृशी देवी, विश्वमञ्चतीति 'विश्वाची' सर्वावगाहनक्षमेत्यर्थः। अतएव 'भद्रा' कल्याणी, 'सुमनस्यमाना' शोभनं मनोऽस्मदनुग्राहकमिच्छन्ती। हे देवि 'त्वया जुष्टा' अनुगृहीता वयं, 'दुरुक्तान्

---

* नुदमाना इति J, N, Q चिह्नितपुस्तकपाठः।

† प्रीतः इत्यपि पाठः।

इदेम विदथे सुवीराः(१)। (२)त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मागतश्रीरुत त्वया। त्वया जुष्टश्चित्रं विन्दते वसु सा नो जुषस्व द्रविणेन* मेधे(२)॥

अनु० ३९॥

---

जुषमाणाः' पुरुषार्थानुपयोगिनो वेदबाह्यान् शब्दान् सेवमाना वेदैकनिष्ठाः, 'सुवीराः' शोभनपुत्रशिष्यादिरूपाः, 'विदथे' यज्ञेऽनुष्ठिते सति, शुद्धान्तःकरणा भूत्वा 'बृहद्वदेम' परब्रह्मतत्त्वं कथयाम॥

तत्रैव द्वितीयामृचमाह। (१)"त्वया जुष्टः ० द्रविणेन मेधे"(१) इति। हे 'देवि' मेधाख्ये, 'त्वया', 'जुष्टः' सेवितोऽनुगृहीतः पुरुषः, 'ऋषिः' अतीन्द्रियदर्शी, 'भवति'। तथा 'त्वया', जुष्टः पुरुषः 'ब्रह्मा' हिरण्यगर्भः, भवति। 'उत' अपि च, त्वया जुष्टः पुरुषः 'अगतश्रीः' प्राप्तसम्पत्, भवति। अतएव 'त्वया जुष्टः', पुरुषः 'चित्रं' गवाश्वभूहिरण्यधान्यादिकं विविधं, 'वसु' धनं, 'विन्दते' लभते। हे 'मेधे', देवि, 'सा' तादृशी त्वं, 'नः' अस्मान्, 'द्रविणेन' धनेन, 'जुषस्व' सेवस्व, अनुगृहाणेत्यर्थः॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि ऊनचत्वारिंशोऽनुवाकः॥

---

* द्रविणो नेति J, N चिह्नितपुस्तकपाठः।

अथ चत्वारिंशोऽनुवाकः।

(१)मेधां म इन्द्रो ददातु मेधां देवी सरस्वती। मेधां मे अश्विनावुभौ देवावाधत्तां* पुष्करस्रजौ†(१)॥ अनु० ४० ॥

---

अथ एकचत्वारिंशोऽनुवाकः।

(१)अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः। दैवी

---

अथ चत्वारिंशोऽनुवाकः।

मेधाप्रदानिन्द्रादीन् प्रार्थयते। (१)"मेधां मे ० पुष्करस्रजान्"(१) इति। योऽयं 'इन्द्रः', देवः, या च 'सरस्वती', देवी, यौ च 'पुष्करस्रजौ' पद्ममालायुक्तौ, 'उभावश्विनौ', 'देवौ', ते सर्वे 'मे' मह्यं, 'मेधां', प्रयच्छन्तु॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि चत्वारिंशोऽनुवाकः॥

---

अथ एकचत्वारिंशोऽनुवाकः।

मेधाप्रदं मन्त्रान्तरं दर्शयति। (१)"अप्सरासु च ० सुरभिर्जुषतां"(१) इति। 'अप्सरासु' देवस्त्रीषु, 'या मेधा', प्रसिद्धा

---

* अश्विनावुभावाधत्तामिति J, N, Q चिह्नितपुस्तकपाठः।

† पुष्करस्रजेति B, J, N चिह्नितपुस्तकपाठः।

मेधा मनुष्यजा* सा मां मेधा सुरभिर्जुषतां†(१) ॥ अनु० ४१ ॥

---

अथ द्विचत्वारिंशोऽनुवाकः ।

(१)आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा ज-

---

वर्त्तते, 'गन्धर्वेषु च' देवगायकेषु, 'यत्', 'मनः' मेधात्मकं, अस्ति 'दैवी' हिरण्यगर्भादिदेवेषु स्थिता, या 'मेधा' विद्यते, 'मनुष्यजा' मनुष्येषु वेदशास्त्रवित्सु या 'मेधा' अस्ति। 'सा' सर्वा, मेधा, 'सुरभिः' शोभनगन्धा, सर्वकामदुघा वा, भूत्वा, 'मां', 'जुषतां' सेवतां ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि एकचत्वारिंशोऽनुवाकः ॥

---

अथ द्विचत्वारिंशोऽनुवाकः ।

पुनरपि मेधार्थं मन्त्रान्तरमाह। (१)"आ मां मेधा ० सुप्रतीकां जुषतां"(१) इति। 'मेधा'शक्तिः, 'मां', प्रत्यागच्छत्विति शेषः। कीदृशी मेधा, 'सुरभिः' शोभनगन्धा, कामदुघा वा,

---

* मेधा सरस्वती इति B, J, N चिह्नितपुस्तकपाठः ।

† जुषताꣳ स्वाहेति B, J, N चिह्नितपुस्तकपाठः ।

गती अगम्या। ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषतां[१] ॥ अनु० ४२ ॥

---

अथ त्रिचत्वारिंशोऽनुवाकः।

[१]सद्योजातं प्रपद्यामि सद्योजाताय वै नमः*।

---

'विश्वरूपा' सकलवेदशास्त्रधारणसमर्थत्वेन बहुरूपा, 'हिरण्यवर्णा' देवताशरीरे हिरण्यसमानवर्णोपेता, 'जगती' सर्वत्र वर्त्तमानत्वेन जगदात्मिका, 'अगम्या' पुरुषार्थकामैः श्रमं गन्तुं योग्या, 'ऊर्जस्वती' बलवती, 'पयसा' गोक्षीरादिरसेन, 'पिन्वमाना' अस्मान् प्रीणयन्ती, 'सा' तथाविधगुणयुक्ता, 'मेधा', 'सुप्रतीका' सुमुखी भूत्वा, 'मां', 'जुषतां' सेवतां ॥

इति द्विचत्वारिंशोऽनुवाकः ॥

---

अथ त्रिचत्वारिंशोऽनुवाकः।

मेधाविनः पुरुषस्य ज्ञानोत्पादनाय महादेवसम्बन्धिषु पञ्चवक्त्रेषु मध्ये पश्चिमवक्त्रप्रतिपादकं मन्त्रमाह। [१]"सद्योजातं ० भवोद्भवाय नमः"[१] इति। 'सद्योजात'नामकं यत् पश्चिमवक्त्रं, तद्रूपं परमेश्वरं, 'प्रपद्यामि' प्राप्नोमि। तादृशाय 'सद्योजाताय',

---

* वै नमो नम इति B, J, N, O चिह्नितपुस्तकपाठः।

भवे भवे नातिभवे भजस्व* माम्। भवोद्भवाय नमः[१]॥
अनु० ४३॥

---

अथ चतुश्चत्वारिंशोऽनुवाकः।

[१]वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो† बलप्रमथनाय नमः

---

'वे', नमः', अस्तु। हे सद्योजात 'भवे भवे' तत्तज्जन्मनिमित्तं, 'मां', 'न भजस्व' न प्रेरयेत्यर्थः। किन्तर्हि 'अतिभवे' जन्मातिलङ्घननिमित्तं, 'भजस्व' तत्त्वज्ञानाय प्रेरय। 'भवोद्भवाय' भवात् संसारात् उद्धर्त्रे, सद्योजाताय 'नमः', अस्तु॥

इति त्रिचत्वारिंशोऽनुवाकः॥

---

अथ चतुश्चत्वारिंशोऽनुवाकः।

उत्तरवक्त्रप्रतिपादकं मन्त्रमाह। [१]"वामदेवाय नमः • मनोन्मनाय नमः"[१] इति। उत्तरवक्त्ररूपः 'वामदेवः', तस्मैव

---

* भवस्व इति B, J, N, O, चिह्नितपुस्तकपाठः।
† बलाय नम इति पाठः F, Q चिह्नितभाष्यपुस्तकद्वतमूलद्वये नास्ति।

सर्वभूतदमनाय नमो मनोन्मनाय नमः[१] ॥
अनु॰ ४४ ॥

अथ पञ्चचत्वारिंशोऽनुवाकः ।

[१]अघोरेभ्योऽथ घोरेभ्यो घोर घोरतरेभ्यः । सर्वतः शर्व सर्वेभ्यो* नमस्ते अस्तु रुद्ररूपेभ्यः[१] ॥ अनु॰ ४५ ॥

---

विग्रहविशेषा ज्येष्ठादिनामकाः । एते च महादेवपीठशक्तीनां वामादीनां नवानां पतयः पुरुषाः । तेभ्यो नवभ्यो नमस्कारः अस्तु ॥

इति चतुश्चत्वारिंशोऽनुवाकः ॥

अथ पञ्चचत्वारिंशोऽनुवाकः ।

दक्षिणवक्त्रप्रतिपादकं मन्त्रमाह । [१]"अघोरेभ्योऽथ ० रुद्ररूपेभ्यः"[१] इति । अघोरनामको दक्षिणवक्त्ररूपो देवः, तस्य विग्रहाः 'अघोराः' सात्त्विकत्वेन शान्ताः, अन्ये तु 'घोराः' राजसत्वेन उग्राः, अपरे तु तामसत्वेन घोरादपि 'घोरतराः' । हे 'शर्व' परमेश्वर, 'ते' त्वदीयेभ्यः पूर्वोक्तेभ्यः त्रिविधेभ्यः, 'सर्वेभ्यो रुद्ररूपेभ्यः', 'सर्वतः' सर्वेषु देशेषु सर्वेषु च कालेषु 'नमोस्तु' ॥

इति पञ्चचत्वारिंशोऽनुवाकः ॥

---

* सर्वेभ्यः सर्वशर्वेभ्य इति B, J, N, O चिह्नितपुस्तकपाठः ।

अथ षट्चत्वारिंशोऽनुवाकः ।

(१)तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात्(१) ॥ अनु० ४६ ॥

---

अथ सप्तचत्वारिंशोऽनुवाकः ।

(१)ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्मा-

---

अथ षट्चत्वारिंशोऽनुवाकः ।

प्राग्वक्त्रप्रतिपादकं मन्त्रमाह । (१)"तत्पुरुषाय • रुद्रः प्रचोदयात्"(१) इति । प्राग्वक्त्रदेवः 'तत्पुरुष'नामकः । द्वितीयार्थे चतुर्थी । 'तत्पुरुषं, देवं, 'विद्महे' गुरुशास्त्रमुखाज्जानीमः, ज्ञात्वा च 'महादेवाय' तं महादेवं, 'धीमहि' ध्यायेम । 'तत्' तस्मात् कारणात्, 'रुद्रः', देवः, 'नः' अस्मान्, 'प्रचोदयात्' ज्ञानध्यानार्थं प्रेरयतु ॥

इति षट्चत्वारिंशोऽनुवाकः ॥

---

अथ सप्तचत्वारिंशोऽनुवाकः ।

ऊर्ध्ववक्त्रप्रतिपादकं मन्त्रमाह । (१)"ईशानः सर्वविद्यानां • सदा शिवोम्"(१) इति । योऽयमूर्ध्ववक्त्रो देवः सोऽयं 'सर्व-

धिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शि-
वोम्[१] ॥ अनु० ४७ ॥

---

अथ अष्टचत्वारिंशोऽनुवाकः ।

[१]ब्रह्ममेतु माम्। मधुमेतु माम्। ब्रह्ममेव मधुमेतु माम्।

---

विद्यानां' वेदशास्त्रादीनां चतुःषष्टिकलाविद्यानां, 'ईशानः' नियामकः, तथा 'सर्वभूतानां' अखिलप्राणिनां, 'ईश्वरः' नियामकः, 'ब्रह्माधिपतिः' वेदस्याधिकत्वेन पालकः, तथा 'ब्रह्मणः' हिरण्यगर्भस्य, 'अधिपतिः', तादृशो यः 'ब्रह्मा' अस्ति प्रवृद्धः परमात्मा, सोऽयं 'मे' ममानुग्रहाय, 'शिवः' शान्तः, 'अस्तु'। 'सदा शिवोम्' स एव सदाशिवः, 'ॐ' अहं भवामि ॥

इति सप्तचत्वारिंशोऽनुवाकः ॥

---

अथ अष्टचत्वारिंशोऽनुवाकः ।

इत्थं तत्त्वज्ञानस्योत्पादकाः पञ्चतत्त्वप्रतिपादकाः पञ्चब्रह्ममन्त्रा उक्ताः, अथ ज्ञानप्रतिबन्धकब्रह्महत्यादिपापनिवृत्तिहेतवस्त्रिसुपर्णनामका मन्त्रा वक्तव्याः, तत्र प्रथमं मन्त्रमाह। [१]"ब्रह्ममेतु मां ० प्राणाꣳस्तां जुहोमि"[१] इति। 'ब्रह्मं' परब्रह्मतत्त्वं, 'माम्', 'एतु' प्राप्नोतु, 'मधुं' परमानन्दलक्षणमाधुर्योपेतं वस्तु, 'माम्', 'एतु' प्राप्नोतु। न चात्र ब्रह्म-मधुशब्दयोः अत्यन्तमर्थभेदः, किं

यास्ते सोम प्रजा वत्सोभि सो अहं। दुःष्वप्नहं दुरु-ष्यह। याꣳस्ते सोम प्राणाꣳस्तां जुहोमि(१)। (२)त्रिसुपर्ण-मयाचितं ब्राह्मणाय दद्यात्। ब्रह्महत्यां वा एते घ्नन्ति। ये ब्राह्मणास्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नु-

---

तर्हि 'ब्रह्ममेव', 'मधुं' शब्दद्वयप्रतिपाद्यमखण्डैकरसं वस्तु, 'मां', 'एतु' प्राप्नोतु। हे 'सोम' उमा ब्रह्मविद्या तया सह वर्त्तमान परमात्मन्, 'ते' तव, 'याः', 'प्रजाः' देवमनुष्यादयः, सन्ति, ता 'अभिलक्ष्य 'सो अहं' स तादृशस्त्वत्सेवकोऽहं, 'वत्सः' बालः, एतासां त्वदीयप्रजानां मध्ये बालवदहं त्वदीयकरुणायोग्यः। अतः हे 'दुःष्वप्नहन्' संसाररूपस्य दुःष्वप्नस्य घातक परमेश्वर, 'दुरुष्यह' दुःखमुत्कर्षेण अभिभव। वर्णविकारश्छान्दसः। हे 'सोम पर-मात्मन्, 'ते' त्वदीयाः, प्राणवृत्तयः 'याः', सन्ति 'तान्' वृत्ति 'प्राणान्', त्वयि 'जुहोमि' प्रक्षिपामि। मदीयमनोवागादयः प्राणास्त्वया निर्म्मितत्वात् त्वदीयाः, अतस्त्वय्येवोपसंहरामि, विषयेभ्य इन्द्रियाणि निरुध्य त्वदेकचित्तो भवामीत्यर्थः॥

उक्तस्य त्रिसुपर्णमन्त्रस्य माहात्म्यं ब्राह्मणरूपेण वाक्येन दर्श-यति। (१)"त्रिसुपर्णं ० पङ्क्तिं पुनन्ति ॐ"(२) इति। "वि-द्यान्तराणि सर्वाणि नापृष्टः कस्यचिद् ब्रूयात्" इति शास्त्रम-नुसृत्य शिष्येण याच्ञायां कृतायां पश्चादुपदिशन्ति। इमं तु त्रिसुपर्णमन्त्रं शिष्ययाच्ञामन्तरेणैव 'ब्राह्मणाय', उपदिशेत्*।

---

* उपदिशन्ति इति ৫ चिह्नितपुस्तकपाठः।

वन्ति। आसहस्रात् पङ्क्तिं पुनन्ति। ओम्[२] ॥
अनु० ४८ ॥

---

अथ एकोनपञ्चाशदनुवाकः।

[१]ब्रह्म मेधया। मधु मेधया। ब्रह्ममेव मधु मेधया। अद्या नो देवसवितः प्रजा वत्सावी सौभगं। परा दुःष्वप्नियꣳ सुव। विश्वानि देवसवितर्दुरितानि

---

तेनोपदेशेन 'ये ब्राह्मणाः', 'त्रिसुपर्णं पठन्ति' त्रिसुपर्णमन्त्रं सर्वदा जपन्ति, 'एते' पुरुषाः, 'ब्रह्महत्यां', विनाशयन्ति। ततस्ते निष्पापाः सन्तः 'सोम'यागं 'प्राप्नुवन्ति'। ते यस्यां ब्राह्मणपङ्क्तौ भोजनार्थमुपविशन्ति तां 'पङ्क्तिं', सहस्रब्राह्मपर्यन्तां, 'पुनन्ति' शुद्धां कुर्वन्ति। तस्माद् 'ॐ' प्रणवप्रतिपाद्यः परमात्मैव, त्रिसुपर्णमन्त्रस्य देवतेत्यर्थः ॥

इति अष्टचत्वारिंशोऽनुवाकः ॥

---

अथ एकोनपञ्चाशदनुवाकः।

द्वितीयं त्रिसुपर्णमन्त्रमाह। [१]"ब्रह्म मेधया ० भवन्तु नः"[१] इति। यद् 'ब्रह्म' जगत्कारणं सर्ववेदान्तवेद्यं, तत् 'मेधया'

परा सुव। यद्भद्रं तन्म आसुव। मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः। मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः[१]। [२]य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्। भ्रूणहत्यां वा एते घ्नन्ति। ये ब्राह्मणास्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति। आसहस्रात् पङ्क्तिं पुनन्ति। ओम्[२] ॥ अनु० ४९ ॥

---

गुरूपदिष्टमहावाक्यतदर्थधारणशक्त्या, लभ्यतामिति शेषः। मध्वित्यादि पूर्ववत्। अद्या नो देवेत्यादिकमृक्पञ्चकमणोरणीयानित्यनुवाके* व्याख्यातं।

अस्य त्रिसुपर्णमन्त्रस्य महिमानं दर्शयति। (२)"य इमं • पुनन्ति। ओम्"(२) इति। ब्राह्मणगर्भस्य राजगर्भस्य वा वधः 'भ्रूणहत्या'। अन्यत् पूर्ववत्॥

इति एकोनपञ्चाशोऽनुवाकः ॥

---

* अद्या नो देवेत्यादिकमृक्पञ्चकं क्रमेणाणोरणीयानित्यनुवाके इति F चिह्नितपुस्तकपाठः। अनुवाकस्तु १० । ८०० पृष्ठे द्रष्टव्यः।

अथ पञ्चाशोऽनुवाकः।

(१)ब्रह्म मेधवा। मधु मेधवा। ब्रह्ममेव मधु मेधवा। ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणां। श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन्। हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्(१)। (२)य इदं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्। वीरहत्यां वा एते घ्नन्ति। ये ब्राह्मणास्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति। आसहस्रात् पङ्क्तिं पुनन्ति। ओम्(२)॥ अनु० ५०॥

---

अथ पञ्चाशोऽनुवाकः।

तृतीयं त्रिसुपर्णमन्त्रमाह। (१)"ब्रह्म मेधवा ० ऋतं बृहत्"(१) इति। 'मेधवा' मेधो यज्ञः सोऽस्यास्तीति मेधवत्। यज्ञदानादिसाध्यविविदिषापूर्वकत्वात् ब्रह्मज्ञानलाभस्य 'ब्रह्म', मेधवत् इत्युच्यते। अन्यत् पूर्ववत्। ब्रह्मा देवानां, हंसः शुचिषत् इत्यादिके द्वे ऋचौ अणोरणीयानित्यनुवाके व्याख्याते॥

अस्य त्रिसुपर्णमन्त्रस्य महिमानं दर्शयति। (२)"य इदं ० पङ्क्तिं पुनन्ति ओम्"(२) इति। वेदशास्त्रतदनुष्ठानपरो ब्राह्मणः, अभिषिक्तो राजा वा 'वीरः'। अन्यत् पूर्ववत्॥

इति पञ्चाशोऽनुवाकः॥

अथ एकपञ्चाशोऽनुवाकः ।

(१)प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा(१) ॥ अनु० ५१ ॥

---

अथ एकपञ्चाशोऽनुवाकः ।

ब्रह्मज्ञानप्रतिबन्धकानि यानि महापातकानि तन्निवृत्तये जप्यास्त्रिसुपर्णमन्त्रास्त्रयोऽभिहितास्तत्र ब्राह्मणजातिमात्रवधो ब्रह्महत्या पञ्चसु महापातकेषु मध्ये प्रबलं महापातकं । ततोऽप्यधिकं भ्रूणहननं । तस्मादप्यधिकं वीरहननं । ईदृशानामपि निवर्त्तको यावज्जीवं त्रिसुपर्णं जपस्तत्र अर्वाचीनानां सुरापानादिपातकानां निवर्त्तक इति किमु वक्तव्यं । इत्थं प्रतिबधनिवृत्त्युपायमुक्त्वा ज्ञानयोग्यतायै स्वावयवशुद्ध्यर्थं होमार्थानेकादशमन्त्रानेकादशस्वनुवाकेषु क्रमेण विवक्षुरादौ मन्त्रमाह । "(१)प्राणापान ० भूयासꣳ स्वाहा"(१) इति । 'प्राणादयः पञ्च वायवः प्रसिद्धाः । ते सर्वेऽपि अनेन आज्यहोमेन शुद्धा भवन्तु । ततः 'अहं', 'विपाप्मा' प्रतिबन्धकोपपातकरहितः, 'विरजाः' पापकारणभूतरजोगुणेनापि रहितः सन्, यत् 'ज्योतिः' जगत्कारणं परंब्रह्म तद्रूपस्तु, 'भूयासं', तदर्थमिदमाज्यं स्वाहुतमस्तु ॥

इति एकपञ्चाशोऽनुवाकः ।

अथ द्विपञ्चाशोऽनुवाकः।

(१)वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतो बुद्ध्याकूतिः सङ्कल्पा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा(१) ॥ अनु० ५२ ॥

---

अथ त्रिपञ्चाशोऽनुवाकः।

(१)शिरःपाणिपादपार्श्वपृष्ठोरूदरजङ्घशिश्नोपस्थपा-

---

अथ द्विपञ्चाशोऽनुवाकः।

द्वितीयं मन्त्रमाह। (१)"वाङ्मनः ० भूयासꣳ स्वाहा"(१) इति। 'वागादीनीन्द्रियाणि। 'रेतः' गुह्येन्द्रियं, मनःशब्दवाच्यस्यान्तःकरणस्यैव निश्चयात्मिकावृत्तिः 'बुद्धिः'। अनिश्चयभूता* वृत्तिः 'आकूतिः'। इदं समीचीनमिति कल्पनारूपा वृत्तिः 'सङ्कल्पः'। अन्यत् पूर्ववत् ॥

इति द्विपञ्चाशोऽनुवाकः।

---

अथ त्रिपञ्चाशोऽनुवाकः।

तृतीयं मन्त्रमाह। (१)"शिरः पाणि ० स्वाहा"(१) इति। पूर्वाभ्यामनुवाकाभ्यां सूक्ष्मशरीरशुद्धिरुक्ता। अत्र स्थूलशरीराव-

---

* अनिश्चयात्मिकेति F चिह्नितपुस्तकपाठः।

यवो मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भू-
यासꣳ स्वाहा[१] ॥ अनु० ५३ ॥

---

अथ चतुःपञ्चाशोऽनुवाकः ।

[१]त्वक्चर्ममाꣳसरुधिरमेदोमज्जास्नायवोऽस्थीनि मे
शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ
स्वाहा[१] ॥ अनु० ५४ ॥

---

यत्रानां शिरःपाण्यादीनां शुद्धिरुच्यते । लिङ्गाण्डभेदविवक्षया 'शिश्नोपस्थ'शब्दौ द्वौ द्रष्टव्यौ । अन्यत् पूर्ववत् ॥

इति त्रिपञ्चाशोऽनुवाकः ॥

---

अथ चतुःपञ्चाशोऽनुवाकः ।

चतुर्थं मन्त्रमाह । [१]"त्वक्चर्म ० भूयासꣳ स्वाहा' [१] इति । अत्र स्थूलशरीरे स्थितानां* धातूनां शुद्धिरुच्यते । एकस्यैव धातोर्बाह्यान्तर्भागविवक्षया 'त्वक्चर्म'शब्दौ प्रयुक्तौ । अन्यत् पूर्ववत् ॥

इति चतुःपञ्चाशोऽनुवाकः ॥

---

* स्थूलशरीरगतानामिति F चिह्नितपुस्तकपाठः ।

अथ पञ्चपञ्चाशोऽनुवाकः।

(१)शब्दस्पर्शरूपरसगन्धा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा(१) ॥ अनु० ५५ ॥

---

अथ षट्पञ्चाशोऽनुवाकः।

(१)पृथिव्यप्तेजोवायुराकाशा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा(१)॥ अनु० ५६ ॥

---

अथ पञ्चपञ्चाशोऽनुवाकः।

पञ्चमं मन्त्रमाह। (१)"शब्दस्पर्श ० भूयासꣳ स्वाहा"(१) इति। शरीरोपादानपञ्चमहाभूतेषु आकाशादिषु वर्तमानाः गुणाः 'शब्दादयः। अन्यत् पूर्ववत्॥

इति पञ्चपञ्चाशोऽनुवाकः॥

---

अथ षट्पञ्चाशोऽनुवाकः।

षष्ठं मन्त्रमाह। (१)"पृथिव्यप्तेजो ० भूयासꣳ स्वाहा"(१) इति। शरीरस्योपादानकारणानि पञ्चमहाभूतानि 'पृथिव्यादीनि। अन्यत् पूर्ववत्॥

इति षट्पञ्चाशोऽनुवाकः॥

---

अथ सप्तपञ्चाशोऽनुवाकः ।

(१)अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा(१) ॥ अनु० ५७ ॥

---

अथ अष्टपञ्चाशोऽनुवाकः ।

(१)विविष्ट्यै* स्वाहा(१) ॥ अनु० ५८ ॥

---

अथ सप्तपञ्चाशोऽनुवाकः ।

सप्तमं मन्त्रमाह । (१)"अन्नमय ० भूयासꣳ स्वाहा"(१) इति । 'अन्नमयादयः पञ्च कोशा वारुण्यामुपनिषद्युक्ताः । अन्यत् पूर्ववत् ॥

इति सप्तपञ्चाशोऽनुवाकः ॥

---

अथ अष्टपञ्चाशोऽनुवाकः ।

अष्टमं मन्त्रमाह । (१)"विविष्ट्यै स्वाहा"(१) इति । विष्लृ व्याप्तौ इति धातोरुत्पन्नोऽयं शब्दः । विशेषेण विष्टिर्व्याप्तिर्यस्य ब्रह्मणस्तत् 'विविष्टिः', छान्दसः षकारस्य टकारः । तादृशं ब्रह्मोद्दिश्य स्वाहुतमिदमस्तु ॥

इति अष्टपञ्चाशोऽनुवाकः ॥

---

* विविच्यै इति N, O, Q चिह्नितपुस्तकपाठः ।

अथ एकोनषष्टितमोऽनुवाकः ।

(१)कषोत्काय स्वाहा(१) ॥ अनु० ५९ ॥

अथ षष्टितमोऽनुवाकः ।

(१)उत्तिष्ठ पुरुष हरित पिङ्गललोहिताक्षि* देहि

---

अथ एकोनषष्टितमोऽनुवाकः ।

नवमं मन्त्रमाह। (१)"कषोत्काय स्वाहा"(१) इति। कष†-शिषकरणे इति धातुः, कष्यते क्रियते इति 'कषः'† नामरूपकर्मात्मकः कार्यप्रपञ्चः, तस्मिन् 'उत्कः' तत्कर्तुमुत्सुकः 'कषोत्कः' परमेश्वरः, तादृशाय सृष्ट्यभिमुखाय परमेश्वराय 'स्वाहा' स्वाकृतमिदमस्तु ॥

इति एकोनषष्टितमोऽनुवाकः ॥

अथ षष्टितमोऽनुवाकः ।

दशमं मन्त्रमाह। (१)"उत्तिष्ठ पुरुष ० भूयासꣳ स्वाहा"(१)

---

* हरितलोहितपिङ्गलाक्षि इति F, Q चिह्नितपुस्तकपाठः।

† अत्र सर्वत्र कषशब्दस्थाने षषशब्दपाठः F चिह्नितपुस्तकेऽस्ति ।

दे॒हि द॒दाप॑यिता मे॑ शुध्य॒न्तां॒ ज्योति॑र॒हं वि॒रजा॑ वि॒पा॒प्मा भू॑यास॒ꣳ स्वाहा॑(१)॥ अनु॰ ६०॥

---

इति। विविक्तशब्दाभिधेयं यद्ब्रह्म तदेव कारणोपाधिकं कषोल्क-शब्दाभिधेयं। पुनरपि वह्निशरीरोपाधिविशिष्टमत्र पुरुषशब्दा-भिधेयं। तत्र पूर्वाभ्यां मन्त्राभ्यां निरुपाधिकं कारणोपाधिकं तद्ब्रह्मप्राप्त्यर्थं शुद्धिहेतुत्वेनात्र सर्वकर्मनिष्पादकवह्निशरीरो-पाधिकं प्रार्थ्यते। 'पुरुष'पुरि वह्निशरीरे शयान हे परमात्मन्. 'उत्तिष्ठ' औदासीन्यं परित्यज मदनुग्रहार्थमुद्युक्तो भव। स-म्बुध्यन्तपुरुषशब्दस्यैव हर्यादीनि त्रीणि पदानि विशेषणानि। हे 'हरित' प्रतिबन्धकहरणकुशल। हे 'लोहित' रक्तवर्ण। हे 'पिङ्गलाक्षि' पिङ्गलनयन। 'देहि देहि' पुनः पुनः शुद्धिं मे प्रयच्छ। 'ददापयिता' आचार्यमुखात् तत्त्वज्ञानस्य अतिश-येन दापयिता, भवेति शेषः। तस्य दापयितस्य* ज्ञानस्यो-त्पत्तये 'मे' मदीयाः चित्तवृत्तयः, 'शुध्यन्तां'। ज्योतिरित्यादि पूर्ववत्॥

इति षष्टितमोऽनुवाकः॥

---

* दापितव्यस्येति Q चिह्नितपुस्तकपाठः।

अथ एकषष्टितमोऽनुवाकः।

(१) ॐ स्वाहेति(१)॥ अनु० ६१॥

---

अथ द्विषष्टितमोऽनुवाकः।

(१)सत्यं परं परꣳ सत्यꣳ सत्येन न सुवर्गाल्लोका-च्यवन्ते कदाचन सताꣳ हि सत्यं तस्मात् सत्ये रम-

---

अथ एकषष्टितमोऽनुवाकः।

एकादशं मन्त्रमाह। (१)"ॐ स्वाहेति"(१) इति। 'ॐ' प्रणवप्रतिपाद्यं वस्तु भवामि, तदर्थमिदं स्वाहुतमस्तु॥

इति एकषष्टितमोऽनुवाकः।

---

अथ द्विषष्टितमोऽनुवाकः।

ज्ञानप्रतिबन्धकमहापातकोपपातकपरिहारेण ज्ञानयोग्यतालक्षणां शुद्धिमुक्का योग्यस्य पुरुषस्यापेक्षितेषु ज्ञानसाधनेषु मन्न्यासस्य निरतिशयोत्कर्षं वक्तुं सत्यादीन्येकादशोत्तमसाधनानि प्रतियोगित्वेन वक्तव्यानि। तत्र प्रथमं साधनमुपन्यस्यति। (१)"सत्यं परं ० सत्ये रमन्ते"(१) इति। यद्वस्तु प्रमाणेन यथादृष्टन्तस्य तथैवाभिवदनं 'सत्यं', तच्च 'परं' पुरुषार्थसाधनेषु

न्ते[१] [२]तप इति तपो नानशनात् परं यद्धि परं तपस्तद्दुर्धर्षं तद्दुराधर्षं तस्मात् तपसि रमन्ते[२]

उत्कृष्टं। तत्रादरार्थं परं सत्यमिति पुनर्वचनं। यद्वा 'परं' ब्रह्म, 'सत्यं' अबाध्यं, तद्वद् यथार्थवचनमपि बाधरहितमिति व्यावहारिकबाधराहित्येनोत्कर्षं विवक्षित्वा दृष्टान्तेन परं सत्यमित्युक्तं। 'सत्येन' यावज्जीवं यथार्थकथनेन, 'स्वर्गलोकात्' कदाचिदपि 'न', 'प्रच्यवन्ते'। अनृतवादिनस्तु केनचित् पुण्येन स्वर्गं प्राप्याप्यनृतवदनदोषेण कर्मफलं सम्पूर्णतयाऽनुभूयैव स्वर्गात् प्रच्यवन्ते। किञ्च। 'हि' यस्मात् कारणात्, 'सतां' सन्मार्गवर्त्तिनां ऋष्यादीनां, सम्बन्धि यथार्थवादित्वं 'तस्मात्' कारणात्, सतामिदमिति व्युत्पत्तिमाश्रित्य सत्यवादित्वमेव परमं मोक्षसाधनमिति केचिन्महान्तो वदन्तः तस्मिन्नेव 'सत्ये', 'रमन्ते' क्रीडन्ति ॥

एकं मतमुक्त्वा द्वितीयं मतमाह। [२]"तप इति ० तपसि रमन्ते"[२] इति। तपः परं मोक्षसाधनमिति केषाञ्चिन्मतं। तीर्थयात्राजपहोमादीनि यद्यपि बहूनि तपांसि सन्ति तथापि तेषु सर्वेष्वनशनमुपवासैकभक्तादिरूपादशनवर्जनात् 'परं' उत्कृष्टं, 'तपः', 'न', अस्ति। 'यत् हि' अनशनरूपं कृच्छ्रचान्द्रायणादिकं, 'परं', 'तपः', अस्ति। 'तद् दुर्धर्षं' धर्षितुं सोढुमशक्यं। अत एव 'आ'समन्तात् सर्वेषां प्राणिनां 'तत्' तपः, 'दुर्धर्षं'* दुःशकमित्यनु-

* तस्य तपसो दुर्धर्षमिति F चिह्नितपुस्तकपाठः।

(३)दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते(३) (४)शम इत्यरण्ये मुनयस्तस्माच्छमे रमन्ते(४) (५)दानमिति सर्वाणि भूतानि प्रशꣳसन्ति दानान्नातिदुष्करं* तस्माद्दाने रमन्ते(५) (६)धर्म इति धर्मेण सर्वमिदं

---

श्रूयते। 'तस्मात्' कारणात्, केचन श्रद्धालवः कृच्छ्रचान्द्रायणादिके 'तपसि', 'रमन्ते'॥

तृतीयं मतमाह। (३)"दम इति ० तस्माद्दमे रमन्ते"(३) इति। वाक्चक्षुरादीन्द्रियाणां बाह्यानां निषिद्धेभ्यो विषयेभ्यो निवृत्तिः 'दमः', स एवोत्तमो मोक्षहेतुः 'इति', मन्यमाना नैष्ठिक'ब्रह्मचारिणः', 'नियतं' सर्वदा वदन्ति, 'तस्मात् दमे रमन्ते'॥

चतुर्थं मतमाह। (४)"शम इत्यरण्ये ० तस्माच्छमे रमन्ते"(४) इति। अन्तःकरणस्य क्रोधादिदोषराहित्यं 'शमः', स एवोत्तमो मोक्षहेतुः 'इति', 'अरण्ये', वर्तमानाः 'मुनयः' वानप्रस्थाः, मन्यन्ते। 'तस्मात्', ते 'शमे रमन्ते'॥

पञ्चमं मतमाह। (५)"दानमिति सर्वाणि ० तस्माद्दाने रमन्ते"(५) इति। गोभूहिरण्यादीनां स्वकीयानां शास्त्रोक्तवर्त्मना स्वत्वपरित्यागपुरःसरं परस्वत्वोत्पादनं 'दानं', तदेवोत्तमं मोक्षसाधनं मत्वा सर्वे प्राणिनः 'प्रशंसन्ति'। 'दानात्', अतिशयितं 'दुष्करं', 'न', अस्ति। धनरक्षणार्थं प्राणानपि परित्यजतां पुरुषाणामुपलम्भात्। 'तस्मात्', गोभूम्यादि'दाने', 'रमन्ते'॥

---

* दुश्चरमिति J, N, O, चिह्नितपुस्तकपाठः।

परिगृहीतं धर्मान्नातिदुश्चरं* तस्माद्धर्मे रमन्ते(६) (७)प्रजन इति भूयांꣳसस्तस्माद् भूयिष्ठाः प्रजायन्ते तस्माद् भूयिष्ठाः प्रजनने रमन्ते(७) (८)अग्नय इत्याह तस्माद्-

---

षष्ठं मतमाह। (६)"धर्म इति ० तस्माद्धर्मे रमन्ते"(६) इति। स्मृतिपुराणप्रतिपाद्यो वापीकूपतडागादिनिर्माणरूपोऽत्र 'धर्मः', विवक्षितः, स एवोत्तमो मोक्षहेतुः 'इति', राजामात्यादयः प्रभवो मन्यन्ते। तडागादिरूपेण 'धर्मेण', 'सर्वं', 'इदं' जगत्, 'परिगृहीतं', सर्वेऽपि मनुष्यपश्वादयः स्नानपानादिना तुष्यन्ति। तादृशात् 'धर्मात्', अन्यत् 'अतिदुश्चरं', 'न', अस्ति। 'तस्मात्' कारणात्, 'धर्मे रमन्ते', प्रभवः॥

सप्तमं मतमाह। (७)"प्रजन इति ० प्रजनने रमन्ते"(७) इति। 'प्रजनः' पुत्राद्युत्पादनं, तस्यैवोत्तमसाधनत्वं 'भूयांसः' अतिबहवः प्राणिनः, मन्यन्ते। धनिकैर्दरिद्रैः शिष्टैर्नष्टैः पण्डितैश्च सर्वैरपि पुत्रोत्पादनायातिशयेन प्रयत्यमानत्वात्† 'तस्मात्', एकैकस्य पुरुषस्य 'भूयिष्ठाः' भूरिशः, द्विशः पञ्चशा इत्येवं बहवोऽपत्यविशेषा उत्पद्यन्ते। 'तस्मात्' कारणात्, 'भूयिष्ठाः' अतिबहवः‡ प्राणिनः, प्रजोत्पादने 'रमन्ते'॥

अष्टमं मतमाह। (८)"अग्नयः ० आधातव्याः"(८) इति।

---

* दुष्करमिति J, N, O, चिह्नितपुस्तकपाठः।

† प्रयतमानत्वादिति F चिह्नितपुस्तकपाठः।

‡ अतिबहुला इति F चिह्नितपुस्तकपाठः।

अथ आधातव्याः(८) (९)अग्निहोत्रमित्याह तस्मादग्नि-होत्रे रमन्ते(९) (१०)यज्ञ इति यज्ञेन हि देवा दिवं गता-स्तस्माद्यज्ञे रमन्ते*(१०) (११)मानसमिति विद्वाꣳसस्तस्मा-द्विद्वाꣳस एव मानसे रमन्ते(११) (१२)न्यास इति ब्रह्मा

---

'अग्नयः' गार्हपत्यादयः, उत्तमा मुक्तिहेतवः 'इति', कश्चिद्वेदा-र्थपरः 'आह'। 'तस्मात्', गृहस्थैरग्नयः 'आधातव्याः', भवन्ति ॥

नवमं मतमाह। (९)"अग्निहोत्रं ० रमन्ते"(९) इति। आहितेष्वग्निषु सायम्प्रातश्चानुष्ठेयो होमः 'अग्निहोत्रं', तदुत्तमं मोक्षसाधनं 'इति', अपरः कश्चिद्वेदार्थपरः 'आह'। 'तस्मात्', केचित् 'अग्निहोत्रे रमन्ते'।

दशमं मतमाह। (१०)"यज्ञ इति ० तस्माद्यज्ञे रमन्ते"(१०)। दर्शपौर्णमासज्योतिष्टोमादिकः 'यज्ञः', उत्तमो हेतुः 'इति', अपरे वेदार्थपरा मन्यन्ते। यस्मादिदानीं वर्त्तमानाः 'देवाः', पूर्वानुष्ठितेन 'यज्ञेन', 'दिवङ्गताः' स्वर्गलोकं प्राप्ताः, 'तस्मात्' कारणात्, केचन वैदिका विद्वांसः 'यज्ञे रमन्ते' ॥

एकादशं मतमाह। (११)"मानसमिति ० मानसे रमन्ते"(११) इति। मनसैव निष्पाद्यमुपासनं 'मानसं', तदेवोत्तमं साधनं 'इति', 'विद्वांसः' सगुणब्रह्मविदः, मन्यन्ते। 'तस्मात्' कारणात्, केचन 'विद्वांसः' वेदगर्भोपास्तिभागतात्पर्यविदः, 'मानस एव', उपासने 'रमन्ते'॥

द्वादशं मतमाह। (१२)"न्यास इति ० एवात्यरेचयत्"(१२)

---

* यज्ञ इति यज्ञो हि देवास्तस्माद्यज्ञे रमन्ते इति J, N, O, चिह्नित-पुस्तकपाठः।

ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपाꣳसि* न्यास एवात्यरेचयत्[१२] [१३]य एवं वेदेत्युपनिषत्[१३] ॥ अनु० ६२ ॥

इति। पूर्वकाण्डोक्तानामग्निहोत्रादिकर्मणामारुणिजाबालाद्युपनिषदुक्तप्रकारेण परित्यागः 'न्यासः', स एवोत्तमो मोक्षहेतुः 'इति', 'ब्रह्मा' हिरण्यगर्भः, मन्यते। स च 'ब्रह्मा', 'परो हि' परमात्मरूपो हि, नतु पूर्वोक्तमतानुसारिण इव जीवः। यद्यप्यसौ हिरण्यगर्भो देहधारी तथापि 'परो हि' परमात्मैव, ब्रह्मा हिरण्यगर्भ इति वक्तुं शक्यते तच्छिष्यत्वेन तत्समानज्ञानत्वात्। अत एव श्वेताश्वतरा आमनन्ति। "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति। यानि पूर्वोक्तसत्यादीनि मानसान्तानि 'तान्येतानि' 'तपांसि', भवन्त्येव तथापि सन्न्यासमपेक्ष्य 'अवराणि' निकृष्टानि, सन्न्यासः', एकः 'एव', तानि सर्वाणि 'अत्यरेचयत्' अतिक्रान्तवान्। उत्तमत्वतारतम्यन्तत्र विश्रान्तमित्यर्थः ॥

उक्तमुत्तमसाधनमुपसंहरति। [१३]"य एवं वेदेत्युपनिषत्"[१३] इति ० 'यः' पुमान्, 'एवं' उक्तप्रकारेण, सन्न्यासस्यान्येभ्यः सर्वेभ्यः साधनेभ्यः उत्तमत्वं 'वेद', तस्य विदुषः 'इति' उक्ता विद्या, 'उपनिषत्' रहस्यभूता, भवति ॥

इति द्विषष्टितमोऽनुवाकः।

---

* पराꣳसि इति J, N, O चिह्नितपुस्तकपाठः।

† उत्तमत्वे इति F चिह्नितपुस्तकपाठः।

अथ त्रिषष्टितमोऽनुवाकः ।

(१)प्राजापत्यो हारुणिः सुपर्णेयः प्रजापतिं पितर-मुपससार किं भगवन्तः परमं वदन्तीति तस्मै प्रोवाच(१) (२)सत्येन वायुरावाति सत्येनादित्यो रोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्

---

अथ त्रिषष्टितमोऽनुवाकः ।

पूर्वोक्तं मोक्षसाधनसमूहमुपपादयितुमाख्यायिकामाह। (१)"प्राजापत्यो ह ० तस्मै प्रोवाच"(१) इति। प्रजापतेः पुत्रः 'प्राजापत्यः', स च 'आरुणि'नामकः, स एव सुपर्णाख्यायाः स्त्रियोऽपत्यत्वात् 'सुपर्णेयः,' इत्युच्यते,। तादृशः पुरुषः स्वकीयं 'पितरं प्रजापतिं', 'उपससार' उत्तमसाधनजिज्ञासयोपसन्नवान्, उपसद्य च एवं पप्रच्छ। हे प्रजापते 'भगवन्तः' पूज्या महर्षयः, मोक्षसाधनेषु 'किं' साधनं, 'परमं' उत्कृष्टं, 'वदन्ति'। एवं पृष्टः प्रजापतिः 'तस्मै' आरुणये, 'प्रोवाच' ॥

तदुक्तेषु साधनेषु प्रथमं दर्शयति। (२)"सत्येन वायुरावाति ० परमं वदन्ति"(२) इति। योऽयं 'वायुः', इदानीं अन्तरिक्षे 'वाति', सोऽयं पूर्वजन्मनि मनुष्यः सन् सत्यवादित्वं परिपाल्य तेन 'सत्येन', वायुदेवतात्वं प्राप्येदानीं लोकानुग्रहायान्तरिक्षे वाति। तथैव 'आदित्यः', अपि पूर्वजन्मानुष्ठितेन 'सत्येन', 'दिवि रोचते' द्युलोके प्रकाशते। यदेतत् 'सत्यं', तदेतत् 'वाचः' वागिन्द्रियस्य, 'प्रतिष्ठा' स्थिरावस्थानं। अनृतन्तु वाचोक्त

सत्यं प॒र॒मं वद॑न्ति⁽¹⁾ ⁽²⁾तप॑सा दे॒वा दे॒वता॒मग्र॑ आ-य॒न्तप॑स॒र्षय॑ः सु॒व॒र॒न्वविन्द॒न् तप॑सा स॒पत्ना॒न् प्रणु॑-दा॒मारा॑ती॒स्तप॑सि स॒र्वं प्रति॑ष्ठित॒ं तस्मा॒त्तप॑ः प॒र॒मं व-

---

मपि परैर्निराक्रियत इति न वाचः प्रतिष्ठा। तथासति लोके सत्ये भाषमाणे 'सर्वं' प्रामाणिकव्यवहारजातं, 'प्रतिष्ठितं', 'तस्मात्' कारणात्, 'सत्यं', एव 'परमसाधनमित्येवं केचिदनुष्ठातारः 'वदन्ति' ॥

तचारुणेर्मुखविकासराहित्यलक्षणमपरितोषं दृष्ट्वा द्वितीयं साधनमाह। ⁽²⁾"तपसा देवाः ० तस्मात् तपः परमं वदन्ति"⁽²⁾ इति। इदानीं स्वर्गे वर्तमाना अग्नीन्द्रादयः 'देवाः', 'अग्रे' पूर्वजन्मनि, अनुष्ठितेनाशनपरित्यागरूपेण कृच्छ्रचान्द्रायणादितपसा 'देवतां, 'आयन्' इदानीन्तनं देवतात्वं प्राप्ताः। तथा वसिष्ठादयो महर्षयः', पूर्वानुष्ठितेन 'तपसा', 'सुवरन्वविन्दन्' स्वर्गलोकमनुक्रमेण लब्धवन्तः। तथा वयमपीदानीमभिचाररूपेण तपसा 'सपत्नान्' शत्रून्, 'अरातीः 'अस्मदीयद्रव्यलाभविरोधिनः पुरुषानपि, 'प्रणुदाम' निराकुर्मः। अन्यदपि सर्वं फलजातं 'तपसि', 'प्रतिष्ठितं'। 'तस्मात्', अनशनरूपं 'तपः', 'परमं', मोक्षसाधनमिति* केचिद्वदन्ति ॥

---

* तस्मिंस्तपसि सर्वमपेक्षितं फलं प्रतिष्ठितं तस्मात् कारणात् तपः परमं मुक्तिसाधनमिति Q चिह्नितपुस्तकपाठः।

दन्ति[४]। [५]दमेन दान्ताः किल्बिषमवधून्वन्ति दमेन ब्रह्मचारिणः सुवरगच्छन्दमो भूतानां दुराधर्षं दमे सर्वं प्रतिष्ठितं तस्माद्दमः परमं वदन्ति[४]। [५]शमेन शान्ताः शिवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दञ्छमो भूतानां दुराधर्षं शमे सर्वं प्रतिष्ठितं तस्माच्छमः परमं वदन्ति[५]। [६]दानं यज्ञानां

अत्रापि पूर्ववदपरितोषं दृष्ट्वा* तृतीयं साधनमाह। [४]"दमेन दान्ताः ० परमं वदन्ति"[४] इति। 'दान्ताः' बाह्येन्द्रियनियमयुक्ताः पुरुषाः, तेन 'दमेन', स्वकीयं पापं विनाशयन्ति। तथा नैष्ठिक'ब्रह्मचारिणः', दमेन स्वर्गं 'अगच्छन्'। स च 'दमः', 'भूतानां' प्राणिनां, 'दुराधर्षं' आधर्षितुं सर्वतः सोढुं दुःशकः, तस्मिंश्च 'दमे', 'सर्वं' अपेक्षितं फलम्, 'प्रतिष्ठितं'। 'तस्मात्' कारणात्, 'दमः', 'परमं' मुक्तिसाधनं, इति केचित् 'वदन्ति'। अत्र सर्वत्र पूर्वसाधने परितोषराहित्यादुत्तरसाधनोक्तिर्द्रष्टव्या॥

चतुर्थं साधनमाह। [५]"शमेन शान्ताः ० शमः परमं वदन्ति"[५] इति। 'शान्ताः' अन्तःकरणक्रोधादिरहिताः पुरुषाः, तेन 'शमेन', 'शिवं' मङ्गलं पुरुषार्थं, 'आचरन्ति'। नारदाद्याः 'मुनयः', 'शमेन', स्वर्गमलभन्त। अन्यत् पूर्ववत्॥

* तत्रापि परितोषराहित्यात् इति Q चिह्नितपुस्तकपाठः।

वरूथं दक्षिणा लोके दातारꣳ सर्वभूतान्युपजीवन्ति दानेनारातीरपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति(६)। (७)धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदन्ति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति(७)। (८)प्रजननं वै

---

पञ्चमं साधनमाह। (६)"दानं यज्ञानां ० परमं वदन्ति"(६) इति। गोहिरण्यादि'दानं', 'यज्ञानां', सम्बन्धिनी 'दक्षिणा', भवति। तस्मात् 'वरूथं' श्रेष्ठं, 'लोके', अपि 'दातारं' पुरुषं, वेदशास्त्रविदो मूढाश्च सर्वेऽपि पुरुषाः 'उपजीवन्ति'। तथा योद्धॄणां भटानां धनदानेन 'अरातीः' शत्रून्, 'अपानुदन्त' राजानो निराकृतवन्तः। ये तु प्रबलाः 'द्विषन्तः', तेऽपि 'दानेन', तुष्टाः 'मित्राः', 'भवन्ति'। अन्यत् पूर्ववत्॥

षष्ठं साधनमाह। (७)"धर्मो विश्वस्य जगतः ० धर्मं परमं वदन्ति"(७) इति। तडागप्रपादिनिर्माणरूपः 'धर्मः', 'विश्वस्य जगतः' सर्वस्य प्राणिजातस्य, 'प्रतिष्ठा' आश्रयः, इत्येतत्प्रसिद्धं। तथा 'लोके', 'धर्मिष्ठं' अतिशयेन धर्मे वर्तमानं पुरुषं, 'प्रजाः', सर्वाः, 'उपसर्पन्ति' धर्माधर्मनिर्णयार्थमुपगच्छन्ति। किञ्च प्रायश्चित्तरूपेण 'धर्मेण', 'पापं', विनाशयन्ति। अन्यत् पूर्ववत्॥

सप्तमं साधनमाह। (८)"प्रजननं वै प्रतिष्ठा ० परमं प्रजननं

प्रतिष्ठा लोके साधु प्रजायास्तन्तुन्तन्वानः पितृणाम-
नृणो भवति तदेव तस्य अनृणं तस्मात् प्रजननं
परमं वदन्ति(८)। (९)अग्नयो वै त्रयीविद्या देवयानः
पन्था गार्हपत्य ऋक् पृथिवी रथन्तरमन्वाहार्यपचनो*
यजुरन्तरिक्षं वामदेव्यमाहवनीयः साम सुवर्गो

वदन्ति"(८) इति। 'प्रजननं' पुत्रोत्पादनं, यदस्ति, तदेव गृह-स्थानां 'प्रतिष्ठा', पुत्रस्य गृहकृत्यनिर्वाहकत्वात्। सोऽयं मनुष्य-लोकः पुत्रेणैव जय्यो नान्येन कर्मणेति श्रुतेः। किञ्च। 'प्रजा-याः' पुत्रपौत्रादिरूपायाः, 'तन्तुं' परम्परां, 'साधु तन्वानः' शास्त्रीयमार्गो यथा भवति तथा विस्तारयन्, 'पितृणां' मृतानां पितृपितामहादीनां, 'अनृणो भवति' तदीयमृणं पुत्रिणा प्रत्य-र्पितं भवति। यत् 'प्रजननं', 'तदेव', 'तस्य' पुत्रिणः, ऋणापा-करणहेतुः। अन्यत् पूर्ववत्॥

अष्टमं साधनमाह। (९)"अग्नयो वै त्रयी ० अग्नीन् परमं वदन्ति"(९) इति। गार्हपत्यो दक्षिणाग्निराहवनीय इति ये 'अग्नयः', सन्ति, त एव 'त्रयीविद्या' वेदत्रयात्मकाः, वेदत्रयोक्त-कर्मसाधनत्वात्† वेदविहितत्वाच्च 'देवयानः' यागद्वारेण देवत्व-प्रापकः, मार्गश्च। किं च। तेषामग्नीनां मध्ये 'गार्हपत्यः' अग्निः, 'ऋग्वेदात्मकः, 'पृथिवी'लोकस्वरूपः, 'रथन्तर'सामात्म-

* अन्वाहार्यपचनमिति B, N, Q, चिह्नितपुस्तकपाठः।

† धर्मसाधनत्वात् इति Q चिह्नितपुस्तकपाठः।

लोको बृहत्तस्मादग्नीन् परमं वदन्ति[९]। [१०]अग्निहोत्रꣳ सायं प्रातर्गृहाणां निष्कृतिः स्विष्टꣳ सुहुतं यज्ञक्रतूनां प्रायणꣳ सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति[१०]। [११]यज्ञ इति* यज्ञेन

कश्चेति प्रशस्यते। 'अन्वाहार्यपचनः' दक्षिणाग्निः, 'यजुर्वेदान्तरिक्ष'लोक'वामदेव्य'सामात्मकः। 'आहवनीयाग्निस्तु 'सामवेद'-'स्वर्गलोकबृहत्'-सामात्मकः। अन्यत् पूर्ववत्॥

नवमं साधनमाह। [१०]"अग्निहोत्रꣳ ० परमं वदन्ति"[१०] इति। 'सायम्प्रातः', च अनुष्ठितं 'अग्निहोत्रं', 'गृहाणां', 'निष्कृतिः' क्रयसाधनं मूल्यं, अग्निहोत्राभावे क्षुधितोऽग्निर्गृहान् दहेत्। किञ्च, अग्निहोत्रं, 'स्विष्टं' शोभनयागरूपं, 'सुहुतं' शोभनहोमरूपं। देवतामुद्दिश्य द्रव्यत्यागो यागः। तस्य द्रव्यस्याग्नौ प्रक्षेपो होमः। किं च, एतत्, 'यज्ञक्रतूनां', 'प्रायणं' प्रारम्भः। अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासावाग्रयणं चातुर्मास्यनिरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञाः। क्रतुशब्दो यूपवत्सु सोमयागेषु रूढः। अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः† षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामश्चेति सप्त सोमसंस्थाः क्रतवः। तेषां सर्वेषां यज्ञक्रतूनां प्रारम्भकं 'अग्निहोत्रं'। अत एव स्वर्गस्य 'लोकस्य', 'ज्योतिः' प्रकाशकं। अन्यत् पूर्ववत्॥

दशमं साधनमाह। [११]"यज्ञ इति यज्ञेन ० परमं वद-

* यज्ञो हि देवानामिति F, चिह्नितपुस्तकेऽधिकः पाठः।
† उक्थ्य इति F, चिह्नितपुस्तकपाठः।

हि देवा दिवं॑ गता य॒ज्ञेनासु॑रा॒नपा॑नुदन्त य॒ज्ञेन॒ द्वि॒षन्तो॒ मि॒त्रा भ॑वन्ति य॒ज्ञे स॒र्वं॑ प्रति॑ष्ठित॒ं तस्मा॑द्य॒ज्ञं प॑र॒मं वद॑न्ति[११]। [१२]मान॒सं वै प्रा॑जाप॒त्यं प॒वित्रं॑ मान॒सेन॒ मन॑सा॒ साधु प॑श्यति मान॒सा ऋष॑यः प्र॒जा अ॑सृजन्त मानसे स॒र्वं॑ प्रति॑ष्ठित॒ तस्मा॑न्मान॒सं प॑र॒मं वद॑न्ति[१२]।

---

न्ति"[११] इति। 'यज्ञः', उत्तमं साधनं, 'इति', केचिदाहुः। 'यज्ञः', 'हि', 'देवानां', प्रियः। ते 'हि देवाः', पूर्वानुष्ठितेन 'यज्ञेन स्वर्गं प्राप्ताः। किं च। 'यज्ञेन', एव तदा तदा 'देवाः', 'असुरान्', विनाशितवन्तः। किं च। सर्वकामप्राप्तिसाधनेन ज्योतिष्टोमेन द्वेषशान्तिकामस्य पूर्वं द्वेषं कुर्वन्तोऽपि शत्रवः 'मित्रा भवन्ति'। अन्यत् पूर्ववत्॥

एकादशं साधनमाह। [१२]"मानसं वै ० परमं वदन्ति"[१२] इति। मनसा निष्पाद्यं 'मानसं' उपासनं, यदस्ति, तदेव 'प्राजापत्यं' प्रजापतिपदप्राप्तिसाधनं, अत एव 'पवित्रं' चित्तशुद्धि-कारणं, 'मानसेन' उपासनेन, युक्तं 'मनः' अन्तःकरणं, यदस्ति, तेन एकाग्रेण 'मनसा', 'साधु पश्यति' अतीतानागतव्यवहितादिवस्तु-जातं योगी सम्यक् साक्षात् करोति। एतच्च योगशास्त्रे पतञ्जलिना बहुधा प्रपञ्चितं। 'मानसाः' एकाग्रमनोयुक्ता विश्वामित्रादयः 'ऋषयः', स्वसङ्कल्पमात्रेण बह्वीः 'प्रजाः', 'असृजन्त'। अन्यत पूर्ववत्॥

(१३)न्यास इत्याहुर्मनीषिणो ब्रह्माणं(१३)। (१४)ब्रह्मा विश्वः कतमः स्वयम्भुः प्रजापतिः संवत्सर इति(१४)। (१५)संवत्सरोऽसावादित्यो य एष आदित्ये पुरुषः स परमेष्ठी

---

द्वादशं साधनमाह। (१३)"न्यास इत्याहुर्मनीषिणो ब्रह्माणं"(१३) इति। 'न्यासः',* इत्युक्तो यो मोक्षहेतुः, तं, 'ब्रह्माणं' हिरण्यगर्भरूपं, 'मनीषिणः' बुद्धिमन्तो महर्षयः स्मृतिकर्तारः, 'आहुः'। तथा, "सन्न्यासाद्ब्रह्मणः स्थानं" इति स्मर्यते। हिरण्यगर्भप्राप्तेरन्तरङ्गसाधनत्वात्तद्रूपत्वं॥

तमेव सन्न्यासं स्तोतुन्तत्प्राप्यस्य हिरण्यगर्भस्य स्वरूपं प्रपञ्चयति। (१४)"ब्रह्मा विश्वः ० संवत्सर इति"(१४) इति। यः 'ब्रह्मा' हिरण्यगर्भः, सोयं 'विश्वः' सर्वजगदात्मकः। 'कतमः' अतिशयेन सुखस्वरूपः। 'स्वयम्भुः' उत्पादकाभ्यां मातापितृभ्यां विना स्वयमेवोत्पन्नः। 'प्रजापतिः' प्रजानां पालकः। 'संवत्सरः' कालात्मकः। 'इति'शब्दः प्रदर्शनार्थः। इत्यादिसर्वस्वरूपत्वमनुसन्धेयमित्यर्थः॥

पुनरपि सन्न्यासस्तुतये हिरण्यगर्भावयवस्य संवत्सरस्य माहात्म्यं दर्शयति। (१५)"संवत्सरोऽसौ ० परमेष्ठी ब्रह्मात्मा"(१५) इति। यः अयं, 'संवत्सरः' कालः, उक्तः, सः 'असौ', 'आदित्यस्वरूप एव, आदित्यगत्यभ्यासेन निष्पादितत्वात्। 'य एषः', तस्मिन् 'आदित्यमण्डले 'पुरुषः,' 'सः', एव 'परमेष्ठी' हिरण्य-

---

* सन्न्यास इति F, चिह्नितपुस्तकपाठः।

ब्रह्मात्मा[१५]। [१६]याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति पर्जन्येनौषधिवनस्पतयः प्रजायन्त ओषधिवनस्पतिभिरन्नं भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन तपस्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा

---

गर्भरूपः, आदित्यमण्डलद्वारेण हिरण्यगर्भस्य प्राप्यत्वात्। स च परमेष्ठी 'ब्रह्म' सर्वजगत्कारणं वस्तु, तथैव 'आत्मा' सर्वेषां प्रत्यगात्मभूतः॥

एवमादित्यादिद्वारा संवत्सरं प्रशस्य तमादित्यमण्डलद्वारेण सर्वव्यवहारहेतुतया प्रशंसति। [१६]"याभिरादित्यस्तपति ० विज्ञानादानन्दो ब्रह्मयोनिः"[१६] इति। अयं 'आदित्यः', 'याभिः' उष्णस्वरूपाभिः, 'रश्मिभिः', 'तपति' प्रभूतं सन्तापं करोति। 'ताभिः' तीव्ररश्मिभिः, भूमिगतजलमादाय 'पर्जन्यः', भूत्वा 'वर्षति'। तेन च 'पर्जन्येन' वृष्टिजनकेन, व्रीह्याद्याः, 'ओषधयः, अश्वत्थपनसाद्याः, 'वनस्पतयश्च प्रकर्षेणोत्पद्यन्ते। 'ओषधिभिः, 'वनस्पतिभिः', च भोज्यं 'अन्नं', सम्पद्यते। तेन च 'अन्नेन', 'प्राणाः', पोषिताः भवन्ति। तैश्च पुष्टैः 'प्राणैः', शरीरे 'बलं', सम्पद्यते। तेन 'बलेन', कृच्छ्रचान्द्रायणादिरूपं 'तपः', सम्पाद्यते, तेन च 'तपसा', शुद्धचित्तस्य तत्त्वज्ञानविषया 'श्रद्धा', जायते। तया च 'श्रद्धया', युक्तस्यैकाग्रचित्तस्य* 'मेधा' गुरूपदिष्टग्रन्थतदर्थधारणशक्तिः, उपजायते। तया च 'मेधया', 'मनीषा'

---

* युक्तस्यैकाग्रचित्तस्येति F चिह्नितपुस्तकपाठः।

मनीषया मनो मनसा शान्तिः शान्त्या चित्तं चित्तेन स्मृतिꣳ स्मृत्या स्मारꣳ स्मारेण विज्ञानं विज्ञानेनात्मानं वेदयति तस्मादन्नं ददन्त्सर्वाण्येतानि ददात्यन्नात् प्राणा भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्मयोनिः(११)। (१०)स वा

---

तत्त्वविषया बुद्धिः, उत्पद्यते। तया च 'मनीषया', 'मनः' निरन्तरन्तत्त्वविषयं मननं उपजायते। तेन च 'मनसा' मननेन, कामक्रोधादिदोषस्यावसराभावात् 'शान्तिः', उपजायते। तया च 'शान्त्या', विक्षेपरहितस्य 'चित्तं' चेतनं तत्त्वविषयं प्रमाणजनितं ज्ञानं उपजायते। तेन च 'चित्तेन' ज्ञानेन, निद्रादिव्यवहारव्यवधानेऽपि तत्त्वविषयां 'स्मृतिं', प्राप्नोति। तया च निद्राद्यनन्तरभाविन्या 'स्मृत्या', 'स्मारं' निरन्तरस्मरणं, प्राप्नोति। तेन च 'स्मारेण', 'विज्ञानं' विजातीयप्रत्ययव्यवधानराहित्येन विशिष्टं सन्ततं ज्ञानं, प्राप्नोति। तेन च 'विज्ञानेन' सन्ततेन, 'आत्मानं वेदयति' परमात्मानं सर्वदा अनुभवति। यस्मादन्नस्योक्तप्राणबलादिपरम्परया परमात्मानुभवहेतुत्वं 'तस्मात्', ईदृशं 'अन्नं', 'ददन्', पुरुषः, 'सर्वाण्येतानि' प्राणादीन्यात्मानुभवान्तानि वस्तूनि, 'ददाति'। अन्नदानस्य सर्वदानरूपत्वं विस्पष्टयितुमुक्तमेवार्थं पुनरप्यन्नात्प्राणा भवन्तीत्यादिवाक्येन सङ्क्षिप्योपन्यस्यते। प्राणादिपरम्परयोत्पन्नात् 'विज्ञानात्', 'आनन्दः'

एष* पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षञ्च द्यौश्च दिशश्चावान्तरदिशाश्च स वै

परमानन्दरूपो भूत्वा, 'ब्रह्म' वेदान्तप्रतिपाद्यं, 'योनिः' जगत्कारणं। यद्वा 'ब्रह्मणो वेदस्य, 'योनिः' कारणं, तादृग्रूपः स्वयं भवति॥

यथोक्तं सन्न्यासमेव स्तोतुं तेन सन्न्यासेन प्राप्ततत्त्वज्ञानं पुरुषं प्रशंसति। (१०)"स वा एष पुरुषः ० सत्यो महस्तात्तपसोवरिष्ठात्"(१०) इति। यः पुरुषः सन्न्यासपुरःसरं तत्त्वज्ञानं सम्पादयति 'सः', एव 'एष पुरुषः' सर्वात्मकः सन्, 'पञ्चधा' पञ्चभिः प्रकारैः, 'पञ्चात्मा' पञ्चविधवस्तुस्वरूपः, भवति। शब्दस्पर्शादिकं गुणपञ्चकं, पृथिव्यादिकं भूतपञ्चकं, चक्षुश्रोत्रादिकं ज्ञानेन्द्रियपञ्चकं, वाक्पाण्यादिकं कर्मेन्द्रियपञ्चकं, प्राणापानादिकं वायुपञ्चकं, एतावतां वस्तूनां स्वरूपभूत इत्यर्थः। यद्वा। पञ्चभिरात्मभिर्युक्तः 'पञ्चधा', वर्तते। तथा च पुराणे अभिहितं।

"भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान्।
आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः"॥ इति॥

'येन' ब्रह्मस्वरूपेण पुरुषेण, 'सर्वं', 'इदं' जगत्, सूत्रे मणिगणा इव 'प्रोतं' प्रकर्षेण स्यूतं,† व्याप्तमित्यर्थः। तदेव सर्वं पृथिवी चेत्यादिना प्रपञ्च्यते। 'सः' एव पृथिव्यादिवस्तुव्यापी पुरुषः' 'सर्वं,' 'इदं' वर्त्तमानं, 'जगत्', तत्त्वदृष्ट्याव्यतिरेकेणाभावात्,

* स एष इति N चिह्नितपुस्तकपाठः।
† प्रकर्षेण स्रोतमिति Q चिह्नितपुस्तकपाठः।

सर्व॑मिदं जगत्स स भूतꣳ स भव्यञ्जिज्ञासक्लृप्त ऋत॒-
जा र॑यि॒ष्ठाः श्र॒द्धा स॒त्यो मह॑स्वांस्तम॒सोवरि॑ष्टात्*(१७)।
(१८)ज्ञात्वा तमे॒वं मन॑सा हृ॒दा च॒ भूयो॑ न मृ॒त्युमु॒पया॑-

तथा 'भूतं' अतीतञ्च, जगत् 'स', एव। 'भव्यं' भविष्यदपि, जगत् स एव। ननु तत्त्ववित् पुरुषो मूढवद्धस्तपादादियुक्तदेहरूप एव दृश्यते, न तु सर्वजगत्स्वरूप इति चेत्। मैवं। यतः अयं 'जिज्ञासक्लृप्तः' जिज्ञासया वेदान्तविचारेण सर्वात्मकतया निश्चितो भवति। 'ऋतजाः' ऋतेन सत्येन प्रामाणिकेन ज्ञानेन सर्वात्मा जातः, जिज्ञासाकाले भ्रान्तिज्ञानरूपेषु पूर्वपक्षेषु निराकृतेषु प्रामाणिकेन सिद्धान्तज्ञानेन तादृशो† भवति। स च 'रयिष्ठाः' रयिर्धनं, गुरूपदेशः, तत्रैव तिष्ठति, न तूपदेशरहितानां प्रतीयत इत्यर्थः‡। ईदृशस्वरूपविज्ञानस्य श्रद्धया लभ्यत्वादेषो 'श्रद्धारूपः। "श्रद्धावान् लभते ज्ञानं" इति श्रुतेः। सत्यं अबाध्यं यत् ब्रह्म, तत्स्वरूपत्वादयं 'सत्यः'। 'महस्वान्' तेजस्वान्, स्वयं प्रकाशत इत्यर्थः। अत एव 'तमसः' संसारकारणेनाज्ञानेन, वियुक्तत्वात् उपरिष्टात् वर्त्तते§॥

इत्थं सन्न्यासपूर्वकज्ञानयुक्तं पुरुषं प्रशस्य ज्ञानफलं दर्श-

---

* उपरिष्ठा इति N, O, चिह्नितपुस्तकपाठः।

† ईदृशो जातो भवति इति F चिह्नितपुस्तकपाठः।

‡ तदुपदेशरहितानां तथा न प्रतीयत इत्यर्थः। इति Q चिह्नितपुस्तकपाठः।

§ उपरिष्टाद्वर्त्तमान इति Q चिह्नितपुस्तकपाठः।

हि विद्वान्(१८)। (१९)तस्मान् न्यासमेषां तपसाम-
तिरिक्तमाहुः(१९)। (२०)वसुरण्वो विभूरसि प्राणे त्वम-
सि सन्धाता ब्रह्मं त्वमसि विश्वसृत्तेजोदा*स्त्वमस्यग्ने-

---

यति। (१८)"ज्ञात्वा तमेवं ० उपयाहि विद्वान्"(१८) इति। हे आरुणे त्वं 'तं' परमात्मानं, 'हृदा' हृत्पुण्डरीकनियमितत्वात्† हृदयरूपेण, 'मनसा', 'एवं' पूर्वोक्तसन्न्यासरूपसाधनप्रकारेण, 'ज्ञात्वा', 'विद्वान्' तेन ज्ञानेन युक्तः सन्, 'भूयः' पुनः, 'मृत्युं', 'न उपयाहि' मा प्राप्नुहि। ज्ञानिनो वर्त्तमानदेहपाते सति जन्माभावात् पुनर्मृत्युर्नास्तीत्यर्थः॥

बहुधाप्रशस्तं सन्न्यासमुपसंहरति। (१९)"तस्मान् न्यासमेषां तपसामतिरिक्तमाहुः"(१९) इति। यस्मात् परमपुरुषार्थस्यान्तरङ्गं साधनं, तस्मात् 'एषां' सत्यादीनां, 'तपसां', मध्ये सन्न्यासं 'अतिरिक्तं' अत्युत्कृष्टं साधनं, मनीषिणः 'आहुः'॥

सन्न्यासादूर्ध्वं प्रणवेनात्मनि समाधिर्विधेयः। तस्मिन् समाधौ विघ्नपरिहारार्थमादावन्तर्यामिणः सर्वकारणत्वेन स्तुतिं दर्शयति। (२०)"वसुरण्वो विभूरसि ० ब्रह्मणे त्वा महसे"(२०) इति। हे 'ब्रह्मन्' अन्तर्यामिन्, 'वसुरण्वः' वसुनो वस्तुतत्त्वस्य, 'रण्वः' रणिता, कथयिता, अस्मदनुग्रहार्थमुपदेष्टा, 'असि'। तथा 'विभूः' हिरण्यगर्भविराडादिविविधरूपेणोत्पन्नः, 'असि'। 'प्राणे'

---

* विश्वसृक्तेजोदा इति B, N, O, Q, चिह्नितपुस्तकपाठः।

† हृत्पुण्डरीकेण नियमितत्वादिति Q, चिह्नितपुस्तकपाठः।

रसि वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमस उपयामगृहीतोऽसि ब्रह्मणे त्वा महसे(२०)। (२१)ओमित्यात्मानं युञ्जीत(२१)। (२२)एतद्वै महोपनिषदं

---

वायुरूपे, जीवात्मनः 'सन्धाता' संयोजयिता 'त्वमसि'। विश्वं सर्वं प्राप्नोतीति 'विश्वसृत्' सर्वजगद्व्यापी, 'त्वमसि'। भूलोकवर्त्तिनः 'अग्नेः', 'तेजोदाः' प्रकाशप्रदः, 'त्वमसि'। द्युलोकवर्त्तिनः 'सूर्यस्य', 'वर्चोदाः' प्रकाशप्रदः, 'त्वमसि'। तथा 'चन्द्रमसः', 'द्युम्नोदाः' प्रकाशरूपधनप्रदः, 'त्वमसि'। तथा यागेषु सोमरूपः सन् 'उपयामेन' पार्थिवेन मृण्मयदारुमयपात्रेण, 'गृहीतोऽसि'। उपयामशब्दस्य पृथिवीपरत्वं षष्ठकाण्डे मन्त्रव्याख्याने समाम्नातं, "उपयामगृहीतोऽसीत्याहेयं वा उपयामः" इति। उक्तप्रकारं सर्वकर्त्तारमन्तर्यामिणं त्वां 'महसे ब्रह्मणे' चैतन्यज्योतिस्स्वरूपब्रह्मतत्त्वाभिव्यक्त्यर्थं, भजामीति शेषः॥

अनेन प्रकारेणान्तर्यामिणं स्तुत्वा परिहृतविघ्नस्य सन्न्यासिनः समाधिं विधत्ते। (२१)"ओमित्यात्मानं युञ्जीत"(२१) इति। चिन्मात्रं प्रणवमुच्चारयन् सर्ववेदान्तेषु निर्णीतं परमात्मानं' चिद्रूपत्वेन चित्ते समादध्यात्॥

समाधिसाधनमोङ्कारं प्रशंसति। (२२)"एतद्वै महोपनिषदं देवानां गुह्यं"(२२) इति। यत् प्रणवस्वरूपमस्ति 'एतत्', एव 'महोपनिषदं' महत्यो बह्व्य उपनिषदः प्रतिपादिकाः यस्य परमात्मवाचकस्य प्रणवरूपस्य तत्, 'महोपनिषदं'। अकारान्तत्वं छान्दसं।

देवानां गुह्यम्[२२]। [२३]य एवं वेद ब्रह्मणो महिमानमाप्नोति तस्माद् ब्रह्मणो महिमानं[२३] [२४]इत्युपनिषत्[२४] ॥ अनु० ६३ ॥

---

"सर्वे वेदा यत् पदमामनन्ति तत् ते पदं सङ्ग्रहेण ब्रवीमि ओमित्येतत्" इति प्रणवस्य सर्वोपनिषत्प्रतिपाद्यत्वं कठवल्लीषु श्रुतं। तच्च प्रणवरूपं निर्गुणतत्त्वप्रतिपादकं, 'देवानां' इन्द्रादीनां, 'गुह्यं' गोप्यं, ते हि शमदमाद्यधिकारसम्पत्तिरहिताय प्रणवं नोपदिशन्ति ॥

यथोक्तप्रणवसमाधिजनितस्य तत्त्ववेदनस्य फलं दर्शयति। (२३) "य एवं वेद ० ब्रह्मणो महिमानं"(२३) इति। 'यः' पुमान्, सन्न्यासादूर्ध्वं प्रणवेन ब्रह्मतत्त्वसमाधिं कुर्वन् 'एवं' वेदान्तमहावाक्योक्तप्रकारेण, 'वेद' ब्रह्मतत्त्वं जानाति। असौ ज्ञानी स्वस्मिन्नविद्याकल्पितं जीवत्वापादकं परिच्छेदमपहाय देशकालवस्तुपरिच्छेदशून्यस्य 'ब्रह्मणः,' 'महिमानं' महत्त्वं, 'आप्नोति' तत्त्ववेदनेन जीवत्वकृतभ्रमो निवर्त्तते, ब्रह्मत्वस्वभाव आविर्भवति, ततो जीवन्मुक्तो भवतीत्यर्थः। तस्य जीवन्मुक्तस्य प्रारब्धभोगक्षयेण देहपाते सति 'तस्मात्' कृत्स्नाविद्यानिवर्त्तकाद्वेदनात्, अविद्यातत्कार्यतद्वासनालेशरहितस्य मुख्यस्य 'ब्रह्मणः', 'महिमानं', प्राप्नोति, विदेहमुक्तिर्भवतीत्यर्थः ॥

सन्न्यासपुरःसरां तत्त्वविद्यामुपसंहरति। (२४)"इत्युपनिषत्"(२४) इति। 'इति' एवमतीतेन ग्रन्थेन, प्रोक्ता येयं विद्या सेयं 'उपनिषत्' रहस्यविद्या ॥

अथ मीमांसा। तत्र न्यासरूपस्य चतुर्थाश्रमस्य सद्भावस्तृती-याध्यायस्य चतुर्थपादे चिन्तितः।

"नास्त्यूर्ध्वरेताः किम्वास्ति नास्त्यसाववि धानतः।
वीरघाती त्रिधेः स्मृतावन्धपङ्ग्वादिगा स्मृतिः॥
अस्य पूर्वविधेः स्मृतेर्वीरहानग्निको मतः।
अन्धादेः पृथगुक्तत्वात् स्वस्थानां श्रूयते विधिः" ॥

पूर्वाधिकरणे स्वतन्त्रविज्ञानकर्मनैरपेक्ष्येण पुरुषार्थसाधनमित्युक्तं। तस्य चात्मज्ञानस्योर्ध्वरेतःस्वाश्रमेषु सुलभत्वादाश्रमसद्भावाच्च तत्र नास्त्यूर्ध्वरेता इति प्राप्तं। कुतः, विध्यभावात्। त्रयो धर्मस्कन्धाः, यज्ञः, अध्ययनं, दानमिति। प्रथमः, तप एव। द्वितीयः, ब्रह्मचारी, आचार्यकुलवासी तृतीयः। इत्यत्र यज्ञाद्युपलक्षितगार्हस्थ्यस्य तपःशब्दलक्षितवानप्रस्थत्वस्य नैष्ठिकब्रह्मचर्यस्य च परामर्शमात्रं गम्यते, न तु विधिरुपलभ्यते। न चापूर्वार्थत्वेन कल्पयितुं शक्यः। वीरहा वा एष देवानां योऽग्निमुद्वासयते इत्यग्न्युद्वासनलक्षणस्य गार्हस्थ्यपरित्यागस्य निन्दितत्वात्। चत्वार आश्रमा इति स्मृतिस्तु गार्हस्थ्यकर्मानधिकृतान्धपङ्ग्वादिविषया भविष्यति। न ह्यन्धस्याज्यावेक्षणलोपेते कर्मण्यधिकारोऽस्ति। नापि पङ्गोर्विष्णुक्रमणाद्युपेते कर्मण्यधिकारः। तस्माच्चक्षुरादिपाटवयुक्तस्य आत्मज्ञानोपयुक्त ऊर्ध्वरेता आश्रमो नास्तीति प्राप्ते ब्रूमः। अस्त्यूर्ध्वरेता आश्रमः, विध्यश्रवणेऽप्यपूर्वार्थत्वेन कल्पयितुं शक्यत्वात्। न च वीरघातादिदोषः, उत्पन्नाग्निविषयत्वाद्वीरहत्यायाः। यत्त्वन्धादिविषयत्वं स्मृतेरुक्तं, तदसत्। "अथ पुनरव्रती वा व्रतो

वाऽस्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेद्" इति विरक्तानां गार्हस्थ्यानधिकृतानां पृथक् सन्न्यासविधानात्। न च चक्षुरादिपाटववतामाश्रमान्तरविध्यभावः। जाबालश्रुतौ प्रत्यक्षविध्युपलम्भात्। "ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजेत्" इति। तस्मादस्त्याश्रमान्तरं।

तत्रैवान्यच्चिन्तितं।

"लोककाम्याश्रमी ब्रह्मनिष्ठामर्हति वा नवा।
यथावकाशं ब्रह्मैव ज्ञातुमर्हत्यवारणात् ॥
अनन्यचित्तता ब्रह्मनिष्ठाऽसौ कर्मठे कथं।
कर्मत्यागी ततो ब्रह्मनिष्ठामर्हति नेतरः" ॥

त्रयो धर्मस्कन्धा इत्यत्राश्रमानधिकृत्य सर्व एते पुण्यलोका भवन्तीत्याश्रमानुष्ठायिनां पुण्यलोकफलमभिधाय ब्रह्मसंस्थोऽमृतत्वमेतीति मोक्षसाधनत्वेन ब्रह्मनिष्ठा प्रतिपाद्यते। सेयं ब्रह्मनिष्ठा पुण्यलोककामिन आश्रमिणोऽपि सम्भाव्यते। आश्रमकर्माण्यनुष्ठाय यथावकाशं ब्रह्मनिष्ठायाः कर्तुं शक्यत्वात्। नहि लोककामी ब्रह्म न जानीयादिति निषेधोऽस्ति। तस्मादस्ति सर्वस्याप्याश्रमिणो ब्रह्मनिष्ठेति प्राप्ते ब्रूमः। ब्रह्मनिष्ठा नाम सर्वव्यापारपरित्यागे सत्यनन्यचित्ततया ब्रह्मणि परिसमाप्तिः। न चासौ कर्मठे सम्भवति। कर्मानुष्ठानत्यागयोः परस्परविरोधात्। तस्मात् कर्मत्यागिन एव ब्रह्मनिष्ठेति स्थितं। अस्मिन्नर्थे श्रुतिस्मृतिवाक्यानि सङ्क्षिप्य प्रदर्श्यन्ते।

"त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमं।

त्यजतैव हि तज् ज्ञेयं त्यक्तुः प्रत्यक् परं पदं ॥
मुक्तेश्च बिभ्यतो देवा मोहेनापि दधुर्नरात्।
ततस्ते कर्मसु युक्ताः प्रावर्त्तन्ते विचक्षणाः ॥
अतः सन्त्यस्य सर्वाणि कर्माण्यात्मावबोधतः ।
हत्वाऽविद्यां* धियैवेयात्तद्विष्णोः परमं पदं" ॥

इति आत्मविद्याखाया मामनन्ति ।

"सशिखं वपनं कृत्वा वहिःसूत्रं त्यजेद् बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥
ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वानेतरे केशधारिणः" ॥

इति आथर्वणिका आमनन्ति ।

"कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः ।
यज्ञं यज्ञोपवीतञ्च त्यक्त्वा गूढश्चरेन्मुनिः" ॥

इति वाष्कलशाखीया आमनन्ति । सशिखान् केशान्निराकृत्य विसृज्य यज्ञोपवीतं भूः स्वाहेति अप्सु जुहुयात् ॥

"त्रिदण्डं कुण्डिकां शिक्यं त्रिविष्टब्धमुपानहौ ।
शीतोपघातिनीं कन्थां कौपीनाच्छादनन्तथा† ॥
पवित्रं स्नानशाटीञ्च उत्तरासङ्गमेव च ।
यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः" ॥

---

* हित्वा विद्यामिति Q चिह्नितपुस्तकपाठः ।

† कौपीनस्य तु च्छादनमिति F चिह्नितपुस्तकपाठः ।

इति सन्न्यासोपनिषद्यधीयते। "अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति" इति जाबाला आमनन्ति। "अथ परिव्राडेकशाटीपरिहृतो मुण्डोदर-प्राण्यरण्यनित्यो भिक्षार्थी ग्रामं प्रविशेदासायं प्रदक्षिणेना-विचिकित्सन् सार्ववर्णिकं भैक्षचरणमभिशस्तं पतितवर्जमयज्ञोप-वीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीत" इति मैत्रा-यणशाखायामभिहितं। "कन्थाकौपीनोत्तरासङ्गादीनां त्यागिनो यथा जातरूपधरा निर्ग्रन्था निष्परिग्रहाः" इति संवर्तश्रुतिः। गृहस्थो ब्रह्मचारी वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारो-पयेत्, गायत्रीं च स्ववाचाग्नौ समारोपयेदुपवीतं भूमौ वाप्सु वा विसृजेत्" इत्यादिवारुणी श्रुतिः॥

"यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासेन यत्नवान्॥
एतद् द्विजन्मसाफल्यं ब्राह्मणस्य विशेषतः।
प्राप्यैतत् कृतकृत्यो हि द्विजो भवति नान्यथा॥
यदा तु विदितं तत्त्वं परं ब्रह्म सनातनं।
तदैकदण्डं संगृह्य उपवीतं शिखां त्यजेत्"॥
इत्यादयः स्मृतय उदाहार्याः।

इति सायनाचार्यविरचिते माधवीये वेदार्थप्रकाशे यजुरा-रण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्या-मुपनिषदि त्रिषष्टितमोऽनुवाकः॥ ६३॥

---

अथ चतुःषष्टितमोऽनुवाकः ।

(१)तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो

---

अथ चतुःषष्टितमोऽनुवाकः ।

सन्न्यासस्यैव ब्रह्मज्ञानं प्रत्यन्तरङ्गसाधनत्वाज्जिज्ञासोः सन्न्यास एव युक्तो न तु कर्मानुष्ठानमित्युक्तं। तर्हि निष्पन्ने तत्त्वसाक्षात्कारे कर्माण्यनुष्ठीयन्तामित्येतां शङ्कां निवारयितुमत्र तत्त्वज्ञानिव्यवहाराणां लौकिकानां सर्वेषां यागरूपत्वमुच्यते। न हि यागस्य यागाधिकारशङ्कास्ति। अतोऽस्मिन्ननुवाके पूर्वभागेन योगिनोऽवयवा यज्ञाङ्गद्रव्यत्वेनाम्नायन्ते। (१)"तस्यैवं विदुषः ० श्रोत्रमग्नीत्"(१) इति। 'तस्य' पूर्वोक्तस्य सन्न्यासिनः, 'एवं विदुषः' पूर्वोक्तप्रकारेण ब्रह्मणो महत्त्वं साक्षात्कृतवतो जीवन्मुक्तस्य, सम्बन्धी यो यज्ञोऽस्ति तस्य 'यज्ञस्य', देहेन्द्रियादिसाक्षी यः 'आत्मा', स एव 'यजमानसदृशः, तस्य स्वामित्वात्। या तु तदन्तःकरणे 'श्रद्धा'रूपा चित्तवृत्तिः, सा 'पत्नी'। यच्च 'शरीरं', तत् 'इध्मं'। एवमुत्तरत्राप्यवयवानां वेद्यादिरूपत्वोपचारो योजनीयः। यस्तु 'दमाख्यः, 'शमयिता' सर्वेन्द्रियोपशमकारी चित्त-

ब्रह्मा श्रोचमग्रीत्[१] । [२]यावद्भ्रियते सा दीक्षा यद्श्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायम्प्रातरत्ति तत्समिधं यत्प्रातर्मध्यन्दिनꣳ सायञ्च तानि सवनानि[२] । [३]ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मा-

---

वृत्तिविशेषः, तस्य 'दक्षिणा'रूपत्वमुन्नेयं । 'वागादीनां होत्रा-द्यृत्विग्रूपत्वमुन्नेयं ॥

अथास्यानुवाकस्य द्वितीयभागेन योगिव्यवहारस्य ज्योतिष्टोमावयवक्रियारूपत्वं दर्शयति । [२]"यावद् भ्रियते सा दीक्षा ० तानि सवनानि"[२] इति । यावन्तं कालं भोजनमकृत्वा 'भ्रियते' विदुषा धार्यते, सा वृत्तिः 'दीक्षाख्यसंस्काररूपा । एवं भोजनादौ हविरादिरूपत्वमुन्नेयं ॥

अथास्याऽनुवाकस्य तृतीयभागेन जीवन्मुक्तस्य सम्बन्धिनां कालविशेषाणां नानाविध-यागरूपत्वमाह । [३]"ये अहोरात्रे ते० यन्मरणन्तदवभृथः"[३] इति । संवत्सराश्च परिवत्सराश्चेति चकाराभ्यां इदावत्सरानुवत्सरेद्वत्सराः समुच्चीयन्ते । प्रभवादिषु षष्टिसंवत्सरेषु एकैकं पञ्चकं युगशब्दाभिधेयं, तस्मिंश्च युगे पञ्चापि क्रमेण

स्यामि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्स-
राश्च तेऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यत्संवत्सरस्तद-
वद्य्यर्थः(२)। (४)एतद्वै जरामर्यमग्निहोत्रꣳ सत्रं य एवं
विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वा-

---

संवत्सरपरिवत्सरेदावत्सरानुवत्सरेद्वत्सरसञ्ज्ञका द्रष्टव्याः। तथाच कालनिर्णये सङ्ग्रहकारेणोदाहृतं,

"चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे।
सम्परीदान्विदित्येतच्छब्दपूर्वास्तु वत्सराः" इति॥

'अहर्गणाः' द्विरात्रत्रिरात्रादयः, 'सर्ववेदसं' सर्वस्वदक्षिणाकं। अत्र 'एत'च्छब्देन प्रकृताहोरात्रादिपरिवत्सरान्तसर्वकालसमभ्युपलक्षितं योगिन आयुर्विवक्ष्यते। 'यत्' आयुः, तत्सर्वदक्षिणोपेतं, 'सत्रं', इत्यर्थः॥

अस्यानुवाकस्य चतुर्थभागेन सर्वयज्ञात्मकं* योगिन उपासीनस्य कर्ममुक्तिलक्षणं† फलमाह। (४)"एतद्वै जरामर्यमग्निहोत्रꣳ॰ महिमानमित्युपनिषत्"(४) इति। जननमरणावधिकं यद्योगिचरितमस्ति तत् 'एतत्', वेदोक्ताग्निहोत्रादिसंवत्सरसत्रान्तकर्मस्वरूपं, इति 'एवं', 'यः' पुमान्, 'विद्वान्' उपासीनः, उत्तरायणे

---

* सर्वयज्ञात्मकमिति Q, चिह्नितपुस्तकपाठः।
† क्रममुक्तिलक्षणमिति F चिह्नितपुस्तकपाठः।

ऽऽदित्यस्य सायुज्यङ्गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानङ्गत्वा चन्द्रमसः सायुज्यꣳ स-

---

म्रियते, स उपासकः 'देवानां' इन्द्रादीनां, 'महिमानं' ऐश्वर्यं, प्राप्य तदूर्ध्वम् 'आदित्यस्य', 'सायुज्यं' सहवासं, तादात्म्यं वा, भावनातारतम्येन प्राप्नोति। 'अथ' पूर्वोक्तवैलक्षण्येन, 'यः' उपासकः, 'दक्षिणायने म्रियते, स उपासकः 'पितॄणां' अग्निष्वात्तादीनाम्, ऐश्वर्यं प्राप्य 'चन्द्रमसः सायुज्यं', पूर्ववत् प्राप्नोति'। य एवं 'एतौ' 'सूर्याचन्द्रमसोः', 'महिमानौ', अनुभवन् 'ब्राह्मणः', तत्र सगुणब्रह्मरूपं हिरण्यगर्भं 'विद्वान्', तल्लोकवासिनामुपदेशिनामुपासकान् 'अभिजयति' हिरण्यगर्भसाक्षात्काररूपं प्राप्नोति। 'तस्मात्' साक्षात्कारात्, तल्लोकवासिदेहपातादूर्ध्वं हिरण्यगर्भलोकं गत्वा तत्र 'ब्रह्मणः' हिरण्यगर्भस्य, 'महिमानं' ऐश्वर्यं, 'प्राप्नोति'। तत्रोत्पन्नब्रह्मतत्त्वसाक्षात्कारः 'तस्मात्' ज्ञानाद् ब्रह्मलोकविनाशादूर्ध्वं, सत्यज्ञानादिलक्षणस्य 'ब्रह्मणः', 'महिमानं' महत्त्वम्, प्राप्नोति। 'इत्युपनिषत्', इतिवाक्येन यथोक्तविद्यायास्तत्प्रतिपादकग्रन्थस्य चोपसंहारः क्रियते॥

अथ मीमांसायां तृतीयाध्यायस्य तृतीयपादे चिन्तितं,

"इयं विद्यैका भिन्ना वा तैत्तिरीयकताण्डिनोः।
मरणावभृथत्वादिसाम्यादेकेति गम्यते॥
बहूनां रूपभेदेऽपि किञ्चित्साम्यस्य बाधनात्।

लोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्रा-
ह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमा-

---

न विद्येक्यं तैतिरीये ब्रह्मविद्याप्रशंसनात्" ॥

अस्ति तैत्तिरीये पुरुषविद्या, "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः" इति। तथा ताण्डिनां शाखायामपि श्रूयते, "पुरुषो वाव यज्ञः" इति। सेयमेकैव* पुरुषविद्या, यन्मरणन्तदवभृथः, मरणमेवावभृथः इत्युभयत्र समानधर्मश्रवणात्, प्रातःसवनादीनाञ्च समानत्वादिति प्राप्ते ब्रूमः। वेद्यस्वरूपस्य भूयानभेद उपलभ्यते। तथाहि विदुषो यो यज्ञः तस्य यज्ञस्यात्मेति तैतिरीयके व्यधिकरणे षष्ठ्यौ। अन्यथा आत्मा यजमान इति व्याघातात्। विद्वानेव यज्ञः स एव यजमान इति कथन्न व्याहन्येत। ताण्डिनां तु पुरुषयज्ञयोः सामानाधिकरण्यं श्रुतं, इत्येको रूपभेदः। आत्मयजमानादिकञ्च सर्वत्र श्रुतन्ताण्डिशाखायान्नोपलभ्यते। यत्तु ताण्डिनामुपलभ्यते, त्रेधाविभक्तस्यायुषः सवनत्रयत्वम् इत्यादि, न तत् किञ्चिदपि तैत्तिरीयके पश्यामः। अतो मरणावभृथत्वाद्यल्पसाम्यबाधाद्विद्ययोर्भेद उचितः। अपिच न तैत्तिरीयाणामुपासनमिदं, किन्तर्हि ब्रह्मविद्या—प्रशंसा। तस्यैवंविदुष इति ब्रह्मविदोऽनुकर्षणात्[†]।

---

* पुरुषो वाव यज्ञ इत्येवमेकैवेति Q, चिह्नितपुस्तकपाठः।
† ब्रह्मविदोऽनुक्रमणादि इति Q चिह्नितपुस्तकपाठः।

म्नाति तस्माद् ब्रह्मणो महिमानमित्युपनिषत्[४] ॥ अनु० ६४ ॥

---

तस्मान्न विद्यैक्यशङ्कायामप्यवकाशोऽस्ति। एतस्मिन्ननुवाके तत्त्वज्ञानिसेवानिमित्ताभिहितेत्यशेषमतिमङ्गलं ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति नारायणीये चतुःषष्टितमोऽनुवाकः ॥ ६४ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशनामकतैत्तिरीययजुरारण्यकभाष्यं सम्पूर्णम् ॥ ० ॥

[ एतदुपनिषदः प्रारम्भे भाष्यकारेण लिखितमेतत्, यदस्याः शाखाभेदेन अनुवाकसङ्ख्याभेदो वर्त्तते । तत्र द्राविडैरस्याश्चतुःषष्टिसङ्ख्याकानुवाकाः पठ्यन्ते । आन्ध्रैरस्या अशीत्यनुवाकाः, कर्णाटकैश्चतुःसप्तत्यनुवाकाः, अन्यैरेकोननवत्यनुवाकाः परिपठ्यन्ते । परन्तु अस्मल्लब्धे विभिन्नदेशसमानीते भाष्यपुस्तकत्रये चतुःषष्ट्यनुवाकपर्यन्तमेव व्याख्यानं दृश्यते। एतदेव सम्पूर्णतया वर्णितं प्रत्यक्षमुपलभ्यते । अथास्मल्लब्धे मूलपुस्तकचतुष्टये तु अशीत्यनुवाका विन्यस्ताः। अनुवाकसङ्ग्रहेऽपि तेषामशीत्यनुवाकानामेव प्रतीकानि लिखितानि । पुनरेतेषामनुवाकानां ये अनुवाका भाष्यकारेण व्याख्याताः, न तेषु कतिपयेषु मूलपुस्तकधृतपाठक्रमरचा ज्ञायते। कुत्रचिदनुवाकद्वयस्यैकत्वमपि प्रतिपादितम् । कुत्रचित्त्वनुवाकांशीभूतकण्डिकैकाप्यनुवाकत्वेन परिगृहीता । एतदवलोक्य व्याख्यानानुरोधेनास्माभिर्भाष्यपुस्तकत्रयानुसारिणी सभाष्या निखिलापीयं मुद्रापिताऽभूत् । अथ इदानीं भाष्यकारपरित्यक्ताः कतिपयमूलानुवाका मुद्रापिता भवन्ति। मूलभाष्ययोः परस्परमनुवाकसङ्ख्याभेदज्ञानार्थं तयोरनुवाकसमन्वायकाङ्का मुद्रापिता भवन्ति ॥]

| भाष्यसम्मतानुवाकाङ्काः। | मूलपुस्तकसम्मतानुवाकाङ्काः। | मूलपुस्तकसम्मतानुवाकाङ्काः। | भाष्यसम्मतानुवाकाङ्काः। |
|---|---|---|---|
| १ | १—२ | १ | १-१५ दम्पतिपर्य्यन्तः |
| २ | ४ | २ | १ जातवेदस इत्यारभ्य [शेषपर्य्यन्तः |
| ३ | ३ | ३ | ३ |
| ४ | ५ | ४ | २ |
| ५ | ६,७ | ५ | ४ |
| ६ | ८ | ६ | ५ कियदंशः |
| ७ | ९ | ७ | ५ कियदंशः |
| ८ | १० | ८ | ६ |
| ९ | ११ | ९ | ७ |
| १० | १२ | १० | ८ |
| ११ | १३ | ११ | ९ |
| १२ | २३ | १२ | १० |
| १३ | १४ | १३ | ११ |
| १४ | १५ | १४ | १३ |
| १५ | ३७ | १५ | १४ |
| १६ | २४ | १६ | भाष्यधृतमूले नास्ति। |
| १७ | २५ | १७ | ४३ |
| १८ | २२ | १८ | ४४ |
| १९ | २६ | १९ | ४५ |
| २० | २७ | २० | ४६ |
| २१ | २८ | २१ | ४७ |
| २२ | २९ | २२ | १८ |
| २३ | ३० | २३ | १२ |
| २४ | ३१ | २४ | १६ |
| २५ | ३२ | २५ | १७ |
| २६ | ३४,३५ कियदंशः | २६ | १९ |
| २७ | ३५ कियदंशः | २७ | २० |
| २८ | मूलपुस्तके नास्ति | २८ | २१ |
| २९ | ६८ कियदंशः | २९ | २२ |

| भाष्यसम्मतानुवाकाङ्काः । | मूलपुस्तकसम्मतानुवाकाङ्काः । |
|---|---|
| ३० | ३६ कियदंशः |
| ३१ | ६८ कियदंशः |
| ३२ | ६९ कियदंशः |
| ३३ | ६९ कियदंशः |
| ३४ | ६९ कियदंशः |
| ३५ | ६९ कियदंशः |
| ३६ | ७० * |
| ३७ | ७४ |
| ३८ | ७१ |
| ३९ | ४१ |
| ४० | ४२ कियदंशः |
| ४१ | ४२ कियदंशः |
| ४२ | ४३ |
| ४३ | १७ |
| ४४ | १८ |
| ४५ | १९ |
| ४६ | २० |
| ४७ | २१ |
| ४८ | ३८ |
| ४९ | ३९ |
| ५० | ४० कियदंशः |
| ५१ | ६५ कियदंशः |
| ५२ | ६५ कियदंशः |
| ५३ | ६५ कियदंशः |
| ५४ | ६५ कियदंशः |
| ५५ | ६६ कियदंशः |
| ५६ | ६६ कियदंशः |

| मूलपुस्तकसम्मतानुवाकाङ्काः । | भाष्यसम्मतानुवाकाङ्काः । |
|---|---|
| ३० | २३ |
| ३१ | २४ |
| ३२ | २५ |
| ३३ | भाष्यधृतमूले नास्ति |
| ३४ | २६ कियदंशः |
| ३५ | २६,२७ कियदंशः |
| ३६ | ३० कियदंशः |
| ३७ | १५ |
| ३८ | ४८ |
| ३९ | ४९ |
| ४० | ५० कियदंशः |
| ४१ | ३९ |
| ४२ | ४०—४१ |
| ४३ | ४२ |
| ४४-६४ | भाष्यधृतमूले न सन्ति |
| ६५ | ५१,५२,५३, ५४ |
| ६६ | ५५,५६,५७,५८, ५९ कियदंशः |
| ६७ | भाष्यधृतमूले नास्ति |
| ६८ | २९ कियदंशः |
| ६९ | ३२,३३,३४,३५ व्यक्तातिरिक्तपदाः |
| ७० | ३६ * |
| ७१ | ३८ |
| ७२,७३ | भाष्यधृतमूले न स्तः |
| ७४ | ३७ |
| ७५-७७ | भाष्यधृतमूले न सन्ति |

* भाष्यकारधृतं ब्रह्माणि न चात्मानृतत्वायेति वाक्यं मूलपुस्तके न दृश्यते ।

| भाष्यसम्मतानुवाकाङ्काः । | मूलपुस्तकसम्मतानुवाकाङ्काः । | मूलपुस्तकसम्मतानुवाकाङ्काः । | भाष्यसम्मतानुवाकाङ्काः । |
|---|---|---|---|
| ५७ | ६६ कियदंशः | ७८ | ६२ |
| ५८ | ६६ कियदंशः | ७९ | ६३ |
| ५९ | ६६ कियदंशः | ८० | ६४ |
| ६० | ६५ कियदंशः | | |
| ६१ | मूलपुस्तके नास्ति | | |
| ६२ | ७८ | | |
| ६३ | ७९ | | |
| ६४ | ८० | | |

मूलस्य पञ्चदशानुवाकात्परं योऽनुवाको वर्त्तते नैष भाष्यकारेण धृतः। तद्यथा—

निधनपतये नमः। निधनपतान्तिकाय नमः। ऊर्ध्वाय नमः। ऊर्ध्वलिङ्गाय नमः। हिरण्याय नमः। हिरण्यलिङ्गाय नमः। सुवर्णाय नमः। सुवर्णलिङ्गाय नमः। दिव्याय नमः। दिव्यलिङ्गाय नमः। भवाय नमः। भवलिङ्गाय नमः। शर्वाय नमः। शर्वलिङ्गाय नमः। शिवाय नमः। शिवलिङ्गाय नमः। ज्वलाय नमः। ज्वललिङ्गाय नमः। आत्माय नमः। आत्मलिङ्गाय नमः। परमाय नमः। परमलिङ्गाय नमः। एतत् सोमास्य सूर्यस्य सर्वलिङ्गँ स्थापयति पाणिमन्त्रं पवित्रं॥ अनु० १६॥

मूलस्य द्वात्रिंशदनुवाकात्परम् ओमित्येकाक्षरं ब्रह्मेत्यादि सायुज्यं विनियोगमित्यन्तस्त्रयस्त्रिंशदनुवाको भाष्यकारेण न धृतः। तद्यथा—

ओमित्येकाक्षरं ब्रह्म। अग्निर्देवता ब्रह्म इत्यार्षं। गायत्रञ्छन्दं परमात्मं सरूपं। सायुज्यं विनियोगं॥

॥ अनु० ३३ ॥

---

भाष्यकारस्य षड्विंशोऽनुवाको मूले चतुस्त्रिंशदनुवाकांशत्वेन पञ्चत्रिंशदनुवाकांशत्वेन च सम्पादितः। पञ्चत्रिंशानुवाकस्य ॐ भूरित्यादि शेषभागो भाष्यकारेण सप्तविंशानुवाकत्वेन निष्पादितः। तदेतदनुवाकौ पूर्वौ यथा—

आयातु वरदा देवी अक्षरं ब्रह्म सम्मितं। गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे। यदह्नात् कुरुते पापं तदह्नात् प्रतिमुच्यते। यद्रात्रियात् कुरुते पापं तद्रात्रियात् प्रतिमुच्यते। सर्ववर्णे महादेवि सन्ध्याविद्ये सरस्वति॥ अनु० ३४ ॥

---

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि सावित्रीमावाहयामि

सरस्वतीमावाहयामि छन्दर्षीनावाहयामि श्रियमा- वाहयामि गायत्रिया गायत्रीच्छन्दो विश्वामित्र ऋषिः सविता देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयꣳ रुद्रः शिखा पृथिवी योनिः प्राणापानव्यानोदानसमानाः सप्राणा श्वेतवर्णा साङ्ख्यायनसगोत्रा गायत्री चतुर्विꣳ- शत्यक्षरा त्रिपदा षट्कुक्षिः पञ्चशीर्षोपनयने विनि- योगः ॐ भूः। ॐ भुवः। ॐ सुवः। ॐ महः। ॐ जनः। ॐ तपः। ॐ सत्यं। ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ओमापोज्योतिरसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्॥ अनु० ३५।

---

मूलस्य षट्त्रिंशदनुवाके, गच्छ देवि यथासुखं इति कण्डि- कायाः परम् स्तुतो मयेत्यादि ब्रह्मलोकमित्यन्त एतदनुवाक- शेषद्विकण्डिकात्मकः पाठो भाष्यकारेण न धृतः। तद्यथा—

स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्वि- जाता। आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्वा प्रजातुं ब्रह्मलोकं॥ अनु० ३६॥

भाष्यस्य पञ्चाशाऽनुवाके, अद्रिणा सुतं वृहत् इति कण्डिकायाः परम् ऋचे त्वेत्यादि अमृतस्य धारामित्यन्तस्तदनुवाकान्तर्गतपाठो मूलग्रन्थस्य चत्वारिंशानुवाकान्तगतः । स च भाष्यकारेण न धृतः । तद्यथा—

ऋ॒चे त्वा॑ रु॒चे त्वा॒ समित् स्र॑वन्ति स॒रि॒ता न धेना॑ः । अ॒न्तर्हृ॒दा मन॑सा पू॒यमा॑नाः । घृ॒तस्य॒ धारा॑ अ॒भिचा॑कशीमि । हि॒र॒ण्ययो॑ वेत॒सो मध्य॑ आसा॑म् । तस्मि॑न्त्सुप॒र्णो म॑धु॒कृत्कु॑ला॒यी भज॑न्नास्ते॒ मधु॑ दे॒वता॑भ्यः । तस्या॑सते॒ हर॑यः स॒प्त तीरे॑ स्व॒धां दुहा॑ना अ॒मृत॑स्य॒ धारा॑म् ।

---

मूलस्य त्रिचत्वारिंशदनुवाकानन्तरं चतुश्चत्वारिंशानुवाकात् चतुःषष्ठ्यनुवाकपर्यन्तमेकविंशत्यनुवाकाः भाष्यकारेण न भाषिताः । तद्यथा—

मयि॑ मे॒धां मयि॑ प्र॒जां मय्य॒ग्निस्तेजो॑ दधातु॒ मयि॑ मे॒धां मयि॑ प्र॒जां मयीन्द्र॑ इन्द्रि॒यं द॑धातु॒ मयि॑ मे॒धां मयि॑ प्र॒जां मयि॒ सूर्यो॒ भ्राजो॑ दधातु ॥ अनु० ४४ ॥

अपै॑तु मृ॒त्युर॒मृतं॑ न॒ आग॑न् वैवस्व॒तो नो॒ अभ॑यं कृणोतु । प॒र्णं वन॒स्पते॑रिवा॒भिन॑ः शीयताꣳ र॒यिः सच॑तां नः॒ शचीप॑तिः ॥ अनु० ४५ ॥

---

परं मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरान् ॥ अनु० ४६ ॥

---

वातं प्राणं मनसान्वारभामहे प्रजापतिं यो भुवनस्य गोपाः । स नो मृत्योस्त्रायतां पात्वꣳहसो ज्योग्जीवाजरामशीमहि ॥ अनु० ४७ ॥

---

अमुत्र भूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः । प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥ अनु० ४८ ॥

---

हरिꣳ हरन्तमनुयन्ति देवा विश्वस्येशानं वृषभं मतीनां । ब्रह्म सरूपमनु मेदमागादयनं मा विवधीर्विक्रमस्व ॥ अनु० ४९ ॥

---

शल्कैरग्निमिन्धान उभौ लोकौ सनेमहं । उभयोर्लोकयोर्ऋध्वातिमृत्युन्तराम्यहं ॥ अनु० ५० ॥

---

मा छिदो मृत्यो मा वधीर्मा मे बलं विवृहो मा प्रमोषीः । प्रजां मा मे रीरिष आयुरुग्रनृचक्षसन्त्वा हविषा विधेम ॥ अनु० ५१ ॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितं। मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः॥ अनु० ५२॥

---

मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। वीरान्मा नो रुद्रभामितो वधीर्हविष्मन्तो नमसा विधेम ते॥ अनु० ५३॥

---

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणां॥ अनु० ५४॥

---

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी। वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः॥ अनु० ५५॥

---

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनं। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥ अनु० ५६॥

---

ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे। तान् यज्ञस्य मायया सर्वानव यजामहे॥ अनु० ५७॥

---

मृत्यवे स्वाहा मृत्यवे स्वाहा ॥ अनु० ५८ ॥

---

देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । अन्यकृतस्यैनसोऽवयजनमसि स्वाहा । अस्मत्कृतस्यैनसोऽवयजनमसि स्वाहा । यद्दिवा च नक्तञ्चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्सुषुप्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यद्विद्वांसश्चाविद्वांसश्चैनश्चकृम तस्यावयजनमसि स्वाहा । एनस एनसोऽवयजनमसि स्वाहा ॥ अनु० ५९ ॥

---

यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेडनं । अरा वायो नो अभिदुच्छुनाय ते तस्मिन्तदेनो वसवो निधेतन स्वाहा ॥ अनु० ६० ॥

---

कामो कार्षीन्नमो नमः । कामो कार्षीत्कामः करोति नाहं करोमि कामः कर्त्ता नाहं कर्त्ता कामः कारयिता नाहं कारयिता एष ते काम कामाय स्वाहा ॥ अनु० ६१ ॥

---

मन्युरकार्षीन्नमो नमः। मन्युरकार्षीन्मन्युः करोति नाहं करोमि मन्युः कर्त्ता नाहं कर्त्ता मन्युः कारयिता नाहं कारयिता एष ते मन्यो मन्यवे स्वाहा॥ ॥ अनु० ६२ ॥

---

तिलान् जुहोमि सरसाꣳ सपिष्टान् गन्धार मम चित्ते रमन्तु स्वाहा। गावो हिरण्यं धनमन्नपानꣳ सर्वेषाꣳ श्रियै स्वाहा। श्रियञ्च लक्ष्मीञ्च पुष्टिञ्च कीर्त्तिञ्चानृण्यतां ब्रह्मण्यं बहुपुत्रतां। श्रद्धामेधे प्रजाः सन्ददातु स्वाहा॥ अनु० ६३ ॥

---

तिलाः कृष्णास्तिलाः श्वेतास्तिलाः सौम्या वशानुगाः। तिलाः पुनन्तु मे पापं यत्किञ्चिद्दुरितं मयि स्वाहा। चोरस्यान्नं नवश्राद्धं ब्रह्महा गुरुतल्पगः। गोस्तेयꣳ सुरापानं भ्रूणहत्या तिला शान्तिꣳ शमयन्तु स्वाहा। श्रीश्च लक्ष्मीश्च पुष्टीश्च कीर्त्तिञ्चानृण्यतां। ब्रह्मण्यं बहुपुत्रतां। श्रद्धामेधे प्रज्ञा तु जातवेदः सन्ददातु स्वाहा॥ अनु० ६४ ॥

---

मूलपुस्तकस्य पञ्चषष्टितमानुवाको भाष्यकारेण ५१,५२,५३,५४,६० इति पञ्चानुवाकत्वेन परिगणितः। तत्पाठक्रमोऽपि परिवर्त्तितः। अतएव स मूलपुस्तकस्य पाठक्रमेणात्र पुनर्मुद्रापितः।

प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा। वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतो बुद्ध्याकूतिः सङ्कल्पा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा। त्वक्चर्ममाꣳसरुधिरमेदोमज्जास्नायवोऽस्थीनि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा। शिरःपाणिपादपार्श्वपृष्ठोरूदरजङ्घशिश्नोपस्थपायवो मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा। उत्तिष्ठ पुरुष हरित पिङ्गललोहिताक्षि देहि देहि ददापयिता मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा॥ अनु० ६५॥

---

मूलपुस्तकस्य षट्षष्ट्यनुवाकस्य भूयिष्ठो भाष्यकारेण ५५,५६,५७,५८,५९ इति पञ्चानुवाकत्वेन परिगणितः। तत्पाठक्रमोऽपि परिवर्त्तितः। अतएव स मूलपुस्तकक्रमेणात्र पुनर्मुद्रापितो भवति।

पृथिव्यापस्तेजोवायुराकाशा मे शुध्यन्तां। ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा। शब्दस्पर्शरूपरस-

गन्धा मे शुध्यन्तां । ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा । मनोवाक्कायकर्माणि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा । अव्यक्तभावैरहङ्कारैर्ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा । आत्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा । अन्तरात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा । परमात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा । क्षुधे स्वाहा । क्षुत्पिपासाय स्वाहा । विविट्यै स्वाहा । ऋग्विधानाय स्वाहा । कषोत्काय स्वाहा । क्षुत्पिपासामलं ज्येष्ठामलक्ष्मीर्नाशयाम्यहं । अभूतिमसमृद्धिञ्च सर्वां निर्णुद मे पाप्मानꣳ स्वाहा । अन्नमयप्राणमयमनोमयविज्ञानमयमानन्दमयमात्मा* मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ॥ अनु० ६६ ॥

---

मूलपुस्तकस्य षट्षष्टितमानुवाकात्परम् सम्पूर्णसप्तषष्टितमोऽनुवाको भाष्यकारेण न व्याख्यातः । तद्यथा,

अग्नये स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा । ध्रुवाय

---

* विज्ञानमयानन्दमया इति F, Q चिह्नितपुस्तकपाठः ।

भूमाय स्वाहा। ध्रुवक्षितये स्वाहा। अच्युतक्षितये स्वाहा। अग्नये स्विष्टकृते स्वाहा। धर्माय स्वाहा। अधर्माय स्वाहा। अद्भ्यः स्वाहा। ओषधिवनस्पतिभ्यः स्वाहा॥ १॥

रक्षोदेवजनेभ्यः स्वाहा गृह्याभ्यः स्वाहा। अवसानेभ्यः स्वाहा। अवसानपतिभ्यः स्वाहा। सर्वभूतेभ्यः स्वाहा। कामाय स्वाहा। अन्तरिक्षाय स्वाहा। यदेजति जगति यच्च चेष्टति नाम्नो भागो यन्नाम्ने स्वाहा। पृथिव्यै स्वाहा। अन्तरिक्षाय स्वाहा। दिवे स्वाहा। सूर्याय स्वाहा। चन्द्रमसे स्वाहा। नक्षत्रेभ्यः स्वाहा। इन्द्राय स्वाहा। बृहस्पतये स्वाहा। प्रजापतये स्वाहा। ब्रह्मणे स्वाहा। स्वधा पितृभ्यः स्वाहा। नमो रुद्राय पशुपतये स्वाहा। देवेभ्यः स्वाहा। पितृभ्यः स्वधास्तु। भूतेभ्यो नमः। मनुष्येभ्यो हन्ता। प्रजापतये स्वाहा। परमेष्ठिने स्वाहा। यथा कूपः शतधारः सहस्रधारो अक्षितः। एवामे अस्तु। धान्यꣳ सहस्रधारमक्षितं। धनधान्यै स्वाहा। ये भूताः प्रचरन्ति दिवा नक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः। तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा॥ अनु० ६७॥

मूलपुस्तकस्याष्टषष्टितमानुवाकः पूर्णो भाष्यकारेण न व्याख्यातः। अतएव पूर्णः स मुद्रापितः। तद्यथा,

ॐ तद्ब्रह्म। ॐ तद्वायुः। ॐ तदात्मा। ॐ तत्सत्यं। ॐ तत्सर्वं। ॐ तत्पुरोर्नमः। अन्तश्चरति भूतेषु गुहायां विश्वमूर्त्तिषु। त्वं यज्ञस्त्वं वषट्कारस्त्वमिन्द्रस्त्वꣳ रुद्रस्त्वं विष्णुस्त्वं ब्रह्म त्वं प्रजापतिः। त्वं तदाप आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्॥ अनु० ६८॥

---

मूलपुस्तकस्य एकोनसप्ततितमानुवाको भाष्यकारेण ३२,३३,३४,३५ इत्यनुवाकपञ्चकरूपेण निर्द्दिष्टः। अत्र तस्य मूलपुस्तकस्यानुसारी पाठो मुद्रापितः। तद्यथा,

श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि। श्रद्धायामपाने निविष्टोऽमृतं जुहोमि। श्रद्धायां व्याने निविष्टोऽमृतं जुहोमि। श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि। श्रद्धायाꣳ समाने निविष्टोऽमृतं जुहोमि। ब्रह्मणि म आत्माऽमृतत्वाय। अमृतोपस्तरणमसि। श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। प्राणाय स्वाहा। श्रद्धायामपाने निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। अपानाय स्वाहा। श्रद्धायां व्याने निविष्टोऽमृतं जुहोमि।

शिवो मा विशाप्रदाहाय। व्यानाय स्वाहा। श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। उदानाय स्वाहा। श्रद्धायाꣳ समाने निविष्टोऽमृतं जुहोमि। शिवो मा विशाप्रदाहाय। समानाय स्वाहा। ब्रह्मणि म आत्मामृतत्वाय। अमृतापिधानमसि॥ अनु० ६९॥

---

मूलपुस्तकस्यैकसप्ततितमानुवाकात्परम् द्विसप्ततितम-त्रिसप्ततितमानुवाकौ भाष्ये न धृतौ। तद्यथा,

वाङ्म आसन्। नसोः प्राणः। अक्ष्योश्चक्षुः। कर्णयोः श्रोत्रं। बाहुवोर्बलं। ऊरुवोरोजः। अरिष्टा विश्वान्यङ्गानि तनूः। तनुवा मे सह नमस्ते अस्तु मा मा हिꣳसीः॥ अनु० ७२॥

---

वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः। अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेऽवबद्धान्॥ अनु० ७३॥

---

मूलपुस्तकस्य चतुःसप्ततितमानुवाकात्परम् पञ्चसप्ततितम-षट्सप्ततितमसप्तसप्ततितमानुवाका भाष्यकारेण न लिखिताः। तद्यथा,

नमो रुद्राय विष्णवे मृत्युर्मे पाहि॥ अनु० ७५॥

---

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि। त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥ अनु० ७६ ॥

---

शिवेन मे सन्तिष्ठस्व स्योनेन मे सन्तिष्ठस्व सुभूतेन मे सन्तिष्ठस्व ब्रह्मवर्चसेन मे सन्तिष्ठस्व यज्ञस्यर्द्धिमनु-सन्तिष्ठस्वोप ते यज्ञ नम उप ते नम उप ते नमः॥ अनु० ७७ ॥

---

अम्भस्य, एकपञ्चाशच्छतं(१)। जातवेदसे, चतुर्दश(२)। भूरन्नं(३), भूरग्नये(४), भूरग्नये, चैकमेकम्(५)। पाहि, पाहि, चत्वारि, चत्वारि(६—७)। यश्छन्दसाम् द्वे (८)। नमो ब्रह्मणे(९), ऋतं तपः(१०), यथा वृक्षस्य, एकमेकम्(११)। अणोरणीयान् चतुस्त्रिंशत्(१२)। सहस्रशीर्षं षड्विंशतिः(१३)। आदित्यो वा एषः(१४), आदित्यो वै तेजः, एकमेकम्(१५)। निधनपतये त्रयोविंशतिः(१६)। सद्योजातम् त्रीणि (१७)। वामदेवाय एकम(१८)। अघोरेभ्यः(१९), तत्पुरुषाय, द्वे, द्वे(२०)। ईशानः(२१), नमो हिरण्य-बाहवे, एकमेकम्(२२)। ऋतं सत्यं द्वे(२३)। सर्वो

वै, चत्वारि(२४)। कद्रुद्राय, चीणि(२५)। यस्य वैकङ्कती(२६), कृणुष्व पाजः(२७), अदितिः (२८), आपो वा इदम्, एकमेकम्(२९)। आपः पुनन्तु, चत्वारि(३०)। अग्निश्च(३१), सूर्यश्च, नव नव(३२)। ओमिति, चत्वारि(३३)। आयातु, पञ्च(३४)। ओजोसि, दश(३५)। उत्तमे, चत्वारि(३६)। घृणिः, चीणि(३७)। ब्रह्म मेतु मां, यास्ते, ब्रह्महत्यां, द्वादश(३८)। ब्रह्म मेधया, अद्यानः, इमं, भ्रूणहत्यां(३९), ब्रह्म मेधवा, ब्रह्मा देवानाम्, इदं, वीरहत्याम्, एकान्नविंशतिः, एकान्नविंशतिः(४०)। मेधा देवी(४१), मेधां म इन्द्रः, चत्वारि, चत्वारि(४२)। आ मां मेधा, द्वे(४३)। मयि मेधाम्, एकम्(४४)। अपैतु (४५), पर (४६), वातं प्राणम्(४७), अमुत्र भूयात्(४८), हरिम्(४९), शल्कैरग्निं(५०), मा च्छिदो मृत्यो (५१), मा नो महान्त(५२), मा नस्तोके(५३), प्रजापते(५४), स्वस्तिदा(५५), त्र्यम्बकं(५६), ये ते सहस्रं, द्वे, द्वे(५७)। मृत्यवे स्वाहा, एकम्(५८)। देवकृतस्य, एकादश(५९)। यद्वो देवाः(६०), कामोऽकार्षीत्(६१), मन्युरकार्षीत्, द्वे, द्वे(६२)। तिलान् जुहोमि, गावः, श्रियं, प्रजाः, पञ्च(६३)। तिलाः

कृष्णाः, चोरस्य, श्रीः, प्रमा तु जातवेदः(६४), सप्त। प्राणापान, वाक्, त्वक्, शिरः, उत्तिष्ठ पुरुष, पञ्च (६५)। पृथिवी, शब्द, मनः, अव्यक्त, आत्मा, अन्तरात्मा, परमात्मा मे, क्षुधे, अन्नमय, पञ्चदश(६६)। अग्नये स्वाहा, एकचत्वारिंशत(६७)। ओं तद्ब्रह्म, नव(६८)। श्रद्धायां प्राणे निविष्टः, चतुर्विंशतिः(६९)। श्रद्धायां प्राणे निविश्यामृतं हुतं, दश(७०)। अङ्गुष्ठमात्रः पुरुषः, द्वे(७१)। वाङ्म आसन्, अष्टौ(७२)। वयः सुपर्णाः(७३), प्राणानां ग्रन्थिरसि, द्वे, द्वे(७४)। नमो रुद्राय, एकम्(७५)। त्वमग्ने द्युभिः, द्वे(७६)। शिवेन मे सन्तिष्ठस्व(७७), सत्यं(७८), प्राजापत्यः (७९), तस्यैवम्, एकमेकम्(८०)। अशीतिरनुवाकाः॥

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै॥ ओम् शान्तिः शान्तिः शान्तिः॥ हरिः ॐ॥

इत्यारण्यकं समाप्तं॥

---